भाविसमीरश्रीमद्वादिराजपूज्यचरणविरचितः

# श्रीमन्महाभारतलक्षालङ्कारः

## प्रथमो भागः





महाभारत

महाभारतसंशोधनप्रतिष्ठानम्

Bhāvisamīra Śrī Vādirājapūjyacaranaviracitaḥ

# Mahābhāratalakṣālankāraḥ

(A critical edition of a rare commentary on the Mahābhārata)

## Volume -1
## (Ādiparvan to Virātaparvan)



The publication of this book was made possible by generous grants given by the Ministry of Human Resources Department, Government of India under the Scheme of Development of Sanskrit Language

Mahābhārata Samśodhana Pratiṣṭānam
(Mahābhārata Research Foundation)
Bangalore - INDIA

**Mahābhāratalakṣālankāraḥ** is a commentary by Śrī Vādirājatīrtha (1480-1600 CE) on The Mahābhārata of Bhagavan Śrī Vedavyāsa. This critical edition has been prepared using 300 year old manuscripts from the Śrī Sode Vādirāja Matha, Udupi.

Printed in INDIA
2005-06

**Published by:**
**Mahābhārata Samśodhana Pratiṣṭānam**
(Mahābhārata Research Foundation)
#1/E, 3rd Cross, Girinagar,
Bangalore - INDIA.

www.mahabharata.org



ISBN 81-903860-0-X

9 788190 386005

International distributors Motilal Banarsidass Publications New Delhi.

Typeset by K. Subbanna
Coverpage and box design by K.M. Sheshagiri, Chandranathacharya
Printed by Aditya printers

भाविसमीरश्रीमद्वादिराजपूज्यचरणविरचितः

# श्रीमन्महाभारतलक्षालङ्कारः

प्रथमो भागः

(आदिपर्वतः विराटपर्वपर्यन्तम् )

महाभारतसंशोधनप्रतिष्ठानम्

गिरिनगरम्

बेङ्गलूरु - भारतम्

भाविसमीरश्रीमद्वादिराजपूज्यचरणविरचितः महाभारतलक्षालङ्कारः - श्रीमद्वेदव्यासविरचितश्रीमन्महाभारतस्य अपूर्वं व्याख्यानम् । ग्रन्थोऽयं उडुपि श्रीसोदा वादिराजमठे उपलब्धानां त्रिशतसंवत्सरेभ्योऽपि प्राचीनानां मातृकाणां साहाय्येन संशोध्य प्रकाशितः ।

भारतदेशे मुद्रितम्

प्रकाशकः

महाभारतसंशोधनप्रतिष्ठानम्

गिरिनगरम् , बेङ्गलूरु, भारतम्

# समर्पणम्

अस्मद्गुर्वन्तर्गत-श्रीमत्परमहंसपरिव्राजकाचार्य-
पदवाक्यप्रमाणपारावारपारीण-सर्वतन्त्रस्वतन्त्र श्रीसर्वज्ञाचार्यकरार्चित-
श्रीभूवराह- भाविसमीरश्रीमद्वादिराजकरार्चितश्रीहयवदनपादपद्माराधक-
श्रीमद्वैष्णवसिद्धान्तप्रतिष्ठापनाचार्य-श्रीमद्विष्णुतीर्थशुभसम्प्रदाय-
प्रवर्तक – श्रीजगद्गुरुश्रीमन्मध्वाचार्यमूलसंस्थानसोदामठाधीश
श्रीश्रीविश्वोत्तमतीर्थगुर्वन्तर्गत-श्रीमद्वृन्दावनाचार्यगुर्वन्तर्गत
पारमेष्ठिपदाधिकारि ऋजुपदस्थपट्टभद्रव्याख्यानसिंहासनाधीश्वर-
अज्ञानतिमिरमार्ताण्ड-सुज्ञानतेजोमय-उद्दण्डोद्दण्ड-परवादिप्रचण्ड-
गण्डभेरुण्ड-मायिमतविध्वंसक-मध्वमतोद्धारक-सुधारसास्वाद-
दिग्विजयीकृतासेतुमर्याद-भाविहनुमच्चक्रवर्तिगुरुसार्वभौम-हंसारूढ-
श्रीमद्वादिराजपूज्यगुर्वन्तर्गत
श्रीभारतीरमणमुख्यप्राणहनुमद्भीममध्वगुर्वन्तर्गत

**श्रीभूवराहात्मकहयवदनाभिन्नश्रीमदुडुपिकृष्णः**

प्रीयताम्

- - - - -

# SRI SODE VADIRAJA MATHA

UDUPI
UDUPI DISTRICT,
KARNATAKA

Ref : 154/ 06-07 Date : 17.11.2006

॥ श्रीः ॥

व्यासाय भवनाशाय श्रीशाय गुणराशये।
हृद्याय शुद्धविद्याय मध्वाय च नमो नमः ॥
कामधेनुर्यथा पूर्वं सर्वाभीष्टफलप्रदा ।
तथा कलौ वादिराजश्रीपादोऽभीष्टदस्सताम् ॥

## सानुग्रहस्सन्देशः

श्रीमदृजुदेवतागणस्थश्रीमल्लातव्यपदमधिरूढैः श्रीवादिराजगुरुसार्वभौमैः प्रणीतासु कृतिष्वन्यतमं लक्षालङ्काराभिधं ग्रन्थरत्नं नैकविधं वैशिष्ट्यमावहतीति सर्वविदितमपि नैतद्विद्वांसः प्रमाणं मन्यन्त इत्यवक्तव्यमप्युच्यते! द्वैतवेदान्तग्रन्थकाराणां कृतिविषये प्रायोऽतिविरलेयं घटना संवृत्ता वर्तते !

सर्वत्र कृतिनिर्माणविषये चारित्रनिरूपका ग्रन्थाः प्रमाणमित्यनुमन्यते ! तत्र यदि ग्रन्थकर्तॄणां साक्षात्संवादि वचनं वर्तते, तन्निर्विवादं प्रमाणं भवितुमर्हतीत्यतीव स्पष्टम् ! किन्तु श्रीवादिराजगुरुसार्वभौमाणां कृतिविषये चैतद्विपरीतं सञ्जातमस्ति ! श्रीवादिराजगुरु-सार्वभौमाणामृजुत्वमद्यापि विवदमाना विद्वांसः लक्षालङ्कारः कैः प्रणीतः? कदा वा प्रणीतः? प्रणयने प्रधानं कारणं किम्? तेन निर्माणेन किं संपादितमित्यत्र विप्रतिपद्यमाना अजानानाश्च दृश्यन्ते ! सर्वमत्राविकलं स्पष्टमप्यविज्ञातप्रायं जातमिति विषादनीयम्!

अस्तु तावत् ! भारतं दुर्गमार्थमिति हेतोः परतत्वप्रसिध्यै परमं तात्पर्यं वक्तुं स्वाश्रममुपागतं श्रीमदाचार्यं भगवान् श्रीवेदव्यासो न्ययुङ्क्तेति श्रीमध्वविजयग्रन्थे उल्लिखितम्! तथैव श्रीवादिराजगुरुसार्वभौमा अपि साक्षाद्दृष्टिपथं गतेन भगवता श्रीवेदव्यासेन भारतस्य

व्याख्यानकर्मणि न्ययोजिषतेति चारित्रनिरूपके ग्रन्थ उपनिबद्धम् ! न केवलमेतावत् किन्तु स्वयं ग्रन्थकर्तृभिः श्रीगुरुराजैः विषयेऽस्मिन् रहस्यमेकं समुद्घोषि ! तथाहि तद्वचनम् :

अत्रास्ति कारणं किञ्चिद्गुह्यं तच्छ्रूयतां बुधैः ।
प्रयागे ब्रह्मणः सन्ध्यामठे जपपरायणः ।
अहमासं तदा लक्षालङ्कारं कुर्विति प्रभुः ॥
भारतस्य श्लोकलक्षस्यार्थविस्तरणात्मकम् ।
कारयामास योगीन्द्रो लक्षालङ्कारमीदृशम् ॥

अपि च वृन्दावनप्रवेशानन्तरमपि श्रीगुरुराजैः एडमूकब्राह्मणस्वप्नद्वारा समुपदिष्टे श्रीमत्स्वाप्नवृन्दावनाख्यानग्रन्थे विषयोऽयं प्रास्तावि ! तथाहि —

भारतीपतिवद्भाति भारतार्थप्रकाशनात् ।
भारतार्थप्रकाशत्वात् तत्कर्तृसदृशो हि सः ।
तत्कर्तृसदृशत्वात्तु तद्वत्पूज्यो गुरुः सताम् ॥ इति !

किञ्चास्मिन्नेव ग्रन्थे आदिमे मङ्गलाचरणश्लोके व्यासाय..... तुभ्यं नमः इति कथयद्भिः श्रीगुरुराजैः भगवान् श्रीवेदव्यासः साक्षात् दर्शनगोचरो वर्तत इत्यतिस्पष्टमाज्ञापि ! अपरं च उर्वरितगुरुराजीयग्रन्थानामवलोकनेनावगतगुरुराजीयशैलीकाः परीक्षकविचक्षणाः मङ्गलाचरणश्लोकेऽस्मिन् श्रुतिपथं गते सति निश्चप्रचं श्लोकोऽयं श्रीगुरुराजप्रणीत एवेति प्रतिपादयन्तीति किमु वक्तव्यं ग्रन्थस्यास्य तत्कृतत्वे ! किं बहुना ! एतद्ग्रन्थविषये यद्वक्तव्यं तत्सर्वमत्र समग्राहीति श्रीवादिराजगुरुवरचरितामृतग्रन्थ अष्टमबिन्दुगतः प्रमाणभूतः सार्धश्लोक उदाह्रियते-

.....तन्मरुदब्रवीत् !
भारतार्थस्य तात्पर्यनिर्णयं मध्वरूपभाक् ।
लक्षालङ्कारतो वादिराजोऽप्यूचे तदर्थकम् ॥
वादिराजस्ततो भावी ब्रह्मा वायुरितीर्यते ॥

अन्यच्च प्रायस्सर्वैरविदितं शिष्टसंप्रदायागतं विद्वद्विचक्षणाभिधं रहस्यमेकं प्रस्तोतुं मोमुद्यते मनः ! श्रीमदाचार्याः श्रीमद्भागवतं यथावद् व्यचक्षाणा यथा श्रीमन्महाभारत-

कथामकृत्वा प्रतीकग्रहणं समग्रहीषुः तथा न भागवतम् ! किन्तु तत्र तत्र दुरवबोधस्थल एव प्रतीकग्रहणपूर्वकं व्याख्यन् ! श्रीमद्भागवतं श्रीमदाचार्यैः यथा तथा महाभारतग्रन्थः श्रीगुरुराजैः व्याख्यायि ! महाभारतविषये करणीयं कार्यं श्रीमदाचार्यैः श्रीगुरुराजानां कृते संस्थापितमित्यहो ग्रन्थव्याख्यानपरिपाट्यामपि साम्यप्रदर्शनं महात्मनाम् !

बहोः कालात् प्रागेव ग्रन्थस्यास्य प्राथमिकं भागद्वयं संस्थानद्वारा प्रकाशितम् ! तादृशे काले विशेषतः कृतभूरिपरिश्रमः मध्वशास्त्रसंपन्नः विद्वत्तल्लजः यशःकायः श्रीमान् अग्निहोत्री अलेवूरु सीतारामाचार्यः तथा पण्डितवर्यः श्रीमान् पडुबिद्रि लक्ष्मीनारायणशर्मा नितरामस्मिन्नवसरे संस्मर्यते समभिनन्द्यते च ! अन्तिमभागस्य संपादने कीर्तिशेषः कृतानल्पपरिश्रमः श्रीमान् सूरिवर्यः एस्. वि. भीमभट्टमहाभागोऽपि सभाज्यते! संप्रति समग्रं ग्रन्थरत्नं मूलश्लोकग्रहणपूर्वकं विद्वद्वर्याणां साहाय्येन महाभारतसंशोधनप्रतिष्ठानद्वारा प्रकाशं नीयत इति सन्तोषास्पदम् ! कर्मण्येतस्मिन् निरूढकार्याः नैके विद्वांसः नूनं सामोदमभिनन्द्यन्ते ! संस्थायाः पदाधिकारिवर्गाश्च समभिनन्दनीयाः !

तदयं ग्रन्थः निरुक्तमिव महाभारतमधिजिगांसून्, माध्वग्रन्थानभ्यसिषुषून्, अपूर्वार्थप्रकथन आदरवतः, संस्कृतभाषायां श्रीगुरुराजीयशैल्यां जुजुषिषून् उपकुर्यादिति वयमस्मदुपास्यं समीरगुरुराजवन्दितचरणं श्रीभूवराहात्मकश्रीहयग्रीवाभिन्नं श्रीवेदव्यासं स्वकर्तव्यतया संप्रार्थयामहे ।

श्रीश्री विश्वोत्तमतीर्थश्रीपादाः



श्री श्री विद्याधीशतीर्थ स्वामीजि
H H Sri Sri Vidyadheesha Theertha Swamiji
Jagadguru Sri Madhwacharya Moola Maha Samsthanam
Sri Hrishikesha Teertha Peetam,
SRI PALIMARU MATHA, UDUPI - 576 101, Karnataka
Ph. : 0820 - 2523402, Mob. : 93422 32122



letter No.35/2006 Date:30-11-2006

श्रीमता जगदघदहनेनावद्यगन्धविधुरेण गुणगणायनेन सकलसज्जनमनोरसायनेन वेदान्तकृतानन्तवेदविदा श्रीमन्नारायणेन भिदाभिदाभिदाविहीनेन वासवीसूनुना विश्वगुरुणा श्रीव्यासेन व्यधायि, निरुक्तिचिन्तामात्रेणमुक्तिपात्रश्रोत्रियसुजनदुर्वारसर्ववृजिनवृंदविदारकं समस्तशास्त्रोत्तमतया स्वपरोक्षेणैवापरोक्षीकृतसमस्तपदार्थतया वेदादपि परतया जगतीतलविख्यातं दशार्धतादशादोषादूषितैर्दशार्धशरदशदशाशून्यै-र्दशार्धवेदगपदकदम्बप्रत्यक्षरार्थप्रत्यक्षतापन्नैर्दशदिशादेशदेशिगैः श्रीमद्भिर्दशप्रमतिभिर्दशार्थकतया शास्त्रदिशा प्रदर्श्योपभाषितमष्टादशाध्याय्या गीतया दशशतनामभिश्चाष्टादशपर्वभिश्च ग्रथितं महाभारतं नाम ग्रन्थरत्नम् ।

श्रीमद्भारतव्यपदेशेन ह्याम्नायार्थःएव प्रकटितस्तत्र। विश्वसृष्ट्याद्यष्टककर्तुः विश्वविमोहनसच्चिदानन्दाच्छेद्याभेद्यकमनीयतनोः श्रीमतो व्यासस्य परमानुग्रहाज्ञया भगवान् श्रीमध्वराजो मुनिः तस्यैतस्य कृतिरत्नस्य व्याख्यां भारतार्थप्रकाशं श्रीमन्महाभारततत्पर्यनिर्णयं निरमात्। आपदामपहर्तुर्दातुश्च

श्री श्री विद्याधीशतीर्थ स्वामीजि



**H H Sri Sri Vidyadheesha Theertha Swamiji**



Jagadguru Sri Madhwacharya Moola Maha Samsthanam
Sri Hrishikesha Teertha Peetam,
SRI PALIMARU MATHA, UDUPI - 576 101, Karnataka
Ph. : 0820 - 2523402, Mob. : 93422 32122


सर्वसम्पदां तस्यैव भगवतो व्यासस्य परमाज्ञानुसारेणैव श्रीमत्प्रयागक्षेत्रोल्लसत्सन्ध्यामठे सन्ध्यामनुतिष्ठन् भगवान् श्रीमान् वादिराजो मुनिर्लक्षाभरणं नाम श्रीमहाभारतव्याख्यामत्यपूर्वाञ्चाकार्षीत्। मात्रा सङ्कल्पितं श्रीनिवासाय पुरः प्रार्थितञ्च स्वेष्टोपायमनिष्टमुक्तिसोपानं लक्षालङ्कारोपायनं श्रीमते व्यासाय समार्पिपच्च। महाभारतसंशोधनप्रतिष्ठानञ्चैतदपूर्वतम-कृतिरत्नस्य प्रकाशनेन श्लाघनीयां सेवां व्यदधादिति संस्थामेताम् साभिमानं संस्तूय सानन्दमभिनन्दामः।

श्री प्राणं श्री प्राणनाथंच् सम्प्रार्थ्य संस्थायै एतस्यै स्वस्ति ब्रूमहे॥


*H.H. Sri Vidyadheesha Theertha Swamiji*
Jagadguru Sri Madhwacharya
Moola Maha Samsthanam
Sri Palimaru Matha
Car Street, Udupi ... 2523402

# प्रास्ताविकम्

मोमुदीति नश्चेतो नितान्तं तत्वबुभुत्सूनां महाभारताध्येतॄणां करकमलयोः समर्पयितुमिदं महाभारतलक्षालङ्कारनामधेयं भाविसमीरैः श्रीमद्वादिराजतीर्थपूज्यचरणैः (१४८०-१६०० क्रि. श.) विरचितं महाभारत-व्याख्यानम् । मोदे चास्माकम् अस्ति निदानद्वयम् । एकं, सतीष्वपि बह्वीषु महाभारतव्याख्यासु दुर्गमेषु बहुषु स्थलेषु निगूढस्य महाभारतान्तर्यस्य प्रकाशने सर्वातिशयि व्याख्यानमिदं बहोः कालात् प्राग् भागशः प्रकाशितमिदानीं सामग्र्येण प्राकाश्यं नीयत इति । अन्यत्तु , प्रकाश्यमानेयं कृतिः सम्बद्धैः मूलश्लोकैः, विविधैः परिशिष्टैश्च भूषिताऽध्येतॄन् विशेषतः उपकरोतीति ।

प्रास्ताविकेऽस्मिन् प्रकाश्यमानस्य महाभारतलक्षालङ्कारस्य सङ्क्षिप्ततया वैशिष्ट्यवर्णनं यद्यपि प्रस्तुतम्, अथापि ततः पूर्वं व्याख्येयस्य महाभारतस्यानितरसाधारणं महत्त्वमधिकृत्य कथनं नितरामौचितीम् आवहतीति तद्विषये किञ्चित् प्रस्तूयते।

अपारे संस्कृतवाङ्मयेऽस्ति महाभारतस्यानुपमं वैशिष्ट्यम् । महर्षिणा वेदव्यासेन प्रणीतस्य पौरुषेयस्य महाभारतस्य वेदत्वं स्वयं वेद एवोज्जुघोष। "इतिहासपुराणः पञ्चमो वेदानां वेदः" इति हि श्रुतिवचनम् । विना महाभारतं वेदतात्पर्यावधारणं दुःशकमिति सूचयतीदमन्यद्वेदवचनम् - "इतिहास-पुराणेभ्यो वेदं समुपबृंहयेत्" इति । महाभारतमिति नामैव तस्य महत्त्वं, तत एव भारेण ततत्वं कथयतीत्ययमपरो विशेषः । विषयेऽस्मिन् ब्रह्माण्डपुराणान्तर्गतानि वचनानि समुदाहरन्ति श्रीमदानन्दतीर्थ-भगवत्पादाचार्याः स्वीये गीतातात्पर्यनिर्णये । यथा —

"शास्त्रेषु भारतं सारं तत्र नामसहस्रकम् ।
वैष्णवं कृष्णगीता च तज्ज्ञानान्मुच्यतेऽञ्जसा ॥

न भारतसमं शास्त्रं कुत एवानयोः समम् ।
भारतं सर्ववेदाश्च तुलामारोपिताः पुरा ॥

देवैः ब्रह्मादिभिः सर्वैं ऋषिभिश्च समन्वितैः ।
व्यासस्यैवाज्ञया तत्र त्वत्यरिच्यत भारतम् ॥

महत्वाद् भारवत्त्वाच्च महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥

स्वयं नारायणो देवैः ब्रह्मरुद्रेन्द्रपूर्वकैः ।
अर्थितो व्यासतां प्राप्य केवलं तत्वनिर्णयम् ।
चकार पञ्चमं वेदं महाभारतसञ्ज्ञितम् ॥" इति ।

महाभारतस्य महत्त्वं तत्प्रयुक्तं भारवत्त्वं चार्थपौष्कल्यमेव । ऐतरेयश्रुतेः कस्याश्चन प्रसिद्धमर्थं परित्यज्यार्थान्तरं संवर्णयन्तः श्रीमदानन्दतीर्थभगवत्पादाः श्रुतीनां महाभारतस्य चानेकार्थत्वे एवमवोचन्निति शृणुमः - "त्र्यर्थतां श्रुतिषु वित्त, दशार्थं भारतं, ननु शतार्थमपि स्याद् वैष्णवं पदसहस्रतयं हि" इति ।

नेयं केवलमाचार्याणां कल्पना । महाभारतस्य बृहस्पत्यादिभिरप्यज्ञेयार्थत्वं बह्वर्थत्वं च प्रमाणप्रमितमपि । यथोक्तमुपनारदीये —

"ब्रह्माऽपि तन्न जानाति ईषत्सर्वोऽपि जानति ।
बह्वर्थम् ऋषयस्तत्तु भारतं प्रवदन्ति हि ॥" इति ।

सर्वत्र भारतस्य दशार्थत्वं, तेषामर्थानां ज्ञानिमात्रवेद्यत्वं च स्पष्टमेवावादि नारदीये । यथा —

"ब्रह्माद्यैः प्रार्थितो विष्णुः भारतं स चकार ह ।
यस्मिन् दशार्थाः सर्वत्र न ज्ञेयाः सर्वजन्तुभिः ॥" इति ।

अपि च, पञ्चमवेदत्वेन प्रमितस्य महाभारतस्य न वेदतुल्यत्वमभिप्रेतम् । भगवदवतारेण महर्षिणा वेदव्यासेन केवलं स्वज्ञानगोचरस्यार्थस्य महाभारते प्रतिपादनेन तस्य वेदानुक्तार्थभूषितत्वेन वेदादप्युत्तमत्वमेवेति महाभारतप्रणेता भगवान् वेदव्यासः पौनःपुन्येन स्वयमेव जगाद । पूर्वमुदाहृते ब्रह्माण्डपुराण इव स्कान्देऽपि तेनोक्तमिदं श्रूयते ।

"भारतं चापि कृतवान् पञ्चमं वेदमुत्तमम् ।
दशावरार्थं सर्वत्र केवलं विष्णुबोधकम् ॥
परोक्षार्थं तु सर्वत्र वेदादप्युत्तमं तु यत् ॥" इति ।

दशावरार्थस्य महाभारतस्य वेदवत् प्रकारान्तरेण त्र्यर्थत्वमपि प्रमाणप्रसिद्धम् । वेदभारतयोरत्र वैलक्षण्यं तु — वेदस्याध्यात्मिकाधिदैविकाधिभौतिकात्मकार्थत्रयवत्त्वं, भारतस्य तु मनुः, आस्तीकः, उपरिचरश्चेत्यर्थत्रयवत्त्वम् । तथाचोक्तं महाभारत एवाऽदिपर्वणि —

"मन्वादि केचिद् ब्रुवते ह्यास्तीकादि तथाऽपरे ।
तथोपरिचराद्यन्ये भारतं परिचक्षते ॥" इति ।

मनुशब्दश्चात्र मनुते परमात्मानमनेनेति व्युत्पत्त्या भगवज्ज्ञानसाधकं धर्मादिपञ्चकमाह । धर्मादिपञ्चकं तु - धर्मः, भक्त्यादिदशकं, श्रुतादिः, शीलविनयौ, वेदश्चेति । एषु धर्मस्याभिमानी युधिष्ठिरः । भक्तिः, ज्ञानं, वैराग्यं, प्रज्ञा, मेधा, धृतिः, स्थितिः, योगः, प्राणः, बलं चेति गुणाः भक्त्यादिदशकमुच्यते । एते च गुणाः भीमसेनेनाभिमन्यमानाः । श्रवणं, मननं, ध्यानं चेति त्रितयं श्रुतादि । अर्जुनः एतेषामभिमानी । शीलं

विनयश्चेति द्वयोर्गुणयोः नकुलसहदेवौ अभिमानिनौ । पञ्चमस्य वेदस्य द्रौपदी अभिमानिनी । द्रौपदीसहितानां पञ्चानां पाण्डवानां चरितनिरूपणव्याजेन महाभारतं भक्त्यादिगुणानां महत्त्वमाविष्कुर्वत् मन्वादीति कथ्यते । आस्तीका भवन्ति पञ्च पाण्डवा द्रौपदी च । प्राधान्येन तेषां चरितं कथयद् भारतम् आस्तीकादीत्युच्यते । एवम्, उपरिचरो नाम सर्वोत्तमो विष्णुः । 'केवलं विष्णुबोधकम्' इति स्कान्दोक्तदिशा महाभारतस्य परमतात्पर्यविषयः भगवान् विष्णुः । अतः समग्रं महाभारतम् उपरिचरादि ।

एवं स्वस्य महत्त्वद्योतकान् सर्वानपीमान् अंशान् हृदि कृत्वैव स्वयं महाभारतेनैवासाधारणं स्ववैशिष्ट्यम् एकेनानेन वाक्येन उदघोषि, यथा —

"यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्" इति ।

एवं विशिष्टतमोऽयं महाभारताभिधानो ग्रन्थः अतिप्रतने काले संवृत्तस्येतिहासस्य कथनेन निमित्तेन इतिहास इति, परमगहनानाम् आध्यात्मिकतत्वानां निरूपणेन शास्त्रमिति च यथा समाद्रियत तथा सहृदयहृदयाह्लादकस्य काव्यात्मभूतस्य रसविशेषस्य ध्वननेन काव्योत्तमत्वेनापि आलङ्कारिकैर्बहुमन्यत । अत एव, आलङ्कारिकमूर्धन्येन आनन्दवर्धनाचार्येण स्वीये ध्वन्यालोके महाभारतप्राणभूतं रसविशेषमधिकृत्य विशदं व्यमृश्यत । तदिदं महाभारतं धर्मार्थकाममोक्षाणां चतुर्विधानामपि पुरुषार्थानां, सर्वेषामपि निरूपणीयानां निरूपणेन, अनन्तरकालेषु, अद्यावधि संस्कृतभाषया, विभिन्नप्रादेशिकभाषाभिश्च रचितानाम् असङ्ख्याकानां काव्यनाटकादीनां रचने स्फूर्तिं प्रदत्तवद्भिः नैकाख्यानोपाख्यानादिभिः, विविधदर्शनप्रवृत्तौ निमित्तभूतानां तात्त्विकविषयाणाम् उपस्थापनेन च ``व्यासोच्छिष्टं जगत्सर्वम् " इति लोकोक्तिम् अन्वर्थां चकार ।

तदेवं राष्ट्रस्यास्य विभिन्नकोणेषु, राष्ट्राद् बहिश्चानेकसहस्रवर्षेभ्यः विदुषामविदुषां च मानसे प्रगाढं प्रभावं कृतवति इदानीमपि कुर्वति महाभारते अनेके भागा लुप्ताः, अनेके च भागाः प्रक्षिप्ता इत्येतद्विषादार्हमपि निष्ठुरं तथ्यम् । लक्षितं चैतत् श्रीमन्मध्वाचार्यैः सप्तशताधिकवर्षेभ्यः प्रागेव, समग्रमहाभारतस्य व्याख्यानेषु प्राथमिकत्वेन परिगणनीये स्वीये महाभारततात्पर्यनिर्णयाख्ये विनूतने व्याख्याने । महाभारततात्पर्य-निर्णिनीषया देशे देशे अटित्वा बहून् मूलकोशान् संशोधितवतां भगवत्पादानाम् इमानि तत्र स्वानुभवमूलानि वचनानि-

" क्वचिद् ग्रन्थान् प्रक्षिपन्ति क्वचिदन्तरितानपि ।
कुर्युः क्वचिच्च व्यत्यासं प्रमादात् क्वचिदन्यथा ॥

अनुत्सन्ना अपि ग्रन्था व्याकुला इति सर्वशः ।
उत्सन्नाः प्रायशः सर्वे कोट्यंशोऽपि न वर्तते ॥

ग्रन्थोऽप्येवं विलुळितः किम्वर्थो देवदुर्गमः ।
कलावेवं व्याकुलिते निर्णयाय प्रचोदितः ॥

हरिणा निर्णयान् वच्मि विजानंस्तत्प्रसादतः ॥
शास्त्रान्तराणि सञ्जानन् वेदांश्चास्य प्रसादतः ॥

देशे देशे तथा ग्रन्थान् दृष्ट्वा चैव पृथग्विधान् ।
यथा स भगवान् व्यासः साक्षान्नारायणः प्रभुः ॥

जगाद भारताद्येषु तथा वक्ष्ये तदीक्षया ।
सङ्क्षेपात् सर्वशास्त्रार्थं भारतार्थानुसारतः ॥" (म. भा. ता. नि. २-३-८)

## महाभारतव्याख्यानानि —

समग्रस्य महाभारतस्यातिप्राचीनं व्याख्यानं किमपि नोपलभ्यत एव । प्राचीनैः श्रीशङ्कराभिनवगुप्तरामानुजाचार्यप्रभृतिभिः कृतं महाभारतसम्बन्धि-व्याख्यानं यदुपलभ्यते तत्तु महाभारतभागभूतायाः वेदान्तदर्शनेषु प्रस्थानत्रयेऽन्यतमत्वेन प्रथिताया भगवद्गीतायाः। तथैव उद्योगपर्वस्थस्य सनत्सुजातीयस्य । श्रीवादिराजतीर्थश्रीमच्चरणैस्तु आदिपर्वतः स्वर्गारोहण-पर्यन्तं स्वीयलक्षालङ्कारव्याख्यानेन समग्रं महाभारतं भूषयद्भिः महाभारतान्तर्गततया व्याख्यातमेव सनत्सुजातीयं पार्थक्येनापि व्याख्यायी-त्यपरो विशेषः । यद्यपि श्रीमद्वादिराजतीर्थपूज्यचरणेभ्यः प्राक् श्रीमध्वाचार्यैः विरचितः महाभारततात्पर्यनिर्णयाख्यो ग्रन्थः महाभारतव्याख्यानत्वेन परिगणनमर्हति । तथापि तन्नामैव यथा सूचयति तथा स ग्रन्थः महाभारतं तच्छेषभूतं हरिवंशमपि विशेषतोऽवलम्ब्य प्रमाणान्तराणि चादृत्य समग्रस्य महाभारतस्य तात्पर्यनिर्णयार्थं प्रवृत्तः । कतिपयैरध्यायैः सकलशास्त्रतात्पर्यं तथैव रामायणतात्पर्यं तत्र निरणायि । बाहुल्येन महाभारततात्पर्यनिर्णायको भागस्तत्रान्तर्गत इति ग्रन्थस्य "**महाभारततात्पर्यनिर्णयः**" इत्यभि-धानम् । श्लोकघटकपदानि प्रतीकत्वेनादाय व्याख्यानन्तु तत्र नैव दृश्यते । लक्षालङ्कारे तु श्रीवादिराजतीर्थश्रीचरणैः आदितः आन्तं यत्र श्लोके सन्दिग्धार्थकानि, विपरीतार्थबोधकानि वा पदानि भवन्ति तानि स्वीकृत्य तेषां वास्तविकः स्वारस्यपूर्णश्चार्थो निरुपित इति लक्षालङ्कारस्यास्त्यन्यादृशं वैशिष्ट्यम् ।

यद्यपि नीलकण्ठविद्यासागरप्रभृतिभिः सूरिभिः विरचितानि मुद्रितानि महाभारतव्याख्यानान्युपलभ्यन्ते । तथाऽपि श्रीमद्वादिराजतीर्थश्रीचरणै-

विरचितं व्याख्यानं क्लिष्टेषु स्थलेष्वपूर्वार्थान् सूचयत् जिज्ञासून् नितरामुपकरोति । अत्र कानिचिन्निदर्शनानि दर्शयामः —

शान्तिपर्वणि श्लोकोऽयं दृश्यते —

"अन्तेषु रेमिरे धीराः न ते मध्येषु रेमिरे ।
अन्तप्राप्तिं सुखं प्राहुर्दुःखमन्तरमन्तयोः ॥" (श्लो ३५, मोक्षधर्मपर्व, अ.१.)

अर्जुनमिश्राभिधेन व्याख्यात्रा श्लोकोऽयम् एवं व्याख्यायते — केचिद्धीराः धर्मार्थकाममोक्षाख्येषु चतुर्षु पुरुषार्थेषु मध्ये अन्तेषु मोक्षेषु अथवा विपरीतगणनायाम् अन्तभूतेषु धर्मेषु रेमिरे न तु मध्येषु अर्थेषु कामेषु वा । अथवा, अन्तशब्दः अन्तसाधनपरः । ततश्च धर्मसाधनेषु मोक्षसाधनेषु वा धीरा रेमिरे । न तु मध्यस्थयोः अर्थकामयोः साधनेषु । यद्वा, जाग्रत्स्वप्नसुषुप्तितुरीयेषु मध्ये अन्तेषु जाग्रत्कर्मसु तुरीयकर्मसु च धीरा रेमिरे । न तु स्वप्नसुषुप्तिकर्मसु । अथवा, अन्त्येषु संसारात् पूर्वसमये ब्रह्मैकतारूपेषु चरमेषु च लयावस्थेषु मोक्षसुखेषु । अनयोरन्तरं संसारावस्था इति । व्याख्यानेऽस्मिन् काश्चनानुपपत्तयः प्रतिभासन्ते । तथाहि - यद्यन्तपदेन धर्मादयो गृह्यन्ते तर्हि मोक्षेषु इति बहुवचनं कथम् । यदि च जाग्रदादयोऽवस्थाश्चतस्रः स्वीक्रियन्ते तर्हि मध्ये सुषुप्तौ कथं रमणाभावः? अपि च जाग्रत्कर्मतुरीयकर्मसु इति हि व्याख्यातम् । जाग्रत्कर्मणां प्रसिद्धत्वेऽपि तुरीयकर्मणामप्रसिद्धिरेव । धर्मसाधनेषु मोक्षसाधनेषु इति व्याख्याने अन्तशब्दस्य तत्साधने लक्षणाऽपत्तिः । 'अन्तेषु' इत्यस्य संसारात्प्राक्समये इति व्याख्यानं तु सर्वथा न हृदयङ्गमम् । संसारस्यानादित्वेन तत्प्रागवस्थाया असत्त्वात् ।

श्रीवादिराजश्रीचरणास्तु - 'अन्तेषु ' इत्यनेन धर्मादिपुरुषार्थेषु अन्ते विद्यमानेषु धर्मेषु मोक्षेषु च इत्येव व्याचचक्षिरे । द्वैतसिद्धान्ते मोक्षस्य

सामीप्यसारूप्यसालोक्यसायुज्यभेदेन चतुष्ट्वाङ्गीकारात् 'मोक्षेषु ' इति बहुवचनं युज्यत इति च व्याचख्युः । व्याख्यानेऽस्मिन् अन्तपदस्य अनेकार्थकथनाभावेऽपि निरूपितोऽर्थः सरलो हृदयङ्गमश्चेत्येतदस्माभिरवधेयम् ।

अपरोऽयं श्लोकः मोक्षधर्मपर्वणि —

" विषयानश्नुते यस्तु न स भोक्ष्यत्यसंशयम् ।
यस्तु भोगान् त्यजेदात्मा स वै भोक्तुं व्यवस्यति ॥" ( मो.ध.पर्व अ० ३०६ )

'यः संसारेऽस्मिन् विषयान् भुङ्क्ते स विषयान् न भोक्ष्यति । अत्र संशयो नास्ति । यश्च विषयभोगान् त्यजति स खलु विषयान् भोक्तुं प्रभविष्यति' इत्ययमापाततः प्रतीयमानोऽर्थः असङ्गत इव भाति । श्रीचरणास्तु एवमाशयं निर्वर्णयन्ति — 'इह लोके यः विषयभोगपरायणो भवति, अर्थात् देवर्षिपितृपूजादि नानुतिष्ठति सः परलोके विषयान् नैव भोक्ष्यति । यस्तु लोकेऽस्मिन् विरक्तः सन् विषयभोगान् परित्यजति सः परलोके विषयान् भोक्तुमर्हति' इति । व्याख्यानेऽस्मिन् स्वरसता स्पष्टैव ।

पुनरन्योऽयं श्लोकः यत्र श्रीचरणानां व्याख्यानं मनोरमम् —

"दिने दिनेऽस्तमेति पुनरुद्गच्छते दिशः ।
तावुभौ न रवावास्तां तथा वित्त शरीरिणम् ॥"(श्लो.३६. मोक्षधर्मपर्व अ.२२७)

'प्रत्यहम् उदयास्तमयौ रवौ दृश्येते । किन्तु तौ तस्मिन् न स्तः । शरीरिणं जीवमपि तथैवेति जानीहि' - इत्यापातप्रतीतोऽर्थः । रवौ दृश्यमानौ उदयास्तमयौ तस्मिन् न वस्तुतो विद्येते इति तु युक्तमेव । किन्तु जीवे तयोः का प्रसक्तिः? कथं वा तौ जीवे न स्त इति शङ्कया श्लोकाशयः न स्पष्टं प्रतिभाति । श्रीचरणास्तु श्लोकस्यास्य भावमेवं विशदयन्ति — रवेरुदयास्तमयौ हि मनुष्यदृष्ट्यैव । वस्तुतस्तु रवेरुदयः अस्तमयो वा नास्त्येव । एवमुदयास्तमयौ शरीरिणोऽपि न स्तः । शरीरिविषये उदयास्तमयशब्दः

जननमरणपरः । शरीरिशब्दश्चात्र न जीववाची । किन्तु शरीरमस्य वशे इति व्युत्पत्त्या परमात्मवाची इति । लोकरूढ्या जीवे प्रसिद्धस्य शरीरिशब्दस्य प्राङ्रूढिमाश्रित्य भगवतो जननमरणाभावप्रतिपादनपरतया कृतमिदं व्याख्यानम् अतिरमणीयमित्यत्र न कश्चिद् विप्रतिपद्यते ।

## लक्षालङ्कारकर्तारः श्रीश्रीवादिराजतीर्थश्रीमच्चरणाः

श्रीवादिराजतीर्थश्रीमच्चरणाः (१४८०-१६००) कर्णाटकराज्ये दक्षिणकन्नडमण्डले कुम्भासीसमीपस्थे हूविनकेरे इति ग्रामे जनिमलभन्त । तौळवकुलविभूषणयो रामाचार्य-गौरीति स्वनामधन्ययोः दम्पत्योः सुपुत्रा एते श्रीसोदामठाधीशानां श्रीवागीशतीर्थानां सविधे, पूर्वकृतसङ्केतानुसारेण स्वपितृभ्यां समर्पिताः । अष्टमे वयसि परिगृहीतचतुर्थाश्रमा एते स्वगुरु-चरणानां श्रीवागीशतीर्थानां सान्निध्ये प्राप्तसमस्तविद्याः श्रीसोदामठीयं पीठमलञ्चक्रुः । ज्ञानिवरेण्या महायोगिनश्चैते विंशत्युत्तरं शतवर्षाणि यावत् जीवित्व उत्तरकर्णाटके शिर्सीनगरसमीपस्थे सोन्दाह्वये ग्रामे योगर्धिबलेन सशरीरं वृन्दावनं प्रविविशुः ।

द्वैतसम्प्रदाये श्रीवादिराजतीर्थानां स्थानं विशिष्टतमं चकास्ति । शास्त्र-वैदुष्ये कवित्वे चानुपमानाम् एषां वाक्-चातुरी मनोहारिणी । बहुजटिलान् दुर्बोधान् शास्त्रीयान् विषयानपि समुचितैर्लौकिकैर्निदर्शनैः सुबोधान् कुर्वती सरसा सद्युक्तिगर्भा च तेषां शैली सर्वविद्वज्जनसमादरणीया । वृत्तरत्न-सङ्ग्रहाख्ये श्रीचरणानां चरितनिरूपणपरे काव्ये तेषां वाग्वैखरी एवं समुपवर्णिता —

सविनोदं साट्टहासं सस्मितं सुन्दरान्वितम् ।
सरहस्यं सप्रमाणं वादिराजवचोमृतम् ।

निर्दुष्टं रसवत् स्पष्टं नानन्दयति कं जनम् ॥

श्रीचरणा एवं निरुपमनिखिलशास्त्रपाण्डिती-समुत्थस्वप्रज्ञावैभवेन, अनितरसाधारणेन वादकौशलेन, संस्कृतभाषायामिव कन्नडभाषायामपि सुजनानां ज्ञानभक्तिसंवर्धकेण कविताचातुर्येण च द्वैतसिद्धान्तप्रसारकेषु अग्रगण्या विरेजिरे ।

महनीयानामेषां प्रभावेण बहवो वैष्णवदीक्षां स्वीचक्रुरिति च श्रूयते । दक्षिण-कन्नडमण्डले कोटेश्वरग्रामवास्तव्या नैकसङ्ख्याकाः ब्राह्मणाः एतच्छिष्यता-मङ्गीकृत्य वैष्णवा अभूवन् । तथैव दक्षिणकन्नडप्रान्तस्थाः स्वर्णकारा अपि एतदनुयायिनो भूत्वा आत्मनो धन्यान् मेनिरे ।

द्वैतसिद्धान्तप्रसारणे जनेषु सर्वेषु विष्णुभक्तिसंवर्धने च दृढदीक्षाः श्रीचरणाः पञ्चोत्तरैकशतग्रन्थान् व्यरचयन्निति शृणुमः । एतेषु प्रायः पञ्चाशत्सङ्ख्याकाः स्तोत्रात्मकाः ।

प्रधानाश्च शास्त्रग्रन्थाः —

१. उपन्यासरत्नमाला

दशोपन्याससङ्ग्रहात्मकोऽयं ग्रन्थः । रुक्मिणीशविजयमधिकृत्य द्वौ पादिखण्डनमधिकृत्यैक इति केवलं त्रय उपन्यासा अधुना लभ्यन्ते ।

२. तत्त्वप्रकाशिकागुर्वर्थदीपिका

श्रीमध्वाचार्यविरचितब्रह्मसूत्रभाष्यटीकायाः श्रीजयतीर्थविरचिताया अतिसङ्क्षिप्ताऽपि अपूर्वविषयनिरूपणपरा टिप्पणी ।

३. सुधागुर्वर्थदीपिका

श्रीमन्मध्वाचार्यरचितानुव्याख्यानस्य सुप्रसिद्धा श्रीजयतीर्थविरचिता

या टीका न्यायसुधाख्या तस्या अतिसङ्क्षिप्ताऽप्यत्यन्तोपकारिणी टिप्पणी ।

४. ईशोपनिषद्भाष्यटीकाटिप्पणी

५. केनोपनिषद्भाष्यटिप्पणी

६. तैत्तिरीयोपनिषद्भाष्यटिप्पणी (असम्पूर्णा)

७. आर्थवणोपनिषद्भाष्यटिप्पणी

८. एकोनपञ्चपादिका

श्रीपद्मपादयतिविरचितपञ्चपादिकाखण्डनात्मिका ।

९. विवरणव्रणम्

श्रीप्रकाशात्मयतिकृतविवरणग्रन्थविमर्शात्मकः ।

१०. पाषण्डमतखण्डनम्

जैनानां बौद्धानां च मतविमर्शः ।

११. युक्तिमल्लिका

श्रीवादिराजतीर्थविरचितेषु ग्रन्थेषु प्रधानतमः । गुणशुद्धिभेदविश्वफल-सौरभनामसु पञ्चसु प्रकरणेषु ५३७९सङ्ख्याकैः सरसैः श्लोकैः द्वैतसिद्धान्त-तत्त्वानां समर्थनं मतान्तरतत्त्वानां विमर्शनं च विशिष्टशैल्या विहितमत्र ।

१२. न्यायरत्नावली

छन्दोबद्धः अद्वैतमतविमर्शपरो ग्रन्थः ।

१३. माध्ववाग्वज्रावली

ग्रन्थोऽयं नोपलभ्यते ।

१४. चक्रमीमांसा

वैष्णवधर्मेष्वन्यतमस्य तप्तमुद्राधारणस्य समर्थनात्मकः ।

१५. स्वाप्नवृन्दावनाख्यानम्

स्वस्य ऋजुत्वख्यापकः शिष्याय स्वप्ने उपदिष्टो ग्रन्थः ।

१६. श्रुतितत्वप्रकाशिका

अद्वैतबोधकत्वेन प्रसिद्धानां 'नेह नानास्ति' इत्यादीनां पञ्चश्रुतीनां द्वैतपरत्वप्रतिपादको ग्रन्थः ।

१७. हरिभक्तिलता

हरिसर्वोत्तमत्व समर्थनपरः पद्यात्मकः ग्रन्थः ।

१८. भावप्रकाशिका

श्रीमध्वाचार्यविरचितस्य महाभारततात्पर्यनिर्णयस्य टिप्पणी ।

१९. महाभारतलङ्कालङ्कारः

महाभारते दुगर्मानां श्लोकानां विवरणात्मकः ।

२०. कल्पलता

जैनमतविमर्शात्मको ग्रन्थः ।

२१. रुक्मिणीशविजयम्

एकोनविंशतिसर्गेषु श्रीकृष्णस्य चरितं, विशेषतः रुक्मिण्या अपहरणं तया सह श्रीकृष्णस्य विवाहं च सुन्दरं वर्णयन्मनोहरं काव्यम् ।

२२. तीर्थप्रबन्धः

समग्रे भारते देशे पुण्यक्षेत्राणि सन्दृश्य तत्रत्यानां तीर्थानां देवानां च

वर्णनं विदातुं विरचितमतिविशिष्टं स्तोत्रकाव्यम् ।

एतदतिरिक्तानि भक्तिरसपूर्णानि हृद्यानि काव्यगुणगुम्फितानि बहूनि स्तोत्राणि श्रीचरणैर्विरचितानि । कन्नडभाषायामपि लघूनि बहूनि भगवच्चरितवर्णनपराणि सरसाणि गीतानि तथैव शास्त्रप्रमेयप्रतिपादकानि काव्यानि च श्रीवादिराजतीर्था निर्ममिरे ।

लक्षालङ्कारकर्तृत्वम् —

महाभारतलक्षालङ्कारोऽयं श्रीमद्वादिराजपूज्यचरणैः विरचितो न वेति संशयितारोऽपि केचन दृश्यन्ते अधुना । तेषां संशयस्य मूलमिदमामनन्ति यदत्र ग्रन्थे महाभारतश्लोकव्याख्यानरूपे भारताद्यपद्यस्य भगवता व्यासेन मङ्गळचरणपद्यत्वेनोपनिबद्धस्य `नारायणं सुरगुरुम्' इत्यस्य व्याख्यानमेव नाकारि । न चेदं पद्यं भारताद्यपद्यमेव न भवति, बहुषु कोशेष्वदर्शनादिति वक्तुं युक्तम् । महाभारततात्पर्यनिर्णये श्रीमदाचार्यैः द्वितीयेऽध्याये श्लोकस्यास्य पठनात् । अवतारितं च पद्यमिदं तट्टीकायां भावप्रकाशिकायां श्रीवादिराजश्रीचरणैः — ``अधुना भारताद्यपद्य एव हि सर्वोत्तमत्वादिसकलमहिम्नां निरूपितत्वात् उपक्रमानुसारेण सर्वग्रन्थस्य योजनीयत्वात् लक्षभारतवाक्यान्यपि भगवन्माहात्म्यपराणीति भावेन लोकशिक्षणाय भारतादौ विरचितमङ्गलपद्यं पठति — नारायणमिति'' इति । श्लोकमिमं व्याख्यायान्ते श्रीचरणैरेतत्पद्यस्य भारताद्यपद्यत्वविषये उक्तानि कानिचिद् वचनानि तेषां तत्र नैर्भर्यं सूचयन्ति । एतानि खलु तेषां वचनानि - `क्वचिदन्तरितानपि' इति वचनात् इदमाद्यं पद्यमसहमानाः केचिदादौ न लिखन्ति । केरळदेशस्थपुरातनपुस्तकेषु अद्यापि दृश्यते । कथमन्यथा लोकाचार्यो व्यासः लक्षपरिमितं ग्रन्थं कुर्वन् ग्रन्थादौ लोकशिक्षणाय

मङ्गलपद्यं न रचयेत् । यतोऽल्पीयसि ग्रन्थे भागवते हरिवंशादौ च `सत्यं परं धीमहि' इति, ``सोऽनादिर्वासुदेवः शमयतु दुरितं जन्मजन्मार्जितं नः" इति च लोकशिक्षणार्थं मङ्गलमकरोत् । अतोऽस्मिन् महाग्रन्थे सकलशिष्टानां गुरुर्व्यासः मङ्गलमाचरदेवेति सिद्धम्" इति ।

महाभारतलक्षालङ्कारे ``नारायणं सुरगुरुम्" इति पद्यस्य व्याख्या न कृतेत्येव न । अपि तु `रोमहर्षणपुत्र उग्रश्रवाः सौतिः पौराणिको नैमिशारण्ये शौनकस्य कुलपतेर्द्वादशवार्षिके सत्रे' इति आदिपर्वान्तर्गतानुक्रमणिका-पर्वगतवचनं मङ्गलवचनत्वेन लक्षालङ्कारे व्याख्यायते । अत्र हि ``रोमहर्षण-पुत्रपदेनानन्दजनककथाकथकसूतपुत्रत्वोक्त्या सूतकथारूपस्यास्य ग्रन्थस्य सर्वेष्टदायकत्वं सूचितम् । उग्रश्रवा इत्युक्तेश्च......... रक्षसां कलेः पापानां चोग्रं श्रवः गुरुमुखाद् हरिकथाश्रवणं यस्य स इत्यर्थलाभेन समस्तानिष्ट-परिहारकत्वं च सूच्यते" इत्यादिव्याख्यानेन 'रोमहर्षणपुत्र' इत्यादि-वचनस्यैव मङ्गलाचरणश्लोकत्वमभिप्रेतं ज्ञायते । एवं मङ्गलश्लोकविषय एव विरुद्धाशयवतोरनयोः लक्षालङ्कारभावप्रकाशिकयोरेककर्तृकत्वं कथङ्कारं घटेत । भावप्रकाशिकायाः कर्तारस्तु श्रीवादिराजपूज्यचरणा एवेति सर्व-सम्मतत्वात् लक्षालङ्कारकर्तृत्वमन्यस्यैव कस्यचन वक्तव्यं भवतीति तेषामाशयः ।

किन्तु महाभारतलक्षालङ्कारग्रन्थान्ते ग्रन्थकर्तुः एतद्ग्रन्थविरचने स्वस्य प्रवृत्तौ कारणं निरूपयितुः कतिपयवचनानि व्याख्येयं श्रीवादिराजपूज्य-चरणैरेव ग्रथितेति स्पष्टं ख्यापयन्ति । इमानि खलु तानि वचनानि —

`व्यासस्य कृपया लक्षालङ्काराख्यः कृतो मया ।
ग्रन्थोऽयं यः प्रभुः कीटमकरोत् पृथिवीपतिम् ॥

भारतस्य सुधाम्बोधेर्भारतीशादयः सुराः ।
यथावन्मथने शक्ताः कृतशिक्षा हरेर्मुखात् ॥

अहं तु मानुषः कुर्यां महाकार्ये कथं मतिम् ।
अत्रास्ति कारणं किञ्चिद् गुह्यं तच्छ्रूयतां बुधैः ॥

प्रयागे ब्रह्मणः सन्ध्यामठे जपपरायणः ।
अहमासं तदा लक्षालङ्कारं कुर्विति प्रभुः ॥

भारतस्य श्लोकलक्षस्यार्थविस्तरणात्मकम् ।
कारयामास योगीन्द्रो लक्षालङ्कारमीदृशम् ॥

व्यास एव यतः कर्ता दासस्य हृदि मे स्थितः ।
अतो न विस्मयः कार्यः किमकार्यं महाप्रभोः ॥

सद्वाक्यरत्नमालेयं तद्यसस्य गलेऽर्पिता ।
सदा स्यात् स्वाङ्गकान्त्येमां स एव प्रचयेत् प्रभुः ॥

नमोऽस्तु वासुदेवाय व्यासदेवाय धीमते ।
असुदेवाय देवेभ्यो गुरुभ्यश्च नमो नमः ॥

श्रीदेव्यै भारतीदेव्यै गौरीदेव्यै नमो नमः ।
नमः शच्यै च रत्यै च मातृभ्यश्च नमो नमः ॥"

यद्यप्यत्र ग्रन्थस्यास्य श्रीवादिराजतीर्थकृतत्वे सिद्धे एतेषां वचनानामपि तदीयत्वं सिध्यति । एतेषु श्लोकेषु क्वापि स्वनाम्नः अनुल्लेखात् कथमेतद्बलेन ग्रन्थस्यास्य तत्कृतत्वसिध्दिरिति शङ्का च जागर्ति । अथापि सर्वकोशेष्वपि दृश्यमाने अन्तिमवाक्ये श्रीवादिराजयतिकृतत्वस्यैवोल्लेखात् ग्रन्थस्यास्य तत्कृतत्वपक्षः विश्वासनीयो भवति ।

अपि च, श्रीवादिराजपूज्यचरणप्रशिष्याणां श्रीवेदनिधितीर्थानाम् अन्तेवासिभिः श्रीरामचन्द्राचार्याभिधैः विरचिते श्रीवादिराजगुरुवरचरितामृते तृतीयबिन्दौ प्रयागे सन्ध्यामठे साक्षाद्व्यासमहर्षेरादेशानुसारं श्रीवादिराज-यतिभिः व्याख्यानमिदमारचितमित्येष वृत्तान्तः लक्षालङ्कारान्ते उल्लिखितः अन्ववादि । मात्रा सङ्कल्पितस्य भगवते लक्षभूषानिवेदनस्य सम्पूर्तिः महाभारतलक्षालङ्कारटीकया भवेदित्यपि भगवान् व्यासो निदिदेश इत्यधिकांशोऽपि श्रूयतेऽत्र । इमानि खलु तानि पद्यानि —

'प्रयागे ब्रह्मणः सन्ध्यामठे जपपरस्य हि ।
मुनिवेषधरो व्यासः साक्षाद् दृष्टिपथे स्थितः ॥

मात्रोपयाचितं वत्स लक्षभूषानिवेदनम् ।
सुपुत्रेण त्वया कार्यं महाभारतटीकया ॥

लक्षग्रन्थिपदार्थानां विवृत्या लक्षभूषया ॥

मदर्चनेन मात्रोक्तं साधितं स्यादितीरितः ।
व्यासाज्ञां शिरसा धृत्वा बदरीं गतवान् मुदा ॥

प्रणम्य मध्वहंसेन्द्रान् व्यासमध्वप्रचोदितः ।
लक्षालङ्कारटीकां स विलिख्यार्पयते स्म हि ॥' इति ।

श्रीवादिराजतीर्थानां कालस्य तत्प्रशिष्याणां श्रीवेदनिधितीर्थानां कालस्य चान्तरं बहु नास्तीति हेतोः श्रीवेदनिधितीर्थानां समये लक्षालङ्कारस्य श्रीवादिराजयतिकृतत्वप्रसिद्धिः अत्यन्तं विश्वासनीयतामर्हतीत्यवश्यं सर्वै-रङ्गीकर्तव्यं भवति । अनन्तरकालीनैः षट् पुराचार्यैः लक्षालङ्कारस्य श्रीवादिराजयतिकृतत्वं निःशङ्कमन्वमोदीत्ययमंशोऽपि लक्षालङ्कारस्य

श्रीवादिराजयतिकृतत्वे दृढतरं प्रमाणमित्यभ्युपेयम् ।

`नारायणं सुरगुरुम्' इत्याद्यपद्यस्य लक्षालङ्कारे व्याख्याऽकरणं तु महाभारततात्पर्यनिर्णयव्याख्यायां भावप्रकाशिकायां स्वेनैव विस्तारेण कृतत्वादेवेति वक्तुं युक्तम् । `रोमहर्षणपुत्र उग्रश्रवाः' इत्येतद्व्याख्यावसरे यद्यपि तत्पदप्रयोगबलतः महाभारतस्य इष्टानिष्टप्राप्तिपरिहारोपायत्वं सूच्यत इत्युक्तम् । परन्तु, तावता तस्यैव वचनस्य महाभारताद्यत्वोक्तिः मङ्गलाचरणरूपत्वोक्तिश्च नातीव युज्यते । कथाकथनमनेन वचनेनारभ्यत इति हेतोः तत्रत्यपदानामिष्टानिष्टपरिहारसाधनत्वसूचकत्वोक्तिर्नैवासङ्गतेति च मन्महे ।

लक्षालङ्कारसम्पादनकार्यमधिकृत्य -

श्रीमद्वादिराजतीर्थश्रीमच्चरणविरचितस्य महाभारतलक्षालङ्कारस्य प्रथमो भागः क्रिस्तोः १९५९ तमे वर्षे विद्वत्तल्लजैः श्रीमद्भिः अलेवूरु सीतारामाचार्यैः संशोधनं कारयित्वा श्रीसोदामठेन प्रकाशितः । अयं च भागः उद्योगपर्वान्त आसीत् । सम्पुटेऽस्मिन् व्याख्यानमात्रममुद्र्यत । व्याख्येयाः श्लोकाः न समायोज्यन्त । तदनन्तरं, भीष्मपर्वतः शान्तिपर्वणि राजधर्मपर्वपर्यन्तं उडुपि संस्कृतमहापाठाशालायाः प्रांशुपालैः विद्वद्वर्यैः श्री लक्ष्मीनारायणशर्मभिः चतुर्दश मातृकाः संशोध्य प्रकाशनार्थं सज्जीकृतः श्रीसोदामठेन लक्षालङ्कारस्य द्वितीयभागत्वेन प्रकाशितः । प्रथमभागापेक्षया द्वितीये भागे वैशिष्ट्यमिदमासीद् यद् व्याख्येया मूलश्लोका अपि संयोजिताः । प्रथमभागे तु व्याख्यानमात्रं मुद्रितमासीत् ।

परमपूज्यैः श्रीसोदामठाधीशैः श्रीविश्वोत्तमतीर्थश्रीचरणैः महाभारत-लक्षालङ्कारस्य तृतीयो भागः समाप्तिपर्यन्तः स्वीयश्रीकृष्णपूजापर्यायसमये

(१९९६-९८) प्रकाशनीय इति विचिन्तितम् । किन्तु केनापि कारणेन तत्कार्यं न समपद्यत । समग्रस्य अस्य महाभारतव्याख्यानस्य प्रकाशने बद्धदीक्षाः श्रीचरणाः पर्यायानन्तरं १९९८ वत्सरे विद्वदग्रेसरान् श्री साणूरु भीमभट्ट-महाभागान् आहूय प्रकाशनीयस्य भागस्य संशोधनाय आदिदिशुः । अदुश्च चतस्रो लक्षालङ्कारमातृकाः याः तिगळारिलिप्या लिखिताः । एका नन्दिनागरिलिप्यां लक्षालङ्कारयुता मातृकाऽपि श्रीचरणैरनुगृहीता । श्रीभीमभट्टैः मैसूरुप्राच्यसंशोधनालयतः देवनागर्या एका मातृका तथा विद्वद्वरेण्यानां श्रीप्रभञ्जनाचार्याणां सकाशाच्च देवनागरीलिपिबद्धा एका मातृका सङ्गृहीता । एतासां मातृकाणां साहाय्येन श्रीभीमभट्टाः पाठभेदतोलनपुरःसरं सामग्र्येण लक्षालङ्कारं लेखयामासुः । सम्बद्धान् मूलमहाभारतश्लोकांश्च तत्र संयोजयामासुः । एवं सज्जीकृते लक्षालङ्कारे संयोजितमूलश्लोकानां पुरतः कुम्भकोणमहाभारतप्रकाशनमनुसृत्य अध्याय-सङ्ख्या श्लोकसङ्ख्या च सूचिते । एतेन, प्रथमं श्री अलेवूरु सीतारामाचार्यैः सम्पादिते भागे मूलश्लोकानां संयोजनाभावेन, तदनन्तरं श्रीलक्ष्मी-नारायणशर्मभिः सम्पादिते च भागे मूलश्लोकानां संयोजनेऽपि श्लोकाध्यायसङ्ख्यासूचनाभावेन यः क्लेशः अध्येतृभिरनुभूतः स परिहृतः ।

पाठसंशोधनार्थमेवं श्रीभीमभट्टैः बह्व्यो मातृकाः समासादिता अपि तासां सर्वासामप्यपूर्णतया लेखकदोषदूषिततया च संशोधनकर्मात्यन्तं क्लिष्टमासीत् । अथापि महता परिश्रमेण संशोधन-कार्यमाचार्याः निरवहन् । एतदनन्तरं, दौर्भाग्यवशाद् बहुकालमनारोग्यपीडिताः श्रीभीमभट्टाः श्रीहरिपदं लेभिरे ।

एवं विपत्सु सम्प्राप्तास्वपि, महाभारतलक्षालङ्कारोऽयं संशोध्य समीचीनतया सामग्र्येण प्रकाशनीय इत्याचार्याणामाशयानुसारं तच्छिष्यैः

विदुषां साहाय्येन अवशिष्टानि कार्याणि महत्या श्रद्धया न्यरुह्यन्त । त्रिष्वपि सम्पुटेष्वधुना प्रकाश्यमानेषु पूर्वोक्तरीत्या कुम्भकोणपाठानुसारेण मूलमहाभारतश्लोकाः समायोजिताः । किन्तु, बहुषु स्थलेषु लक्षालङ्कार-व्याख्यानुसारेण मूलपाठः कुम्भकोणपाठाद्विलक्षणः दृश्यते । तादृशस्थलेषु लक्षालङ्कारानुगुणः पाठ एव ग्रन्थे संयोजितः । विभिन्नः कुम्भकोणपाठस्तु अधस्ताद्दत्तः । केषुचन स्थलेषु लक्षालङ्कारेण स्वीकृतः कुम्भकोण-पाठविसदृशः पाठः औत्तरेयादिपाठानुगुणो लक्षितः । तादृशस्थलेषु कुत्र प्रदेशे कस्यां लिप्यां लक्षालङ्कारपाठ उपलब्ध इत्येते विशेषा अधस्ताट्टिप्पण्यां सूचिताः । एतेषां विषयाणां सङ्ग्रहार्थम् अस्माभिः भण्डारकर् प्राच्यविद्या-संशोधनालयेन संशोध्य प्रकाशितस्य महाभारतग्रन्थस्य साहाय्यं विशेषतः स्वीकृतम् । अवसरेऽस्मिन् भण्डारकर् प्राच्यविद्यासंशोधनालयस्य कृते अस्मदीयमाधमर्ण्यं सकार्तज्ञम् आविष्कुर्मः । अनेकेषु स्थलेषु इदमपि दृश्यते यल्लक्षालङ्कारस्वीकृतः पाठः कुत्रापि नोपलभ्यत इति । तादृशेषु स्थलेषु गत्यन्तराभावात् केवलं लक्षालङ्कारव्याख्यानमात्रं मुद्रितमस्ति । व्याख्यातानां श्लोकानां काप्यनुपलब्धिरधस्तात् सूचिता वर्तते ।

कृतज्ञताऽविष्करणम् -

आचार्यमहाभागानाम् आदेशानुसारेण तच्छिष्येण श्री श्रीनिवासमूर्ति-महोदयेन लक्षालङ्कारप्रथमभागसम्बद्धाः आदि-वन-पर्वमहाभारतश्लोकाः अन्विष्य सङ्गृहीताः । श्रीमता प्रदीपसिंहमहाभागेन उद्योगपर्वस्थाः लक्षालङ्कारे व्याख्याताः श्लोकाः समगृह्यन्त । आचार्याणाम् आत्मजेन स्वजीवननिर्वाहके कस्मिंश्चन लौकिके कर्मणि निरतेनापि स्वपितृवर्येण विद्वत्कर्मण्यप्याहित-संस्कारेण परमश्रद्धाळुना कृष्णमूर्तिमहाभागेन विराट-भीष्म-शान्ति-पर्वगताः मूलश्लोकाः अन्विष्य समायोज्यन्त । तेनैव

महाभागेन श्रीयोगीशमहाभागस्य साहाय्यं स्वीकृत्य कर्णपर्वस्थाः मूलश्लोका अपि अन्विष्टाः संयोजिताश्च । अवशिष्टं संशोधनकार्यं तथा टङ्कितप्रतौ शोधनकार्यं च महाभारत-संशोधनप्रतिष्ठाने कार्यं कुर्वद्भिः विद्वद्भिरक्रियत ।

एतद्ग्रन्थसम्पादनकर्मणि अस्माभिः विशेषतः स्मर्तव्या भवन्ति श्रीपूर्णप्रज्ञविद्यापीठस्य पण्डितवरेण्याः प्रांशुपालाः श्रीहरिदासभट्टमहाभागाः। श्रीमतां भीमभट्टमहाभागानां निधनानन्तरं लक्षालङ्कारतृतीयभागस्य संशोधनभारः निर्वोढव्य इति ते प्रार्थिताः । अस्मत्प्रार्थनाम् अङ्गीकृत्य बहु परिश्रम्य तृतीयं भागं ते पर्यशोधयन् । महाभारतसंशोधनप्रतिष्ठानं तेभ्यः आधमर्ण्यं निवेदयद् हार्दं कार्तज्ञ्यमाविष्करोति ।

श्री. व्यय.सं. फाल्गुणकृष्णचतुर्थी

श्रीवादिराजगुरुसार्वभौमाणामाराधनदिनम्

विदुषामाश्रवः

डि. प्रह्लादाचार्यः

अध्यक्षः,

महाभारतसंशोधनप्रतिष्ठानम्

# Preface

It gives us great pleasure to present the Mahābhārata Lakṣālankāra, a unique commentary on the Mahābhārata, by the vaisnava saint pontiff, His Holiness Bhāvisamīra Śrī Vādirāja Tīrtha (1480-1600 C.E.), to the students of the great epic - The Mahābhārata. We are indeed delighted for two reasons. Firstly, publishing after critically editing this unique composition that excels in bringing out the hidden import of the Mahābhārata in its entirety. Secondly, this edition specially benefits the students of the Mahābhārata as it also contains the original verses of The Mahābhārata that are commented by the author.

In this preface, though it is customary to highlight briefly the unique contribution of the Mahābhārata Lakśālankāra, we feel that it will be more appropriate if the unique features of The Mahābhārata for which Lakśālankāra is a commentary are dealt with first.

In the vast realm of Sanskrit literature, The Mahābhārata's greatness stays unparalleled. Though it is a Paurusheya text - composed by a person, in this case, by the Bhagavān Vedavyāsa, it has been given the status of an Apaurusheya composition. Śruthi itself proclaims: इतिहासपुराणः पञ्चमो वेदानां वेदः "Among the Vedas, Itihāsa and Purāṇa are the fifth Veda". Another Śruthi statement - इतिहासपुराणाभ्यां वेदं

समुपबृंहयेत् – "The Vedas are to be studied with the assistance of the Itihāsa and Purāna" - indicates that without the assistance of The Mahābhārata it will be impossible to ascertain the true import of the Vedas. The very name 'Mahābhārata' conveys its महत्त्व – greatness and भारेण ततत्व – pervasion, through its weight. In this regard, Śrī Ānandatīrtha Bhāgavatpādācārya (also known as Śrī Madhvācārya – profounder of the Dvaita School of thought) quotes in his Gītatātparya Nirṇaya, several verses from the Brahmāṇḍa Purāṇa—

"शास्त्रेषु भारतं सारं तत्र नामसहस्रकम् ।
वैष्णवं कृष्णगीता च तज्ज्ञानान्मुच्यतेऽञ्जसा ॥

न भारतसमं शास्त्रं कुत एवानयोः समम् ।
भारतं सर्ववेदाश्च तुलामारोपिताः पुरा ॥

देवैः ब्रह्मादिभिः सर्वैं ऋषिभिश्च समन्वितैः ।
व्यासस्यैवाज्ञया तत्र त्वत्यरिच्यत भारतम् ॥

महत्वाद् भारवत्त्वाच्च महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥

स्वयं नारायणो देवैः ब्रह्मरुद्रेन्द्रपूर्वकैः ।
अर्थितो व्यासतां प्राप्य केवलं तत्वनिर्णयम् ।
चकार पञ्चमं वेदं महाभारतसञ्ज्ञितम् ॥"

"Bhārata is the quintessence of all the Śāstras and in Bhārata, Viṣṇu Sahasranāma and Gīta recited by Kṛṣṇa are essences of the Bhārata. By knowing them one will become completely liberated.

There is no Śāstra which is similar to Bhārata. When such

is the case with Bhārata, how can there be a Śāśtra which can be similar to these two (viz. Viṣṇu Sahasranāma and Bhagavad Gīta)

Once upon a time, as per the order of Lord Vedavyāsa himself, Brahma and others along with all the gods and sages, weighed Mahābhārata and all other Vedas, in a balance. Mahābhārata excelled even all the Vedas.

The Mahābhārata is so called because it has the greatness and the weight. He, who knows this etymological meaning of the word, will be free from all the sins.

Lord Nārāyaṇa himself, having been requested by Brahma, Rudra and the other gods, took the incarnation of Lord Vedavyāsa for the sole purpose of determining the nature of the Supreme principle and authored the fifth Veda named as Mahābhārata."

The greatness and the weight of The Mahābhārata are due to nothing else but the plenitude of its contents – अर्थपौष्कल्य. Śrī Madhvācārya once gave an explanation of an Aitareya Śṛuti in a different manner than the conventional meaning. When questioned about it, he explained the plurality of meanings of the Śṛutis and the Mahābhārata as follows:

"त्र्यर्थतां श्रुतिषु वित्त, दशार्थं भारतं, ननु शतार्थमपि स्याद् वैष्णवं पदसहस्रतयं हि" ।

"You should know that the Śṛutis have a minimum of three meanings, Mahābhārata has a minimum of ten and the thousand names of the Lord Viṣṇu have at least hundred".

This was not just imagination or exaggeration by Śrī

Madhvācārya. The fact that the Mahābhārata has such meanings beyond the ken of gods such as Bṛhaspati known for their vast knowledge and the plenitude of its meanings is also established by evidence. The Upanāradīya Purāṇa states as follows:

"ब्रह्माद्यैः प्रार्थितो विष्णुः भारतं स चकार ह ।
यस्मिन् दशार्थाः सर्वत्र न ज्ञेयाः सर्वजन्तुभिः ॥"

"Lord Viṣṇu, being requested by Brahma and others authored the Mahābhārata in which there are ten meanings everywhere, which cannot be completely perceived by anyone".

However, the Mahābhārata which is also known as the fifth Veda cannot just be taken at par with the Vedas. The great sage Bhagavān Vedavyāsa, an incarnation of Lord Viṣṇu and the author of the Mahābhārata has repeatedly stated therein many things which are not stated in the Vedas, but are known only to Him. Hence, the Mahābhārata is even superior to the Vedas. Similar to the Brahmāṇḍa purāṇa text quoted earlier, in Skanda purāṇa also we come across the following statement –

"भारतं चापि कृतवान् पञ्चमं वेदमुत्तमम् ।
दशावरार्थं सर्वत्र केवलं विष्णुबोधकम् ॥
परोक्षार्थं तु सर्वत्र वेदादप्युत्तमं तु यत् ॥" इति ।

"(Bhagavān Vedavyāsa) also composed Mahābhārata, the fifth and the best of the Vedas. It has a minimum of ten meanings everywhere and conveys only (the greatness and qualities of) Viṣṇu. It has hidden meanings everywhere and is (hence) superior to the Vedas".

The Mahābhārata with a minimum of ten meanings also has three meanings from a different perspective and this is also corroborated by the evidence. The difference between the Vedas and the Mahābhārata is that while the three meanings of the Vedas, are the Ādhyātmika, the Ādidaivika and the Ādibhotika, Mahābhārata itself says its three meanings are मनु, आस्तीक and उपरिचर. Ādiparvan (Mahābhārata) states:

"मन्वादि केचिद् ब्रुवते ह्यास्तीकादि तथाऽपरे ।
तथोपरिचराद्यन्ये भारतं परिचक्षते ॥"

The term Manu with the etymology 'मनुते परमात्मानम् अनेन' ('realises the Supreme Being through these') states the five requirements which finally lead to the realization of the Supreme Being. These are – Righteousness (धर्म), devotion etc., ten virtues (भक्त्यादिदशकम्), listening to the teachings of the preceptor etc. (श्रुतादि), character and humility (शीलविनयौ) and the Vedas. Among these, धर्म is represented by Yudhiṣṭhira The ten virtues are – भक्ति (devotion), ज्ञानं (Knowledge), वैराग्यं (detachment), प्रज्ञा (wisdom), मेधा (intelligence), धृतिः (steadfastness), स्थितिः (existence), योगः (meditation), प्राणः (life) and बलम् (strength). These virtues are represented by Bhīmasena. The श्रुतादि is श्रवणं (Listening to the teachings of the preceptor), मननम् (reasoning), and ध्यानम् (meditation). Arjuna represents these virtues. शील and विनय i.e. character and humility are represented by Nakula and Sahadeva, respectively. Draupadi represents the Vedas. The Mahābhārata is called मन्वादि as it, with the pretext of narrating the story of the Pandavas, also brings out the significance of the virtues such as धर्म.

The Pandavas are called आस्तिकाः due to their steadfast

faith in God. The Mahābhārata narrating their story in its essence is called आस्तिकादि.

The term उपरिचर signifies Lord Viṣṇu - the Supreme Being. As stated in the स्कान्दपुराण—केवलं विष्णुबोधकम् - the main import of the whole of the Mahābhārata lies with Viṣṇu. Hence the Mahābhārata in its entirety is considered as उपरिचरादि .

The fact that Bhagavad Gīta, a part of the Mahābhārata is considered as one of the three prasthanas (core compositions) in Vedānta Darśana, also shows the unique greatness of the Mahābhārata. Keeping in view all these points, the Mahābhārata itself, has declared about its uniqueness by the single statement –

"यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्"

'Whatever is here, is found elsewhere. What is not here, is never found anywhere else'.

Thus, The Mahābhārata is the most unique and is also regarded as इतिहास - History, as it narrates the events that took place in the hoary past. It is also designated and held in high esteem as शास्त्र - Philosophy, as it deals with the most profound spiritual truths. Similarly, The Mahābhārata is also appreciated for the best poetry, by the poets, as it conveys sentiments which cause extraordinary delight in the hearts of connoisseurs. This poetic nature of the Mahābhārata prompted Ānandavardhanacārya one of the greatest critic of literature and poet himself, to discuss in detail, in his ध्वन्यालोक about the specific sentiment in the Mahābhārata, which can be considered as its soul.

Thus, Mahābhārata in its discussions on the values of life namely, धर्म, अर्थ, काम and मोक्ष through innumerable anecdotes, varieties of characters, events, stories and plots that inspired the great poets of this land immensely for centuries, to compose their master-pieces, and also by presenting various philosophical principles that led to the formation of different philosophical schools, has, indeed given rise to the well known saying – व्यासोच्छिष्टं जगत्सर्वम्' – 'The whole universe is just a left-over, after being tasted by Lord Vedavyāsa".

It is unfortunate that this great work which has been so strongly influencing the minds of people, scholars or laymen alike, not only in this country but also abroad, has many portions deleted and interpolated from time to time. This was also stated by Śrī Madhvācārya, more than seven hundred years ago, in his Mahābhārata Tātparya Nirṇaya, which could be considered as the first ever commentary on the entire Mahābhārata and a unique one. These are the words of Śrī Madhvācārya based on his own experience after searching for the manuscripts of the Mahābhārata through the length and breadth of this country and visiting many places.

" क्वचिद् ग्रन्थान् प्रक्षिपन्ति क्वचिदन्तरितानपि ।
कुर्युः क्वचिच्च व्यत्यासं प्रमादात् क्वचिदन्यथा ॥

अनुत्सन्ना अपि ग्रन्था व्याकुला इति सर्वशः ।
उत्सन्नाः प्रायशः सर्वे कोट्यंशोऽपि न वर्तते ॥

ग्रन्थोऽप्येवं विलुळितः किम्वर्थो देवदुर्गमः ।
कलावेवं व्याकुलिते निर्णयाय प्रचोदितः ॥

हरिणा निर्णयान् वच्मि विजानंस्तत्प्रसादतः ॥
शास्त्रान्तराणि सञ्जानन् वेदांश्चास्य प्रसादतः ॥
देशे देशे तथा ग्रन्थान् दृष्ट्वा चैव पृथग्विधान् ।
यथा स भगवान् व्यासः साक्षान्नारायणः प्रभुः ॥
जगाद भारताद्येषु तथा वक्ष्ये तदीक्षया ।
सङ्क्षेपात् सर्वशास्त्रार्थं भारतार्थानुसारतः ॥" (म. भा. ता. नि. २-३-८)

"In some places, they have interpolated with their own compositions. In some other places some portions are removed. In some instances, changes are made due to sheer misunderstanding. Though the texts are not destroyed, they are entirely corrupted. As a matter of fact, most of the texts are lost. When the texts themselves are thus corrupted, what about their meanings, which are difficult to understand even by gods? In the Kali yuga (age of Kali), when the texts are corrupted, being prompted by Śrī Hari, to bring out the conclusions of the texts, I will state the conclusions of these works, having known their import with His grace and also having known the other Śāśtras and the Vedas. I have studied the work in different sources, in various places of the country, (to arrive at) the (true) Mahābhārata. I will spell out, briefly the purport of the entire Śāstra, as composed by Lord Veda̦vyāsa in the Mahābhārata and other works." (Mahābhārata Tātparya Nirṇaya Chapter 2: 3-8)

### Commentaries on the Mahābhārata

Although Indian tradition says that the Mahābhārata was composed more than five thousand years ago, there is no commentary available for the entire Mahābhārata or even a part of it which can be dated earlier to Śri Śankara of 8th cent C. E. The commentaries related with The Mahābhārata, by Śri

Śankara, Śri Rāmanuja, Abhinava Gupta and others, all belong to the period between 8th cent C.E. and 10th cent C. E. and are only on a part of The Mahābhārata i.e. the Bhagavad-Gīta which is considered as one of the Prasthāna traya in Vedanta. Śrī Vādirāja Tīrtha of the 16th century C.E., who commented on the entire Mahābhārata, from Ādiparvan to Svargarohaparvan with his Lakśālankāra – 'A lakh ornaments', has the unique distinction of writing a separate commentary on Sanat-sujātīya. In fact long before Śrī Vādirāja Tīrtha, in the 13th ,C. E. itself, Śrī Madhvācārya wrote his Mahābhārata Tātparya Nirṇaya which can also be considered as a commentary on the whole of the Mahābhārata in poetry form. However, as the very title indicates, the work was composed with an intention of arriving at settled conclusions as to the purport of the entire Mahābhārata, also based on the Harivamśa which is held as an appendix to the Mahābhārata, and several other evidences. This work contains a few chapters to decide the purport of the Ramayana also, though it is named as The Mahābhārata Tātparya Nirṇaya, as the major part deals with the Mahābhārata. It does not attempt to interpret or discuss the meaning of a ślōka or a word of the Mahābhārata as traditional commentaries do. But, Lakśālankāra of Śrī Vādirāja Tīrtha is a unique commentary on the Mahābhārata, as it refers to the ślōkas in the Mahābhārata which are either confusing or misleading, in almost all chapters of the Mahābhārata and offers one or more beautiful interpretations for such difficult terms.

There are some other commentaries also on the Mahābhārata which were published long back and are now

available. Among them the commentaries by Nilakaṇṭha and Vidyāsāgara, are well known. However, the commentary by Śrī Vādirāja Tīrtha helps the students of the Mahābhārata very much by giving precise and appropriate interpretations for difficult terms.

The following are a few examples.

अन्तेषु रेमिरे धीरा न ते मध्येषु रेमिरे ।
अन्तप्राप्तिं सुखं प्राहुः दुःखमन्तरमन्तयोः ॥

(Śānti parvan Ch. 173 – 81)

The commentary by Arjunmiśra explains the ślōka as follows –

The learned get delighted with the two end goals, among the four goals of life namely Dharma, Artha, Kāma and Mokśa (in Mokśa at one end, or if counted in the reverse order, in Dharma), but never with the two that are in the middle viz., Artha and Kāma.

The term 'anta' in the ślōka may also indicate 'the instrument of that which is in the end'. Thus the ślōka would mean – the learned are happy with either of the instruments of Dharma or Mokśa and never with the instruments of those in the middle namely Artha and Kāma.

Alternatively,

Among the four states such as Jagṛt (wakeful), Svapna (dream), Suṣupti (deep sleep) and Turīya (the fourth state namely the Mokśa ), the learned are delighted with the actions related with the state of Jagṛt or Turīya and never with the actions related with either Dream or deep Sleep.

Or,

Anteṣu means the ends i.e. in the state which is before samsāra (bondage) began and the self was one with the Brahman and in the state of deluge (Praḷaya when the self will be experiencing the bliss of emancipation. The state between these two ends is Samsāra – the state of bondage, in which the learned are not delighted.

. The above interpretations, if properly analyzed, seem to have inconsistencies. If, the term Anta means either of the two ends of Puruṣārthas, namely Dharma and Mokśa, then how does the plural number on 'anteṣu' fit here? If the two ends the state of wakefulness and the state of turiya i.e. emancipation are considered then how is it that in the state of deep sleep which is in between the two, there is no happiness? Further, the interpretations that we are delighted with the actions in the state of wakefulness and the fourth state, also are not convincing. Though there might be actions in the state of wakefulness, nothing is known about the action in the fourth state. The other explanation that the wise feel happy in the means of dharma and Mokśa also is not satisfactory. For, as per this explanation the term 'anta' will have to be used in the secondary sense. Another interpretation of the term 'anteṣu' as 'the commencement of bondage' is also quite unsatisfactory, for there is no prior state to bondage, as bondage is beginningless.

Vādirāja Tīrtha interprets 'anteṣu' as the two ends of the puruṣarthas viz, dharma and mokśa. He also justifies the plural

**इदं तु त्रिषु लोकेषु महज्ज्ञानं प्रतिष्ठितम् ।**
**विस्तरैश्च समासैश्च धार्यते यद्द्विजातिभिः ॥ ३६ ॥**

**इदं तु त्रिषु लोकेषु** इत्यत्र **ज्ञानं** ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञान-साधनम् । इदं भारताख्यमाख्यानम् ।

**तस्याख्यानवरिष्ठस्य कृत्वा द्वैपायनः प्रभुः ।**
**[१] कथमध्यापयामीदं शिष्यं नित्यमचिन्तयत् ॥ ८० ॥**

**कथमध्यापयामीदं शिष्यं नित्यमचिन्तयत्** इत्यत्र नित्यं कथं शिष्यं अध्यापयामीत्यचिन्तयदिति योजना ।

**तस्य [२] चिन्तयतश्चापि ऋषेर्द्वैपायनस्य च ।**
**[३] स्मृत्याऽजगाम भगवान् ब्रह्मा लोकगुरुः स्वयम् ॥ ८१ ॥**

**तस्य चिन्तयतश्चापि** इत्यत्र अपिपदेन व्यासस्य चिन्तां गर्हयति । **स्मृत्याऽऽजगाम** इत्यत्र **स्मृत्या** कारणेनाजगामेति योजना ।

**[४] महर्षेश्चापि लोकानां प्रीत्यर्थं हितकाम्यया ।**
**तं दृष्ट्वा विस्मितो भूत्वा प्राञ्जलिः प्रणतः स्थितः ॥ ८२ ॥**

महर्षेः प्रीत्यर्थं, लोकानां हितकाम्यया चेति सम्बन्धः । व्यासावतारे वसिष्ठनप्तृव्यासं प्रति वसिष्ठपितुर्ब्रह्मणो वृद्धप्रपितामहत्वाल्लोकरीत्या प्रणामादिकमिति ज्ञेयम् ।

---

१. **'कथमध्यापयानीह शिष्यानित्यन्वचिन्तयत्'** इति कुं.पाठः ।

२. $D_{6,8}$,$T_2$,$G_{3-6}$,M; BORI पृ. ८८४; **तच्चिन्तितं ज्ञात्वा** इति कुं.पाठः ।

३. **'तत्राजगाम'** इति कुं.पाठः ।

४. $G_{1-3}$; BORI पृ. ८८४. **'प्रीत्यर्थं तस्य चैवर्षेर्लोकानां हितकाम्यया'** इति कुं. पाठः ।

**हिरण्यगर्भमासीनं तस्मिंस्तु परमासने ।**
**परिवृत्यासनाभ्याशे व्यासः[१] स्वयमुपाविशत् ॥ ८४ ॥**

**अनुज्ञातोऽथ कृष्णस्तु ब्रह्मणा परमेष्ठिना ।**
**निषसादासनाभ्याशे प्रीयमाणः शुचिस्मितः ॥ ८५ ॥**

**व्यासः स्वयमुपाविशत्** इत्यत्र स्वयमनुज्ञां विनैवोपाविशदिति भ्रान्तिवारणायानुज्ञात इत्याद्युक्तम् । स्वयमेवोपाविशत्, न तु शिष्यैः सहेति सूचनाय स्वयमित्युक्तमिति भावः ।

**उवाच स महातेजा ब्रह्माणं परमेष्ठिनम् ।**
**कृतं मयेदं भगवन् काव्यं परमपूजनम्[२] ॥ ८६ ॥**

**काव्यं परमपूजनम्** इत्यत्र परमं पूजनं सर्वजनैः पूजनं यस्येति विग्रहः ।

**ब्रह्मन् वेदरहस्यं च याच्चान्यत् ख्यापिता[३] मया ।**
**साङ्गोपनिषदां चैव वेदानां विस्तरक्रिया ॥ ८७ ॥**
**[४]इतिहासपुराणानामुन्मिषन्निमिषच्च यत् ।**
**भूतं भव्यं भविष्यच्च त्रिविधं कालसञ्ज्ञितम् ॥ ८८ ॥**

**इतिहासपुराणानामुन्मिषन्निमिषच्च यत्** इत्यत्र इतिहासपुराणानां विस्तरक्रिया ख्यापितेति पूर्वेणान्वयः । उन्मिषन्निमिषदित्यादेरुत्तरेणा-

---

१. **'वासवेयः स्थितोऽभवत्'** इति कुं.पाठः ।
२. **'परमपूजितम्'** इति कुं.पाठः ।
३. **'स्थापितं'** इति कुं. पाठः ।
४. **'इतिहासपुराणानामुन्मेषं निमिषं च यत्'** इति कुं.पाठः ।

न्वयः । **उन्मिषन्निमिषत्** रात्रौ चक्षुर्निमेषणं दिवा चक्षुरुन्मेषणं कुर्वत् दिवाचरात्मकं; दिवा निमेषणं कुर्वत् रात्रौ चक्षुरुन्मेषणं च कुर्वत् नक्तञ्चरात्मकं च यज्जगत्[१] (तत्) अस्मिन् भारताख्याने, **कीर्तितं** विविच्य कथितं, उपरि 'यच्च सर्वगतं वस्तु' इत्येतत्पर्यन्तं वक्ष्यमाणं यच्च सकलं प्रमेयमस्मिन्नाख्याने कीर्तितं, तत्सर्वं क्षन्तुमर्हसि । त्वत्सृष्टि-कौशलकथनसमये न्यूनातिरिक्तमस्ति चेत् क्षन्तव्यमिति भावः । **त्रिविधं कालसञ्ज्ञितम्** इत्यत्र कालात् सञ्ज्ञा अस्य सञ्जातेति **काल-सञ्ज्ञितम्** । **त्रिविधं** भूतभव्यभविष्यदात्मकं जगत् कीर्तितम् । एवमुत्तरत्रापि मध्ये मध्ये कीर्तितमितिपदं योजनीयम् ।

**जरामृत्युभयव्याधिभावाभावविनिश्चयम्[२] ।**
**विविधस्य च धर्मस्य ह्याश्रमाणां च लक्षणम् ॥ ८९ ॥**

**भावाभावविनिश्चयम्** इत्यत्र जरामृत्युभयव्याधीनां भावाभावयो-र्विनिश्चयो यस्मिंस्तत्, नित्यानित्यात्मकं जगदित्यर्थः ॥

**ग्रहनक्षत्रताराणां प्रमाणं च युगैः सह ।**
**ऋचो यजूंषि सामानि वेदाध्यात्मं तथैव च ॥ ९१ ॥**

**वेदाध्यात्मं तथैव च** इत्यत्र आत्मानं परमात्मानमधिकृत्य वर्तमान-मध्यात्मं, वेदोक्तमध्यात्मं वेदाध्यात्मम् ।

**न्यायशिक्षा चिकित्सा च ज्ञानं[३] पाशुपतं तथा ।**
**इति नैकाश्रयं जन्म दिव्यमानुषसञ्ज्ञितम् ॥ ९२ ॥**

---

१. आदि १-९५
२. $T_1$,$G_7$; BORI पृ. ८८४; '**भावाभावविनिश्चयः**' इति कुं.पाठः ।
३. $D_{6.8}$,$T_2$,$G_{3-5}$;BORI पृ. ८८४; '**दानं**' इति कुं.पाठः ।

**तीर्थानां चैव पुण्यानां देशानां चैव कीर्तितम्[१] ।**
**नदीनां पर्वतानां च वनानां सागरस्य च ॥ ९३ ॥**

**पुराणां चैव दिव्यानां कल्पानां युद्धकौशलम् ।**
**वाक्यजातिविशेषाश्च लोकयात्राक्रमश्च यः ॥ ९४ ॥**

**ज्ञानं पाशुपतं तथा** इत्यत्र **पाशुपतं** पाशुपतमतोक्तं, यज्ज्ञानं तच्च मया कचित्प्रसङ्गात् कीर्तितमित्यनेनोपरिक्रियमाणपशुपतिस्तोत्रादिकं न स्वमतमिति सूचितम् । **इति नैकाश्रयं जन्म** इत्यत्र दिव्यमानुष-सञ्ज्ञितमित्यनेन प्रकारेण **नैकाश्रयं** एक आश्रयो यस्य तदेकाश्रयं, एकाश्रयं न भवतीति नैकाश्रयं जन्मेति सम्बन्धः । दिव्यं देवसम्बन्धि, मानुषं मनुष्यसम्बन्धि एवं सञ्जाता सञ्ज्ञा यस्य तद्दिव्यमानुषसञ्ज्ञितम् । इदं च पशुपक्ष्यादिजन्मनः जडजन्मनश्चोपलक्षकम् । अत एव नैकाश्रयमित्युक्तम् । अन्यथा द्व्याश्रयमित्यवक्ष्यत् । अस्यैव प्रपञ्चनं 'तीर्थानां चैव' इत्यादि । जन्मेति पदं 'कल्पानाम्' इति वक्ष्यमाण-षष्ठ्यन्तपदपर्यन्तमावर्तनीयम् ।

**यच्च[२] सर्वगतं वस्तु तत्सर्वं[३] क्षन्तुमर्हसि ।**
**परं न लेखकः कश्चिदेतस्य भुवि विद्यते ॥ ९५ ॥**

**यच्च सर्वगतम्** इत्यत्र **सर्वगतम्** उक्तेष्वेतेषु सर्वेषु गतम् अन्तर्यामितया स्थितं ब्रह्म चास्मिन्नाख्याने यत्कीर्तितमिति सम्बन्धः ।

---

१. **'कीर्तनम्'** इति कुं. पाठः ।
२. **'यच्चापि सर्वगं'** इति कुं.पाठः ।
३. **'तच्चैव प्रतिपादितम्'** इति कुं.पाठः ।

**ब्रह्मोवाच –**

**तपोविशिष्टादपि वै वसिष्ठान्मुनिपुङ्गवात् ।**
**मन्ये श्रेष्ठतमं त्वां वै रहस्यज्ञानवेदनात्		॥ ९६ ॥**

**'मन्ये श्रेष्ठतमम्'** इति वदता वसिष्ठपितुः स्वस्मादपि श्रेष्ठमिति सूचितम् ।

**जन्मप्रभृति सत्यां ते वेद्मि गां ब्रह्मवादिनीम् ।**
**त्वया च काव्यमित्युक्तं तस्मात्काव्यं भविष्यति	॥ ९७ ॥**

**जन्मप्रभृति** इत्यत्र **सत्यां** निर्दुष्टायां सत्यवत्यां, **जन्मप्रभृति** जन्मारभ्येत्यर्थः । 'तस्मात् काव्यं भविष्यति' इति वदता ब्रह्मणा आदिकवेर्ममैव योग्यमिति सूचितम् ।

**अस्य काव्यस्य कवयो न समर्था विशेषणे ।**
**विशेषेण गृहस्थस्य शेषास्त्रय इवाश्रमाः		॥ ९८ ॥**

**जडान्धबधिरोन्मत्ततमोभूतं जगद्भवेत्[१] ।**
**यदि ज्ञानहुताशेन त्वया नोज्ज्वलितं भवेत्		॥ ९९ ॥**

**तमसाऽन्धस्य लोकस्य वेष्टितस्य स्वकर्मभिः ।**
**ज्ञानाञ्जनशलकाभिर्बुद्धिनेत्रोत्सवः कृतः		॥ १०० ॥**

**न समर्था विशेषण** इत्यत्र अस्य काव्यस्य सकाशाद् **विशेषणे** अतिशायितग्रन्थकरणे, न समर्था इत्यन्वयः । **विशेषेण गृहस्थस्य** इत्यत्र विशेषाः गृहस्थेभ्योऽपि विशिष्यन्त इति विशेषाः उत्कृष्टाः गृहस्थस्य

---

१. **'जडान्धबधिरोन्मत्तं तमोभूतं'** इति कुं.पाठः ।

सकाशादन्ये ये त्रय आश्रमाः ब्रह्मचारिवानप्रस्थयत्याख्या आश्रमाः। एतदात्मकं जगद्विशेषेणातिशयेन, **जडान्धबधिरोन्मत्ततमोभूतं** जडान्धबधिरोन्मत्तवत्तमसाऽज्ञानेन भूतमभिभूतं भवेदित्यन्वयः। 'तमसाऽन्धस्य' इति वक्ष्यमाणत्वाद्भूतपदमभिभूतपरम्। कुटुम्बभरणोद्यतगृहस्थस्य भारताभावेऽपि (कर्मणि) प्रवृत्तिसम्भवात् ज्ञानाधिकारिभूतमाश्रमत्रयमेव गृहीतम्।

**धर्मार्थकाममोक्षार्थैः [२]समासव्यासकीर्तितैः।**
**त्वया भारतसूर्येण नृणां विनिहतं तमः ॥ १०१ ॥**

**धर्मार्थकाममोक्षार्थैः** इत्यत्र धर्मार्थकाममोक्षाख्यैरर्थैः पुरुषार्थैरित्यर्थः। त्वया भारतसूर्येण कीर्तितैर्निमित्तैर्नृणां तमो विनिहितमित्यन्वयः।

**इतिहासप्रदीपेन मोहावरणघातिना।**
**लोकगर्भगृहं कृत्स्नं यथावत्सम्प्रकाशितम् ॥ १०३ ॥**

**लोकगर्भगृहम्** इत्यत्र लोकस्य **गर्भगृहम्** अन्तर्हृदयम्।

**[३]कर्णपर्वचितैः पुष्पैः शल्यपर्वसुगन्धिभिः।**
**स्त्रीपर्वैषीकविश्रामः शान्तिपर्वमहाफलः ॥ १०६ ॥**

**कर्णपर्वचितैः पुष्पैः** इत्यत्र युक्त इति योग्यपदाध्याहारः।

---

१. आदि १-१००
२. **'समासव्यासकीर्तनैः'** इति कुं.पाठः।
३. BORI पृ. ८८५; **'कर्णपर्वसितैः'** इति कुं.पाठः।

**अश्वमेधामृतरसस्त्वाश्रमस्थानसंश्रयः ।**
**मौसलश्रुतिसङ्क्षेपः शिष्टद्विजनिषेवितः ॥ १०७ ॥**

**मौसलश्रुतिसङ्क्षेपः** इत्यत्र मौसलपर्वणः श्रुतिः श्रवणमेव सङ्क्षेपः वृक्षावसानं यस्य स तथोक्तः ।

प्राक् ब्रह्मणोऽग्रे प्रस्तावितभारतस्यैव करणप्रकारं सूतः पुनः स-विस्तरं वक्तुमारभते— **तस्य वृक्षस्य** इति ।

**तस्य वृक्षस्य वक्ष्यामि शाखापुष्पफलोदयम् ।**
**स्वादुमेध्यरसोपेतमच्छेद्यममरैरपि ॥ १२० ॥**
**युगस्यादिनिमित्तं [१] तन्महादिव्यं प्रचक्षते ।**
**यस्मिंस्तच्छ्रूयते [२] नित्यं सौति ब्रह्मसनातनम् ॥ ४३ ॥**

**युगस्यादिनिमित्तं तत्** इत्यत्र **युगस्य** कृतादियुगस्य, **आदि-निमित्तम्** आदिभूतं निमित्तं, तत् ब्रह्माण्डं, **महादिव्यं** अतिशयेन दिव्यं प्रचक्षते । **सौति ब्रह्मसनातनम्** इत्यत्र **सौति** सूतिसम्बन्धि, जगत्सृष्टिकारणमित्यर्थः ।

**[३] असच्चाप्यनुजातं च सर्वत्र समतां गतम् ।**
**अव्यक्तं कारणं सूक्ष्मं यत्तत्सदसदात्मकम् ॥ ४४ ॥**

**असच्चाप्यनुजातं च** इत्यत्र **असत्** न विद्यते सदेव जगत्प्रलयकाले यस्मात् तदसत्। अनु अनन्तरं सृष्टिकाले जातं जगद्यस्मात् तदनुजातम्।

---

१. $D_{r1}$ ; BORI पृ. ८; **'तन्महद्दिव्यं'** इति कुं.पाठः ।
२. $T_1$ $G_{4-6}$ ; BORI पृ. ८; **'सत्यं ज्योतिर्ब्रह्मसनातनम्'** इति कुं.पाठः ।
३. $G_{2,3}$ ; BORI पृ. ८; **'अद्भुतं चाप्यचिन्त्यं'** इति कुं.पाठः ।

न तु ब्रह्मैवासत्, अनन्तरं जातं च । [1]'सदेव सोम्येदमग्र आसीत्', [2]'अजमनिद्रमस्वप्नम्' इत्यादिश्रुतिविरोधात् । **सदसदात्मकं** कार्य-कारणरूपजगदन्तर्यामि । 'अत सातत्यगमने' इति धातुः । सन्तः शुभाः, असन्तः अशुभाश्च जीवाः आत्मनि स्वोदरे यस्य तद्वा ।

**प्राचेतसस्तथा दक्षो दक्षपुत्राश्च सप्त वै ।**
**ततः प्रजानां [3]प्रथमः प्राभवन्नेकविंशतिः ॥ ४६ ॥**

**पुरुषश्चाप्रमेयात्मा यं [4]सर्वं ऋषयो विदुः ।**
**विश्वेदेवास्तथाऽऽदित्या वसवोऽथाश्विनावपि ॥ ४७ ॥**

**प्राचेतसस्तथा** इत्यत्र **प्राचेतसः** दशप्रचेतसां पुत्रो दक्षः । **ततः प्रजानां प्रथमः प्राभवन्नेकविंशतिः** इत्यत्र **ततः** ब्रह्मस्थाण्वाद्येकादशदेवोत्पत्त्यनन्तरं, एकविंशतिः स्वायम्भुवमनोरुक्तत्वादेकमनोर्विष्णुत्वात् द्वादशमनवः, इन्द्रादिवायुपर्यन्ताः षड्लोकपालाः, उत्तरदिगधिपती सोमकुबेरौ, अधोलोकाधिपतिः शेषः, ईशानदिगधिपते रुद्रस्य, ऊर्ध्वलोकाधिपतेर्ब्रह्मणश्च पूर्वमेवोक्तत्वान्नैवेते लोकपालाश्चेत्येकविंशतिः ।

**पुरुषश्चाप्रमेयात्मा** इत्यत्र ऋषयः, ऋष्युपदेशात् सर्वं जगच्च यं विदुः तैरपि प्रकर्षेण आन्तं मेयो न भवतीत्यप्रमेय आत्मा यस्य सः । **पुरुषश्च** पुरुषनामको हरिश्च **प्राभवत्** अवतारादिरूपेण प्रादुरभूत् । सर्वस्वरूपत्वे अप्रमेयत्वविरोधादुक्त एवार्थः ।

---

१. छा.उ. ६-२-१ ; २. माण्डूक्य.उ. १-२-८
३. **'पतयः'** इति कुं.पाठः ।
४. $B_{3.4}$, $Da_1$, $D_{14}$ ; **'सर्वऋषयो'** इति कुं.पाठः ।

**एवमेतदनाद्यन्तं [1] भूतसङ्घातकारकम् ।**
**अनादिनिधनं लोके चक्रं सम्परिवर्तते ॥ ५३ ॥**

**एवमेतदनाद्यन्तम्** इत्यत्र **अनाद्यन्तं** प्रवाहतो नित्यत्वादाद्यन्तशून्यम् । नित्यत्वे तात्पर्यद्योतनायाभ्यासः । किञ्चित् प्रवाहत आद्यन्तशून्यं, किञ्चित् स्वरूपत आद्यन्तशून्यमिति विभागसूचनार्थं वा । भूतसङ्घातः पञ्चमहाभूतसमुदाय एव कारकं कारणं यस्य । भूतसङ्घे अतो व्याप्तो नारायण एव कारणं यस्येति वा । **चक्रं** जगच्चक्रम् । एवं ऋतुपर्यायवदेव सम्परिवर्तत इति योजना ।

**त्रयस्त्रिंशत्सहस्राणि त्रयस्त्रिंशच्छतानि च ।**
**त्रयस्त्रिंशच्च देवानां सृष्टिः सङ्क्षेपलक्षणा ॥ ५४ ॥**

**त्रयस्त्रिंशत्सहस्राणि** इत्यत्र ब्रह्मवीन्द्रेन्द्रा इति त्रयः, एकादशरुद्राः, एकादशादित्याः, अष्टौ वसवश्चेति त्रयस्त्रिंशत्प्रधानदेवा इत्यतिसङ्क्षेपतः सृष्टिः । कयाचित्सङ्ख्यया त्रयस्त्रिंशच्छतानि देवा इति मध्यमदेवानामीषद्विस्तृतसङ्क्षेपतः सृष्टिः । ततोऽप्यवरदेवानां कयाचित् सङ्ख्यया मेलने सति त्रयस्त्रिंशत्सहस्राणि देवा भवन्ति । अस्य सर्वस्य सङ्क्षेपत्वकथनाद्विस्तारतस्त्रयस्त्रिंशत्कोटय इत्यपि ध्वनितम् । एवञ्च चतुर्धा व्यूहीकृत्य देवानां सृष्टिरिति भावः । सृष्टावेवं विभागः – यत्र तु त्रयस्त्रिंशद्देवा इत्यादिश्रुतौ देवानां गणना क्रियते तत्र त्रयो ब्रह्मविष्णुमहेश्वराः, दश रुद्राः, एको गरुडः, एकादशादित्याः, अष्टौ वसवश्चेति त्रिंशत् । मिलित्वा त्रयस्त्रिंशद्देवा इति गणना ।

---

१. '**भूतसंहारः**' इति कुं. पाठः ।

**पुत्रा विवस्वतः सर्वे मनुस्तेषां तथाऽवरः ।**
**देवभ्राट् तनयस्तस्य [1] सुभ्राडिति ततः स्मृतः ॥ ५६ ॥**

**पुत्रा विवस्वतः सर्व** इत्यत्र [2] पितृसनामानः पुत्रा इति ज्ञेयम् । **मनुः** वैवस्वतमनुः । 'पुरा विवस्वतः सर्वे मह्यस्तेषां तथाऽवरः' इति पाठे दिवस्पुत्रादयः सर्वे विवस्वत एकादशविग्रहाः **पुरा** पूर्वे जातास्तथा तेषां **अवरः** अनुजो विष्णुनामा सूर्यः **मह्यः** गुणतो ज्येष्ठत्वात् पूजायोग्यः । 'मह पूजायाम्' इति धातुः । **तस्य** विवस्वतः पुत्रो देवभ्राडित्यादि-योजना ।

**ययातीक्ष्वाकुवंशश्च राजर्षीणां च सर्वशः ।**
**सम्भूता बहवो वंशा भूतसर्गाः [3] सुविस्तराः ॥ ६० ॥**

**सम्भूता बहवो वंशा** इत्यत्र 'सम्भूता' इत्युपलक्षणम् । सम्भ-विष्यन्तीत्यपि ग्राह्यम् । रहसि वेदव्यासेन विचारे क्रियमाणे कुरुपाण्डव-वंशस्याजातत्वाद्देवानां वंशाः सम्भूताः, केचन सम्भविष्यन्तीत्यपि दृष्टवानित्युत्तरेण सम्बन्धः ।

**भूतस्थानानि सर्वाणि रहस्यं त्रिविधं च यत् ।**
**वेदा योगः सविज्ञानो धर्मोऽर्थः काम एव च ॥ ६१ ॥**

**धर्मार्थकामयुक्तानि शास्त्राणि विविधानि च ।**
**लोकयात्राविधानं च सर्वं तद्दृष्टवान् ऋषिः ॥ ६२ ॥**

---

१. BORI पृ. ९; **'तस्मात् सुभ्राडिति स्मृतः'** इति कुं. पाठः ।
२. **'पितृसमाननामानः'** सो.मु.पा.
३. BORI पृ. १०; **'सविस्तराः'** इति कुं. पाठः ।

[१]वेदरहस्यादेस्सम्भूतत्वात्–

**रहस्यं त्रिविधं च यत्** इत्यादेर्दृष्टवानित्यनेनैव सम्बन्धः। वायोरेव ब्रह्मत्वं, रुद्रस्यैव शेषत्वं, देवानां तारतम्यं, देवत्वयोग्यजीवानामेव देवपदवीत्यादि देवरहस्यम्। [२]'यो देवानां नामधा एक एव', [३]'मां विधत्तेऽभिधत्ते मां', [४]'वेदैश्च सर्वैरहमेव वेद्य' इत्यादिश्रुतिस्मृतिभ्यो वेदस्थहिरण्यगर्भरुद्रेन्द्रादिपदानां परममुख्यया वृत्त्या विष्ण्वेकवाचित्वं वेदरहस्यम्। [५]'यत्सतां हितमत्यन्तं तत्सत्यमिति गीयते' इत्यादि-वचनात् सतां हिताय क्वचिदनृतमेव सत्यमित्यादि धर्मरहस्यमिति त्रिविधं रहस्यम्। यद्वा [६]'पञ्चानां सहिता कृष्णारूपा पार्वत्यनिन्दिता' इति वचनादेकस्य द्रौपदीदेहस्य पञ्चदेव्यधिष्ठितत्वमित्यादि देवरहस्यम्। कुन्त्यै दुर्वाससोक्ताथर्वणमन्त्रादयो वेदरहस्यम्। सन्तानार्थं पति-नियोगाद्देवर्ष्यादिपुरुषान्तरसमागमो धर्मरहस्यम्। अथवा 'वेदान्तं च रहस्यं च बुधैरुपनिषन्मतम्' इति वचनाद् ब्रह्मदेवकर्ममीमांसानां मूलीभूताः परब्रह्मदेवकर्मोपनिषद एव त्रिविधं रहस्यम्।

**नीतिर्भरतवंशस्य विस्तारश्चैव सर्वशः।**
**इतिहासा सहव्याख्या विविधाः श्रुतयोऽपि च।**
**इह सर्वमनुक्रान्तमुक्तं ग्रन्थस्य [७]कारणम्** ॥६३-६४॥

---

१. 'वेदरहस्यादेरसम्भूतत्वात्' सो.मु.पा.
२. ऋ.सं. १०-८२-३ ; ३. भाग. ११-२१-४३
४. भ.गी. १५-१५ ; ५. म.भा.ता.नि. २७-१२०
६. आदि. २१४-५५; 'पञ्चानां विहिता पत्नी कृष्णा पार्षत्यनिन्दिता' इति मुद्रितकोशेषु।
७. 'लक्षणम्' इति कुं.पाठः।

**नीतिर्भरतवंशस्य** इत्यत्र **नीतिः** राजनीतिः, भरतवंशस्य विस्तारश्चेति सम्बन्धः । पुराणादावुक्तो नीतिः । पुराणादावुक्तो भरतवंशस्य विस्तारः । सहव्याख्या य इतिहासाः पञ्चरात्रादावुक्ताः । विविधाः श्रुतयश्चेति यत् **ग्रन्थस्य कारणं** नूतनतया क्रियमाणग्रन्थस्य कारणमुक्तं पूर्वाचार्यैस्तत्सर्वं व्यासः इह स्वविचारसमये अनुक्रान्तमकरोदिति योग्यपदाध्याहारेण योजना ।

**विस्तीर्यैतन्महज्ज्ञानमृषिः सङ्क्षेपमब्रवीत्[1] ।**
**इष्टं हि विदुषां लोके समासव्यासधारणम्** ॥ ६५ ॥

**ऋषिः सङ्क्षेपमब्रवीत्** इत्यत्र सङ्क्षिप्यते सकलोऽपि शास्त्रार्थोऽत्रेति सर्वशास्त्रसङ्ग्रहरूपं भारतं **सङ्क्षेप** इत्युच्यते ।

**मन्वादि भारतं केचिदास्तीकादि तथाऽपरे ।**
**तथोपरिचराद्यन्ये विप्राः सम्यगधीयिरे** ॥ ६६ ॥

**मन्वादि भारतम्** इत्यत्र **मनवो** मन्त्राः सहस्रनामाद्याः ये विष्णुमन्त्राः, अस्त्रशास्त्रादीनां च गायत्र्यादयो ये मन्त्रास्तेषामभिमानी भीमो मनुरित्युच्यते । तदादि तन्महिमप्रतिपादनमेवादिर्यस्य तन्मन्वादि । असाधारण्येन भीममहिमप्रतिपादकमेव भारतमिति केचिद्विप्रा अधीयिरे । **आस्तिकादि** अस्ति परदेवतेति ये विदुस्ते आस्तिकाः पञ्चपाण्डवद्रौपद्याद्यास्तेषां सर्वेषां महिमप्रतिपादकमिति केचिद्विप्रा अधीयिरे । तथा **उपरिचरादि** एतेषां सर्वेषामुपरि, एतदुत्तमतयेत्यर्थः । चरतीति सर्वान्तर्यामी नारायणः । तदादि तन्महिमप्रतिपादकमेवेति केचिद्विप्रा अधीयिरे । द्रौपद्या अर्जुनादीनां च चरित्रस्य तत्र तत्र कथ्यमानत्वात् ते

---

१. BORI पृ. १० ; **'सङ्क्षिप्य चाब्रवीत्'** इति कुं. पाठः ।

सर्वे भारतप्रतिपाद्या इति यथाश्रुतार्थवेदिनो वदन्ति । तेष्वपि प्राणरूपेण भीमस्यैव प्रविष्टत्वाद्भीमस्यैव चरित्रप्रतिपादकं भारतमिति रहस्यविद ऋष्यादयो वदन्ति । भीमस्य तेषां चान्तर्यामी हरिरेवेति सकलभारतं हरिचरित्रप्रतिपादकमित्येकान्तिनो ब्रह्माद्या वदन्ति । अतः पक्षत्रय-मप्युचितमेवेति भावः ।

**विविधं संहिताज्ञानं दीपयन्ति मनीषिणः ।**
**व्याख्याने[१] यतते केचिद्ग्रन्थं धारयितुं परे ॥ ६७ ॥**

**विविधं संहिताज्ञानम्** इत्यत्र **विविधं**, उक्तविधया त्रिविधं, दर्शन-भाषादिना बहुविधं च । **संहिताज्ञानं** भारतसंहिताज्ञानम् । **व्याख्याने यतते केचित्** इत्यत्र **यतते** यतन्ते । बहुव्याख्यानान्यप्येकसम्प्रदाय-मूलत्वादेकस्य व्याख्यानमिव भवन्तीति सूचनाय यतत इत्येक-वचनम् ।

**तेषु जातेषु वृद्धेषु गतेषु च[२] परां गतिम् ।**
**अब्रवीद्भारतं लोके मानुषेऽस्मिन्महानृषिः ॥ ७२ ॥**

**तेषु जातेषु** इत्यत्र **तेषु** शन्तनुमारभ्य परीक्षिदन्तेषु राजसु **परां गतिं** गतेषु सत्सु **अस्मिन्** मानुषे लोके ऋषिर्भारतं **अब्रवीत्** व्याख्याय प्रवर्तयामास ।

**जनमेजयेन पृष्टः सन्ब्राह्मणैश्च सहस्रशः ।**
**शशास शिष्यमासीनं वैशम्पायनमन्तिके ॥ ७३ ॥**

---

१. $G_{2.3}M_3$ ; BORI पृ. १० ; **'व्याख्यातुं कुशलाः'** इति कुं पाठः ।
२. $T_2G_{1-3}$ ; BORI पृ. १० ; **'परमां'** इति कुं पाठः ।

तदेव विशदयति– **जनमेजयेन** इति । भारतग्रन्थं स्वावतारानन्तरमेव हिमवच्छिखरे कृतवान् । स्वशिष्येषु वैशम्पायनादिषु तदैव व्याख्यातवांश्च । मानुषलोके प्रचारस्तु जनमेजयकाल एवेति भावः ।

**विस्तारं कुरुवंशस्य गान्धार्या धर्मशीलताम् ।**
**क्षत्तुः प्रज्ञां धृतिः कुन्त्याः साह्यं[1] द्वैपायनोऽब्रवीत्** ॥ ७५ ॥

**साह्यं द्वैपायनोऽब्रवीत्** इत्यत्र **साह्यं** सहनशीलतां, क्षमां चेत्यर्थः । 'सम्यग् द्वैपायनोऽब्रवीत्' इति पाठे स्पष्टोऽर्थः ।

**इदं शतसहस्राणां[2] श्लोकानां पुण्यकर्मणाम् ।**
**उपाख्यानैः सह ज्ञेयं श्राव्यं भारतमुत्तमम् ॥**

**इदं शतसहस्राणाम्** इत्यत्र शतसहस्राणां श्लोकानामिदमुत्तमं भारतं, **पुण्यकर्मणां** शकुन्तलानलादीनामुपाख्यानैरुपाख्यानश्लोकैः प्रसक्तानुप्रसक्त्यागत कथाकथकश्लोकैः सह ज्ञेयम् । **श्राव्यं च** श्रवणीयं च । रेतोधाः पुत्रं नयतीत्यादीनां तत्र तत्र स्थितानां केषाञ्चित् श्लोकानां वक्ष्यमाणभारतश्लोकगणनापर्यालोचनायां लक्षादप्यधिकत्वादुपाख्यानैः सहेत्युक्तम् । लक्षसङ्ख्याका भारतश्लोकास्त्रिसहस्रादुपरि शतं चतुस्त्रिंशच्च श्लोकाः व्यासोक्तरीत्या पर्वपर्वश्लोकगणनायां लक्षादप्यधिका भवन्ति ।

**चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम् ।**
**उपाख्यानैर्विना तावद्भारतं प्रोच्यते बुधैः** ॥ ७८ ॥

---

१. **'सम्यग्'** इति कुं पाठः ।
२. **'शतसहस्रं तु'** इति कुं पाठः ।

**चतुर्विंशतिसाहस्रीम्** इत्यत्र चतुर्विंशतिसाहस्री हरिवंशश्लोकानां सङ्ख्या । उपाख्यानश्लोकैर्विना चतुर्विंशतिसाहस्री । उपाख्यानश्लोकसहस्रेण पञ्चविंशतिसाहस्रीति विवेकः ।

**ततोऽध्यर्धशतं भूयः सङ्क्षेपं कृतवानृषिः ।**
**अनुक्रामणमध्यायं[1] वृत्तान्तं सर्वपर्वणाम्** ॥ ७९ ॥

**ततोऽध्यर्धशतं भूयः** इत्यत्र **ततः** भारतस्य समस्तश्लोकेभ्यः भूयः अधिकफलदायकत्वेन श्रेष्ठं सर्वपर्वणां वृत्तान्तं, **सङ्क्षेपं** सङ्क्षिप्यते सर्वाऽपि भारतकथाऽत्रेति सङ्क्षेपरूपं, **अनुक्रामणं** क्रमेण सकलभारतकथाकथनादनुक्रामणसञ्ज्ञं **अध्यायं** प्रथमाध्यायमध्य एव एतावन्तः श्लोका इति पुनः परिच्छेदकरणादध्यायसञ्ज्ञं, **अध्यर्धशतं** अधिकमर्धं यस्य शतस्य तदध्यर्धशतं, सार्धशतमिति यावत् । श्लोकसन्दर्भं कृतवानिति योजना । अयं चानुक्रमणिकाध्यायः 'दुर्योधनो मन्युमयो[2] महाद्रुमः' इति श्लोकमारभ्य 'अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत्'[3] इति श्लोकपर्यन्ताः श्लोका इति व्यासः स्वयमेव प्रदर्शितवान् । उपरितनश्लोकास्तु फलश्लोका एव; न तु पर्ववृत्तान्तश्लोकाः । तैः सह पाठेऽपि सार्धश्लोकद्वयस्य न्यूनत्वेन अध्यर्धशतसङ्ख्यापूर्त्यभावाच्च[4] न तेषां फलश्लोकानामध्याये प्रवेशः । 'अत्रोपनिषदं पुण्याम्' इति फलश्लोकान्विना ततः पूर्वमेवास्याध्यायस्य पुण्योपनिषत्त्वेन प्रथमग्रन्थ एव परिच्छेदाच्च । इमे च श्लोकाः यथास्थितगणनायां शतादुपरि सप्तविंशच्छ्लोका एव जायन्ते । अतः कथमस्याध्यायस्य प्राक्प्रतिज्ञातसार्धशतश्लोकत्वमिति

---

१. '**अनुक्रमणिकाध्यायं**' इति कुं पाठः ।
२. **आदि. १-१२८** ; ३. **आदि. १-१७९**
४. '**अध्यर्धशतसङ्ख्यापूरणाभावाच्च.**' सो.मु.पा.

चेदित्थम् – एकादशाक्षरपादचतुष्टयोपेतेष्वेकषष्टितमस्थूलश्लोकेषु द्वात्रिंशदक्षरानुष्टुप्श्लोकसङ्ख्यया तावदेकषष्टितमश्लोका भवन्ति । तेष्वेव श्लोकेषूर्वरितद्वादशद्वादशाक्षराणां मध्ये त्रित्रिद्वादशकस्यैकश्लोकादुपरि चत्वारश्चत्वारो वर्णा उर्वरिता जायन्ते । एवं च षष्टिद्वादशकानां विंशतिश्लोका जायन्ते । एकैकश्लोककरणसमये उर्वरितचतुश्चतुर्वर्णाश्च विंशतिवारं चत्वार इति हेतोरशीतिवर्णा भवन्ति । षष्टिश्लोकानामियं सङ्ख्या । उर्वरितैकश्लोकस्थद्वादशवर्णानां प्रागुर्वरितैरशीतिवर्णैः सह योगे द्विनवतितमा वर्णा भवन्ति । ते च– 'न वा एकेनाक्षरेण च्छन्दांसि वियन्तिं' इति वचनात् त्रयः श्लोका जाताः । तथा मिलित्वा युक्तिलब्धा एते त्रयोविंशतिश्लोकाः सम्पन्नाः । क्वचित्क्वचित्पादे एकैकाक्षराधिक्यं तु– 'न वा एकेनाक्षरेण च्छन्दांसि वियन्ति' इति वचनादेव एकादशाक्षरात्मकत्रिष्टुप्छन्दस्येवान्तर्भूतत्वान्न पृथग्गणनायोग्यम् । एतैश्च त्रयोविंशतिश्लोकैः प्राक् सम्पादितैकषष्टितमश्लोकानां योगे सति एकषष्टितमस्थूलवृत्तश्लोका एव चतुरशीतिश्लोका जाताः । प्राक् च [१]'पाण्डुर्जित्वा बहून् देशान्' इत्यादयः सप्तत्रिंशदनुष्टुप्श्लोकाः गणनायां सन्ति । उपरि च [२]'तमसा त्वस्य विस्तीर्णम्' इत्यारभ्य 'अत्रोपनिषदं पुण्याम्' इति श्लोकपर्यन्तं गणनायां एकोनविंशच्छलोका भवन्ति । इमे प्राक्तनसप्तत्रिंशच्छलोकाश्च मिलित्वा षट्षष्टितमसङ्ख्याकश्लोका जाताः । एवञ्च इमे षट्षष्टितमश्लोकाः प्रागुक्तचतुरशीतिश्लोकाश्च मिलित्वा सार्धशतश्लोकाः सुखेन सम्पन्नाः । एवञ्च [३]'अनुक्रामणमध्यायं वृत्तान्तं

---

१. आदि. १-१३०

२. आदि. १.२४३ **'तमस्त्वतीव विस्तीर्णम्'** इति मुद्रितकोशेषु ।

३. आदि. १-१२१

सर्वपर्वणाम्' इति वचनात् 'अत्रोपनिषदं पुण्याम्' इत्यारभ्योक्तफल-श्लोकान्विना केवलं पर्वकथाकथनाय प्रवृत्तानामेतेषामेव श्लोकानां सार्धशतश्लोकात्मकानुक्रमणाध्यायत्वं सर्वज्ञचूडामणेर्व्यासस्य हृद्यभिप्रेतमिति [1] रहस्यमपि प्रेक्षावद्भिरनुसन्धेयम् । तस्माद्यथास्थितसङ्ख्यया शतादुपरि सप्तविंशच्छ्लोकानेव स्वरचनाचातुर्येण शतादुपरि पञ्चाशच्छ्लोकानपि घटयन् व्यासः साक्षादघटितघटकस्य हरेरेवावतारः । [2] 'नारदोऽध्यापयद्देवान्' इत्यतः पूर्वं [3] 'षष्टिं शतसहस्राणाम्'इत्यादि-श्लोकद्वयमौत्तराः स्वसम्पुटिकायां पठन्ति । [4] तत्र च लक्षादुपरि षष्टि-सहस्रश्लोकाः भारतस्येत्युच्यते । तच्च 'इदं शतसहस्राणां श्लोकानां पुण्यकर्मणाम्' इति प्रागुक्तवचनविरोधात् शतसहस्रिकायां संहितायामित्यभियुक्तवचनविरोधाच्च स्वकपोलकल्पनारूपमित्युपेक्षणीयम् ।

**मृगव्यवायनिधनात्कृच्छ्रां प्राप स आपदम् ।**
**जन्मप्रभृति पार्थानां तत्राचारविधिक्रमः ॥ १३१ ॥**
**मात्रोरभ्युपपत्तिश्च धर्मोपनिषदं प्रति ।**
**धर्मस्य वायोः शक्रस्य देवयोश्च तथाऽश्विनोः ॥ १३२ ॥**

**जन्मप्रभृति पार्थानाम्** इत्यत्र **तत्र** वने पार्थानां जन्मप्रभृति आचारविधिक्रमोऽस्ति स्वभावादेवास्ति । मातुः सकाशात् धर्मस्य वायोः शक्रस्य अश्विनोश्च सकाशाद्धर्मोपनिषदं प्रति **अभ्युपपत्तिः** शिक्षा चास्ति । पितृत्वाद्धर्मादयोऽप्युपदिशन्तीति भावः ।

---

१. **'रहस्यमति '** सो.मु.पा.
२. **आदि १-१२४ 'नारदोऽश्रावयद्देवान्'** इति मुद्रितकोशेषु ।
३. **आदि. १-१२२ 'षष्टिं शतसहस्राणि'** इति कुं.पाठः ।
४. **आदि. १-७७. 'इदं शतसहस्रं तु'** इति मुद्रितकोशेषु ।

**ऋषिभिश्च सहासीनान्[१] धार्तराष्ट्रान्प्रति स्वयम् ।**
**शिशवश्चाभिरूपाश्च जटिला ब्रह्मचारिणः ॥ १३७ ॥**

**पुत्राश्च भ्रातरश्चेमे शिष्याश्च सुहृदश्च वः ।**
**पाण्डवा एत इत्युक्त्वा मुनयोऽन्तर्हितास्ततः ॥ १३८ ॥**

**ऋषिभिश्च सहासीनान्** इत्यत्र ऋषिभिः सहासीनान् सुखमासीनान् पार्थान् **स्वयं** त एव मुनय आगत्य **धार्तराष्ट्रान्** धृतराष्ट्रसम्बन्धिनः सर्वान् प्रति 'शिशवः अभिरूपाः जटिलाः ब्रह्मचारिणश्च इमे इदानीमत्रागताः कुमाराः वः युष्माकं केषाञ्चित् धृतराष्ट्रविदुरादीनां पुत्राः, दुर्योधनादीनां भ्रातरः, भीष्मद्रोणादीनां शिष्याः, अन्येषां सुहृदश्च पाण्डवाः पाण्डुपुत्राः' इत्युक्त्वा ततस्तत्रैवान्तर्हिता इति श्लोकद्वयस्य योजना ।

**तांस्तैर्निवेदितान्दृष्ट्वा पाण्डवान्कौरवास्तदा ।**
**शिष्टाश्च वर्णाः पौरा ये ते हर्षाच्चुक्रुशुर्भृशम् ॥ १३९ ॥**

**हर्षाच्चुकुशुः** इत्यत्र 'क्रुश आह्वाने रोदने च' इति धातोः अट्टहासादिना उच्चस्वरं कृतवन्तः ।

**आहुः केचिन्न कस्यैते[२] कस्यैत इति चापरे ।**
**यदा चिरं[३] मृतः पाण्डुः कथं तस्येति चापरे ॥ १४० ॥**

**आहुः केचिन्न कस्यैते कस्यैत इति चापरे । यदा चिरं मृतः पाण्डुः**

१. **'समानीता'** इति कुं.पाठः ।
२. $M_3$ ; BORI पृ. १३; **'तस्यैते तस्यैत'** इति कुं.पाठः ।
३. $D_{14}$ ; BORI पृ. १३; **'चिरमृतः'** इति कुं.पाठः ।

**कथं तस्येति चापर** इत्यत्र **केचित्** सज्जीवाः, **एते** आगताः पाण्डवाः कस्य न, सर्वस्यापि मनःप्रिया इत्यब्रुवन् । यतो निरपेक्षा मुनयोऽपि तत्प्रेम्णा इहागत्य तद्गुणानूचुरिति तेषां भावः । **केचित्** मध्यमजीवाः, **एते** पाण्डवाः कस्य पुत्राः, पाण्डोर्वा अन्यस्य वेत्यब्रुवन् । **अपरे** अधमजीवाः, **यदा** यस्मात्पाण्डुः चिरं मृतः तस्मात्ते तस्य कथं पुत्रा इत्यब्रुवन्निति योजना । 'न तस्यैते' इति पाठे स्पष्टोऽर्थः ।

**स्वागतं सर्वथा दिष्ट्या पाण्डोः पश्याम सन्ततिम् ।**
**उच्यतां स्वागतमिति वाचोऽश्रूयन्त सर्वशः ॥१४१॥**

**उच्यतां स्वागतमिति** इत्यत्र स्वागतमुच्यतामिति वाचः अश्रूयन्तेति सम्बन्धः ।

**[१]दुर्योधनमुपागच्छन्नर्हणानि ततस्ततः ।**
**मणिकाञ्चनरत्नानि गोहस्त्यश्वधनानि च ॥१५३॥**

**दुर्योधनमुपागच्छन्नर्हणानि ततस्ततः** इत्यत्र राजसूये दुर्योधनस्यागतधनं प्रति अध्यक्षीकृतत्वादिति भावः ।

**स भोगान्विविधान् भुञ्जन् रत्नानि विविधानि च ।**
**[२]कथिते धृतराष्ट्रस्य [३]विषण्णो मलिनः कृशः ।**
**अन्वजानात्ततो द्यूतं धृतराष्ट्रः सुतप्रियः ॥१५८,१५९॥**

**स भोगान्विविधान् भुञ्जन् रत्नानि विविधानि च । कथिते धृत-**

---

१. BORI पृ. १४ ; **'दुर्योधनं समागच्छन्'** इति कुं.पाठः ।
२. **'कथितो'** इति कुं.पाठः ।
३. $T_2G_1$ ; BORI पृ. १५; **'विवर्णो हरिणः कृशः'** इति कुं.पाठः ।

**राष्ट्रस्य विषण्णो मलिनः कृशः** इति श्लोके सभायां पाण्डवैर्योऽपहसितः **स** दुर्योधनो विविधान् भोगान् भुञ्जन्नपि विविधानि रत्नानि धारयन्नपि **विषण्णः** दुःखितः, मलिनः कृशश्च तिष्ठतीति धृतराष्ट्रस्य अन्तःपुरस्थैः कथिते सति ततोऽनन्तरं सुतप्रियो धृतराष्ट्रो द्यूतमन्वजानादित्युत्तरेणा-न्वयः ।

**नातिप्रीतमनाश्चासीद्विवादांश्चान्वमोदत ।**
**द्यूतादीननयान्घोरान्विविधांश्चाप्युपैक्षत ॥१६०॥**

**द्यूतादीननयान् घोरान्** इत्यत्र सुतप्रियो धृतराष्ट्रः उपैक्षतेति पूर्वपदा-वृत्त्या योजना ।

**यदाऽश्रौषं तीर्थयात्राप्रवृत्तं पाण्डोः सुतं सहितं लोमशेन ।**
**बृहदश्वादक्षहृदयं च प्राप्तं तदा नाशंसे विजयाय सञ्जय ॥१८८॥**

**पाण्डोः सुतं** अर्जुनं लोमशेन **सहितं** मध्येमार्गं सङ्गतम् ।

**यदाऽश्रौषं वैश्रवणेन सार्धं समागतं भीममन्यांश्च पार्थान् ।**
**तस्मिन् देशे मानुषाणामगम्ये तदा नाशंसे विजयाय सञ्जय** १८९

**तस्मिन् देशे** सौगन्धिकपुष्पप्रदेशे ।

**यदाऽश्रौषं यक्षरूपेण धर्मं समागतं धर्मराजेन सूत ।**
**प्रश्नानुक्त्वा[१] विब्रुवन्तं च सम्यक् तदा नाशंसे विजयाय सञ्जय**
**॥ १९१ ॥**

---

१. $K_{3,4}$,B,$D_a$,$D_3$,G ; BORI पृ. १९; **'प्रश्नान्कांश्चिद्विब्रुवाणं'** इति कुं. पाठः ।

**प्रश्नानुक्त्वा** धर्मसूनुं प्रति प्रश्नान् पृष्ट्वेति यावत्। तेन प्रत्युत्तरे दत्ते सति सम्यगिति **विब्रुवन्तं** विशेषेण ब्रुवन्तं च।

**यदाऽश्रौषं न विदुर्मामकास्तान्**
**प्रच्छन्नरूपान् वसतः पाण्डुपुत्रान्[1]।**
**विराटनगरे सह कृष्णया च**
**तदा नाशंसे विजयाय सञ्जय ॥ १९२ ॥**

**विराटनगरे वसतः पाण्डुपुत्रान्** इत्यत्र **वसतः** सदा सहैव वसतो विराटस्याप्यदृश्यमानानित्यर्थः।

**यदाऽश्रौषं मामकानां वरिष्ठान्**
**धनञ्जयेनैकरथेन भग्नान्।**
**[2]विराटराज्ये वसतां महात्मनां**
**तदा नाशंसे विजयाय सञ्जय ॥ १९४ ॥**

विराटराज्ये वसतां महात्मनां मध्ये एकरथेन धनञ्जयेनेति सम्बन्धः।

**यदाऽश्रौषं माधवं वासुदेवं**
**सर्वात्मना पाण्डवार्थे निविष्टम्।**
**यस्येमां गां विक्रममेकमाहुः**
**तदा नाशंसे विजयाय सञ्जय ॥ १९७ ॥**

**गां** भूमिम्।

---

१. $K_1$ ; BORI पृ. १९; **'पाण्डवेयान्। विराटराष्ट्रे'** इति कुं.पाठः।
२. $G_2$ ; BORI पृ. १९; **'विराटराष्ट्रे वसता महात्मना'** इति कुं.पाठः।

**यदाऽश्रौषं नरनारायणौ तौ**
**कृष्णार्जुनौ वदतो नारदस्य ।**
**अहं द्रष्टा ब्रह्मलोके च सम्यक्**
**तदा नाशंसे विजयाय सञ्जय ॥ १९८ ॥**

ब्रह्मलोके सदा तौ कृष्णार्जुनौ दृष्ट्वा नरनारायणौ ऋषी इति वदतः नारदस्य वचनमहं यदा अश्रौषमिति सम्बन्धः । 'नारदेन' इति पाठे नरनारायणावृषी तौ कृष्णार्जुनौ ब्रह्मलोके नारदं दृष्ट्वा नारदेन सह सदा **वदतो** व्यवहारं कुरुत इति यदा अहमश्रौषमिति सम्बन्धः ।

**यदाऽश्रौषं कर्णदुःशासनाभ्यां**
**बुद्धिं कृत्वा[1] निश्चले केशवस्य ।**
**तं चात्मानं बहुधा दर्शयानं**
**तदा नाशंसे विजयाय सञ्जय ॥**

कर्णदुःशासनाभ्यां बुद्धिं कृत्वा केशवस्य **निश्चले** निश्चलत्वे, भावप्रधानो निर्देशः । बन्धन इत्यर्थः । यदा बुद्धिमश्रौषमिति बुद्धिपदस्यावृत्त्या योजना । 'बुद्धिं कृतां निग्रहे[2] केशवस्य' इति पाठे स्पष्टोऽर्थः ।

**यदाऽश्रौषं [3]वासुदेवेऽप्रयत्नाः**
**रथाङ्गहस्ते फल्गुनेनान्वितेऽपि ।**

१. G ; BORI पृ. २०; **'कृतां निग्रहे'** इति कुं.पाठः ।
२. **'केशवे निग्रहस्य'** सो.मु.पा.
३. **'वासुदेवे प्रयाते'** इति BORI पाठः पृ. २० ।

**[१] ग्रहीतुकामा मम पुत्रावजानन्**
**तदा नाशंसे विजयाय सञ्जय ॥**

**यदाऽश्रौषम्** इत्यत्र [२] अप्रयत्ना मम पुत्रा रथाङ्गहस्ते वासुदेवे विषये, [३] 'प्रादुरास्तां ततो दोर्भ्यां सङ्कर्षणधनञ्जयौ । दक्षिणेनार्जुनो धन्वी [४] बली रामश्च सव्यतः' इति वचनात्, **अन्विते** अनु सन्धानार्थं दुर्योधनसभा-प्रवेशानन्तरं विश्वरूपदर्शनसमये हरेर्दक्षिणभुजं इते प्राप्ते, सभायां विश्वरूपदर्शनसमये तन्निकटस्थे फल्गुनेऽपि विषये, अथवा **अन्विते** कृष्णस्य पृष्ठतः प्राप्ते **फल्गुने** परसैन्यं फल्गु तुच्छं नयतीति व्युत्पत्त्या, पुंव्यत्यासेन वा **फल्गुनः** सात्यकिः तस्मिंश्च विषये **ग्रहीतुकामाः** बलाद्ग्रहीतुं कामवन्तः सन्तः । [५] 'वष्टिवागुरिरल्लोपमवाप्योरुपसर्गयोः' इति वचनात्, **वजानन्** अवजानन् अवज्ञां कृतवन्त इत्यर्थः । यद्वा मम **पुत्रौ** दुर्योधनदुःशासनौ [६] अप्रयत्नास्तत्सेनाश्च ग्रहीतुकामास्सन्तः **अजानन्** तौ तुच्छावजानन्निति यदा अश्रौषमिति सम्बन्धः । सन्धानार्थं भग-वद्याने फल्गुनस्याभावादेवमेव योजना ।

**यदाऽश्रौषं मन्त्रिणं वासुदेवं**
**तथा भीष्मं शान्तनवं च तेषाम् ।**
**भारद्वाजं [७] चार्षतोऽनुब्रुवाणं**
**तदा नाशंसे विजयाय सञ्जय ॥ २०२ ॥**

---

१. **'ग्रहीतुकामं मम पुत्रं द्विपेन'** इति BORI पाठः ।
२. **'प्रयत्ताः सप्रयत्नाः'** सो.मु.पा. ; ३, **उद्योग १३१-८**
४. **'हली'** सो.मु.पा. ; ५. **'भागुरिरल्लोपमवाप्योरुपसर्गयोरिति'** सो.मु.पा
६. **'सप्रयत्नाः'** सो.मु.पा.
७. **'चाशिषोऽनुब्रुवाणं'** इति कुं.पाठः ।

शान्तनवं भीष्मम् । तथा भारद्वाजं द्रोणं च । **मन्त्रिणं** मन्त्रकुशलं वासुदेवं प्रति । **आर्षतः** ऋषिसम्बन्धित्वादार्षशब्दवाच्ये एकान्ते सप्तम्यर्थे तसिः । **तेषां** पाण्डवानां **अनु** अनुकूलतया ब्रुवाणं यदा अश्रौषमिति सम्बन्धः । 'आशिषोऽनुब्रुवाणम्' इति पाठे, **तेषां** पाण्डवानामाशिषोऽनुब्रुवाणमिति स्पष्टोऽर्थः । एषामस्मत्सैन्यानां मध्ये कश्चिदवध्यरूपो न विद्यते । सर्वेपि भीमसेनेन वध्या एवेत्यर्थः । यद्वा एषां पाण्डवानां मध्ये कश्चिदस्मद्भटानां वध्यरूपो नेति वा ।

**यदाऽश्रौषं शान्तनवे शयाने**
**पानीयार्थे चोदितेनार्जुनेन ।**
**भूमिं भित्त्वा तर्पितं तत्र भीष्मं**
**तदा नाशंसे विजयाय सञ्जय ॥ २१० ॥**

मम पुत्रस्याकौशलं दृष्ट्वा पानीयार्थं चोदितमर्जुनं, अर्जुनेन तर्पितं भीष्मं च यदा अश्रौषमित्यन्वयः ।

**यदाऽश्रौषं शक्रसूर्यौ[1] च युक्तौ**
**कौन्तेयानामनुलोमौ जयाय ।**
**नित्यं चास्मान्[2] श्वापदान् व्याभषन्तौ**
**तदा नाशंसे विजयाय सञ्जय ॥ २११ ॥**

**यदाऽश्रौषं शक्रसूर्यौ च युक्तौ** इत्यत्र कौन्तेयानां शक्रसूर्यावनुकूलौ शुभफलराशिगत्वेन जयायानुकूलौ अस्मान् प्रति **श्वापदान्** वृकान्

---

१. $K_4$,$G_1$,$M_{2-4}$ ; BORI पृ. २१; **'शुक्रसूर्यौ'** इति कुं.पाठः ।
२. **'चास्माञ्श्वापदा भीषयन्ति'** इति कुं.पाठः ।

**व्याभषन्तौ** अमङ्गलरवं कुर्वन्तौ पुञ्जीभूतेषु तेषु द्वन्द्वीभूय ध्वनिकरणात् द्विवचनं बहुवचनं च । 'व्याभषन्त' इति पाठे विभक्तिव्यत्यासात् व्याभषतः श्वापदानिति सम्बन्धः । हिंस्रा वृकादयो वनमृगाः श्वापदाः ।

**यदा द्रोणो विविधानस्त्रमार्गान्**
**व्यदर्शयन्समरे[१] चित्रयोधी ।**
**न पाण्डवान् श्रेष्ठतमान्वदन्ति[२]**
**तदा नाशंसे विजयाय सञ्जय ॥ २१२ ॥**

**यदा द्रोणो विविधानस्त्रमार्गान्** इत्यत्र यदा **चित्रयोधी** द्रोणः समरे विविधानस्त्रमार्गान्व्यदर्शयत् तदापि द्रष्टारः पाण्डवानेव श्रेष्ठतमान्वदन्तीति यदा अश्रौषमिति सम्बन्धः ।

**यदाऽश्रौषं चास्मदीयान्महारथान् व्यवस्थितानर्जुनस्यान्तकाय ।**
**संशप्तकान्निहतानर्जुनेन तदा नाशंसे विजयाय सञ्जय ॥२१३॥**

**अर्जुनस्यान्तकाय** इत्यत्र **अन्तकाय** अन्ताय, स्वार्थे कप्रत्ययः ।

**यदाऽभिमन्युं परिवार्य बालं**
**सर्वे हत्वा हृष्टरूपा बभूवुः ।**
**महारथाः पार्थमशक्नुवन्त-**
**स्तदा नाशंसे विजयाय सञ्जय ॥ २१५ ॥**

**यदाऽभिमन्युं परिवार्य बालम्** इत्यत्र बहुभिः शूरैः एकस्य बालस्य

---

१. **'निदर्शयन् समरे'** इति कुं.पाठः ।
२. **'श्रेष्ठतरान्निहन्ति'** इति कुं. पाठः ।

हिंसितत्वेनाधर्मयुद्धकरणात् अस्मदीयानां विजयाय नाशंस इति भावः ।

**यदाऽश्रौषमभिमन्युं निहत्य**
**हर्षान् मूढान् क्रोशतो धार्तराष्ट्रान् ।**
**[1]क्रोधं युक्तं सैन्धवे चार्जुनेन**
**तदा नाशंसे विजयाय सञ्जय ॥ २१६ ॥**

**यदाऽश्रौषमभिमन्युं निहत्य** इत्यत्र क्रोशतो धार्तराष्ट्रान्प्रति सैन्धवे च विषये अर्जुनेन युक्तं योजितं, अर्जुनेन तेषु कृतमिति यावत् । क्रोधं यदाऽश्रौषमिति सम्बन्धः । अधर्मेण स्वपुत्रवधे सति अर्जुने [2]कोपः सूचित एवेति सूचनाय युक्तमित्युक्तम् ।

**यदाऽश्रौषं सैन्धवार्थे प्रतिज्ञां**
**प्रतिज्ञातां तद्वधायार्जुनेन ।**
**सत्यं तीर्णां शत्रुमध्ये च तेन**
**तदा नाशंसे विजयाय सञ्जय ॥ २१७ ॥**

सैन्धवार्थे प्रतिज्ञा तदभीष्टदानाय नेति सूचनाय तद्वधाय [3]प्रतिज्ञाम् इत्युक्तम् ।

**यदाऽश्रौषं श्रान्तहये धनञ्जये**
**मुक्त्वा हयान्पाययित्वोपवृत्तान् ।**

१. M ; BORI पृ. २२; '**क्रोधादुक्तं**' इति कुं.पाठः ।
२. '**कोपस्तूचित**' सो.मु.पा.
३. '**प्रतिज्ञातामित्युक्तम्**' सो.मु.पा.

**पुनर्युक्त्वा वासुदेवं प्रयातं**
**तदा नाशंसे विजयाय सञ्जय ॥ २१८ ॥**

**पाययित्वोपवृत्तान्** इत्यत्र उप रथसमीपं प्रति **वृत्तान्** निवृत्तानित्यर्थः ।

**यदाऽश्रौषं नागबलैः सुदुःसहं**
**[१]द्रोणं चास्त्रैः युयुधानं प्रयुध्य ।**
**यान्तौ पार्थौ यत्र तौ कृष्णपार्थौ**
**तदा नाशंसे विजयाय सञ्जय ॥ २२० ॥**

द्रोणं **प्रयुध्य** प्रतियुध्य, यत्र तौ कृष्णपार्थौ स्थितौ तत्र यान्तौ पार्थौ युधिष्ठिरभीमौ यदा अश्रौषमिति सम्बन्धः । अस्मद्युद्धरङ्गस्थलं तेषां विनोदस्थानमासीत् । अतः कथमस्माकं जय इति भावः ।

**यदाऽश्रौषं कर्णमासाद्य मुक्तं**
**वधाद्भीमं [२]गर्हयित्वा वचोभिः ।**
**धनुष्कोट्याऽऽतुद्य कर्णेन वीरं**
**तदा नाशंसे विजयाय सञ्जय ॥ २२१ ॥**

**यदाऽश्रौषं कर्णमासाद्य** इत्यत्र कर्णमासाद्य स्थितं वीरं भीमं कर्णेन वचोभिर्गर्हयित्वा धनुष्कोट्याऽऽतुद्य वधान्मुक्तं यदाऽश्रौषं, तदा विजयाय नाशंसे, अतः परं विजयो नास्तीति विषण्णोऽस्मीत्यर्थः । गृहीतस्यापि भीमस्य वधे कर्णस्यासामर्थ्याद्विजयानाशंसनमिति भावः ।

---

१. $D_{14}$,$M_{2-4}$; BORI पृ. २२; **'द्रोणानीकं युयुधानं प्रमथ्य । यातं वार्ष्णेयं'** इति कुं.पाठः ।

२. $D_a$ ; BORI पृ. २२; **'कुत्सयित्वा'** इति कुं.पाठः ।

**यदाऽश्रौषं द्रोणमाचार्यमेकं**
**धृष्टद्युम्नेनाभ्यतिक्रम्य धर्मम् ।**
**रथोपस्थे प्रायगतं विशस्तं**
**तदा नाशंसे विजयाय सञ्जय ॥ २२५ ॥**

**यदाऽश्रौषं द्रोणमाचार्यमेकम्** इत्यत्र अतिप्रबलस्य द्रोणस्य दुर्बलेनैव घातितत्वात् जयाभावशङ्का । धर्मस्याप्यभिमन्युवधाधर्मेण कारणेन तुच्छीभूतत्वादिति भावः ।

**यदा द्रोणे निहते द्रोणपुत्रो**
**नारायणं दिव्यमस्त्रं विकुर्वन् ।**
**नैषामन्तं गतवान्पाण्डवानां**
**तदा नाशंसे विजयाय सञ्जय ॥ २२७ ॥**

**नारायणं दिव्यमस्त्रं विकुर्वन्** इत्यत्र **विकुर्वन्** पाण्डवविरोधिभूतं कुर्वन्नित्यर्थः ।

**यदाऽश्रौषं कर्णमत्यन्तशूरं**
**हतं पार्थेनाहवेष्वप्रधृष्यम् ।**
**तस्मिन्भ्रातॄणां विग्रहे देवगुह्ये**
**तदा नाशंसे विजयाय सञ्जय ॥ २२९ ॥**

**तस्मिन् भ्रातॄणां विग्रह** इत्यत्र देवमध्ये भ्रातॄणां कश्यपपुत्रत्वेन भ्रातॄणां देवदानवानां **तस्मिन्** कर्णार्जुनयोर्युद्धविषये कलहे सति कर्णस्य मृतत्वात्, देवानां पाण्डवपक्षपातित्वाच्च जयाभावशङ्केति भावः ।

---

१. '**अधर्मस्यापि**' सो.मु.पा.

**यदाऽश्रौषं द्रोणपुत्रं च शूरं दुःशासनं कृतवर्माणमुग्रम् ।**
**युधिष्ठिरं शून्यममर्षयन्तं तदा नाशंसे विजयाय सञ्जय ॥२३०॥**

**यदाऽश्रौषं [१] कलहं द्यूतमूलं मायाबलं सौबलं पाण्डवेन ।**
**हतं सङ्ग्रामे सहदेवेन पापं तदा नाशंसे विजयाय सञ्जय ॥२३२॥**

**युधिष्ठिरं शून्यम्** इत्यत्र भीमार्जुनादिभिः शून्यम् । स्वकीयवीरभटानामपि दुर्बलान्वेषित्वात् तस्यापि वधेऽसमर्थत्वाच्च जयाभावशङ्केति भावः । अत एव शून्यं अमर्षयन्तमिति चोक्तम् । **द्यूतमूलं** निहतमित्युक्त्या द्यूतस्यायुःक्षयकारित्वात्तन्मूलाः सर्वेपि स्वकीयाः नङ्क्ष्यन्तीति भावः ।

**यदाऽश्रौषं [२] शान्तमेकं शयानं ह्रदं गत्वा स्तम्भयित्वा तदम्भः ।**
**दुर्योधनं विरथं [३] भग्नयज्ञं तदा नाशंसे विजयाय सञ्जय ॥२३३॥**

**यदाऽश्रौषं शान्तमेकं शयानम्** इत्यत्र **भग्नयज्ञं** भग्नमृतसञ्जीवनमन्त्रजपयज्ञम् । सरसि कृतमहाप्रयत्नस्य विफलीकृतत्वाज्जीवन्नप्ययं [४] यत्नशतेनापि नोज्जीवयितुं शक्य इति विजयानाशंसनमिति भावः ।

**यदाऽश्रौषं पाण्डवांस्तिष्ठमानान्**
**गत्वा ह्रदे वासुदेवेन सार्धम् ।**

---

१. $M_1$; BORI पृ. २४; **'कलहद्यूतमूलं'** इति कुं.पाठः ।
२. $K_{1-5}$, $V_1$,$G_{1.2.6}$,$D_r$,$D_{2\ 4.8}$ ; BORI पृ. २४; **'श्रान्तमेकं'** इति कुं. पाठः ।
३. **'भग्नशक्तिं'** इति कुं.पाठः ।
४. **'यदा तेनापि नज्जिवयितुं शक्त इति'** इति सो.मु.पा.

[1]अधर्षितं धर्षयन्तं सुतं मे
तदा नाशंसे विजयाय सञ्जय ॥२३४॥

**यदाऽश्रौषं पाण्डवांस्तिष्ठमानान्** इत्यत्र **अधर्षितं** कृष्णादिभिरनिन्दितं, तान् **धर्षयन्तं** निन्दयन्तं मे सुतं यदाऽश्रौषमिति योजना । 'अमर्षणं धर्षयतः सुतं मे' इति पाठे **अमर्षणं** कोपिष्ठं मे सुतं **धर्षयतः** धिक्कुर्वतः पाण्डवानिति सम्बन्धः । मरणकालेऽपि विष्णुवैष्णवदूषकत्वाज्जयानाशंसनमिति प्राथमिकपाठस्य भावः ।

**यदाऽश्रौषं विविधांश्चित्रमार्गान्**
**गदायुद्धे मण्डलशश्चरन्तम् ।**
**मिथ्याहतं वासुदेवस्य बुद्ध्या**
**तदा नाशंसे विजयाय सञ्जय ॥२३५॥**

**मिथ्याहतं वासुदेवस्य बुद्ध्या** इत्यत्र हतस्य पुनरैहिकजयाशंसनाप्रसक्त्या तन्निषेधस्य व्यर्थत्वात्, येन केनाप्युपायेनास्य खलस्य वध एव कार्य इति मन्वानो हरिर्नास्य परलोके जयं दास्यतीति भावः । मिथ्याहननं तु [2]'निकृत्या निकृतिं हन्यात्' इति वाक्यात् धर्म एवेति हृदयम् । इतः परं श्लोकेषु जयानाशंसनं परलोकजयविषयमेव ।

**यदाऽश्रौषं द्रोणपुत्रादिभिस्तै-**
**र्हतान् पाञ्चालान् द्रौपदेयांश्च सुप्तान् ।**

---

१. **'अमर्षणं धर्षयतः'** इति कुं.पाठः ।

२. म.भा.ता.नि. २८-२२०; 'निकृत्या निकृतिप्रज्ञा हन्तव्या इति निश्चयः । न हि नैकृतिकं हत्वा निकृत्या पापमुच्यते' इति समानाशयको श्लोकः – वन.४९-२३

**कृतं बीभत्समयशस्यं च कर्म**
**तदा नाशंसे विजयाय सञ्जय** ॥२३६ ॥

'द्रौपदेयांश्च सुप्तान्' इति श्लोके सुप्तहननात् परलोकजयाभावः ।

**यदाऽश्रौषं भीमसेनानुयाते-**
**नाश्वत्थाम्ना परमास्त्रं प्रयुक्तम् ।**
**क्रुद्धेनैषीकं[१] चावधीद्यन्न गर्भं**
**तदा नाशंसे विजयाय सञ्जय** ॥ २३७ ॥

**क्रुद्धेनैषीकं चावधीद्यन्न गर्भम्** इत्यत्र क्रुद्धेन प्रयुक्तं **ऐषीकं** इषीकायां मन्त्रितं ब्रह्मास्त्रम् । अत्र तु भ्रूणहत्योद्योगकरणात्परलोक-जयाभावः ।

**यदाऽश्रौषं ब्रह्मशिरोऽर्जुनेन**
**मुक्तं[२] स्वस्तीत्यस्त्रमस्त्रेण शान्तम् ।**
**अश्वत्थाम्ना मणिरत्नं च दत्तं**
**तदा नाशंसे विजयाय सञ्जय** ॥ २३८ ॥

**यदाऽश्रौषं ब्रह्मशिरोऽर्जुनेन** इत्यत्र अश्वत्थाम्ना मुक्तं **ब्रह्म-शिरोऽस्त्रं** ब्रह्मास्त्रं, अर्जुनेन स्वस्तीत्युक्त्वा[३] **अस्त्रेण** स्वास्त्रेण शान्तम् । अत्राप्यश्वत्थाम्नो ब्रह्मचर्याख्यमहाव्रतनाशकत्वेन स्वपुत्रस्य परलोक-जयाभाव इति भावः ।

---

१. **'क्रुद्धेनैपीकमवधीद्येन'** इति कुं.पाठः ।
२. **'स्वस्तीत्युक्त्वाऽस्त्रमस्त्रेणशान्तम् '** इति कुं.पाठः ।
३. **'स्वस्तीत्युक्त्याऽस्त्रेण'** सो.मु.पा.

**यदाऽश्रौषं द्रोणपुत्रेण गर्भे**
**वैराट्या वै पात्यमाने महास्त्रैः ।**
**सञ्जीवयामीति हरेः प्रतिज्ञां**
**तदा नाशंसे विजयाय सञ्जय ॥ २३९ ॥**

**यदाऽश्रौषं द्रोणपुत्रेण** इत्यत्रापि कृष्णव्यासयोरप्रियकर्मकरणात् 'भृत्यापराधः स्वामिनो दण्डः' इति न्यायेन स्वपुत्रस्य साक्षादन्धतमः-[1] प्राप्त्या सुतरां जयाभाव इति भावः ।

**शोच्या गान्धारी पुत्रपौत्रैर्विहीना**
**तथा वध्वा पितृभिर्भ्रातृभिश्च ।**
**कृतं कार्यं दुष्करं पाण्डवेयैः**
**प्राप्तं राज्यमसपत्नं पुनस्तैः ॥ २४१ ॥**

**शोच्या गान्धारी** इत्यत्र **वध्वा,** जात्येकवचनम्, स्नुषाभिः सह गान्धारी शोच्या । [2]'वधूर्जाया स्नुषा स्त्री तु' इत्यमरः ।

[3]**तमसा त्वस्य विस्तीर्णं मोह आविशते च माम् ।**
**सञ्ज्ञां नोपलभे सूत मनो विह्वलतीव मे ॥ २४३ ॥**

**तमसा त्वस्य विस्तीर्णम्** इत्यत्र **अस्य** मम मनः **तमसा** अज्ञानेन विस्तीर्णमासीत्; मां मोह आविशते चेति योजना । यद्वा, अस्य सर्वस्य **तमसा** अज्ञानेन पुत्रभार्यास्नुषादिविषयकाज्ञानेन विस्तीर्णं मोहश्च आविशत इति सम्बन्धः ।

---

१. **'साक्षादन्धंतमःप्राप्त्या'** सो.मु.पा. ; २. अ.को. ३-३-१०२
३. **'तमसत्वतीव विस्तीर्णं मोह आविशतीव'** इति कुं.पाठः ।

**भवितव्यं तथा तच्च नानुशोचितुमर्हसि ।**
**दैवं पुरुषकारेण को निवर्तितुमर्हसि ॥ २७१ ॥**

**पुरुषकारेण** पौरषेण ।

**कालः सृजति तत्सर्वं[१] कालः संहरते प्रजाः ।**
**संहरन्तं प्रजाः कालं कालः शमयते पुनः ॥ २७३ ॥**

**कालः सृजति तत्सर्वम्** इत्यादौ 'कल ज्ञाने' इति धातोः कालपदेन कालनियामकः सर्वज्ञो विष्णुरुच्यते ।

**लोकानां च हितार्थाय कारुण्यान्मुनिसत्तमः ।**
**अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत् ॥ २७९ ॥**

**अत्रोपनिषदं पुण्याम्** इत्यत्र **अत्र** भारतकथासङ्ग्रहविषये, **उपनिषदं** अनुक्रमणिकाध्यायरूपोपनिषदम् ।

**असत्सत्सदसच्चैव यस्माद्विश्वं प्रवर्तते ।**
**सन्ततिश्च प्रवृत्तिश्च जन्ममृत्युपुनर्भवाः ॥ २८४ ॥**

**असत्सत्सदसच्चैव** इत्यत्र **असत्** कार्यं, **सत्** कारणम् । अनेन 'विपर्ययेण तु लय' इत्युक्तः कार्यमारभ्य जायमानः संहारो लक्ष्यते । **सत्** कारणं, **असत्** कार्यम् । अनेन कारणमारभ्य जायमाना सृष्टिर्लक्ष्यते । सृष्टिसंहारावित्यर्थः । तयोरुभयोः प्रतिलोमानुलोमक्रमौ दर्शयितुमेवं प्रयोगः । यद्वा, **असत्** दुर्जनात्मकं, **सत्** सज्जनात्मकं, **सदसत्** उभयात्मकम् । यद्वा, **असत्** अनित्यं, **सत्** नित्यं, **सदसत्** नित्यानित्यात्मकं चैतज्जगद्यस्मात्प्रवर्तत इत्यर्थः ।

---

१. $D_n, D_r, D_{1.3.4}$ ; BORI पृ. २९; **'भूतानि'** इति कुं.पाठः ।

**अध्यात्मं श्रूयते यत्र पञ्चभूतगुणात्मकम् ।**
**अव्यक्तादि परं [1]तच्च स देवः परिगीयते ॥ २८५ ॥**

**अव्यक्तादि परं तच्च स देवः परिगीयत** इत्यत्र **परं** अव्यक्तादि-जगतोऽत्यन्तविलक्षणं, यद्ब्रह्म **स** देवः, **तत्** जगच्च परितः श्रुतौ गीयत इत्यर्थः । अन्यथा चशब्दवैयर्थ्यम् ।

**[2]यत्स्वं यतिवरा मुक्ता ध्यानयोगबलान्विताः ।**
**प्रतिबिम्बमिवादर्शे पश्यन्त्यात्मन्यवस्थितम् ॥**

**यत्स्वं** यत्स्वरूपम् ।

**उभे सन्ध्ये जपन्किञ्चित्सद्यो मुच्येत किल्बिषात् ।**
**[3]अनुक्रामणमध्यायमहोरात्र्या च सञ्चितम् ॥ २८९ ॥**

**भारतस्य वपुर्ह्येतत्सत्यं चानृतमेव च ।**
**नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा ॥ २९० ॥**

**अनुक्रामणमध्यायमहोरात्र्या च सञ्चितम्** इत्यत्र यथा सत्यं च अनृतं च अहोरात्र्या **सञ्चितं** सम्बद्धम् । रात्रौ चोरपिशाचादीनां सञ्चाराद्यथाऽनृतस्य रात्र्याश्च सम्बन्धः, दिवा देवर्षिमनुष्यादीनां सञ्चाराद्यथा सत्यस्य अह्नश्च सम्बन्धस्तथा भारतश्रावपुण्येन सकलभारत-

---

१. $D_{14}, G_{(G1\ omit)}$ ; BORI पृ. ३०; **'यच्च स एव परिगीयते'** इति कुं. पाठः ।

२. **'यं ध्यायन्ति सदा'** इति कुं.पाठः ।

३. $M_3$; BORI पृ. ३१; **'अनुक्रमण्या यावत्स्यादह्ना रात्र्या च सञ्चितम्'** इति कुं.पाठः ।

श्रवणजनितपुण्येनानुक्रामणमध्यायं **सञ्चितं** सम्बद्धं सन्तः प्राहुरिति योजना । नवनीतं यथा दध्न इत्युत्तरश्लोकात् यथातथापदयोरत्राप्यावृत्तिः । उत्तरश्लोकेऽपि नवनीतादिकं यथा दध्यादेः सारभूतं तथा सङ्ग्रहाध्यायोऽपि भारतस्य सारभूत इति दार्ष्टान्तिकमध्याहृत्य योजना कर्तव्या । सकलभारतश्रवणजनितपुण्यं अनुक्रमणिकाध्यायश्रवणमात्राद्भवतीति भावः । लोके गोब्राह्मणहननाद्यथा महापापं तथा गोब्राह्मणरक्षणात् महापुण्यमित्यादिव्यवहारदर्शनात्सम्बन्धमात्रघटनाय हीनोऽपि दृष्टान्त इति ज्ञेयम् ।

**बिभेत्यल्पश्रुताद्वेदो मामयं प्रचलिष्यति[१] ।**
**कार्ष्णं वेदमिमं विद्वान् श्रावयित्वार्थमश्नुते ॥ २९४ ॥**

**मामयं प्रचलिष्यति** इत्यत्र चलिष्यति स्वार्थाच्चालयिष्यतीत्यर्थः । **श्रावयित्वार्थमश्नुते** इत्यत्र **अर्थं** पुरुषार्थम् ।

**अधीतं भारतं तेन कृत्स्नं स्यादिति मे मतिः ।**
**यश्चैनं शृणुयान्नित्यमार्षं श्रद्धासमन्वितः ॥ २९६ ॥**

**आर्षं श्रद्धासमन्वित** इत्यत्र **आर्षं** ऋषियोग्यम् ।

**तदाप्रभृति लोकेऽस्मिन्महाभारतमुच्यते ।**
**महत्त्वे च गुरुत्वे च ध्रियमाणं ततो[२]ऽधिकम् ॥ २९९ ॥**

**ध्रियमाणं ततोऽधिकम्** इत्यत्र **ततः** वेदात्, महत्त्वे गुरुत्वे च विषये **अधिकम्** उच्चं यथा भवति तथा ध्रियमाणमासीत् ।

१. $K_4$,$D_8$,M (except M3); BORI पृ. ३१; **'प्रतरिष्यति'** इति कुं.पाठः ।
२. BORI पृ. ३२; **'यतोऽधिकम्'** इति कुं.पाठः ।

**तपो न कल्कोऽध्ययनं न कल्कः**
**स्वाभाविको वेदविधिर्न कल्कः ।**
**प्रसह्यवित्ताहरणं न कल्क**
**स्तान्येव भावोपहतानि कल्कः ॥ ३०१ ॥**

**तपो न कल्कोऽध्ययनं न कल्कः स्वाभाविको वेदविधिर्न कल्कः । प्रसह्यवित्ताहरणं न कल्कस्तान्येव भावोपहतानि कल्क** इत्यत्र स्वाभाविको वेदविधिरित्यत्रोक्तं स्वाभाविकपदं विशेष्यलिङ्गानुसारेण सर्वत्रान्वेतव्यम् । **स्वाभाविकं** श्रौतविधिस्वभावादेव प्राप्तं; न तु फलार्थितयेत्यर्थः । **तपः** यतिवानप्रस्थयोर्धर्मभूतं तपः **कल्कः** 'कल बन्धने' इति धातोः बन्धनं न; किं नाम [1]निवृत्तधर्मरूपत्वान्मोक्षहेतुरेवेति भावः । एवं ब्रह्मचारिणां स्वाभाविकमध्ययनं, गृहस्थानां स्वाभाविको **वेदविधिः** वेदविहितं यज्ञादिकर्म, क्षत्रियाणां स्वाभाविकं **प्रसह्यवित्ताहरणं** प्रकर्षेण सहनयोग्यषष्ठांशरूपवित्ताहरणं, अपराधिनि **प्रसह्य** बलात्कारेण वित्ताहरणं च पूर्ववन्निवृत्तिकर्मरूपत्वात्कल्को न । **तान्येव** तपआदीन्येव भावेन मोक्षातिरिक्तफलकामनया उपहतानि विष्णोरप्रीतिजनकत्वेनान्तवत्फलत्वेन च नष्टप्रायाणीत्यर्थः । विष्णुलोकप्रापकमोक्षकामनाया अविघातकत्वात्तद्व्यवच्छेदाय भावोपहतानीत्युक्तम् । येन भावेन उपरि महाफलोपहतिर्भवति स एव भावो वर्ज्य इति भावः । **कल्कः** बन्धनं, पुनः पुनः संसारबन्धहेतुभूतमित्यर्थः ।

**॥ इति प्रथमोऽध्यायः ॥**

---

१. **'निवृत्तिधर्मरूपत्वान्मोक्षहेतुरेवेति'** सो.मु.पा.

## ॥ अथ द्वितीयोऽध्यायः ॥

# अथ पर्वसङ्ग्रहपर्व

**अक्षौहिण्याः प्रसङ्ख्यानं[१] रथानां द्विजसत्तमाः ।**
**सङ्ख्यागणिततत्त्वज्ञैः सहस्राण्येकविंशतिः ॥ २३ ॥**

**अक्षौहिण्याः प्रसङ्ख्यानम्** इत्यत्र **सहस्राण्येकविंशतिः** एकविंशतिसहस्राणीत्यर्थः ।

**शतान्युपरि चैवाष्टौ तथा भूयश्च सप्ततिः ।**
**गजानां तु परीमाणमेतदेव विनिर्दिशेत् ॥ २४ ॥**

**उपरि** एकविंशतिसहस्रादुपर्यष्टौ शतानि भूयः सप्ततिश्च । इयं रथानां सङ्ख्या । एवमेव गजानामपि सङ्ख्या ।

**ज्ञेयं शतसहस्रं तु सहस्राणि नवैव तु ।**
**नराणामपि पञ्चाशच्छतानि त्रीणि चानघाः ॥ २५ ॥**

**ज्ञेयं शतसहस्रम्** इत्यत्र नराणां **शतसहस्रं** लक्षमित्यर्थः । तथा नव सहस्राणि त्रीणि शतानि च पञ्चाशच्च । इयं नराणां सङ्ख्येत्यर्थः ।

**पञ्चषष्टिसहस्राणि तथाश्वानां शतानि च ।**
**दशोत्तराणि षट् प्राहुर्यथावदिह सङ्ख्यया ॥ २६ ॥**
**चमूस्तु पृतनास्तिस्रस्तिस्रश्चम्वस्त्वनीकिनी ।**
**अनीकिनीं दशगुणां प्राहुरक्षोहिणीं बुधाः ॥ २२ ॥**

१. BORI पृ. ३५; 'प्रसङ्ख्याता' इति कुं.पाठः ।

**पञ्चषष्टिसहस्राणि** इत्यत्र अश्वानां षष्टिसहस्राणि, तदुपरि पञ्चसहस्राणि । सहस्राणीति पदमुभयत्रापि सम्बध्यते । शतानि च दशोत्तराणि षट्, षट् शतानि तदुपरि दश चेत्यर्थः । अनीकिन्याः दशगुणतया गणने सति एवमस्माभिरुक्तप्रकारेण रथादीनां सङ्ख्या सम्पन्ना भवति । अस्याश्चतुरङ्गसेनासङ्ख्याया मेलने सति या सङ्ख्या तामक्षौहिणीमाहुः । इयं च अक्षौहिणीसङ्ख्या चतुरङ्गसेनागणनायामेव । न तु धनादिगणनायाम् । धनादिगणकास्तु क्षोणी महाक्षोणी इत्येव[१] सङ्ख्यां वदन्ति । न त्वक्षौहिणीम् । अत एव 'अक्षौहिणी सेना' इति वैयाकरणा आहुः ।

**एतया सङ्ख्यया ह्यासन्कुरुपाण्डवसेनयोः ।**
**अक्षौहिण्यो द्विजश्रेष्ठाः पिण्डेनाष्टादशैव ताः[२]** ॥ २८ ॥

**पिण्डेनाष्टादशैव** इत्यत्र **पिण्डेन** अन्नानां[३] पिण्डीकरणमिव कुरुपाण्डवसेनानां यदन्योन्यमेलनं स पिण्ड इत्युच्यते । तृतीय सप्तम्यर्थे । पिण्डीकरणे सतीत्यर्थः ।

**इतिहासोत्तमे यस्मिन्नर्पिता[४] बुद्धिरुत्तमा ।**
**स्वरव्यञ्जनयोः कृत्स्ना लोकान्वेदाश्रयेव[५] वाक्** ॥ २९ ॥

---

१. 'इत्येवं सङ्ख्यां वदन्ति' सो.मु.पा. ।
२. BORI पृ. ३४; 'पिण्डिताष्टादशैव तु' इति कुं.पाठः ।
३. 'अन्नादिपिण्डीकरणमिव' सो.मु.पा. ।
४. $D_{n}$ (except Dn3), $K_5$, B ; BORI पृ. ३६; 'ह्यस्मिन्नर्पिता' इति कुं. पाठः ।
५. 'लोकवेदाश्रयेव वाक्' इति कुं.पाठः ।

**इतिहासोत्तमे ह्यस्मिन्नर्पिता बुद्धिरुत्तमा** इत्यत्र **स्वरव्यञ्जनयोः** स्वरे व्यञ्जने च, जात्येकवचनं, स्वरेषु व्यञ्जनेषु च । **कृत्स्ना** परिपूर्णा, परिपूर्णतया उच्चारितेति यावत् । लोकानित्यत्र पुनातीति योग्यक्रिया-ध्याहारः ।

**[१]अस्य प्रज्ञाभिपन्नस्य विचित्रपदपर्वणः ।**
**सूक्ष्मार्थन्याययुक्तस्य वेदार्थैर्भूषितस्य च** ॥ ४० ॥

**अस्य प्रज्ञाभिपन्नस्य** इत्यत्र **प्रज्ञया** सर्वज्ञव्यासप्रज्ञया **अभिपन्नस्य** प्राप्तस्य कृतस्येत्यर्थः ।

**भारतस्येतिहासस्य श्रूयतां पर्वसङ्ग्रहः ।**
**[२]पर्वानुक्रमणं पूर्वं द्वितीयं पर्वसङ्ग्रहः** ॥ ४१ ॥

**पर्वानुक्रमणं पूर्वं द्वितीयं पर्वसङ्ग्रहः** इत्यत्र पौष्यादिभविष्य-त्पर्वान्तशतपर्वणां **अनुक्रमणं** क्रमेण निरूपणं **पूर्वं** पूर्वं क्रियमाणम् । **पर्वसङ्ग्रहः** तत्तत्पर्वसु प्रतिपाद्यप्रमेयाणां सङ्ग्रहः सङ्क्षेपेण निरूपणं क्रियत इति यत् तत् **द्वितीयं,** पर्वानुक्रमणादुपरितनमित्यर्थः ।

**पौष्यं पौलोममास्तीकमादिवंशावतारणम्[३] ।**
**ततः सम्भवपर्वोक्तमद्भुतं [४]देवनिर्मितम्** ॥ ४२ ॥

**पौष्यं पौलोममास्तीकम्** इत्यत्र **पौलोमं** पुलोमा नाम भृगुऋषेः पत्नी तत्सम्बन्धि पौलोमम् । **आदिवंशावतारणम् । ततः सम्भव-**

१. BORI पृ.३६; **'तस्य'** इति कुं.पाठः ।
२. $G_1$; BORI पृ. ३६; **'पर्वानुक्रमणी पूर्वं द्वितीयः पर्वसङ्ग्रहः'** इति कुं.पाठः
३. BORI पृ.३६; **'आदिरंशावतारणम्'** इति कुं.पाठः ।
४. BORI पृ. ३६; **'रोमहर्षणम्'** इति कुं.पाठः ।

**पर्वोक्तमद्भुतं देवनिर्मितम्** इत्यत्र **ततः** आस्तीकपर्वानन्तरं **आदिवंशावतारणं** आदिवंशश्च अवतारणं च आदिवंशावतारणे इति प्राग्द्वन्द्वसमासः। [1]'तदा निक्षत्रिये लोके भार्गवेण कृते सति। ब्राह्मणान् क्षत्रिया राजन् गर्भार्थिन्योऽभिचक्रमुः' इत्यादिनोक्तो भार्गवरामात् सकलक्षत्रसंहारे जाते सति पुनः क्षत्रियस्त्रीषु ब्राह्मणेभ्यो जातो यः क्षत्रियवंशः स एक आदिवंशः। [2]'ततो ब्रह्मर्षिवंशेषु पार्थिवर्षिकुलेषु च। जज्ञिरे राजशार्दूल [3]यथाकामं दिवौकसः' इत्यादिनोक्तं यद्देवानामंशावतरणमिदमेकमंशावतारणम्। [4]'हन्त ते कथयिष्यामि' इत्यारभ्य [5]'अत्र वंशः समाप्यते' इत्यत्र समापितो देवादीनां च दानवादीनां यो वंशः अयमपर आदिवंशः। [6]'श्रोतुमिच्छामि तत्त्वेन मानुषेषु महात्मनाम्। जन्म कर्म च भूतानामेतेषामानुपूर्वशः[7]' इत्यत्र मानुषेषु **भूतानां** जातानाम् **एतेषां** पूर्वोक्तानां [8]देवादीनामित्यारभ्योक्तं, 'इति देवासुराणां ते गन्धर्वाप्सरसां तथा। अंशावतरणं राजन्' इत्यत्र समापितं तेषामेव दानवानां देवानां च एकैकांशेन यद्भूमाववतरणमिदमपरमंशावतरणम्। एवं द्विविधावादिवंशौ द्विविधे चावतारणे यत्र क्रमेणानुवर्ण्येते तदादिवंशावतारणमिति सम्भवपर्वणः विशेषणम्। न तु तदपि पर्वान्तरम्। **देवनिर्मितं** व्यासरूपिणा साक्षाद्देवेन नारायणेनैव निर्मितम्। अस्याः सम्भवपर्वकथायाः वध्यानां दैत्यानां घातकानां देवानां च कथारूपत्वेन अतिपुण्यकथात्वद्योतनाय विशेषणत्रयमिदम्।

---

१. आदि ६५-५। 'तदा निःक्षत्रिये' इति मुद्रितपुस्तकेषु
२. आदि. ६६-४ ; ३. 'तथा कामं' सो.मु.पा.
४. आदि. ६६-९ ; ५. आदि. ६७-७२
६. आदि. ६८-२ ; ७. 'आनुपूर्व्यशः' सो.मु.पा.
८. 'देवदानवादीनां' सो.मु.पा. ; ९. आदि. ६८-१६१.

**दाहो जतुगृहस्यात्र हैडिम्बं पर्व चोच्यते ।**
**ततो बकवधः पर्व पर्व चैत्ररथं [१] तथा ॥ ४३ ॥**

**पर्व चैत्ररथं तथा** इत्यत्र चित्ररथाख्यगन्धर्वकथाकथकं चैत्ररथं पर्व ।

**सुभद्राहरणादूर्ध्वं [२] ज्ञेयं हरणहारितम् ।**
**ततः खाण्डवदाहाख्यं तत्रैव मयदर्शनम् ॥ ४६ ॥**

**सुभद्राहरणादूर्ध्वं ज्ञेयं हरणहारितम्** इत्यत्र हरेरिदं हारि तस्य भावः हारिता, **हरणस्य** सुभद्राहरणस्य **हारिता** हरिसम्बन्धिता हर्यनुकूलतेति यावत्; हरणे सति **हारितं** पलायितं अन्वागतबलं वा, महायुद्धकरणेऽपि सकलयादवानामङ्गेषु शरघाताकरणेन हरणस्य **हारिता** मनोहारिता वा, कन्यया सह, ह्रियत इति व्युत्पत्त्या **हरणस्य** कन्याधनस्य **हारिता** इन्द्रप्रस्थं प्रति नेतृता यत्र प्रतिपाद्यते तत्पर्व हरणहारितमित्युच्यते । 'हारिकम्' इति पाठे **हरणस्य** कन्याधनस्य **हारः** हरणं यत्र निरूप्यते तद्धरणहारिकमिति । तच्च **सुभद्राहरणात्** सुभद्राहरणाख्यपर्वणः ऊर्ध्वं ज्ञेयमित्यर्थः ।

**सभापर्व ततः प्रोक्तं मन्त्रपर्व ततः परम् ।**
**जरासन्धवधः पर्व पर्व दिग्विजयं तथा ॥ ४७ ॥**

**मन्त्रपर्व ततः परम्** इत्यत्र **मन्त्रपर्व** राजसूयादेरालोचनपर्वेत्यर्थः ।

**पर्व दिग्विजयादूर्ध्वं राजसूयिकमुच्यते ।**
**[३] ततोऽर्घ्याहरणं पर्व शिशुपालवधस्ततः ॥ ४८ ॥**

---

१. **'ततः'** इति कुं.पाठः । ; २. **'ज्ञेया हरणहारिका'** इति कुं.पाठः ।
३. **'ततश्चार्घाभिहरणं'** इति कुं.पाठः ।

**ततोऽर्घ्याहरणं पर्व** इत्यत्र **अर्घ्याहरणं**[1] अग्रपूजायां कृष्णस्यार्घ्याद्याहरणं पर्व ।

**द्यूतपर्व ततः प्रोक्तमनुद्यूतमतः परम् ।**
**तत आरण्यकं पर्व किर्मीरवध एव च ॥ ४९ ॥**

**अनुद्यूतमतः परम्** इत्यत्र द्वितीयवारं कृतं द्यूतम् **अनुद्यूतम्** ।

**तीर्थयात्रा ततः पर्व कुरुराजस्य धीमतः ।**
**जटासुरवधः पर्व यक्षयुद्धमतः परम् ॥ ५२ ॥**

**कुरुराजस्य धीमतः** इत्यत्र **कुरुराजो**ऽर्जुनः । **यक्षयुद्धमतः परम्** इत्यत्र **यक्षयुद्धं** भीमादीनां यक्षवाक्योल्लङ्घनेन जलपाने सति यक्षकोपेन भूमौ निपतनं, धर्मराजस्य वाग्युद्धं वा ।

**संवादश्च ततः पूर्वं द्रौपदीसत्यभामयोः ।**
**घोषयात्रा ततः पर्व पर्व**[2] **प्रायोपवेशनम् ।**
**मन्त्रस्य निश्चयं चैव मृगस्वप्नोद्भवं ततः ॥ ५४ ॥**

**पर्व प्रायोपवेशनम्** इत्यत्र लज्जया दुर्योधनप्रायोपवेशनम् ।

[3]**व्रीहिद्रोणकमाख्यानमैन्द्रद्युम्नं तथैव च ।**
**द्रौपदीहरणं पर्व जयद्रथविमोक्षणम् ॥ ५५ ॥**

**व्रीहिद्रोणकमाख्यानम्** इत्यत्र **द्रोणकं** प्रस्थविशेषः । व्रीहीणां

---

१. **'अग्रपूजायां'** सो.मु.पा.
२. $D_{14}$,G,M; BORI पृ. ३७; **'ततः'** इति कुं.पाठः ।
३. $K_0$,$T_2$,$G_{4-6}$; BORI पृ. ३७; **'व्रीहिद्रौणिकमाख्यानं'** इति कुं.पाठः ।

द्रोणकं मुद्गलेन दुर्वाससे दीयमानं यत्र प्रतिपाद्यते तद्व्रीहिद्रोणक-मित्यर्थः ।

**कुण्डलाहरणात्तत्र[१] ततः परमिहोच्यते ॥ ५७ ॥**

**कुण्डलाहरणात्तत्र** इत्यत्र इन्द्रेण कर्णस्य कुण्डलाहरणात् प्रति-पादितादेकं पर्वेत्यर्थः ।

**आरणेयं ततः पर्व वैराटं तदनन्तरम् ।**
**पाण्डवानां प्रवेशश्च समयस्य च पालनम् ॥ ५७ ॥**

**आरणेयं तत** इत्यत्र मृगरूपेण यमेन ब्राह्मणस्यारणीभाण्डहरणम् आरणेयम् ।

**कीचकानां वधं[२] पर्व पर्व गोग्रहणं ततः ।**
**अभिमन्योश्च वैराट्याः पर्व वैवाहिकं स्मृतम् ॥ ५८ ॥**

**कीचकानां वधं पर्व** इत्यत्र 'षष्ठ्या आक्रोशः' इति वचनात् कीचकानां वधो यत्र प्रतिपाद्यते तत्कीचकानां वधमित्यलुक्समासः ।

**यानसन्धिस्ततः पर्व भगवद्यानमेव च ।**
**मातलीयमुपाख्यानं चरितं गालवस्य च ॥ ६१ ॥**

**यानसन्धिः** इत्यत्र द्रुपदपुरोहितस्य सन्ध्यर्थं यानं यानसन्धिः ।

**कीर्त्यते चापत्रोपाख्यानं[३] सेनापत्येऽभिषेचनम् ॥ ६५ ॥**

---

१. **'कुण्डलाहरणं पर्व'** इति कुं.पाठः ।

२. **'वधः'** इति कुं.पाठः ।

३. **'चाप्युपाख्यानं'** इति कुं.पाठः ।

**कीर्त्यते चापत्रोपाख्यानम्** इत्यत्र अपगतं त्रं रक्षकं यस्य **तदपत्रं** सेनानायकरहितं विप्रवैश्यशूद्राख्यवर्णत्रयसैन्यं, तस्य जयो नाभूदिति विप्रस्य सेनापत्येऽभिषेचनं च यत्र दुर्योधनेन कीर्त्यते तदपत्रोपाख्यानम् ।

**श्वेतस्य [१]वासुदेवस्य चित्रं बहुकथाश्रयम् ।**
**निर्याणं च ततः पर्व कुरुपाण्डवसेनयोः ॥ ६५ ॥**

**श्वेतस्य वासुदेवस्य** इत्यत्र **श्वेतस्य** राज्ञो बहुकथाश्रयं वासुदेवस्योपाख्यानमित्यर्थः । यद्वा **श्वेतस्य** बलरामस्य, वासुदेवस्य च बहुकथाश्रयमुपाख्यानमित्यर्थः ।

**[२]जम्बूषण्डविनिर्माणं पर्वोक्तं तदनन्तरम् ॥ ६८ ॥**

**जम्बूषण्डविनिर्माणम्** इत्यत्र **जम्बूषण्डस्य** जम्बूद्वीपस्य **विनिर्माणं** करणं यत्र सञ्जयेन धृतराष्ट्राय वर्ण्यते तज्जम्बूषण्डविनिर्माणम् ।

**भूमिपर्व ततः प्रोक्तं द्वीपविस्तारकीर्तनम् ॥ ६८ ॥**

**भूमिपर्व तत** इत्यत्र भूगोलं वर्णयत्पर्व भूमिपर्वेत्यर्थः ।

**सारस्वतं ततः पर्व तीर्थवंशानुकीर्तनम् ।**
**अत ऊर्ध्वं सुबीभत्सं पर्व सौप्तिकमुच्यते ॥ ७३ ॥**

**सारस्वतं तत** इत्यत्र सरः अगाधस्थलं [३]क्वचित् क्वचिद्यस्यां सा सर-

---

१. **'वासुदेवेन'** इति कुं.पाठः ।
२. **'जम्बूखण्ड'** इति कुं.पाठः ।
३. **'क्वचिद्यस्यां सा सरस्वती'** सो.मु.पा.

स्वती, नाम्ना च प्रत्यक्सरस्वती तत्सम्बन्धिनी कथा यत्रोच्यते तत्सार-स्वतम्। सरस्वत्याः सम्बन्धि सारस्वतम्।

**आभिषेचनिकं पर्व कुरुराजस्य[१] धीमतः।**
**प्रविभागो गृहाणां च पर्वोक्तं तदनन्तरम्** ॥ ७६ ॥

**कुरुराजस्य धीमत** इत्यत्र **कुरुराजस्य** धर्मराजस्य।

**पर्व चाश्रमवासाख्यं पुत्रदर्शनमेव च।**
**नारदागमनं पर्व ततः परमिहोच्यते** ॥ ८१ ॥

**पुत्रदर्शनमेव च** इत्यत्र **पुत्रदर्शनं** धृतराष्ट्रस्य व्यासप्रसादान्मृत-दुर्योधनादीनां दर्शनम्।

**समासो भारतस्यायमत्रोक्तः पर्वसङ्ग्रहः।**
**पौष्यं पौलोममास्तीकमादिरंशावतारणम्** ॥ ८६ ॥

**समासो भारतस्य** इत्यत्र **समासः** सङ्कोचेन कथनम्। पर्वणि पर्वणि विद्यमानकथायाः सङ्ग्रहो यत्र स पर्वसङ्ग्रह इति समासस्य विशेषणम्। पर्वपर्वस्थकथायाः सङ्कोचेन कथनमिति यावत्।

**मयस्य दर्शनं चैव आदिपर्वणि कथ्यते।**
**पौष्ये पर्वणि माहात्म्यमुदङ्कस्योपवर्णितम्[२]** ॥ ९० ॥

**उदङ्कस्योपवर्णितम्** इत्यत्र **उदङ्कस्य** उदङ्कनामकऋषेः।

---

१. $D_{14}$, $G_3$,$M_{2.4}$; BORI पृ. ३९; **'धर्मराजस्य'** इति कुं.पाठः।
२. $D_{6.8-11}$ ; BORI पृ. ४०; **'माहात्म्यमुत्तङ्कस्योपवर्णितम्'** इति कुं.पाठः

**श्लोकाग्रं च सहस्रस्य[१] त्रिंशतं चोत्तरं तथा ।**
**श्लोकाश्च चतुराशीतिः पर्वण्यस्मिंस्तथैव च ॥**

**श्लोकाग्रं च सहस्रस्य** इत्यत्र **श्लोकाग्रं** श्लोकप्रमाणम् । [२]'अग्रं पुरः-शिखामानश्रेष्ठादिषु फलादिषु' इत्यमरः ।

**कृष्णद्वैपायनाच्चैव प्रसूतिर्वरदानजा ।**
**धृतराष्ट्रस्य पाण्डोश्च पाण्डवानां च सम्भवः ॥ १०२ ॥**

**प्रसूतिर्वरदानजा** इत्यत्र शूद्रयोनावपि व्यासस्य पुत्रो भवेति वरदानाज्जाता प्रसूतिः ।

**विदुरस्य च वाक्येन सुरङ्गोपक्रमक्रिया ।**
**निषाद्याः पञ्चपुत्रायाः सुप्ताया जतुवेश्मनि ॥ १०५ ॥**

**सुरङ्गोपक्रमक्रिया** इत्यत्र सुरङ्गो नाम लाक्षागृहे भूमिं खनित्वा अन्तर्मार्गकरणम् ।

**[३]अज्ञातचर्या पाण्डूनां वासो ब्राह्मणवेश्मनि ।**
**बकस्य निधनं चैव नागराणां च विस्मयः ॥ १०९ ॥**

**अज्ञातचर्या पाण्डूनाम्** इत्यत्र एकचक्रनगरे ब्राह्मणवेषेण स्व-स्वरूपमाच्छाद्य सञ्चरणम् ।

**तापत्यमथ वासिष्ठमौर्वं चाख्यानमुत्तमम् ।**
**भ्रातृभिः सहितः सर्वैः पञ्चालानभितो ययौ ॥ ११३ ॥**

---

१. **'सहस्रं च'** इति BORI पाठः पृ. ४१ ।
२. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
३. BORI पृ. ४२; **'अज्ञातचर्यया वासो यत्र तेषां प्रकीर्तितः'** इति कुं.पाठः ।

**तापत्यमथ वासिष्ठम्** इत्यत्र **तापत्यं** तपती नाम कुरुवंशमूलीभूत-कुरोर्माता तत्सम्बन्ध्युपाख्यानं तापत्यम् ।

**पञ्चेन्द्राणामुपाख्यानमत्रैवाद्भुतमुच्यते ।**
**द्रौपद्या दैवविहितो[१] विवाहश्चाप्यमानुषः ॥ ११८ ॥**

**द्रौपद्या दैवविहितो[२] विवाहश्चाप्यमानुष** इत्यत्र **अमानुषः** मानुषागोचरो दैवविहितो विवाहः प्रतिवासरं कन्यायाः, प्रतिदिनं यो विवाहः स इत्यर्थः । प्रसिद्धद्रौपदीविवाहस्य मनुष्यकृतत्वेन मनुष्य-गोचरत्वेन चामानुषत्वदैवविहितत्वयोरयोगाद्दैनन्दिन एवायं विवाहः । यद्वा दौपद्या एकस्त्रीत्वदर्शनान्मानुषाणामयोग्यतया भातः दैवैस्तस्या[३] एव दिव्यदृष्ट्या पञ्चस्त्रीत्वदर्शनात् विहितश्च प्राथमिक एव विवाहः ।

**समयं पालयन्वीरो वनं यत्र जगाम ह ।**
**पार्थस्य वनवासे च उलूप्या सह[४] सङ्गमः ॥ १२३ ॥**

**उलूप्या सह सङ्गम** इत्यत्र उलूपी नाम नागकन्यका ।

**महर्षेर्मन्दपालस्य शार्ङ्ग्यां तनयसम्भवः ।**
**इत्येतदादिपर्वोक्तं प्रथमं बहुविस्तरम् ॥ १३० ॥**

**महर्षेर्मन्दपालस्य शार्ङ्ग्यां तनयसम्भव** इत्यत्र शार्ङ्गी नाम काकाः कोकिला इतिवत्[५] बहुसन्तानवन्तः पक्षिषु जातिविशेषाः । शार्ङ्गस्य

---

१. $K_{0.4}$,$D_6$,T,$M_1$,$G_{(except\ G4.6)}$ ; BORI पृ. ४२; **'देवविहितो'** इति कुं.पाठः ।

२. **'देवविहितो'** सो.मु.पा. ; ३. **'दैवः'** सो.मु.पा.

४. $B_4$,$D_{14}$,S ; BORI पृ. ४३; **'पथि'** इति कुं.पाठः ।

५. **'इति यावत्'** सो.मु.पा.

पक्षिणः पत्नी शार्ङ्गी । पूर्वजन्मनि मन्दपालाख्यऋषिर्बहुसन्तानलाभाय स्वयमपि शार्ङ्गो भूत्वा जरितानाम्न्यां[१] शार्ङ्गजातौ जातायां पक्षिण्यां पुत्रानजनयदिति कथां सङ्गृहीतुं शार्ङ्ग्यां तनयसम्भव इत्युक्तम् । 'स्वार्थे कप्रत्ययः' इति वचनात् शार्ङ्गका इति च तत्र कथिताः ।

**द्वितीयं तु सभापर्व बहुवृत्तान्तमुच्यते ।**
**सभाक्रिया पाण्डवानां किङ्कराणां च दर्शनम् ॥ १३३ ॥**

**किङ्कराणां च दर्शनम्** इत्यत्र सभास्थितधर्मराजकैङ्कर्यार्थं नानादेशादागतानां ऋषीणां राज्ञां द्युलोकादागतानां गन्धर्वाणां किन्नराणां अप्सरसां च तस्यां सभायामेव परितो दर्शनं किङ्कराणां दर्शनम् । मूलरूपविवक्षया ऋषयोऽपि किङ्करा इति भावः ।

**[२]मैत्रेयशापोत्सर्गश्च विदुरस्य प्रवासनम् ।**
**श्रुत्वा शकुनिना द्यूते निकृत्या निर्जितांश्च तान् ॥**

**मैत्रेयशापोत्सर्गश्च विदुरस्य प्रवासनम्** इति कथाद्वयं पाण्डववनगमनानन्तरं धृतराष्ट्रसभायामिति ज्ञेयम् ।

**[३]तत्किर्मीरवधाख्यानं वृष्णीनामागमस्तथा ।**
**पाञ्चालानां च सर्वेषां सौभाख्यानं तथैव च ॥**

**तत्किर्मीरवधाख्यानम्** इत्यत्र तस्मिन् काम्यकवने यः किर्मीरवधस्तत्किर्मीरवधाख्यानं, मूले, कृतमित्यर्थः ।

---

१. **'जारितारिनाम्न्यां'** सो.मु.पा.
२. BORI पृ. ४५.
३. BORI पृ. ४५.

**वनवासगतानां च पाण्डवानां महात्मनाम् ।**
**स्वर्गे प्रवृत्तिराख्याता लोमशेनार्जुनस्य वै ॥ १६४ ॥**

**स्वर्गे प्रवृत्तिः** इत्यत्र अर्जुनस्य स्वर्गे प्रवृत्तिरिति सम्बन्धः ।

**कदलीषण्डमध्यस्थं हनूमन्तं महाबलम् ।**
**यत्र मन्दारपुष्पार्थे नलिनीं तामधर्षयत् ॥ १७९ ॥**

**यत्र मन्दारपुष्पार्थे** इत्यत्र मन्दान् आ समन्तात् रमयतीति **मन्दारं** सौगन्धिकम् ।

**आगस्त्यमपि चाख्यानं यत्र वातापिभक्षणम् ।**
**लोपामुद्राभिगमनमपत्यार्थमृषेस्तथा ॥ १६८ ॥**

**लोपामुद्राभिगमनम्** इत्यत्र लोपामुद्रा नामागस्त्यपत्नी [1]'अगस्त्यः कुम्भसम्भवः । मैत्रावरुणिरस्यैव लोपामुद्रा सधर्मिणी' इत्यमरः ।

**ततः श्येनकपोतीयमुपाख्यानमनुत्तमम् ।**
**इन्द्राग्नी यत्र धर्मश्चाप्यजिज्ञासञ्छिबिं नृपम् ॥ १७४ ॥**

**इन्द्राग्नी यत्र धर्मश्च** इत्यत्र शिबिं नृपं जिज्ञासन्तौ श्येनकपोतरूपाविन्द्राग्नी यत्र प्रतिपादितौ, **धर्मः** शरणागतपरिपालनाख्यधर्मश्च प्रतिपादितः ।

**[2]सौकन्यकमुपाख्यानं च्यवनो यत्र भार्गवः ।**
**शर्यातियज्ञे नासत्यौ कृतवान्सोमपीथिनौ ॥ १७१ ॥**

---

१. अ.को. १-३-२०

२. **'सौकन्यमपि चाख्यानं'** इति कुं.पाठः ।

**सौकन्यकमुपाख्यानम्** इत्यत्र सुकन्या नाम शर्यातिनृपतेः[1] पुत्री, तत्सम्बन्धि सौकन्यकम् ।

**जन्तूपाख्यानमत्रैव यत्र पुत्रेण सोमकः ।**
**पुत्रार्थमयजद्राजा लेभे पुत्रशतं च सः ॥ १७३ ॥**

**जन्तूपाख्यानमत्रैव** इत्यत्र जन्तुर्नाम सोमकाख्यनृपतेः पुत्रः, तस्योपाख्यानं जन्तूपाख्यानम् । **अत्र** अरण्यपर्वणि । यत्र पुत्रेण प्राग्जातेन जन्तुनामकेनायजत् स सोमकस्तस्य पुत्रस्य वपामुद्धृत्य वपया होमे क्रियमाणे तद्धूमाघ्राणनमात्रेण शतपत्नीनां गर्भे सति मृतजन्तुज्येष्ठकं पुत्रशतं लेभ इति भावः ।

**अष्टावक्रीयमत्रैव विवादो यत्र बन्दिना ।**
**अष्टावक्रस्य विप्रर्षेर्जनकस्याध्वरेऽभवत् ॥ १७५ ॥**

**नैयायिकानां मुख्येन वरुणस्यात्मजेन च ।**
**पराजितो यत्र बन्दी विवादेन महात्मना ॥ १७६ ॥**

**विजित्य सागरं प्राप्तं पितरं लब्धवानृषिः ॥१७७ ॥**

**अष्टावक्रीयमत्रैव** इत्यत्र अष्टावक्राख्य ऋषिः तत्सम्बन्ध्युपाख्यानमष्टावक्रीयम् । यत्र उपाख्याने बन्दिनः[2] जनकराजस्य स्तुतिपाठकान् विजित्य[3] **सागरं प्राप्तं** सागरे निपातितं पितरं कहोळनामानं ऋषिरष्टावक्रो लब्धवान् । वरुणसुतः कश्चिद्विद्वान् बन्दी जनकराजस्य द्वारि

१. **'शर्य्यातिनृपतेः'** सो.मु.पा.
२. **'बन्दिनं जनकराजस्य स्तुतिपाठकं'** सो.मु.पा.
३. **'विनिर्जित्य'** सो.मु.पा.

स्थित्वाऽऽगतान् ब्राह्मणान्  प्रति धर्मं पृच्छति । उत्तरदानेऽसमर्थान् विप्रान्  समुद्रजले निक्षिपति । एवमष्टावक्रपितुः कहोळस्यापि पराजये सति तं समुद्रजले निक्षिप्तवान् । ततोऽष्टावक्रः स्वयमागत्य प्रश्नानामुत्तरं दत्वा बन्दिनं पराभाव्य तेनोदके निपातितं, स्वपुत्रे तस्मिन्नेव बन्दिनि प्रीत्या वरुणेनाविहिंसितं च स्वपितरं कहोळं अन्यांश्च विप्रान् तन्मुखेनैव लब्धवानिति [1]वक्ष्यमाणकथायाः सङ्ग्रहोऽयम् ।

**यत्रास्य शक्तिं तुष्टोऽसावदादेकवधाय च ।**
**आरणेयमुपाख्यानं यत्र [2]धर्मोऽन्वगात्सुतम्     ॥ २०३ ॥**

**आरणेयमुपाख्यानम्** इत्यत्र 'यत्र धर्मानुशासनम्' इति पाठे स्पष्टोऽर्थः । 'यत्र धर्मोन्वगात्सुतम्' इति पाठे विभक्तिव्यत्यासेन **सुतं** धर्मसुतः युधिष्ठिरः, **धर्मः** धर्मं मृगरूपं स्वपितरं, **अन्वगात्** अरणीभाण्डलाभायान्वगमदिति योजना । यद्वा **धर्मो** यक्षरूपी मृगरूपी यमः, **सुतं** स्वसुतं युधिष्ठिरं, **अन्वगात्** वरान् प्रदातुमनुकूलरूपोऽगात् ।

**रथमारोप्य कृष्णेन यत्र कर्णोऽनुमन्त्रितः ।**
**उपायपूर्वं [3]शौण्डः स्यात्प्रत्याख्यातश्च तेन सः     ॥ २३७ ॥**

**उपायपूर्वं शौण्डः स्यात्** इत्यत्र सामाद्युपायपूर्वं सर्वोऽपि लोकः **शौण्डः** नीतिकुशलः स्यादिति लोकशिक्षार्थं कृष्णेन कर्णोऽनुमन्त्रित इति योजना । 'उपायपूर्वं शौण्डीयान्' इति पाठे अतिशयेन शौण्डः शौण्डीयानिति कृष्णस्यैव विशेषणम् ।

---

१. वन. १३४,१३५,१३६ अध्यायाः ।
२. $G_1$; BORI पृ. ४८; **'धर्मोऽन्वशात्सुतम्'** इति कुं.पाठः ।
३. **'शौटीर्यात् प्रत्याख्यातश्च'** इति कुं.पाठः ।

**यत्र राज्ञा ह्युलूकस्य प्रेषणं पाण्डवान् प्रति ।**
**श्वो[१] भाविनि महायुद्धे दूतस्तु क्रूरवादिना ॥२४१॥**

**श्वो भाविनि महायुद्धे दूतस्तु क्रूरवादिना** इत्यत्र 'क्रूरं वद' इति वादिना दुर्योधनेन ।

**सारथ्ये विनियोगश्च मद्रराजस्य धीमतः ।**
**आख्यानं[२] यत्र पौराणां त्रिपुरस्य निपातनम् ॥२७२॥**

**आख्यानं यत्र पौराणाम्** इत्यत्र **पौराणां** त्रिपुरवासिनामित्यर्थः ।

**प्रयाणे पुरुषश्चात्र संवादः कर्णशल्ययोः ।**
**हंसकाकीयमाख्यानं अत्रैवाक्षेपसंहितम्[३] ॥२७३॥**

**हंसकाकीयमाख्यानम्** इत्यत्र हंसकाकाभ्यां दूरगमनविषये विवादे कृते सति [४] किञ्चित्कालं त्वरया गतः काकः पुनरशक्तः सन् वृक्षाग्रे निषसाद । हंसस्तु पूर्वमारभ्य शनैः शनैर्गच्छन् सुखेन मानससरोवरं प्रति जगाम । एवं गर्वी त्वं कर्ण ! आरब्धकार्यस्य नान्तं पश्यसि । अर्जुनस्तु नाहंवादी क्षमावानारब्धकार्यस्यान्तं सुखेन गमिष्यतीत्येकाक्षेपसंहितं[५] हंसकाकयोः[६] सम्बन्ध्याख्यानं हंसकाकीयम् । **अत्रैव** कर्णपर्वण्येव ।

---

१. BORI पृ.५०; **'श्वोभाविनि महायुद्ध दौत्येन कृतवान्प्रभुः'** इति कुं.पाठः ।
२. $K_{0,2-4,6}$,$V_{1,m}$,$B_3$,$D_2$,$G_{2,4,6}$,$M_{2,4}$; BORI पृ. ५२; **'आख्यातं यत्र पौराणं'** इति कुं.पाठः ।
३. BORI पृ.५२ ; **'तत्रैवाक्षेपसंहितम्'** इति कुं.पाठः ।
४. **'कश्चित्कालं'** सो.मु.पा.
५. **'गमिष्यतीत्येवमाक्षेपसहितं'** सो.मु.पा.
६. कर्ण. ३५ अध्यायः ।

**समवाये च युद्धस्य रामस्यागमनं स्मृतम् ।**
**सरस्वत्याश्च तीर्थानां पुण्यता परिकीर्तिता ॥ २८७ ॥**

**सरस्वत्याश्च तीर्थानाम्** इत्यत्र सरस्वत्याः प्रत्यक्सरस्वत्याः नद्याः, **तीर्थानां** तन्निकटस्थानां उपदेवनदीनदत्रितकूपादितीर्थानां पुण्यता परिकीर्तितेति योजना ।

**अहत्वा सर्वपाञ्चालान् धृष्टद्युम्नपुरोगमान् ।**
**पाण्डवांश्च सहामात्यानविमोक्ष्यामि दंसनम्[१] ॥ २९५ ॥**

**अविमोक्ष्यामि दंसनं** इत्यत्र **दंशनं** कवचम् ।

**भीमसेनभयाद्यत्र दैवेनाभिप्रचोदितः ।**
**अपाण्डवाय च रुषा द्रौणिरस्त्रमवासृजत् ॥ ३०७ ॥**

**अपाण्डवाय च रुषा** इत्यत्र **अपाण्डवाय** अपाण्डवत्वाय ।

**मैवमित्यब्रवीत्कृष्णः शमयंस्तस्य तद्वचः ।**
**यत्रास्त्रमस्त्रेण च तच्छमयामास फाल्गुनः ॥ ३०८ ॥**

**मैवमित्यब्रवीत्कृष्ण** इत्यत्र **तद्वचः** अश्वत्थाम्नः प्रतिज्ञारूपं वचनं **शमयन्** स्वसामर्थ्येन व्यर्थीकुर्वन् कृष्णः **एवं मा** न स्यादेव । सत्य-सन्धस्य श्रीकृष्णस्य प्रतिज्ञाग्रे अश्वत्थाम्नः प्रतिज्ञा मिथ्यैवाभूदिति भावः ।

**द्रौणेश्च द्रोहबुद्धित्वं वीक्ष्य पापात्मनस्तदा ।**
**[२]कृष्णद्वैपायनादीनां शापाच्चान्योन्यकारिता ॥ ३०९ ॥**

---

१. **'सहामात्यान्नविमोक्ष्यामि'** इति कुं.पाठः ।
२. **'द्रौणिद्वैपायनादीनां शापाश्चान्योन्यकारिता'** इति कुं. पाठः ।

**कृष्णद्वैपायनादीनां शापाच्चान्योन्यकारिता** इत्यत्र शापात् 'पूयशोणितगन्धाङ्गो भव' इत्यादिरूपेणाश्वत्थाम्नि कृष्णकृतशापा-न्निमित्तात्, अनन्तरं वा, ल्यब्लोपनिमित्ता पञ्चमीति वचनात् तं शापमनुसृत्य वा, कृष्णद्वैपायनादीनां **अन्योन्यकारिता** अन्यस्य अन्येनापि करणं अन्योन्यकारिता नाम । एवञ्चान्यस्य कृष्णकृत-शापस्यान्यैर्व्यासादिभिरपि कारिता अनुमत्या कर्तृता अन्योन्य-कारितेत्युक्तं भवति । व्यासकृतानुमतौ नारदादीनामप्यन्तर्भावा-दादिपदं बहुवचनञ्च । लोके तु अन्यस्य घटस्य अन्यं पटं प्रति कारित्वं, पुनरन्यस्य तस्य पटस्य अन्यं घटं प्रति कारित्वं अन्योन्यकारित्व-मित्यगत्या अन्योन्यपदयोरावृत्त्या योजना । इह तु लाघवत् अन्य-स्यान्येनापि कारिता अन्योन्यकारिता । अतो नापूर्वमिदम् ।

**तोयकर्मणि सर्वेषां[1] राज्ञामुदकदानिके ।**
**गूढोत्पन्नस्य चाख्यानं कर्णस्य पृथयात्मनः ॥ ३२२ ॥**

यद्यपि तोयकर्मणि सर्वेषाम् इत्यादिकं स्त्रीपर्वान्तिमाध्यायप्रमेयम् । तथापि सर्वेषां राज्ञामेवोदकदानं कृतम् । कृष्णशापाभिभूतचित्तेन कल्याविष्टेन अत एव कृष्णावमन्त्रा अश्वत्थाम्ना मृतस्यापि स्वपितु-र्ब्राह्मणस्य जलदानाद्यौर्ध्वदैहिकं कर्म न कृतमिति सूचनार्थं प्रसङ्गादिह कथितम् । अत एवोपरितनस्त्रीपर्वार्थसङ्ग्रहेऽस्याकथनम् ।

**सौप्तिकैषीकसम्बन्धे पर्वण्युत्तमतेजसी ।**
**अत ऊर्ध्वमिदं प्राहुः स्त्रीपर्व करुणोदयम् ॥ ३१३ ॥**

---

१. BORI पृ. ५५; 'चारब्धे' इति कुं. पाठः ।

**सौप्तिकैषीकसम्बन्ध** इत्यत्र सुप्ते कृतं धृष्टद्युम्नादीनां हननं **सौप्तिकं**, **ऐषीकं** इषीकायां प्रयुक्तं ब्रह्मास्त्रमैषीकं तयोः सम्बन्धः प्रतिपादकत्वं यस्मिंस्तत्तथोक्तम् ।

**यत्र ते पुरुषव्याघ्राः शस्त्रस्पर्शहता युधि ।**
**ब्रह्मदण्डविनिष्पिष्टाः समीपे लवणाम्भसः ॥ ३५५ ॥**

**शस्त्रस्पर्शहता युधि** इत्यत्र शस्त्रसमानक्रूरैरकाख्यतृण(विशेष)स्पर्श-हताः ।

**आपाने [१]पानगलिता दैवेनाभिप्रचोदिताः ।**

**आपाने पानगलिता** इत्यत्र आ सम्यक् मद्यपाने सति तेन पानेन गलिताः दुर्बुद्धौ पतिताः ।

**[२]एरकारूपिभिः शस्त्रैर्निजघ्नुरितरेतरम् ॥ ३५६ ॥**

**एरकारूपिभिः शस्त्रैः** इत्यत्र **एरकाः** लवणसमुद्रतीरस्थक्रूरतृण-विशेषाः ।

**शरीरं वासुदेवस्य रामस्य च महात्मनः ।**
**संस्कारं लम्भयामास वृष्णीनां च प्रधानतः ॥ ३६० ॥**

**शरीरं वासुदेवस्य** इत्यत्र मोहार्थं कृष्णेन प्रदर्शितं प्राकृतशरीरम् । न तु विश्वम्भरस्वशरीरम् । तथा सति विश्वस्यापि दाहप्रसङ्गादिति भावः ।

---

१. BORI पृ.५९; **'पानकलिता'** इति कुं.पाठः ।
२. $D_2$ ; BORI पृ. ५९; **'एरकारूपिभिर्वज्रैः'** इति कुं.पाठः ।

**इतिहासोत्तमादस्माज्जायन्ते कविबुद्धयः ।**
**पञ्चभ्य इव भूतेभ्यो लोकाः[1] संविधयस्त्रयः ॥ ३८६ ॥**

**लोकाः संविधयस्त्रय** इत्यत्र सम्यग्विधिः निर्माणनं विधिविहितकरणं वा येषु त इत्यर्थः ।

**सङ्ग्रामे बभ्रुवाहेन संशयं चात्र जग्मिवान् ।**
**[2]मणिदर्शनं चैव तथा वैष्णवं धर्ममेव च ।**
**अश्वमेधे महायज्ञे नकुलाख्यानमेव च ॥ ३४३ ॥**

**संशयं चात्र जग्मिवान्** इत्यत्र **संशयं** प्राणसंशयं, तथा **मणिदर्शनं च** [3]उलूप्या पातालादानीतमृतसञ्जीवनमणेर्दर्शनं च जग्मिवानिति सम्बन्धः । **वैष्णवं धर्मं**, अयुध्यतः पितामहस्य भीष्मस्य हननेन जात-पापस्य प्रायश्चित्तार्थं स्वपुत्रेण बभ्रुवाहेनैव [4]वधो जात इति यत् इमं[5] वैष्णवं विष्णुप्रीतिकरत्वात् वैष्णवं धर्मं चात्रैव उलूपी अर्जुनायाब्रवीत् ।

[6]**मरुद्दर्शनम्** इत्यत्र अत्र यज्ञे मरुतां देवानां दर्शनं मरुद्दर्शनम् । पुनरप्यापर्वान्तं वैष्णवं धर्ममेव व्यासोऽस्मिन् पर्वणि सविस्तर-माचख्यौ ।

**अस्याख्यानस्य विषये पुराणं वर्तते द्विजाः ॥ ३८७ ॥**

---

१. **'लोकसंविधयस्त्रयः'** इति कुं.पाठः ।
२. S; BORI पृ. ५७; **'सुदर्शनं तथाऽख्यानं'** इति कुं.पाठः ।
३. **'उलूपीवचनाज्जग्मिवानिति पूर्वक्रियया सम्बन्धः'** सो.मु.पा. ।
४. **'बन्धः'** सो.मु.पा.
५. **आश्व. ८२**
६. एतत्प्रतीकघटितश्लोको मुद्रितकोशेषु नोपलभ्यते ।

**अस्याख्यानस्य विषय** इत्यत्र **पुराणं** मध्ये मध्ये भारतप्रशंसाकर्तृपुराणम् ।

**अन्तरिक्षस्य विषये प्रजा इव चतुर्विधाः ॥ ३८७ ॥**

[१]**अन्तरिक्षस्य विषय** इत्यत्र अन्तः द्यावापृथिव्योर्मध्ये ईक्ष्यत [२]इत्यन्तरिक्षः सूर्यः । **चतुर्विधाः** ब्राह्मणक्षत्रियवैश्यशूद्राः ।

**क्रियागुणानां सर्वेषामिदमाख्यानमाश्रयः ।**
**इन्द्रियाणां समस्तानां चित्रा इव मनःक्रियाः ॥ ३८८ ॥**

**क्रिया गुणानाम्** इत्यत्र **क्रिया** नानाविधग्रन्थक्रिया तत्रत्यगुणानाम् ।

**इदं कविवरैः सर्वैराख्यानमुपजीव्यते ।**
**उदयप्रेप्सुभिर्भृत्यैरभिजात इवेश्वरः ॥ ३९० ॥**

**अभिजात इवेश्वर** इत्यत्र अभितः जातः मत्स्यकूर्मादिरूपेणाविर्भूतः **ईश्वरो** नारायण इव । श्रीः ।

॥ इति द्वितीयोऽध्यायः ॥

## ॥ अथ तृतीयोऽध्यायः ॥

**सौतिरुवाच –**

**जनमेजयः पारिक्षितः सह भ्रातृभिः कुरुक्षेत्रे दीर्घं सत्रमुपास्ते ।**

---

१. **'अन्तरीक्षस्य'** सां.मु.पा.
२. **'इत्यन्तरीक्षः'** सां.मु.पा.

**तस्य भ्रातरस्त्रयः श्रुतसेन उग्रसेनो भीमसेन इति। तेषु तत्सत्र[१]-मुपासीनेषु तत्राभ्यागच्छत्सारमेयः ॥ १ ॥**

**तत्राभ्यागच्छत्सारमेय** इत्यत्र **सारमेयः** श्वा। [२]'कौलेयकः सारमेयः कुक्कुरो मृगदंशकः। शुनको भषकः श्वा स्यात्' इत्यमरः।

**तच्छ्रुत्वा तस्य माता सरमा पुत्रदुःखार्ता तत्सत्रमुपागच्छद्यत्र स जनमेजयः सह भ्रातृभिर्दीर्घसत्रमुपास्ते ॥ ७ ॥**

**तस्य माता सरमा** इत्यत्र **सरमा** शुनी। [३]'सरमा शुनी' इत्यमरः।

**समर्थोऽयं भवतः सर्वाः पापकृत्याः शमयितुं अन्तरेण महादेवकृत्याम् ॥ १७ ॥**

**अन्तरेण महादेवकृत्याम्** इत्यत्र महतो देवस्य नारायणस्य द्रोहरूपकृत्यामन्तरेण विनेत्यर्थः।

**अस्य त्वेकमुपांशुव्रतं यदेनं कश्चिद्ब्राह्मणः कश्चिदर्थमभियाचेत् तस्मै [४]दद्यात् तं यदेनं तस्मात्सहसि ततो नयस्वैनमिति ॥ १८ ॥**

**तं यदेनं तस्मात्सहसि** इत्यत्र **यत्** यदि **तं** द्विजाभीष्टदातारं **एनं** मम पुत्रं **तस्मात्** द्विजाभीष्टदानात् **सहसि** सोढाऽसि कस्माद्दत्तमिति न

---

१. B,$D_a$,$D_5$ 7; BORI पृ. ६३; **'तत्सत्रमुपासीनेष्वभ्यागच्छत्'** इति कुं. पाठः।

२. अ.को. २-१०-२१

३. अ.को. २-१०-२२

४. '**-त्तं तस्मै दद्यादयं यद्येतदुत्सहसे**' इति कुं.पाठः।

पृच्छसि ततः तर्हि नयस्वेति योजना । 'यद्येतत्सम्पादक' इति पाठे स्पष्टोऽर्थः ।

**स तथा भ्रातॄन्संदिश्य तक्षशिलां प्रत्यभिप्रतस्थे तं[1] च तं देशं वशे स्थापयामास ॥ २० ॥**

**तं च तं देशम्** इत्यत्र **तं** तक्ष(क)स्थानभूताश्मानं, सोऽश्मा यत्र तिष्ठति **तं देशं** कुरुक्षेत्रप्रदेशं चेत्यर्थः ।

**एतस्मिन्नन्तरे कश्चिदृषिर्धौम्यो नामायोदस्तस्य[2] शिष्यास्त्रयो बभूवुः ॥ २१ ॥**

**धौम्यो नामायोद** इत्यत्र आयोदो धौम्यः आयोदधौम्य इत्यर्थः ।

**उपमन्युरारुणिर्बेदश्चेति स एकं शिष्यमारुणिं पाञ्चाल्यं प्रेषयामास गच्छ केदारखण्डं बधानेति ॥ २२ ॥**

**केदारखण्डं बधान** इत्यत्र **केदारखण्डं** केदारस्य सस्योत्पत्तिक्षेत्रस्य खण्डं जलवारणाय परितः कृतसूक्ष्मसेतौ क्वचित्कदाचिज्जलप्रस्रवणाय कृतखण्डं बधान, बध्नीहीत्यर्थः ।

**स क्लिश्यमानोऽपश्यदुपायं भवत्वेवं करिष्यामीति ॥ २३ ॥**

**भवत्वेवं करिष्यामि** इत्यत्र **भवतु** स्वदेहदण्डनेनापि गुरुसेवा भवतु । अत एवं करिष्यामीत्यपश्यत् ।

---

१. **'तं च देशं'** इति कुं.पाठः ।

२. BORI पृ. ६५ ; **'नामापोदस्तस्य'** इति कुं.पाठः ।

**स एवमुक्त उपाध्यायः प्रत्युवाच यस्माद्भवान्[2] केदारखण्डं विदार्योत्थितः[1] तस्माद्भवानुद्दालक एव नाम्ना भवान् भवत्वितीत्युपाध्यायेनानुगृहीतः ॥ ३१ ॥**

**तस्माद्भवानुद्दालक एव नाम्ना भवतु** इत्यत्र उद्धृत्य केदारखण्डं दा(र)लयति विदारयतीत्युद्दालको नाम्ना भवत्वित्यर्थः । इतः परं त्वं गुरुसेवाङ्कितनाम्नैव कथ्यस इति भावः ।

**तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वोवाच वत्सोपमन्यो सर्व-मशेषतस्ते भैक्ष्यं गृह्णामि[3] तेन इदानीं वृत्तिं कल्पयसीति ॥४०॥**

**पीवानमेव दृष्ट्वा** इत्यत्र पीवा पुष्टः तेन त्वया ।

**नैषा न्याय्या गुरुवृत्तिरन्येषामपि भैक्ष्योपजीविनां वृत्त्युपरोधं करोषि इत्येवं वर्तमानो लुब्धोऽसीति ॥ ४२ ॥**

**एवं वर्तमानो लुब्धोऽसि** इत्यत्र द्विवारमन्नयाचनादन्ने लुब्धः ।

**प्र पूर्वगौ पूर्वजौ चित्रभानू**
**गिरा वा शंसामि[4] तपनावनन्तौ ।**
**दिव्यौ[5] सुपर्णावरजौ विमाना-**
**वधिक्षिपन्तौ भुवनानि विश्वा ॥ ५७ ॥**

---

१. BORI पृ. ६६; '**तस्मादुद्दालक**' इति कुं.पाठः ।
२. $M_{2\ 5}$, $G_{(G1\ missing)}$; BORI पृ. ६६; '**भवान्भविष्यति**' इति कुं.पाठः
३. '**केन**' इति कुं.पाठः ।
४. BORI पृ.७०; '**तपसा ह्यनन्तौ**' इति कुं.पाठः ।
५. $K_{7}$,N,S ; BORI पृ. ७०; '**सुपर्णौ विरजौ**' इति कुं.पाठः ।

**प्र पूर्वगौ पूर्वजौ चित्रभानू** इत्याद्यश्विस्तोत्रस्येत्थं योजना – प्रेत्युपसर्गस्य प्रशंसामीति सम्बन्धः । **पूर्वगौ** सर्वेषामग्रेसरौ **पूर्वजौ** जगति पूर्वं जातौ । **चित्रभानू** विचित्रप्रकाशवन्तौ । **तापनौ** द्विषतां सन्तापकारिणौ । **अनन्तौ** अमृतपायित्वान्नाशरहितौ । **दिव्यौ** देवतावर्गगतौ । **सुपर्णौ** शोभनरथवन्तौ, 'पत्रं पर्णं च वाहनम्'[१]इति वागुरिः । **अरजौ** रजोगुणरहितौ । **विमानौ** विगताभिमानौ विश्वा विश्वानि भुवनानि । **अधिक्षिपन्तौ** स्वमहिम्ना धिक्कुर्वन्तौ । हे अश्विनौ दस्रौ! गिरा स्तुतिरूपगिरा प्रशंसामीति प्रथमश्लोकस्यार्थः ।

**हिरण्मयौ शकुनी साम्परायौ**
**नासत्यदस्रौ सुनसौ वैजयन्तौ ।**
**[२]शुक्रं वयन्तौ तरसा [३]सुवेपा-**
**वभिव्ययन्तावसितं विवस्वतः ॥ ५८ ॥**

**हिरण्मयौ शकुनी** इत्यत्र **हिरण्मयौ** सुवर्णालङ्कृतौ **शकुनी** आरोग्यकरणेन शकुं शक्तिं नयतः प्रापयत इति शकुनी **साम्परायौ** साम्परायो मोक्षः तद्वन्तौ 'अर्श आदिभ्योऽच्' इति वचनात् । साम्परायां आपदि अयः प्राप्तिर्ययोस्ताविति वा, 'अय पय गतौ'इति धातुः । भक्तानामापदि तद्रक्षणाय आगच्छन्तौ । **सुनसौ** शोभननासावन्तौ । **वैजयन्तौ** वै सम्यक् जयन्तौ । **शुक्रं** शुक् शोकस्तया रं रहितं परमात्मानम् । **वयन्तौ** जानन्तौ, 'वय गतौ' इति धातुः । गत्यर्थानां ज्ञानार्थत्वात् । अन्तर्यामिविषये तु **शुक्रं** शोकरहितं मोक्षम् । **वयन्तौ**

१. **'पत्रं च वाहने पर्णे'** इति मेदिनी । पृ.१२४ ।
२. $M_{2,3}$ ; BORI पृ. ७१; **'शुक्लं'** इति कुं.पाठः ।
३. $M_{2,3}$ ; BORI पृ. ७१; **'सुवेमावधिव्ययान्तावसितं'** इति कुं.पाठः ।

प्रापयन्तौ । देवभिषक्त्वात् । **शुक्रं** छिन्नाङ्गसन्धिम् । **वयन्तौ** बध्नन्तौ वा । 'वय बन्धने' इति धातुः । तरसा स्वकीयवेगेन । **सुवेपौ** असुरेषु सुष्ठु वेपः कम्पो(याभ्यां) ययोः तौ, 'वेपृ कम्पने' इति धातुः । **असितं** 'शुक्लं कृष्णं कनीनिके'ति वचनात् मध्ये कृष्णम् । **विवस्वत्** विशेषेण वसवो रश्मयो यस्य तत्सूर्यमण्डलम् । **अभि** आभिमुख्येन, **वि** विशेषेण, अयन्तौ पितृसेवार्थं गच्छन्तौ । 'अधिश्रयन्तौ' इति पाठे **अधि** आधिक्येन **श्रयन्तौ** स्वपितृसन्निधानस्थानत्वादाश्रयन्तौ । **नासत्यदस्रौ** नासत्यौ असत्यरहितौ, नासापुटजातौ वा, दस्रौ भक्ताभीष्टदानशीलत्वाद्दस्रपदवाच्यावश्विनौ प्रशंसामीति पूर्वेण सम्बन्धः। अनाहूतयोरश्विनोरागमनायोगान्नासत्यद्रस्राविति मूले स्पष्टमुक्तत्वाच्च अश्विनोरेवेयं स्तुतिः; न तु सूर्याचन्द्रमसोः । इति द्वितीयश्लोकस्यार्थः ।

**ग्रस्तां सुपर्णस्य बलेन वर्तिका-**
**ममुञ्चतामश्विनौ सौभगाय ।**
**तावत्सुवृत्तावनमत्तमाय यौ**[1]
**हे सत्तमा गा अरुणा उदावहन्** ॥ ५९ ॥

**ग्रस्तां सुपर्णस्य बलेन वर्तिकाम्** इत्यत्र **या** ये, 'सुपां सुलुक्' इति सूत्रात् बहुवचनस्य डादेशः । **सत्तमाः** अत्युत्तमाः ऋषयः । **अरुणाः** अप्रतिरुद्धा । **गाः** वेदवाचः । **उदावहन्** उत्कृष्टतयाऽध्ययनादिना धृतवन्तः; तेषां सौभगाय **अनमत्तमाय** लोके कं प्रत्यपि नमन्तो न भवन्तीत्यनमन्तो ब्रह्माद्याः, अतिशयेनानमन् अनमत्तमो नारायणः

१. $T_1$; BORI पृ. ७१; '**तावत्सुवृत्तावनमं तमाय यावसत्तमा गा अरुणा उदावहन् ।**' इति कुं.पाठः ।

तदर्थं च। **सुवृत्तौ** शोभनवृत्तवन्तौ। यौ हे अश्विनौ भवन्तौ। **सुपर्णस्य** सुपूर्णस्य परमात्मनः। **बलेन** सङ्कल्पबलेन। **ग्रस्तां** याज्ञिकैर्ग्रासीकृताम्। **वर्तिकां** वृत्तिरेव वर्तिका, दातुः स्वर्गादिफलं वर्तयतीति वा वर्तिका, तां यज्ञेषु विद्यमानामश्व्याहुत्याख्यवृत्तिम्। **तावत्** च्यवनऋषिणा दानपर्यन्तम्। **अमुञ्चतां** तदुपरि मा मुञ्चतां च। तौ प्रशंसामीति पूर्वेणान्वयः। अथवा **सत्तमाः** अत्युत्तमाः ऋषयः। **अरुणा** अप्रतिरुद्धाः। **या गाः** वेदवाचः। उदावहन्। **सुपर्णस्य** जीवस्य। **बलेन** अज्ञानबलेन। **ग्रस्तां** ग्रासीकृतां। **अनमत्तमाय** सर्वोत्तमाय नारायणाय तादर्थ्ये चतुर्थी, तन्महिमप्रतिपादनार्थं विद्यमानां **वर्तिकां** ज्ञानाख्यदीपं पुनः पुनर्वर्तयतीति वर्तिका हरिसर्वोत्तमत्वविषयकज्ञानाख्यदीपस्य वर्तिकास्थानीयेत्यर्थः। पूर्वं बहुवचनेन प्रस्ताव्य पुनरेकवचनेन परामर्शः सर्वेषां वेदनामेकवाक्यत्वप्रदर्शनार्थम्। तां वेदवाचं **तावत्** मोक्षपर्यन्तम्। **मा मुञ्चताम्**, [१]'तदुपर्यपि बादरायणः सम्भवात्' इति सूत्रात् विधिबद्धतयैव मा मुञ्चताम्। [२]'ऋचां त्वः पोषमास्ते पुपुष्वान्' इत्यादिश्रुतेः मोक्षानन्तरं भक्त्युद्रेकादेव मा मुञ्चतामिति योजना। इति तृतीयश्लोकस्यार्थः।

**षष्टिश्च [३]गावो त्रिशतं च धेनवो**
**एकं वत्सं सुवते तं दुहन्ति।**
**नानागोष्ठा विहिता एकदोहना**
**स्तावश्विनौ दुहतो [४]धर्म्यमुक्थ्यम्** ॥ ६० ॥

---

१. ब्र.सू. १-३-२६ ; २. ऋ.सं. १०-७१-११
३. $T_2$,$M_{1,3}$ ; BORI पृ. ७१; **'गावस्त्रिशताश्च धेनव'** इति कुं.पाठः।
४. $D_a$,$M_3$ ; BORI पृ. ७१; **'धर्मम्'** इति कुं.पाठः।

**षष्टिश्च गाव** इत्यत्र **एकदोहनाः** – 'तद्दिनं दुर्दिनं मन्ये मेघच्छन्नं न दुर्दिनम् । यद्दिनं हरिसल्लापकथापीयूषवर्जितम्' इति वचनात् एकस्य भगवद्विषयकज्ञानाख्यक्षीरस्यैव दोहनं याभ्यस्ताः । **विहिताः** तदर्थमेव भगवता विहिताः । **नानागोष्ठाः** मानुषदिनस्य षष्टिघटिकाश्रितत्वात्, पितॄणां दिनस्य अष्टादशशतघटिकास्वाश्रितत्वात्, देवतादिनस्य एकविंशत्सहस्रादुपरि षट्शतघटिकास्वाश्रितत्वात् स्वस्वरूपस्थौल्यानुसारेण[1] नानाविधानि गोष्ठानि यासां ताः । **धेनवः** 'धिनु पुष्टौ' इति धातोः दिनेदिने देहपुष्टिहेतुत्वात् धेनुशब्दवाच्याः । **षष्टिः त्रिशतं** षष्ट्युत्तरत्रिशतसङ्ख्याका **गावः** दिनाख्या गावः मिलित्वा । **एकं वत्सं** (सं)वत्सराख्यं वत्सम् । **सुवते** उत्पादयन्ति । बहुभ्यो गोभ्यः एकवत्सप्रसव अपूर्व इति सूचयितुमेकमित्युक्तम् । वत्सस्य दोहादर्शनात् तं वत्सं दुहन्तीति यथास्थितयोजना न व्यासस्याभिमता । तस्मात्त्रिविधजीवेष्वधमा दैत्यादयस्तं तमोगुणोद्रेकादनादिकालमारभ्य स्वमनसि परिवर्तमानं दुर्विषयभोगमेव सवत्साभ्यस्ताभ्यो गोभ्यः क्षीरमिव दुहन्ति । स्वायुःपरिमाणरूपशतवत्सरपर्यन्तं दिने दिने भोगानेव भुञ्जत इति भावः । मध्यमास्तु रजोगुणोद्रेकात् यौ ऐहिकस्त्रीणां स्वर्गस्त्रीणां च भोगौ स्वमनसि वर्तेते तौ बहुस्त्रीविवाहेन यज्ञकरणेन च क्षीरमिव दुहन्ति । उत्तमास्तु देवर्ष्यादयः सत्त्वगुणोद्रेकात् याभ्यामश्विभ्यां सह 'घर्मा समन्तात्त्रिवृतं व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगाम'[2] इति श्रुतेः । 'त्वमुक्थमसि त्वमुक्थमसि'[3] इति श्रुतेश्च उक्थ्यम् ।

---

१. **'स्वस्वरूपयोग्यतानुसारेण'** सो.मु.पा.

२. **ऋ.सं.१०-११४-१**

३. **ऐ.उ. १.४**

[१] 'यदीमनु प्रदिवो मध्व आधवे गुहासन्तं मातरिश्वा मथायति' इति श्रुतेः भगवत्सेवकाधिकारिसर्वोत्तमवायुसम्बन्धिवायूपदेशादेव लभ्यं, न तु यादृशतादृशाचार्योपदेशाल्लभ्यमित्यर्थः । **घर्म्यं** 'घृ क्षरणदीप्त्योः' इति धातोः सकलदोषक्षरणसमर्थत्वात् अनन्तसूर्यप्रकाशत्वात् दुर्जनानामुष्णत्वाच्च घर्मपदवाच्यस्य हरेः सम्बन्धि, निर्दोषसगुणभगवद्विषयमित्यर्थः । एतादृशं ज्ञानं दुहते । अत एव पूर्वोक्तदुग्धयोरात्मघातकत्वेनात्मगामिफलाभावात् दुहन्तीति परस्मैपदप्रयोगः । इह तु आत्मगामिमोक्षादिफलसद्भावात् दुहते इत्यात्मनेपदप्रयोगः । तावश्विनौ प्रशंसामीति पूर्वेणान्वयः । इति चतुर्थश्लोकस्यार्थः ।

**[२] एकं नाभिं सप्तशता अराः श्रिताः**
**[३] प्रधिष्वन्या विंशतिरर्पिता अराः ।**
**[४] सुनेमि चक्रं परिवर्ततेऽजरं**
**[५] मा ययाश्विनौ समवर्ती चर्षणी** ॥ ६१ ॥

**एकं नाभिम्** इत्यत्र **एकं नाभिं** कालाख्यचक्रस्य संवत्सराख्यं स्थूलमेकं नाभिं । **सप्तशता अराः** त्रिशतदिनानां षष्ट्यन्तर्गतपञ्चाशद्दिनानां च अहोरात्रविभागे क्रियमाणे सप्तशता अराः कीलकस्थानीयाः **श्रिताः** आश्रिताः । अस्यां नाभौ । **प्रथिषु** [६] प्रथाख्यविस्तारवत्सु प्रदेशेषु;

१. ऋ.सं.१-१४१-३ ; २. $D_5$ ; BORI पृ. ७१; **'एकां'** इति कुं. पाठः ।
३. S ; BORI पृ. ७२; **'प्रधिष्वन्या'** इति कुं.पाठः ।
४. $\tilde{N}_1$,$V_1$,S; BORI पृ. ७२; **'अनेमि चक्रं'** इति कुं.पाठः ।
५. $T_2$,$G_{1,4,5}$,$M_{2,5}$ ; BORI पृ. ७२; **'मायाश्विनौ समनक्ति'** इति कुं. पाठः ।
६. **'प्रथ्याख्य'** सो.मु.पा.

पुनरुर्वरितदशादिनानामहोरात्रविभागे क्रियमाणे ग्रीष्मर्तौ वृद्धिमन्ति विस्तृतदशाहानि विस्तृतदशाराः हेमन्तर्तौ च विस्तृतदशरात्रयोर्विस्तृतदशाराः एवं विंशत्यरा अर्पिताः । यद्यप्यल्पा (तु)वृद्धिः प्राक् क्रमेण वृद्धिकाले, उत्तरत्र क्रमेण ह्रासकाले च दिनान्तरेष्वप्यस्ति । तथापि सम्पूर्णवृद्धिर्मध्ये एकत्र दशाहस्सु अपरत्र दशरात्रिष्वेव. अतः सुष्ठूक्तं प्रधिषु विंशतिरिति । **अजरं** नाशरहितं । **सुनेमि** शोभनधारायुक्तं इदं चक्रं । **परिवर्तते** एकस्यानन्तरमेकस्यारम्भात् पुनः पुनरावर्तते । हे अश्विनौ । **चर्षणी** जगत्सञ्चारयन्तौ, 'चर गतिभक्षणयोः' इति धातुः । वां **समवर्ती** यमः, [1]'समवर्ती परेतराट्' इत्यमरः । **यया** धारया । **मा** मा स्पृशति । मनुष्याणां घातिकाऽपि सा कालचक्रधारा देवभिषजोर्युवयोर्घातिका न भवतीति भावः । तावश्विनौ प्रशंसामीति पूर्वेणान्वयः । इति पञ्चमश्लोकस्यार्थः ।

**[2]एकं चक्रं वर्तते द्वादशारं**
**[3]षण्णाभमेकाक्षमृतस्य धारम् ।**
**यस्मिन्देवा अधि विश्वे विषक्ता**
**तावश्विनौ मुञ्चथो मा [4]विसीदथ ॥ ६२ ॥**

**एकं चक्रं वर्तते द्वादशारम्** इत्यत्र यदिदमेकं चक्रं **द्वादशारं** कयाचन विवक्षया द्वादशमासाख्यातिस्थूलारयुक्तं षण्णाभं षड्ऋत्वाख्यनाभिषट्कयुक्तम् । **एकाक्षम्** एकपरमात्माख्याक्षयक्तम् । **ऋतस्य** सत्यभूत-

---

१. अ.को. १-१-५८ ; २. $T_1$,$G_1$; BORI पृ. ७२
३. '**षण्णाभिमेकाक्षममृतस्य धारणम्**' इति कुं.पाठः ।
४. '**विपीदतम्**' इति कुं.पाठः ।

जगतः । **धारं** धारकं वर्तते प्रवर्तते । यस्मिन् **विश्वे** समस्ताः सूर्य-चन्द्रादिदेवाः **अधि** आधिक्येन मनुष्यदृग्गोचरतयेत्यर्थः । **विषक्ताः** सम्बद्धाः । हे अश्विनौ तं चक्रं मयि यूयं मा मुञ्चथः । **वि** विशेषेण **सीदथ** प्रसीदथ । द्वयोरपि तयोर्गौरवात् यूयं प्रसीदथेति बहुवचनम् । चक्रे महापुरुषस्य भगवतः सन्निधानात् तमिति पुल्लिङ्गप्रयोगः । इति षष्ठश्लोकस्यार्थः ।

**अश्विनाविन्द्रममृतं[1] तं प्रवृत्तं**
**तिरोधत्तामश्विनौ [2]दासपत्नीः ।**
**[3]भित्त्वा गिरीनश्विनौ गा उपाचरन्**
**अदृष्टमह्ना प्रथिताऽबलस्य ॥ ६३ ॥**

**अश्विनाविन्द्रममृतम्** इत्यत्र हे **अश्विनौ** अश्विनोरन्तर्यामिणौ भगवन्तौ, याभ्यो गोभ्यः वेदविद्याभ्यः, **इन्द्रम्** इदं जगद्रमयतीति इन्द्रपद-वाच्यं मोक्षदान समर्थं वा । **अमृतं** ज्ञानामृतम् । **इन्द्रं** परमैश्वर्यवन्तं नारायणमुद्दिश्य प्रवृत्तमासीत् । तथा हे अश्विनौ याश्च गाः **दासपत्नीः** 'शूद्रश्च द्विजसेवया' इति वचनात् त्रिवर्णदासान् शूद्रान् मनुष्यपत्नीश्च प्रति । **तिरोधत्तां** तिरोहिता अकुरुताम् । हे अश्विनौ युवयोर्मत्स्य-हयग्रीवव्यासादिरूपाणि याश्च गाः, **गिरीन्** 'गृ निगरणे' इति धातोः वेदोपरि द्वेषात् स्वमुखादुद्गिरतः बहिष्कुर्वतः अपठत इति यावत्, मधु-कैटभादिदैत्यान् गिरिवदन्यैरभेद्यान्वा । **भित्वा** संहृत्य याः गाः **उपा-**

---

१. S ; BORI पृ. ७२; **'अश्विनाविन्दुममृतौ वृत्तभूयौ'** इति कुं.पाठः ।
२. BORI पृ. ७२; **'दासपत्नी'** इति कुं.पाठः ।
३. $M_3$; BORI पृ. ७२; **'हित्वा गिरिमश्विनौ गामुदाचरन्तौ तद्वृष्टिमह्नात्प्रस्थितौ बलस्य'** इति कुं.पाठः ।

**चरन्** उप समीपे रक्षणाय अचरन् लोके, उप उपदेशेन अचारयंश्च । हे अश्विनौ **अदृष्टं** ब्रह्मणो रात्रिरूपमहाप्रलये कैरप्यदृष्टं **तं** वेदराशिम् । **अह्ना** अह्नि सृष्टिकाले युवयोः मूलरूपी नारायणः । **अबलस्य** अस्वतन्त्रस्य ब्रह्मादेः स्वशिष्यस्य । **प्रथिता** प्रथयिता । तादृशवेदप्रवर्तकभगवत्सन्निधानपात्रीभूतौ वां प्रशंसामीति पूर्वेणान्वयः । इति सप्तमश्लोकस्यार्थः ।

**युवां दिशो जनयथोदशाग्रे**
**समानमूर्ध्नि[१] रथता वियन्ति ।**
**तासां यानं[२] ऋषयोऽनु प्रयान्ति**
**देवा मनुष्याः क्षितिमाचरन्ति ॥ ६४ ॥**

**युवां दिश** इत्यत्र हे अश्विनौ अक्ष्यन्तर्गतभगवन्तौ युवाम् । **अग्रे** सृष्टिकाले दश दिशः जनयथः । तासां दिशां समानमूर्ध्नि 'रथ गतौ' इति धातोः, **रथता** परितो गच्छता ज्योतिश्चक्रेण । **वियन्ति वि** विशिष्टाः सूर्यचन्द्रादिदेवाः **यन्ति** प्राप्नुवन्ति । दशदिक्ष्वपि एकच्छाय-[३]यैव तन्मूर्ध्नि ज्योतिश्चक्रस्य सञ्चारात्समानमूर्ध्नीत्युक्तम् । 'अथ यथा वियन्ति' इति पाठे, **अथ** दिक्सृष्ट्यनन्तरम् । **यथा** यथायोग्यम् । **वि** विशिष्टाः सूर्यचन्द्रादिदेवाः । **यन्ति** ज्योतिश्चक्रेण गच्छन्ति । तस्मिन् ज्योतिश्चक्रे याति सति **तासां** दिशाम् । **यानं** यान्त्यनेन देवा इति यानं ज्योतिश्चक्रम् । ये देवाः ये च मनुष्याः ते सर्वे **अनु** स्वयोग्यतामनुसृत्य । **क्षितिं** स्वनिवासस्थानम् । आ समन्तात् **चरन्ति** कुर्वन्ति । स्वपुण्यफल

---

१. $Dn_2$ ; BORI पृ. ७२; **'समानं मूर्ध्नि रथयानं'** इति कुं.पाठः ।
२. **'यातं'** इति कुं.पाठः । ; ३. **'एकच्छायायैतन्मूर्ध्नि'** सो.मु.पा.

भोगपर्यन्तं मनुष्याः तदनुस्यूतविमानेषु निवसन्ति, देवास्तु सर्वदेति प्रदर्शनाय अन्वित्युक्तम् । इत्यष्टमश्लोकस्यार्थः । इदं श्लोकद्वयं केवल-मन्तर्यामिविषय(क)म् । 'गुहाशयायैव न देहमानिने'[१] इति स्मृतेः सर्वाऽपि स्तुतिरन्तर्यामिविषया किम्वघटितेति स्तोतुरुपमन्योर्हृदयम् ।

**[२]युवां पर्णा वीरुधो विश्वरूपा**
**ते विक्षिपन्तौ(न्तो) भुवनानि विश्वा ।**
**ते भानवोऽप्यनुसृताश्चरन्ति**
**देवा मनुष्या क्षितिमाचरन्ति ॥ ६५ ॥**

**युवां पर्णा वीरुधो विश्वरूपा** इत्यत्र हे अश्विनौ युवां विश्वा भुवनानि उद्दिश्य । **विक्षिपन्तौ** भिषत्त्वात् विशेषेण रोगादिनिरसनं कुर्वन्तौ स्थः । युवयोराश्रमे ये **पर्णाः** वृक्षगलितपर्णाः । **विश्वरूपाः** नानावर्णवत्यः याः **वीरुधः** लताश्च सन्ति ते सर्वेऽपि भवन्मन्त्रौषध-वाताभिसम्बन्धात्, [३]**विक्षिपन्तः** व्याध्यादिनिरसनं कुर्वन्तः । सूर्यस्य **ते** उष्णतया प्रसिद्धाः भानवश्च । **अनुसृताः** वामनुसृताः सन्तश्चरन्ति । भवदाश्रमस्थवृक्षलतादीन् न शोषयन्तीति भावः । देवा मनुष्याश्च भवदाश्रमे, **क्षितिं** स्थानमाचरन्ति । इति नवमश्लोकस्यार्थः ।

**[४]सन्तौ नासत्यावश्विनावाह्वये वां**
**ततः स्रजं बिभृथः पुष्करस्य ।**

---

१. भाग– ४-३-२२

२. G,D₅; BORI पृ. ७३; **'युवां वर्णान्विकुरुथो विश्वरूपां स्तेऽधिक्षियन्ते भुवनानि विश्वा ।'** इति कुं.पाठः । ; ३. **'निक्षिपन्तः'** सो.मु.पा.

४. S; BORI पृ. ७३; **'तौ नासत्यावश्विनौ वां महेऽहं स्रजं च यां बिभृथः पुष्करस्य । तौ-'** इति कुं.पाठः ।

**यौ नासत्यावमृतावृतावृधा-**
**वृते देवास्तत्प्रपदेन सूते ॥ ६६ ॥**

**सन्तौ नासत्यावश्विनौ** इत्यत्र हे अश्विनौ **सन्तौ** उत्तमौ । **नासत्यौ** असतां योग्यौ असत्यौ असत्यौ न भवत इति नासत्यौ । 'सत्यौ नासत्यौ' इति पाठे **सत्यौ** सतां योग्यौ । **ऋते** सत्यभूते । **सूते** मम नष्टयोश्चक्षुषोः पुनः प्रसवे विषये, चक्षुःप्राप्त्यर्थमित्यर्थः । 'विष्णुर्योनिं[1] कल्पयतु' इति सूक्ते ये विष्ण्वाद्या देवाः[2], **ततः** तैः सह **यौ** युवाम् । **पुष्करस्य** अरविन्दस्य स्रजं बिभृथः । 'गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजा' इति श्रुतेः स्पर्शमात्रेण गर्भरक्षणसमर्थया **ततः** तया स्रजा च सह । **अमृतौ** अमृतपानान्मृतिरहितौ । **ऋतावृधौ** ऋतेन सत्येन आवृधौ अभिवृद्धौ । अश्विनौ वां, **तत्प्रपदेन** तेषां देवानां, तस्याः मालायाः, तयोर्युवयोश्च प्रकृष्टानि पदानि यस्मिन् सूक्ते तत्प्रपदं 'विष्णुर्योनिं कल्पयतु' इति प्रागुक्तं सूक्तं तेन आह्वये । इति दशमश्लोकस्यार्थः ।

**मुखेन गर्भं लभतां युवानौ**
**[3]गतासुरिक्तं प्रपदेन सूते ।**
**सद्यो जातो मातरमत्ति गर्भ-**
**[4]स्तावश्विनौ मुञ्चथो बीजसेकम् ॥ ६७ ॥**

---

१. ऋ.सं. १०-१८४-१
२. ऋ.सं. १०-१८४-२
३. S; BORI पृ. ७३; **'गतासुरेतत्प्रपदेन सूते'** इति कुं.पाठः ।
४. **'तावश्विनौ मुञ्चथो जीवसे गाम्'** इति कुं.पाठः ।

**मुखेन गर्भं लभतां युवानौ** इत्यत्र **युवानौ** स्त्रीपुरुषौ युवयोः कृपया गर्भम् । **लभतां** लभेताम् । लभतामिति लोटि परस्मैपदे द्विवचनम् । **गतासुरिक्तं** मृतव्यतिरिक्तं तं गर्भं माता मुखेन अग्रतो निस्सृतेन, प्रपदेन (प)पादाग्रेण वा अग्रतो निस्सृतेन सूते । इत्थम्भूतलक्षणे चेयं तृतीया । क्वचित् **अजातः** सुखेन अप्रसूतः स गर्भः सद्यः मातरमत्ति । उपलक्षणं चैतत् । स्वयं च मृतो भवति । अतः कारणात् हे अश्विनौ **तौ** मातृगर्भौ प्रति **बीजसेकं** सुखप्रसवेन उभयोर्मातृगर्भयोः जीवन-हेतुभूतामृतसेकम् । **मुञ्चथः** तदुपरि वर्षथः । पयो वर्षत्सु मेघेषु 'पयोमुच' इत्यपि प्रयोगदर्शनान्मुञ्चथ इत्युक्तम् । एवंविधौ वां नष्टयोर्मम नेत्रयोरमृतसेकेन पुनः प्रसवार्थं आह्वय इति पूर्वेणान्वयः । इत्येका-दशश्लोकस्यार्थः ।

**स एवमुक्तः प्रत्युवाच । [1]एतेन प्रीत्याऽनुनयेन भवन्ताव-**
**श्विनौ नोत्सहेऽहमनिवेद्य गुरवेऽपूपमुपयोक्तुमिति ॥ ७२ ॥**

**एतेन प्रीत्याऽनुनयेन** इत्यत्र **एतेन** गुरुणा **प्रीत्या** मयि प्रीत्या **अनुनयेन** अश्विनौ स्तुहीति गुरुशिक्षया च हे अश्विनौ भवन्तौ मया अभिष्टुतौ; न तु स्वशक्त्या । उपाध्यायेन तु स्वशक्त्यैव भवन्तावभि-ष्टुतौ । अतो नोत्सह इत्युत्तरेण सम्बन्धः ।

**एवमप्याह ।**

**यश्चाधर्मेण [2]विब्रूते यश्चाधर्मेण पृच्छति ।**
**तयोरन्यतरः प्रैति विद्वेषं चाधिगच्छति ॥ ९१ ॥**

---

१. **'एतत्प्रत्यनुनये'** इति कुं.पाठः ।

२. T, $G_{2.3}$, $M_{(except\ M1)}$ ; BORI पृ. ७७; **'वै ब्रूयात्'** इति कुं.पाठः ।

**एवमप्याह** इत्यत्र **एवमपि** एवमुक्तोऽपि गुरुराह अधर्मेण यत् कश्चित्पृच्छति, अधर्मेण यत् कश्चिद् **विब्रूते** प्रतिब्रूते[1] **तयोरन्यतरः** प्रेषी वा प्रेषको गुरुर्वा वाशब्देन प्रेष्यः शिष्यो वा विद्वेषं निगच्छति । गच्छेत्याज्ञानन्तरं तव प्रश्नोऽप्ययमधर्मः । एवञ्चाधर्ममूलप्रश्नप्रति-वचनाभ्यां तव कार्यालाभे उक्तकार्यं न कृतवानिति प्रेषकस्य गुरोः कोपः असाध्यकार्यमुक्तवानिति प्रेष्यस्य वा कोपः स्यादिति भावः ।

**सोऽहमनुज्ञातो भवता इच्छामीष्टं गुर्वर्थमुपहर्तुमिति ॥ ९२ ॥**

**गुर्वर्थमुपहर्तुम्** इत्यत्र इच्छामीति योग्यपदाध्याहारः ।

**अथैवमुक्त उत्तङ्कः स्मृत्वोवाचास्ति खलु मया तु[2] भक्षितं नोपस्पृष्टं आगच्छता इति तं पौष्यः प्रत्युवाच । तदेव हि गच्छतोपस्पृष्टम् ॥ १०८ ॥**

[3]**तदेव हि गच्छतोपस्पृष्टम्** इत्यत्र यद्गच्छता त्वया उपस्पृष्टं भक्षितं पुनर्गण्डूषाद्यकरणादेतदेवाशौचमित्यर्थः ।

**तदेवं गते न शक्तोऽहं तीक्ष्णहृदयत्वात्तं शापमन्यथा कर्तुं गम्यतामिति ॥ १२४ ॥**

**तदेवं गते** इत्यत्र **तत्** तस्मात् **एवं गते** एवं स्थिते सतीत्यर्थः ।

---

१. **'अतिद्वेषं'** सो.मु.पा.

२. **'एष ते व्यतिक्रमः'** इति कुं.पाठः ।

३. **'तदेव हि गच्छता नोपस्पृष्टमित्यत्र यद्गच्छता त्वया नोपस्पृष्टं भक्षिते पुनर्गण्डूपाचमनाद्यकरणं तदेवाशौचमित्यर्थः'** सो.मु.पा.

**साधयामस्तावदित्युक्त्वा प्रातिष्ठतोत्तङ्कस्ते कुण्डले गृहीत्वा**
**॥ १२६ ॥**

**साधयामस्तावत्** इत्यत्र स्वगुरुकार्यमिति योग्यपदाध्याहारः ।

**सुरूपा बहुरूपाश्च तथा कल्माषकुण्डलाः ।**
**आदित्यवन्नाकपृष्ठे रेजुरैरावतोद्भवाः ॥ १३५ ॥**

**ऐरावतोद्भवा** इत्यत्र ऐरावताख्यनागकुलोद्भवा इत्यर्थः ।

**सर्पाणां प्रग्रहा यान्ति धृतराष्ट्रो जयेदिति[१] ।**
**[२]ये चेदमुपश्रृण्वन्ति ये च दूरपथं गताः ॥ १३८ ॥**

**सर्पाणां प्रग्रहा यान्ति** इत्यत्र सर्पाणां **प्रग्रहाः** परिग्रहाः धृतराष्ट्रो नागराजो जयेदिति वदन्तो यान्तीति योजना । **ये(वे)चेदमुपश्रृण्वन्ति** इत्यत्र **इदं** मम वचनम् ।

**अहमैरावतज्येष्ठभ्रातृभ्योऽकरवं नमः ।**
**यस्य वासः कुरुक्षेत्रे खाण्डवे चाभवत् पुरा ॥ १३९ ॥**

**ऐरावतज्येष्ठभ्रातृभ्य** ऐरावत एव ज्येष्ठो येषां [३]भ्रातृणां, तेभ्य इत्यर्थः ।

**त्रीण्यर्पितान्यत्र शतानि मध्ये**
**षष्टिश्च नित्यं चरति ध्रुवेऽस्मिन् ।**

---

१. $T_2$, $G_{2,3,6}$ ; BORI पृ. ८६; **'यदैजति'** इति कुं.पाठः ।
२. M ; BORI पृ. ८६; **'ये चैनपुपसर्पन्ति'** इति कुं.पाठः ।
३. **'तद्भ्रातॄणां'** सो.मु.पा.

**चक्रे चतुर्विंशतिपर्वयोगे**
**षड्वै कुमाराः परिवर्तयन्ति ॥ १४६ ॥**

**चतुर्विंशतिपर्वयोग** इत्यत्र द्वादशामावास्याः द्वादशपौर्णमास्यश्चेति चतुर्विंशतिपर्वणां योगो यस्मिन् संवत्सराख्यकालचक्रे ।

**इदं[1] वयन्त्यौ पुनरावयन्त्यौ**
**वयतस्तन्तून्सततं वर्तयन्त्यौ ।**
**कृष्णान् सितांश्चैव विवर्तयन्त्यौ**
**भूतान्यजस्रं भुवनानि चैव ॥ १४७ ॥**

**इदं वयन्त्यौ** इत्यत्र इदं तन्तुवृन्दं **वयन्त्यौ** क्रमेण प्रापयन्त्यौ पुनस्तत्र कालचक्रे भुवनानि लोकान् भूतानि प्राणिनश्च आ मर्यादया एकस्मिन् काले एकं ब्रह्माण्डं तद्गतप्राणिनः पुनरन्यस्मिन् काले अन्यद्ब्रह्माण्डं तद्गतप्राणिनश्चेति क्रमेण **अजस्रं** अनाद्यनन्तकालेषु, **वयन्त्यौ** प्रापयन्त्यावित्यर्थः ।

**स चैनं पुरुषः पुनरुवाच एतमश्वमपाने धमेति[2] ॥ १५१ ॥**

**अपाने धम** इत्यत्र **धम** मुखस्थवायुना फूत्कारं कुरु ।

**ततोऽश्वस्यापानमधमत्ततोऽश्वाद्धम्यमानात्सर्वस्रोतोभ्यः**
**सधूमा[3] अर्चिषोऽग्नेर्निष्पेतुः ॥ १५२ ॥**

---

१. $G_{1-3}$,M,$M_{1om}$ ; BORI पृ. ८७; **'तन्त्रं चेदं विश्वरूपे युवत्यौ'** इति कुं.पाठः ।

२. $T_1$,$G_2$,M; BORI पृ. ८७; **'धमस्वेति'** इति कुं.पाठः ।

३. BORI पृ. ८७ ; **'पावकार्चिषः सधूमाः निष्पेतुः'** इति कुं.पाठः ।

**सर्वस्रोतोभ्य** इत्यत्र **स्रोतोभ्यः** वायुस्रवणहेतुभ्यो नवद्वारेभ्यः अग्नेः सधूमार्चिषो निष्पेतुरिति सम्बन्धः ।

**तत्र च मया दृष्टे स्त्रियौ तन्त्रेऽधिरोप्य पटं वयन्त्यौ ।**
**तस्मिंश्च तन्त्रे कृष्णाः सिताश्च तन्तवः । किं तत् ॥ १६२ ॥**

**तस्मिंश्च तन्त्रे** इत्यत्र तन्त्रपदेन तन्तुसङ्ग्राहकदारुमयचक्रं कथ्यते ।

[१] **ततस्तद्वचनान्मया तद्वृषभस्य पुरीषमुपयुक्तम् । तदिच्छामि भवतोपदिष्टं किं तदिति ॥ १६५ ॥**

**भवतोपदिष्टं तत्** इत्यत्र **तत्** तस्मात्कारणात् । यन्मया पथि मार्गे दृष्टं तत्सर्वं [२] किमिति त्वया उपदिष्टं सत् वेदितुमिच्छामि । त्वदुपदेशेन वेदितुमिच्छामीति भावः ।

**अन्यस्मिन्करणीये [३] ते कार्ये पार्थिवसत्तम ।**
**बाल्यादिवान्यदेव त्वं कुरुषे नृपसत्तम ॥ १७४ ॥**

**अन्यस्मिन् करणीये त** इत्यत्र ते करणीये अवश्यकर्तव्ये कार्ये सति तद्विहाय बाल्यादिव अन्यदेव कार्यं कुरुष इति योजना ।

**कार्यकालं हि मन्येऽहं विधिदृष्टस्य कर्मणः ।**
**तद्गच्छापचितिं राजन् पितुस्तस्य महात्मनः ॥ १७९ ॥**

---

१. BORI पृ. ९०; तदेतद्भवतोपदिष्टमिच्छेयं श्रोतुं किं तदिति । स तेनैवमुक्त उपाध्यायः प्रत्युवाच' इति कुं.पाठः ।

२. 'किमु? त्वयोपदिष्टं तद्वेदितुमिच्छामि' इति श्रीसोदावादिराजमठतः मुद्रित-पुस्तके पाठान्तरम् ।

३. 'तु' इति कुं.पाठः ।

**एवं पितुश्चापचितिं कृतवांस्त्वं भविष्यसि ।**
**मम प्रियं च सुमहत्कृतं राजन् भविष्यति ॥ १८४ ॥**

**अपचितिम्** इत्यत्र **अपचितिम्** उपकारं पूजां वा । काश्यपं त्वत्पितुरुज्जीवनाया (गम्यमानं) गच्छन्तं काश्यपऋषिम् ।

**तदैव हि स राजेन्द्रो दुःखशोकाप्लुतोऽभवत् ।**
**यदैवं[१] पितरं वृत्तमुत्तङ्कादशृणोत्तदा ॥ १८८ ॥**

**यदैवं पितरं वृत्तम्** इत्यत्र एवं वृत्तमिति सम्बन्धः । एतादृशवर्तन-वन्तमित्यर्थः ।

॥ इति तृतीयोऽध्यायः ॥

## ॥ अथ चतुर्थोऽध्यायः ॥

**पौराणिकः पुराणे कृतश्रमः स कृताञ्जलिस्तानुवाच । 'मयोत्तङ्कस्य चरितमशेषमुक्तं जनमेजयसर्पसत्रान्तरमिदमपि[२] । किं भवन्तः श्रोतुमिच्छन्ति किमहं ब्रवाणि' इति ॥ २ ॥**

**जनमेजयसर्पसत्रान्तरम्** इत्यत्र जनमेजयेन करिष्यमाणसर्पसत्रस्य अन्तरमवकाशो यस्मिन् प्रमेये तदिदं उदङ्कस्य मुखात् जनमेजयस्य तक्षककृतस्वपितृमारणश्रवणरूपं[३] प्रमेयमप्युक्तम् ।

**तमृषयः ऊचुः –**

---

१. BORI पृ. ९२; **'यदैव वृत्तं पितरम्'** इति कुं.पाठः ।
२. **'जनमेजयस्य सार्पसत्रे निमित्तान्तरमिदमपि'** इति कुं.पाठः ।
३. **मरणश्रवणरूपं** सो.मु.पा.

**परं [1]रोमहर्षणे प्रवक्ष्यामस्त्वां नः प्रतिवक्ष्यसि**
**वचः शुश्रूषतां कथायोगं नः कथायोगे ॥ ३ ॥**

**परं रोमहर्षणे** इत्यत्र **परं** पश्चात् वयं, **प्रवक्ष्यामः** प्रश्नं करिष्यामः । त्वं च नः **वक्ष्यसि** उत्तरं वदिष्यसीत्यर्थः ।

॥ इति चतुर्थोऽध्यायः ॥

## ॥ अथ पञ्चमोऽध्यायः ॥

**तत्र वंशमहं पूर्वं श्रोतुमिच्छामि भार्गवम् ।**
**कथयस्व कथामेतां [2]कल्पा स्मः श्रवणे तव ॥ ३ ॥**

**कल्पाः स्मः श्रवणे तव** इत्यत्र [3]**कल्पाः** समर्थाः ।

**इदमन्तरमित्येवं हर्तुं चक्रे मनस्तदा ।**
**अथाग्निशरणेऽपश्यज्ज्वलन्तं जातवेदसम् ॥ २१ ॥**

**अथाग्निशरणेऽपश्यत्** इत्यत्र **अग्निशरणे** [4]अग्न्यागारे । [5]'शरणं गृहरक्षित्रोः' इत्यमरः ।

**तमपृच्छत्ततो रक्षः पावकं ज्वलितं तदा ।**
**शंस मे कस्य भार्येयमग्ने पृच्छ ऋतेन वै ॥ २२ ॥**

**अग्ने पृच्छ ऋतेन वै** इत्यत्र पृच्छे इति पदच्छेदः ।

---

१. $T_1$,$G_6$ ; BORI पृ. ९३; **'रौमहर्षणे'** इति कुं.पाठः ।
२. K ; BORI पृ. ९३; **'कल्याः'** इति कुं.पाठः ।
३. **'कल्याः'** सो.मु.पा.; ४. **'अग्र्यगारे'** सो.मु.पा.
५. अ.को. ३-३-५३

**असत्यं चेदहं ब्रूयां पतिष्ये नरकान्ध्रुवम् ।**
**भीतोऽनृताच्च शापाच्च भृगोरित्यब्रवीच्छनैः ॥ ३२ ॥**

**भीतोऽनृताच्च शापाच्च** इत्यत्र रक्षोभयात् राक्षसभार्येति कथिते सति यदनृतं तन्निमित्ताच्छापादित्यर्थः ।

॥ इति पञ्चमोऽध्यायः ॥

## ॥ अथ षष्ठोऽध्यायः ॥

**सौतिरुवाच–**

**अग्नेरथ वचः श्रुत्वा तद्रक्षः प्रजहार ताम् ।**
**ब्रह्मन्वराहरूपेण मनोमातरंहसा ॥ १ ॥**

**अग्नेरथ वचः श्रुत्वा** इत्यत्र श्रुत्वा, अतिक्रम्य चेति योग्य-पदाध्याहारः ।

**सा तमादाय सुश्रोणी ससार भृगुनन्दनम् ।**
**च्यवनं भार्गवं पुत्रं पुलोमा दुःखमूर्च्छिता ॥ ४ ॥**

**सा तमादाय सुश्रोणी** इत्यत्र भृगुं नन्दयतीति **भृगुनन्दनं**, भृगोरा-नन्दकरमित्यर्थः । **भार्गवं** भृगुपुत्रं तं च्यवनमादाय **ससार** स्वाश्रमं प्रति अगमदिति योग्यपदाध्याहारेण योजना ।

**आवर्तन्ती सृतिं तस्या भृगोः पत्न्यास्तपस्विनः ।**
**[1]तस्या मार्गं द्रुतवतीं दृष्ट्वा तु सरितं तदा ॥ ७ ॥**

---

१. **'तस्या मार्गं सृतवतीं'** इति कुं.पाठः ।

**तस्या मार्गं द्रुतवर्ती दृष्ट्वा तु सरितं तदा** इत्यत्र च्यवनस्याश्रमं प्रति तस्या मार्गं द्रुतवर्ती सरितं दृष्ट्वेति सम्बन्धः ।

**भृगुरुवाच –**

**केनासि रक्षसे तस्मै कथिता त्वं जिहीर्षवे ।**
**न हि त्वां वेद तद्रक्षो मद्भार्यां चारुहासिनीम् ॥ १० ॥**

**केनासि रक्षसे तस्मै कथिता** इत्यत्र भृगुपत्नीति केन कथिता असि ।

॥ इति षष्ठोऽध्यायः ॥

## ॥ अथ सप्तमोऽध्यायः ॥

**आयुर्देवगणाः[१] सर्वे आपः[२] पितृगणास्तथा ।**
**दर्शश्च पौर्णमासश्च देवानां पितृभिः सह ॥ ८ ॥**

**आयुर्देवगणा** इत्यत्र दर्शश्च पौर्णमासश्च पितृभिः सह देवानां पूजायोग्ये तिथी इति योग्यपदाध्याहारेण योजना । 'आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च' इति स्मृतेः पौर्णमास्यां इष्टिं कृत्वा अर्चतां स्वर्गे बहुकालं आयुर्दातारो देवगणा आयुर्देवगणाः। अमावास्या-यामग्नावर्चतां स्वर्गे बहुकालमायुर्दातारः पितृगणा आयुःपितृगणा इति विवेकः ।

**देवताः पितरस्तस्मात्पितरश्चापि देवताः ।**
**एकीभूताश्च दृश्यन्ते पृथक्त्वेन च पर्वसु ॥ ९ ॥**

---

१. $M_3$ ; BORI पृ. १००; **'आपो देवगणः'** इति कुं.पाठः ।
२. $M_3$ ; BORI पृ. १००; **'आयुः पितृगणास्तथा'** इति कुं. पाठः ।

**देवताः पितरस्तस्मात्** इत्यत्र 'सोमः पितृमान् यमोऽङ्गिरस्वान् अग्निः कव्यवाहनादयो ये पितरः' इति वचनात् देवा एव पितरः पितरश्चापि [1]देवता इति एकीभूताश्च दृश्यन्ते (पितर इति ) । **पर्वसु** संवत्सरान्तर्गतद्वाशामावास्यासु द्वादशपौर्णमासीषु च त एव पृथक्त्वेन दर्शेषु पितृत्वेन पौर्णमासीषु देवत्वेन च दृश्यन्त इति पूर्वेणान्वयः ।

**देवताः पितरश्चैव [2]जुह्वते मयि सर्वदा ।**
**देवतानां पितॄणां च मुखमेतदहं स्मृतम् ॥ १० ॥**

**जुह्वते मयि सर्वदा** इत्यत्र देवताः पितरश्च लोके उक्तविधया पूज्यन्ते । स्वयं च तासु तासु तिथिषु स्वानेवोद्दिश्य जुह्वते । रूपद्वयविवक्षया दातृत्वं प्रतिग्रहीतृत्वं च तेषामेवेति विवेकः ।

**सौतिरुवाच–**

**चिन्तयित्वा ततो वह्निश्चक्रे संहारमात्मनः ॥१२ ॥**

**चक्रे संहारमात्मन** इत्यत्र आत्मनः **संहारं** कुण्डादिष्वदर्शनम् ।

**न त्वं सर्वशरीरेण सर्वभक्षत्वमेष्यसि ।**
**[3]उपादानार्चिषो यास्ते सर्वं भक्ष्यन्ति ताः शिखिन् ॥ २२ ॥**

**न त्वं सर्वशरीरेण** इत्यत्र **सर्वशरीरेण** सर्वप्राणिनामुदरस्थितवैश्वानरशरीरेण, समुद्रान्तस्थितवडवानलाख्यशरीरेण, पातालादिलोकेषु तत्र तत्र स्थितनानाशरीरेण चेत्यर्थः । ते स्थूलतेजोरूपस्य तव उपा-

---

१. **'पितृदेवताः'** सो.मु.पा.

२. S (except G6,M); BORI पृ. १००; **'भुञ्जते मयि यद्धुतम्'** इति कुं पाठः।

३. $M_5$, Ñ, $V_1$ ; BORI पृ. १०१; **'अपाने ह्यर्चिषो'** इति कुं.पाठः ।

दानभूताः आतानवितानात्मकस्थूलपटस्य उपादानभूतसूक्ष्मतन्तुवत् उपादानभूताः याः सूक्ष्मार्चिषः[1] ता एव सर्वं भक्षयन्ति । स्थूलतेजोरूपस्य तव न कोऽपि दोष इति भावः । तव स्पर्शे सति जलस्पर्शेन अशुचेरेव शुचित्ववत् त्वया भक्ष्यमाणाशुचीनामेव शुचित्वं च स्यादित्युपायान्तरमप्याह– **यथा सूर्यांशुभिरिति** ।

**क्रव्यादा च तनुर्या ते सा सर्वं भक्षयिष्यति ।**
**यथा सूर्यांशुभिः स्पृष्टं सर्वं शुचि विभाव्यते ॥ २३ ॥**

**॥ इति सप्तमोऽध्यायः ॥**

## ॥ अथ अष्टमोऽध्यायः ॥

**एतस्मिन्नेव काले तु मेनकायां प्रजज्ञिवान् ।**
**गन्धर्वराजो विप्रर्षे विश्वावसुरिति स्मृतः ॥ ६ ॥**

**गन्धर्वराजो विप्रर्षे** इत्यत्र विश्वावसुरिति यः श्रुतः तस्माद्गन्धर्वराजः 'राजा राट् पार्थिवो नृपः' इत्यभिधानात् गन्धर्वाणां राजः श्रेष्ठात् मेनकायां गर्भः प्रजज्ञिवानिति सम्बन्धः । यद्वा गन्धर्वराजः **प्रजज्ञिवान्** जनयामासेति ।

**प्रसुप्तेवाभवच्चापि भुवि सर्पविषार्दिता ।**
**भूयोऽमनोहरतमा[2] बभूव तनुमध्यमा ॥ २२ ॥**

**भूयोऽमनोहरतमा** इत्यत्र अमनोहरतमेति पदच्छेदः ।

**॥ इति अष्टमोऽध्यायः ॥**

---

१. **'सूक्ष्मसूक्ष्मार्चिपः'** सो.मु.पा.

२. $K_1$,Ñ,$V_1$,B,$T_2$ ; BORI पृ. १०४; **'भूयो मनोहरतरा'** इति कुं.पाठः ।

## ॥ अथ नवमोऽध्यायः ॥

**[१]तमुद्दिष्टेऽहनि तयोः पितरौ चक्रतुर्मुदा ।**
**विवाहं तौ च रेमाते परस्परहितैषिणौ ॥ २४ ॥**

**तमुद्दिष्टेऽहनि** इत्यत्र **उद्दिष्टे** प्राक् सङ्कल्पिते अहनि तं प्राक् सङ्कल्पितं विवाहमिति सम्बन्धः ।

**स कदाचिद्वनं विप्रो रुरुरभ्यागमन्महत् ।**
**शयानं तत्र चापश्यत् डुण्डुभं वयसाऽन्वितम् ॥ २७ ॥**

**डुण्डुभं वयसाऽन्वितम्** इत्यत्र **वयसाऽन्वितं** वृद्धमित्यर्थः । डुण्डुभो नाम विषफणाभ्यां रहितो दीर्घकायो राजिलापरपर्यायः सर्पविशेषः । [२]'अलगर्दो जलव्यालः समौ राजिलडुण्डुभौ' इत्यमरः ।

**तत उद्यम्य दण्डं स कालदण्डोपमं तदा ।**
**[३]अत्यन्तं रुषितो विप्रस्तमुवाचाथ डुण्डुभः ॥ २८ ॥**

**अत्यन्तं रुषितो विप्र** इत्यत्र रुषित आसीदिति योग्यपदाध्याहारः ।

**॥ इति नवमोऽध्यायः ॥**

## ॥ अथ दशमोऽध्यायः ॥

**डुण्डुभ उवाच –**

**अन्ये ते भुजगा ब्रह्मन् ये दशन्तीह मानवान् ।**
**[४]डुण्डुभा न हि शब्देन न त्वं हिंसितुमर्हसि ॥ ३ ॥**

---

१. **'तत इष्टेऽहनि'** इति कुं.पाठः ।; २. अ.को. १-८-५

३. **'जिघांसुः कुपितो'** इति कुं.पाठः ।

४. $G_{1,4,6}$,$M_{2,5}$; BORI पृ. १०७; **'डुण्डुभा न हि गन्धेन'** इति कुं.पाठः ।

**डुण्डुभा न हि** इत्यत्र दशन्तीति पूर्वक्रियानुवृत्तिः । **शब्देन** सर्पशब्द-मात्रेण ।

**एकार्थान् पृथगर्थान् वै एकदुःखान् पृथक्सुखान् ।[१]**
**डुण्डुभान्धर्मविद्भूत्वा न त्वं हिंसितुमर्हसि ॥ ४ ॥**

**एकार्थान् पृथगर्थान्** इत्यत्र **एकार्थान्** एकस्य सर्पाख्यसामान्यशब्द-स्याप्यर्थभूतान् **पृथगर्थान्** डुण्डुभाख्यपृथक्शब्दस्य च अर्थभूतान् । वै इत्यनेन अर्थभेदस्य प्रसिद्धतामाचष्टे । **एकदुःखान्** दंशनजन्यदुःखमात्र दानेन एकं एकप्रकारं दुःखं येभ्यस्तान्, **पृथक्सुखान्** विषसर्पतः पृथक् पृथग्भूतेन मरणाप्रदातृत्वस्वभावेन सुखं मरणाभावाख्यसुखं येभ्यस्तान् डुण्डुभानिति सम्बन्धः । मनुष्यशब्दवाच्यत्वमात्रेण हिंसकतुरुष्ककृत-हिंसाख्यापराधेन, गालीप्रदानादिना तद्वत् सर्वसाधारणेषु[२] दुःखदान् अहिंसकब्राह्मणान् यथा न घ्नन्ति तथेति भावः ।

॥ इति दशमोऽध्यायः ॥

## ॥ अथ एकादशोऽध्यायः ॥

**जनमेजयस्य यज्ञेऽस्मिन् सर्पाणां हिंसनं पुरा ।**
**परित्राणं च भीतानां सर्पाणां ब्राह्मणादपि ॥ १८ ॥**

**सर्पाणां हिंसनं पुरा । परित्राणं च भीतानाम्** इत्यत्र **पुरा** पुरतः । उपरि परित्राणमित्यस्य भविष्यतीति योग्यक्रियया सम्बन्धः । **पुरा** पूर्वकल्पे अभूदिति वा ॥ **इति एकादशोऽध्यायः ॥**

---

१. $D_{6.7}$; BORI पृ. १०७; **'एकानर्थान्पृथग्धर्मानेकदुःखान्पृथक्सुखान्'** इति कुं. पाठः । ; २. **'सर्वसधारणेपदुःखदान्'** सा.मु.पा.

# आस्तीकपर्व

## ।। अथ प्रथमोऽध्यायः ।।

**[१]जरत्कारुरिति[२] ख्यात ऊर्ध्वरेता महातपाः ।**
**यायावराणां विप्राणां धर्मज्ञः संशितव्रतः ।। ११ ।।**

**यायावराणां विप्राणाम्** इत्यत्र गृहे गृहे यात्वा यात्वा वरयन्ति तद्दिनमात्रोचिततण्डुलानिति यायावराः विरक्तब्राह्मणाः तेषां धर्मज्ञः ।

**वीरणस्तम्बके लग्नाः सर्वतः परिभक्षिते ।**
**मूषकेन निगूढेन गर्तेऽस्मिन्नित्यवासिना ।। १७ ।।**

**वीरणस्तम्बके लग्ना** इत्यत्र **वीरणस्तम्बं** औशीरकतृणानां गुल्मं, 'लावञ्च' इत्यपभ्रंशभाषा ।

**सौतिरुवाच –**

**ततो निवेशाय तदा स विप्रः संशितव्रतः ।**
**महीं चचार दारार्थी न च दारानविन्दत ।।**

**ततो निवेशाय तदा** इत्यत्र निवेशः गृहप्रवेशो विवाह इत्यर्थः ।

**सौतिरुवाच–**

**मात्रा हि भुजगाः शप्ताः पूर्वं ब्रह्मविदां वर ।**
**जनमेजयस्य वो यज्ञे धक्ष्यत्यनिलसारथिः ।।**

---

१. कुं. १३ अध्यायः ।
२. **'प्रवरो'** इति कुं.पाठः ।

**मात्रा हि भुजगाः शप्ता** इत्यत्र **मात्रा** सर्पाणां मात्रा कद्रा स्व-वचनाकरणाच्छप्ताः ।

॥ इति प्रथमोऽध्यायः ॥

## ॥ अथ द्वितीयोऽध्यायः ॥

**[१]पुरा देव युगे ब्रह्मन्प्रजापतिसुते शुभे ।**
**आस्तां भगिन्यौ रूपेण समुपेतेऽद्भुतेऽनघ ॥ ५ ॥**

**प्रजापतिसुते शुभे** इत्यत्र प्रजापतिर्दक्षः; नवप्रजापतिषु तस्यापि गणनात् ।

**कश्यपो धर्मपत्नीभ्यां मुदा परमया युतः ।**
**वरातिसर्गं शृत्वैवं कश्यपादुत्तमं च ते ॥ ७ ॥**

**वरातिसर्गम्** इत्यत्र वरातिसर्गं वराय अतिसर्गः [२]आदेशः आज्ञेत्यर्थः ।

**सोपस्वेदेषु [३]कुण्डेषु पञ्चवर्षशतानि च ।**
**ततः पञ्चशते काले कद्रूपुत्रा विनिःसृताः ॥ १५ ॥**

**सोपस्वेदेषु कुण्डेषु** इत्यत्र अन्तस्थितघृततैलादिद्रव्येण बहिस्स्रवद्भिन्दव उपस्वेदाः तैः सहितेषु सोपस्वेदेषु **कुण्डेषु** घटेषु ।

**शरीरेणासमग्रेण तस्माद्दासी भविष्यसि ।**
**[४]पञ्चवर्षशतान्यद्य यया विस्पर्धसे सह ॥ १९ ॥**

---

१. कुं. १६ अध्यायः ; २. 'अतिदेशः' सो.मु.पा.
३. $G_{1.4-6}$,M; BORI पृ. ११८; **'भाण्डेषु'** इति कुं.पाठः ।
४. **'पञ्चवर्षशतान्यस्या'** इति कुं.पाठः ।

**पञ्चवर्षशतान्यद्य** इत्यत्र **अद्य** अद्यारभ्य **पञ्चवर्षशतानि** पुनः पञ्च-वर्षशतानि वर्धते ।

**आदास्यन्नात्मनो भोज्यमन्नं विहितमस्य यत् ।**
**विधात्रा भृगुशार्दूल क्षुधितः पतगेश्वरः ॥ २७ ॥**

**आदास्यन्नात्मनो भोज्यम्** इत्यत्र **विधात्रा** ब्रह्मणा अस्य गरुडा-ख्यपक्षिविशेषस्य यद्विहितं भोज्यं तदन्नम् आदास्यन्निति सम्बन्धः ।

॥ इति द्वितीयोऽध्यायः ॥

## ॥ अथ तृतीयोऽध्यायः ॥

**[१]तस्य शृङ्गमुपारुह्य बहुरत्नाचितं शुभम् ।**
**अनन्तकल्पमद्वन्द्वं सुराः सर्वे महौजसः ॥ ९ ॥**

**अनन्तकल्पमद्वन्द्वम्** इत्यत्र [२]'अनन्तं सुरवर्त्म खम्' इत्यनुशासनात् **अनन्तकल्पं** अन्तरिक्षपरिमितम् ।

**सर्वौषधीः समावाप्य सर्वरत्नानि चैव ह ।**
**[३]मथ्यतां कलशोदधिः वेत्स्यध्वममृतं ततः ॥ १३ ॥**

**मथ्यतां कलशोदधिः** इत्यत्र **कलशोदधिः** अमृतकलशोत्पादकः क्षीरसमुद्रः ।

॥ इति तृतीयोऽध्यायः ॥

---

१. कुं. १७ अध्यायः
२. अ.को. १-२-१
३. **'मन्थध्वमुदधिं देवा'** इति कुं. पाठः ।

## ।। अथ चतुर्थोऽध्यायः ।।

**सौतिरुवाच –**

**[1]तथेति चाब्रवीद्विष्णुर्ब्रह्मणा सह भार्गव ।**
**अचोदयदमेयात्मा फणीन्द्रं पद्मलोचनः ।। ६ ।।**

**अचोदयदमेयात्मा फणीन्द्रं पद्मलोचन** इत्यत्र [2]'ईकारोऽब्जदले लक्ष्म्यां वाण्यां कमलकेसरे' इत्यभिधानात् फणिनां ईं ऐश्वर्यं द्रावयतीति व्युत्पत्त्या पुंव्यत्यासेन वा फणीन्द्रो गरुडः । तस्यैव न विद्यते [3]हर्यावेश-वशाद्बलस्यान्तो यस्येति व्युत्पत्त्या अनन्त इत्यपि नाम । मिलितैर्देवा-सुरैरनुद्धार्यगिर्युद्वहने शक्तिसूचनाय फणीन्द्र इति अनन्त इति चापूर्वं नामैवोक्तम् । अन्यथा [4]'गिरिमारोप्य गरुडे हस्तेनैकेन लीलया' इति भागवतोक्तिविरोधात् । ननु [5]'विवशा विजहुः पथि' इति भागवत एवोक्तेः मार्ग एव गरुडोपर्यारोपणं, न तूद्धरणकाल इति चेत्, सत्यम् । [6]'समुद्धर्तुमशक्ता वै सर्वे देवगणास्तदा । विष्णुमासीनमभ्येत्य ब्रह्माणं चेदमब्रुवन्' इति भारत एव स्पष्टं देवानां गिर्युद्धरणाशक्तेरप्युक्तत्वात्, 'एकत्र निर्णीतः शास्त्रार्थोऽपरत्रापि' इति न्यायेन अत्रापि हरिहस्ते-नैवोद्धरणं गरुडोपर्यारोपणं च वक्तव्यम् । भूमौ पतितमात्रस्य गिरे-रुद्धरणे हरिहस्तमपेक्षमाणो गरुडः एकादशसहस्रयोजनपर्यन्तं कीलतया गिरिसन्धौ खचितं पर्वतमुद्धर्तुं कथं न [7]तमपेक्षते । अत एव 'अनन्तो

---

१. कुं. १८ अध्यायः
२. एकाक्षरकोष (इरुगपदण्डाधिनाथविरचित एकाक्षरकाण्डे पञ्चमश्लोकः) पृ. ४९.
३. **'हर्यावेशबलात्'** सो.मु.पा. ; ४. **भाग. ८-७-३८**
५. **भाग. ८-७-३४** ; ६. **आदि १८-४**
७. **तमपेक्षेत** सो.मु.पा.

भगवान् देवो यतो नारायणः स्थितः'[1] इति उपर्यनन्तपदेन भगवतोप्या-हूतत्वात् अत्रापि 'ततोऽनन्तः समुत्थाय'[2]इति वचनात् अनन्ताख्यो भगवानपि अग्रतो गरुडमाज्ञाप्य स्वयमपि गरुडमारुह्य तत्रागतः। एत-दर्थमप्यनन्तपदप्रयोग इति चानुसन्धेयम्। 'ततस्ते मन्दरगिरिमोज-सोत्पाट्य दुर्मदा'[3][4] इति भागवतोक्तेः का मतिरिति चेत्, सत्यम्। भारते उद्धरणाशक्तेः स्पष्टमुक्तत्वात् 'ओजसोत्पाट्य' इत्यत्रापि ओजसा भगवदोजसा इत्येव वक्तव्यत्वात्। अत एव ओजसेति सामान्यत एवोक्तं, न तु 'स्वौजसा'इति। कथं तर्हि मध्येमार्गं[5] गिरेर्निपतनमिति चेत्, गरुडोपरि स्पर्धया वयमेव (भारं) वहाम इति देवैरुक्ते मार्गेऽपि किञ्चित्कालमुद्वहनसम्भवात्। एतत्सर्वमनुसन्धाय 'तदा त्वया नित्य-[6]बलत्वहेतुतो योऽनन्तनामा गरुडस्तदंसके। उत्पाट्य चैकेन करेण मन्दरो निधापितस्तं सह स त्वयाऽवहत्' इति 'पुनः परीक्षद्भिरथो गिरिः सुरैस्सहासुरैरुन्नमितस्तदंसतः' इति च प्राहुः पूर्वाचार्याः।

**ऊचुश्च कूर्मराजानमकूपारे सुरासुराः।**
**अधिष्ठानं गिरेरस्य भवान्भवितुमर्हति ॥ ११ ॥**

**ऊचुश्च कूर्मराजानम्** इत्यत्र 'अकूपाराय महते नमो मन्दर-धारिणे' इति वचनात् कूर्मोऽप्यकूपारः। सङ्क्षेपरूपत्वात् समुद्र-प्रार्थनाऽप्रसङ्गाच्च[7] कालव्यत्यासेन च कूर्मप्रार्थनाख्यभाविकथायाश्च प्राक्कथनम्।

---

१. आदि १८-१५ ; २. आदि १८-७ ; ३. भाग. ८-७-३३
४. दुर्दमाः सो.मु.पा. ; ५. मध्येमार्गे सो.मु.पा.
६. म.ता.नि. १०-६.७
७. अप्रसङ्गरूपाच्च सो.मु.पा.

**कूर्मेण तु तथेत्युक्त्वा पृष्ठमस्य समर्पितम् ।**
**तं शैलं तस्य पृष्ठस्थं वज्रेणेन्द्रो ह्यपीडयत्[1] ॥ १२ ॥**
**मन्थानं मन्दरं कृत्वा तथा योक्त्रं च वासुकिम्**
**देवा मथितुमारब्धाः समुद्रं निधिमम्भसाम् ॥ १३ ॥**

**वज्रेणेन्द्रो ह्यपीडयत्** इत्यत्र **अपीडयत्** रज्जोरनुद्गमनाय सूक्ष्माग्रं ईषद्विस्तृतं चकार । **योक्त्रं** रज्जुम् ।

**विबुधाः सहिताः सर्वे यतः पुच्छं ततः स्थिताः ।**
**अनन्तो भगवान् देवो यतो नारायणः स्थितः ॥ १५ ॥**

**अनन्तो भगवान् देवो यतो नारायणः स्थित** इत्यत्र **यतो** यत्र अनन्ताख्यो भगवान्नारायणः स्थितः तत्र पुच्छे ।

॥ इति चतुर्थोऽध्यायः ॥

## ॥ अथ पञ्चमोऽध्यायः ॥

**वारुणानि[2] च भूतानि विविधानि महीधरात्[3] ।**
**पातालतलवासीनि विलयं समुपानयत् ॥ ३३ ॥**

**विविधानि महीधरात्** इत्यत्र **महीधरात्** भ्राम्यमाणमहीधरवेगान्निमित्तात् ।

**तेषाममृतवीर्याणां रसानां पयसैव च ।**
**अमरत्वं सुरा जग्मुः काञ्चनस्य च निःस्रवात् ॥ ३९ ॥**

---

१. **'वज्रेणेन्द्रोऽभ्यपीडयत्'** इति कुं.पाठः ।
२. अत्र कुं.पाठानुसारेण पूर्वाध्याय एवानुसरति । ; ३. **'महीधरः'** इति कुं.पाठः

**काञ्चनस्य च निस्स्रवात्** इत्यत्र मन्दरस्य कनकाचलत्वात् जले पेषणभरेण जातात् काञ्चनस्य च निस्स्रवात् सुवर्णभस्मसेवनादिव[1] अमृतत्वं गता इति सम्बन्धः। अनेन तृषापरिहाराय क्षणे क्षणे देवाः समुद्रपयः पिबन्ति। दैत्यास्तु [2]'वासुकेर्मथ्यमानस्य निःसृतेन विषेण च। अभवन्मिश्रितं तोयम्' इति वचनात् पयो न पिबन्ति। तेनामृतत्वं च देवाना[3]मिव न तेषामभूदिति सूचितम्।

**ऋते नारायणं देवं सर्वेऽन्ये देवदानवाः।**
**चिरारब्धमिदं चापि सागरस्यापि मन्थनम्** ॥ ४२ ॥

**ऋते नारायणं देवम्** इत्यत्र देवं क्रीडादिगुणविशिष्टं नारायणं ऋते दैत्याः नागोत्तमः वयं सर्वे च श्रान्ताः स्म इति योजना। अनेन नारायणस्य निर्दुःखानन्दरूपता देवैः स्पष्टीकृता।

**विष्णुरुवाच –**

**बलं ददामि सर्वेषां कर्मैतद्ये समास्थिताः।**
**क्षोभ्यतां कलशः सर्वैर्मन्दरः परिवर्त्यताम्** ॥ ४५ ॥

**क्षोभ्यतां कलशः सर्वैः** इत्यत्र **कलशः** दधिकलशस्थानीयः क्षीरसमुद्रः।

**ततः शतसहस्रांशुः [4]समान इव सागरात्।**
**प्रसन्नात्मा समुत्पन्नो तुरगः पाण्डुरस्तथा** ॥ ४८ ॥

---

१. सेचनादिव सो.मु.पा.; २. आदि १८-१८
३. 'देवानामेव' सो.मु.पा.
४. BORI पृ. १२३ ; 'मथ्यमानात्तु सागरात्' इति कुं.पाठः।

**समान इव सागरात्** इत्यत्र चन्द्रस्य श्वेतिम्ना क्षीरसमुद्रसदृशत्वात् समान इवेत्युक्तम् ।

**ततो जज्ञे महाकायश्चतुर्दन्तो महागजः ।**
**कपिला कामवृक्षश्च कौस्तुभश्चाप्सरोगणः ।**
**यतो देवास्ततो जग्मुरादित्यपथमाश्रिताः ॥ ५२ ॥**

**यतो देवास्ततो जग्मुः** इत्यत्र देवानां [1] मन्दरस्योत्तरभागे स्थितत्वात् सूर्यस्योत्तरायणगतत्वाच्च आदित्यपथमाश्रिता देवाः **यतः** यस्मिन् पुच्छभागे स्थिताः तत्र उक्ताः ज्येष्ठासोमाद्याः सर्वे जग्मुरिति योजना । फणाभागस्य विषज्वालाभरितत्वादिति भावः ।

॥ इति पञ्चमोऽध्यायः ॥

## ॥ अथ षष्ठोऽध्यायः ॥

[2] **ततस्तदमृतं देवो विष्णुरादाय वीर्यवान् ।**
[3] **जगाम दानवेन्द्रेभ्यो नरेण सहितः प्रभुः ॥ २ ॥**

**जगाम दानवेन्द्रेभ्यो नरेण सहितः प्रभुः** इत्यत्र स्वस्य नारायणीरूपतया स्त्रीरूपत्वाद्दैत्यभीषणाय तदैव गृहीतेन नरेण पुंरूपेण सहित इत्यर्थः । [4] 'एवं सुतुमुले युद्धे वर्तमाने भयङ्करे । नरनारायणौ देवौ समाजग्मतुराहवम्' इति उपर्येव वक्ष्यमाणत्वादत्रोक्त एवार्थः ।

---

१. **उत्तरदिग्भागे** सो.मु.पा.
२. कुं. १९ अध्यायः
३. $G_{4-6}$, $M_1$; **'जहार'** इति कुं.पाठः ।
४. आदि १९-२१.

**ततो भगवता तस्य शिरश्छिन्नमलङ्कृतम् ।**
**चक्रायुधेन चक्रेण पिबतोऽमृतमोजसा ॥ ७ ॥**

**ततो भगवता तस्य** इत्यत्र **भगवता** तत्कालधृतपुंरूपेण भगवता ।

**ततो वैरविनिर्बन्धः कृतो राहुमुखेन वै ।**
**शाश्वतश्चन्द्रसूर्याभ्यां ग्रसत्यद्यापि चैव तौ ॥ ११ ॥**

**ततो वैरविनिर्बन्ध** इत्यत्र चन्द्रसूर्याभ्यां सह यतो वैरविनिर्बन्धः कृतः ततो राहुः मुखेन तौ ग्रसति ।

॥ इति षष्ठोऽध्यायः ॥

## ॥ अथ अष्टमोऽध्यायः ॥

**[१] गां विन्दता भगवता गोविन्देनामितौजसा ।**
**वराहरूपिणा चान्तर्विक्षोभितजलाविलम् ॥ १२ ॥**

**गां विन्दता भगवता** इत्यत्र **गां** भूमिं **विन्दता** आनेत्रा वराह-रूपेणेति गोविन्दनाम्नो व्युत्पत्त्यन्तरमिदम् ।

**ब्रह्मर्षिणा व्रतवता वर्षाणां शतमत्रिणा ।**
**[२] अनासादितपर्यन्तं पातालतलमव्ययम् ॥ १३ ॥**

**अनासादितपर्यन्तम्** इत्यत्र अनासादितः अप्राप्तः पर्यन्तः अधः-प्रदेशावसानं अपरपारावसानं वा यस्य स तथोक्तः । घनोदकसमुद्रस्यापि समुद्रान्तःपातित्वादेवमुक्तम् । **पातालतलं** पाताले तलमधोभागो यस्य सः ।

---

१. कुं. २१ अध्यायः ; २. 'अनासादितगाधं च' इति कुं.पाठः ।

**अध्यात्मयोगनिद्रां च पद्मनाभस्य सेवतः ।**
**युगान्तकालशयनं[1] विष्णोरमिततेजसः ॥ १४ ॥**

**अध्यात्मयोगनिद्राश्च** इत्यत्र अध्यात्मं आत्मानमधिकृत्य योगेन उपयेन पक्ष्मद्वययोगेन वा कृतां निद्रां **सेवतः** अङ्गीकुर्वतः पद्मनाभस्य **युगान्तकालशयनं** युगान्तकाले प्रलयकाले शेते अस्मिन्निति शयन-मित्यर्थः ।

॥ इति अष्टमोऽध्यायः ॥

## ॥ अथ नवमोऽध्यायः ॥

**तं[2] दृष्ट्वा शरणं जग्मुः प्रजाः[3] सर्वा विभावसुम् ।**
**प्रणिपत्याब्रुवंश्चैनमासीनं विश्वरूपिणम् ॥ ९ ॥**

**प्रजाः सर्वा विभावसुम्** इत्यत्र **विभावसुं** कोणाधिपतिं अग्निम् ।

**त्वं मुखं पद्मजो विप्रस्त्वमग्निः पवनस्तथा ।**
**त्वं हि धाता विधाता च त्वं विष्णुः सुरसत्तमः ॥ १७ ॥**

**त्वं विष्णुः सुरसत्तम** इत्याद्यैक्यव्यपदेशास्तु विष्ण्वादीनां गरुडे सन्निहितत्वात्, अयोऽग्निरितिवत् । अन्यथा '[4]नास्ति नारायणसमं न भूतं न भविष्यति' इत्युपक्रमविरोधः । विष्णुवाहनस्यैव विष्णुत्वासम्भ-वाद्युक्तिविरोधश्च । एवमन्यत्राप्यूह्यम् ।

---

१. **'युगादिकालशयनं'** इति कुं.पाठः । ; २. कुं. **२३ अध्यायः**
३. BORI पृ. १३३ ; **'देवाः सर्वे विभावसुम्'** इति कुं.पाठः ।
४. आदि १-३४

**खगेश्वरं शरणमुपागता वयं**
**महौजसं ज्वलनसमानवर्चसम् ।**
**तडित्प्रभं [1]वितिमिरदभ्रगोचरं**
**महाबलं गरुडमुपेत्य [2]गोचरम् ॥ २२ ॥**

**वितिमिरदभ्रगोचरम्** इत्यत्र **वितिमिरे** स्वतेजसि **दभ्रगोचरं** अल्पं विषयीक्रियमाणं, तेजसामन्तः स्पष्टतया अदृश्यमित्यर्थः । **गरुडमुपेत्य गोचरम्** इत्यत्र **गोचरं** दिक्षु चरन्तमित्यर्थः । [3]'दिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः' इत्यमरः ।

॥ इति नवमोऽध्यायः ॥

## ॥ अथ एकादशोऽध्यायः ॥

**विनतोवाच –**

**[4]यस्ते कण्ठमनुप्राप्तो निगीर्णं बडिशं यथा ॥ ११ ॥**

**निगीर्णं ब[5]डिशं यथा** इत्यत्र निगीर्णं आस्यान्तर्निक्षिप्तं **बडिशं** मत्स्यवेधनम् । 'बडिशं मत्स्यवेधनम्' इत्यमरः ।

**इहासीना भविष्यामि स्वस्तिकारे रता सदा ।**
**अरिष्टं व्रज पन्थानं पुत्र कार्यार्थसिद्धये ॥ १७ ॥**

---

१. 'वितिमिरमभ्रगोचरम्' इति कुं.पाठः ।
२. 'खेचरम्' इति कुं.पाठः ।
३. अ.को. ३-३-२५
४. कुं. २८ अध्यायः
५. अ.को. १-१०-१६; 'बलिशं' इति कचिन्मुद्रितकोशेषु ।

**अरिष्टं व्रज पन्थानम्** इत्यत्र **अरिष्टं** क्षेमम् । 'अरिष्टं क्षेममाख्यातम्' इत्युत्पलमाला ।

॥ इति एकादशोऽध्यायः ॥

## ॥ अथ त्रयोदशोऽध्यायः ॥

**[१]भ्राता तस्यानुजश्चासीत् सुप्रतीको महातपाः ।**
**स नेच्छति धनं भ्रात्रा सहैकस्थं महामुनिः** ॥ १७ ॥

**स नेच्छति धनं भ्रात्रा** इत्यत्र **एकस्थं** एकाकारतया स्थितं, अविभक्तमिति यावत् ।

**एवं निर्बध्यमानस्तु शशापैनं विभावसुः ।**
**[२]गुरुशास्त्रेण बद्धानां अन्योन्यमवशङ्किनाम्** ॥ २३ ॥

**गुरुशास्त्रेण बद्धानाम्** इत्यत्र **गुरुशास्त्रेण** बहुशास्त्रेण **बद्धानां** सम्बद्धानां, शास्त्रकोविदानामित्यर्थः । **अन्योन्यमवशङ्किनां** अन्योन्यमवमानकरणे शङ्कावतां साधूनां त्वं नियन्तुं न शक्यो हीति योजना ।

**[३]रोषरोषानुषङ्गेण तिर्यग्योनिगतावपि ।**
**परस्परद्वेषरतौ प्रमाणबलदर्पितौ** ॥ २७ ॥

**रोषरोषानुषङ्गेण** इत्यत्र एकस्य रोषं प्रत्यन्यस्य रोषो रोषरोषा-

---

१. कुं. २९ अध्यायः

२. $G_3$,$M_1$,$D_2$,$\tilde{N}_3$,K; BORI पृ. १४४; **'गुरुशास्त्रेऽनिबद्धानां अन्योन्येनाभिशङ्किनाम्'** इति कुं.पाठः । ; ३. **'रोषदोषानुषङ्गेण'** इति कुं.पाठः ।

नुषङ्गः । 'रोषदोषानुषङ्गे(ण)न' इति पाठे स्पष्टोऽर्थः । **प्रमाण-बलदर्पितौ** इत्यत्र **प्रमाणं** देहस्य प्रकृष्टं मानं देहस्थौल्यमित्यर्थः । तच्च बलञ्च ताभ्यां दर्पितौ ।

**षडुच्छ्रितो योजनानि गजस्तद्विगुणायतः ।**
**कूर्मस्त्रियोजनोत्सेधो दशयोजनमण्डलः ॥ ३२ ॥**

**कूर्मस्त्रियोजनोत्सेध** इत्यत्र **उत्सेधः** कायस्यौन्नत्यम् । [१]'उत्सेधः काय उन्नतिः' इत्यमरः ।

[२]**तावेतौ युद्धसम्मत्तौ परस्पर वधैषिणौ ।**
**उपयुज्याशु कर्मेदं [३]साधयेप्सितमात्मनः ॥ ३३ ॥**

**उपयुज्य** एतौ गजकच्छपौ भक्षयित्वा कर्म साधय ।

**सोऽलम्भं तीर्थमासाद्य देववृक्षानुपागमत् ।**
**ते भीताः समकम्पन्त तस्य पक्षानिलाहताः ॥ ४१ ॥**
[४]**न नो भाङ्क्षीदिति तदा दिव्याः कनकशाखिनः ।**
**प्रचलाङ्गान्स तान् दृष्ट्वा मनोरथफलद्रुमान् ॥ ४२ ॥**

[५]**न नोऽभाङ्क्षीत्** इत्यत्र अयं गरुत्मान् **नः** अस्मान् **न अभाङ्क्षीत्**

---

१. अ.को. ३-३-९६
२. 'तावुभौ' इति कुं. पाठः ।
३. BORI पृ. १४५; 'साधये हितमात्मनः' इति कुं.पाठः ।
४. 'न नो भञ्ज्यादिति' इति कुं.पाठः ।
५. 'मा नो भाङ्क्षीदित्यत्र अयं गरुत्मान् नः अस्मान् मा भाङ्क्षीत् भग्नान्मा कार्षीत् मा भञ्ज्यादित्यर्थः । इति समकम्पन्तेति योजना । 'भञ्जो आमर्दने' इति धातोः

भग्नान्नाकार्षीदिति समकम्पन्तेति योजना । 'भञ्जो आमर्दने' इति धातोः लुङि अभाङ्क्षीदिति रूपं निष्पन्नम् ।

**तमुवाच खगश्रेष्ठं तत्र रोहिणपादपः[1] ।**
**अतिप्रवृद्धः सुमहानापतन्तं मनोजवम् ॥ ४६ ॥**

**तत्र रोहिणपादप** इत्यत्र **रोहिणो** वटः । 'रोहिणस्तु वटः स्मृतः' इति वागुरिः ।

**कश्यप उवाच –**[2]

**पुत्र मा साहसं कार्षीर्मा सद्यो लिप्स्यसे व्यथाम् ।**
**मा त्वां दहेयुः सङ्क्रुद्धा वालखिल्या मरीचिपाः ॥ १५ ॥**

**पुत्र मा साहसं कार्षीः** इत्यत्र सहसा कर्तुं योग्यं साहसं सहसा शाखोत्सर्जनमिति यावत् ।

**कश्यप उवाच –**

**प्रजाहितार्थमारम्भो गरुडस्य तपोधनाः ।**
**चिकीर्षति महत्कर्म तदनुज्ञातुमर्हथ ॥ १७ ॥**

**प्रजाहितार्थमारम्भ** इत्यत्र मातृदास्येन गरुडस्यापि सर्पदास्ये जगदुपद्रवकारिणां सर्पाणां शिक्षकाभावेन[3] स्वदास्यपरिहारोऽपि प्रजाहितार्थमेवेति भावः ।

---

लुङि अभाङ्क्षीदिति रूपं निष्पन्नम् । 'न माङ्योगे' इत्यडभावः ॥' सो.मु.पा.
१. BORI पृ. १४६; **'रौहिणपादपः'** इति कुं.पाठः ।
२. **कुं. ३० अध्यायः**
३. **'शिक्षाभावेन'** सो.मु.पा.

**[१] न तां वार्धः परीणाहेच्छतचर्मा महानणुः ।**
**शाखिनो महतीं शाखां यां प्रगृह्य ययौ खगः ॥ २३ ॥**

**न तां [२] वार्धः [३] परीणाहेच्छतचर्मा महानणुः** इत्यत्र **शतचर्मा** महिषाणां शतस्य चर्मभिर्निर्मितः **महान्** आयामेन महान् अतिदीर्घः बहुयोजनपर्यन्तमायत इत्यर्थः । **अणुः** विस्तारेणाणुः । सूक्ष्माङ्गुलिवत् सूक्ष्मतया रचितः इत्यर्थः । **वार्धः** 'बारु' इत्यपभ्रंशभाषया कथ्यमान-श्चर्मकृतरज्जुविशेषः । **तां** या गरुडधृता शाखा तां **न परीणाहेत्** परितो न वेष्टयेत् । 'णह बन्धने' इति धातुः । अनेन शाखाया अतिस्थूलत्वं वर्तुलाकारत्वं गरुडस्य बलाधिक्यं चोक्तं भवति ।

**बृहस्पतिरुवाच –**

**[४] तवापराधाद्देवेश प्रमादाच्च शतक्रतो ।**
**तपसा वालखिल्यानां महर्षीणां महात्मनाम् ॥ ४० ॥**

**तवापराधाद्देवेश** इत्यत्र **प्रमादात्** वालखिल्यानां तपसः अनवधा-नात्, अत एव जातात् **अपराधात्** तदपहासोल्लङ्घनरूपात् ।

**चक्राणि परिघांश्चैव त्रिशूलानि परश्वधान् ।**
**शक्तीश्च विविधास्तीक्ष्णाः करवालांश्च निर्मलान् ।**
**स्वदेहरूपाण्यादाय गदाश्चोग्रप्रदर्शनाः ॥ ५० ॥**

---

१. $G_{4\ 6}$,$M_{2\ 4}$ ; BORI पृ. १४८; **'न तां वध्री परिणहेच्छतचर्मा महातनुम्'** इति कुं.पाठः ।
२. **'वार्ध्रः (वाध्रः)'** सो.मु.पा.
३. **'परिणहेत्'** सो.मु.पा.
४. $G_{1-3,6}$,M ; BORI पृ. १५०; **'तवापराधाद्देवेन्द्र'** इति कुं.पाठः ।

**स्वदेहरूपाण्यादाय** इत्यत्र स्वदेहं रूपयन्ति प्रकाशयन्तीति कृत्वा **स्वदेहरूपाणि** शस्त्राणीत्यर्थः ।

**॥ इति त्रयोदशोऽध्यायः ॥**

## ॥ अथ चतुर्दशोऽध्यायः ॥

**[1] अथापश्यदृषीन् ह्रस्वानङ्गुष्ठोदर वर्ष्मणः ।**
**[2] पलाशवृन्तिकामेकां वहतः संहतान् पथि ॥ ८ ॥**

**पलाशवृन्तिकामेकाम्** इत्यत्र पलाशवृक्षस्य **वृन्तिका** पुष्पाधारभूता समित् ।[3] 'वृन्तं प्रसवबन्धनम्' इत्यमरः ।

**सौतिरुवाच –**

**एवमस्त्विति तं चापि प्रत्यूचुः सत्यवादिनः ।**
**तान्कश्यप उवाचेदं सान्त्वपूर्वं प्रजापतिः ॥ २० ॥**

**एवमस्त्विति तं चापि** इत्यत्र **एवं** त्वत्प्रश्नानुसारेण **अस्तु** अस्मन्मुखादुत्तरमस्तु; तथास्त्वित्यङ्गीकृत्य वालखिल्या उत्तरमूचुरित्यर्थः ।

**॥ इति चतुर्दशोऽध्यायः ॥**

## ॥ अथ पञ्चदशोऽध्यायः ॥

**[4] तत्र चासीदमेयात्मा विद्युदग्निसमप्रभः ।**
**[5] भौवनः सुमहावीर्यः सोमस्य परिरक्षिता ॥ ३ ॥**

---

१. कुं. ३१ अध्यायः ; २. **'पलाशवर्तिकामेकां'** इति कुं.पाठः
३. अ.को. २-४-१५ ; ४. कुं. ३२ अध्यायः ; ५. **'भौमनः'** इति कुं.पाठः ।

**भौवनः सुमहावीर्य** इत्यत्र **भौवनः** विश्वकर्मा ।

**स तेन पतगेन्द्रेण पक्षतुण्डनखैः क्षतः ।**
**मुहूर्तमतुलं युद्धं कृत्वा विनिहतो युधि** ॥ ४ ॥

**कृत्वा विनिहतो युधि** इत्यत्र **विनिहतः** विशेषेण ताडितः ।

**एवं संलोडयामास गरुडस्त्रिदिवालयम् ।**
**पक्षतुण्डप्रहारैस्तु देवान्स [1]विरराद ह** ॥ ७ ॥

**देवान् स विरराद ह** इत्यत्र 'रद विलेखने' इति धातोः **विरराद** विदारयामासेत्यर्थः । 'विददार' इति पाठे स्पष्टोऽर्थः ।

**अश्वक्रन्देन वीरेण रेणुकेन च पक्षिराट् ।**
**क्रथनेन च शूरेण तपनेन च खेचरः** ॥ १८ ॥

**अश्वक्रन्देन वीरेण** इत्यत्र अश्वक्रन्दादयः प्रलिहान्ताः पक्षिणः देवानाममृतरक्षिणः ।

**ततो नवत्या [2]नवतिं मुखानां**
**कृत्वा महात्मा गरुडस्तरस्वी ।**
**नदीः समापीय मुखैस्ततस्तैः**
**सुशीघ्रमागम्य पुनर्जवेन** ॥ २४ ॥

**ततो नवत्या नवतिं मुखानाम्** इत्यत्र मुखानां नवतिं कृत्वा तया नवत्या नदीः समापीयेति सम्बन्धः ॥ **इति पञ्चदशोऽध्यायः** ॥

---

१. $T_2$,$G_{4-6}$,$M_1$ ; BORI पृ. १५५; **'विददार ह'** इति कुं.पाठः ।
२. $G_{1-2}$ ; BORI पृ. १५६; **'नवतीर्मुखानां'** इति कुं.पाठः ।

## ।। अथ षोडशोऽध्यायः ।।

[१] **स चक्रं क्षुरपर्यन्तमपश्यदमृतान्तिके ।**
**परिभ्रमन्तमनिशं तीक्ष्णधारमयस्मयम्** ।। २ ।।

**स चक्रं क्षुरपर्यन्तम्** इत्यत्र क्षुरवत्क्रूरः पर्यन्तोऽन्तिमधारा यस्य तत् ।

**तमुवाचाव्ययो देवो वरदोऽस्मीति खेचरम् ।**
**स वव्रे तव तिष्ठेयमुपरीत्यन्तरिक्षगः** ।। १४ ।।

**स वव्रे तव तिष्ठेयम्** इत्यत्र विष्णुरथध्वजोपरि स्थितस्य स्वस्य विष्णोरुपर्यवस्थानस्यापि सत्त्वात्तवोपरीत्युक्तम् ।

[२] **भवतोऽपि वरं दद्मि वृणीतां भगवानपि ।**
**तं वव्रे वाहनं विष्णुर्गरुत्मन्तं महाबलम्** ।। १७ ।।

व्रियमाणस्यैव वरत्वात् त्वया मत्तो व्रियमाणा सेवाऽपि वर एवेति भावेनोक्तं– **भवतोऽपि वरं दद्मीति** । अत एव भगवान् 'वृणीताम्' इत्युक्तम् ।

**ध्वजं च चक्रे भगवानुपरि स्थास्यसीति तम् ।**
**एवमस्त्विति तं देवमुक्त्वा नारायणं खगः** ।। १८ ।।

**ध्वजं च चक्रे भगवानुपरि स्थास्यसि** इत्यत्र ध्वजं **उपरि** उपर्युपरि

---

१. कुं. ३३ अध्यायः

२. $K_{2,3}$,$B_{2,3}$,$D_{2,7}$,$T_2$,$G_{(except\ G4,5)}$,$M_1$ ; BORI पृ. १५८; **'भवतेपि परं दद्यां वृणोतु'** इति कुं.पाठः ।

ध्वजसमीप इत्यर्थः । अत एव द्वितीया । स्थास्यसीत्युक्त्वा तं तवोपरि तिष्ठेयमिति प्राक् गरुडेन स्वीकृतं वरं **चक्रे** अङ्गीचकार ।

**सुरूपं पत्रमालक्ष्य सुपर्णोऽयं भवत्विति ।**
**तद्दृष्ट्वा महदाश्चर्यं सहस्राक्षः पुरंदरः ।**
**खगो महदिदं भूतमिति मत्वाऽभ्यभाषत ॥ २५ ॥**

**खगो महदिदं भूतम्** इत्यत्र अयं खगः **इदम्** उत्तमत्वेन प्रसिद्धं यद्विष्ण्वादिकं महद्भूतं तेष्वेकं इति मत्वेति सम्बन्धः ।

**॥ इति षोडशोऽध्यायः ॥**

## ॥ अथ अष्टादशोऽध्यायः ॥

**शौनक उवाच –**

**भुजङ्गमानां शापस्य मात्रा चैव सुतेन च ।**[1]
**विनतायास्त्वया प्रोक्तं कारणं सूतनन्दन ॥ १ ॥**

**भुजङ्गमानां शापस्य** इत्यत्र **मात्रा** कद्रैव भुजङ्गमानां शापस्य **सुतेन** अरुणेन च **विनताया** एव विनताख्यमातुरेव शापस्य च कारणमुक्तमिति सम्बन्धः । .

**॥ इति अष्टादशोऽध्यायः ॥**

## ॥ अथ एकोनविंशोऽध्यायः ॥

**ब्रह्मोवाच –**

**अधो महीं गच्छ भुजङ्गमोत्तम**[2]

---

१. कुं. ३५ अध्यायः ; २. कुं ३५ अध्यायः

स्वयं तवैषा विवरं प्रदास्यति ।
इमां धरां [१]धारयिता त्वया हि मे
महत्प्रियं शेष कृतं भविष्यसि ॥ २१ ॥

शेषोऽसि नागोत्तम धर्मदेवो
महीमिमां धारयसे यदेकः ।
[२]अनन्तभोगं परिगृह्य सर्वं
यथाहमेवं बलभिद्यथा वा ॥ २३ ॥

**अनन्तभोगं परिगृह्य सर्वम्** इत्यत्र हे अनन्त! यथाऽहं **सर्वं** भोगं सर्वैर्जनैर्भुज्यमानं भोगं **परिगृह्य** [३]सर्वभोगाधिपतित्वात् सर्वैर्जनैर्भुज्यमानभोगादेकांशं सङ्गृह्य लोकान् धारयामि; यथा वा बलभित् तथा भवान् सर्वं भोगं परिगृह्य धारयितेति पूर्वक्रियावृत्त्या योजना ।

अनन्तेऽभिप्रयाते तु वासुकिः स महाबलः ।
[४]अभ्यगच्छत नागैस्तु देवैरिव च वासव ॥ २६ ॥

**अभ्यगच्छत नागैस्तु देवैरिव च वासव** इत्यत्र देवैः सह वासव इव नागैः सह वासुकिः **अभ्यगच्छत** [५]मन्त्रणाय एकान्तस्थलं जगाम ।

॥ इति एकोनविंशोऽध्यायः ॥

---

१. **'धारयता'** इति कुं. पाठः ।

२. $D_5$,$G_1$,$M_{1-5}$ ; BORI पृ. १६७; **'अनन्तभोगैः परिगृह्य सर्वां'** इति कुं. पाठः ।

३. **'सहभोगाधिपतित्वात्'** सो.मु.पा.

४. **'अभ्यषिच्यत नागैस्तु दैवतैरिव वासवः'** इति कुं.पाठः ।

५. **'आमन्त्रणाय'** सो.मु.पा.

## ॥ अथ विंशोऽध्यायः ॥

[१]**अव्ययस्याप्रमेयस्य सत्यस्य च तथाग्रतः ।**
**शप्ता इत्येव मे श्रुत्वा जायते हृदि वेपथुः** ॥ ५ ॥

**अव्ययस्याप्रमेयस्य** इत्यत्र अव्ययस्य अप्रमेयस्य **सत्यस्य** 'सत्यः को हंसवाहनः' इति वचनात् ब्रह्मणः । **अग्रतः** अग्रे इत्यर्थः । अनेन कद्र्वा शापदानसमये ब्रह्माऽपि दैववशात्तत्रागत इति सूचितम् ।

**सर्व एव हि नस्तावद्बुद्धिमन्तो विचक्षणाः ।**
**अपि मन्त्रयमाणा हि हेतुं पश्याम मोक्षणे** ॥ ८ ॥

**यथा नष्टं पुरा देवा गूढमग्निं गुहागतम्** ॥ ९ ॥

**अपि मन्त्रयमाणा हि** इत्यत्र पुरा भृगुऋषिशापाद्गूढं अत एव **नष्टम्** अदृष्टं **गुहागतं** गिरिगुहान्तर्गतम् अग्निं यथा देवः ब्रह्मा स्पर्शादेव पवित्रीकरणसमर्थस्य तव सर्वभक्षणेऽप्यपवित्रभक्षणं कदाऽपि न स्यादित्युपायेन शापान्मोचयित्वा पुनरुज्जीवयामास तथा मन्त्रयमाणा वयमपि **मोक्षणे** शापमोक्षणे अस्मदुज्जीवने च **हेतुं** हेतुभूतं कञ्चन देवं वा ब्राह्मणं वा पश्याम इति योजना ।

**यथा स यज्ञो न भवेद्यथा वाऽपि [२]पराभवेत् ।**
**जनमेजयस्य सर्पाणां [३]विनाशकरणं हितम्** ॥ ९ ॥

---

१. कुं. ३७ अध्यायः

२. BORI पृ. १६८; **'पराभवः'** इति कुं.पाठः ।

३. **'विनाशकरणाय वै'** इति कुं.पाठः ।

**विनाशकरणं हितम्** इत्यत्र सर्पाणां विनाशकरणं जनमेजयस्य हितं कर्म पराभवेत् मध्ये [१] केनचिदन्तरायेण पराभवेत्तथा कार्यमिति योजना ।

**स नो बहुमतान् राजा बुद्धौ[२] बुद्धिमतां वरः ।**
**यज्ञार्थं पृच्छति[३] व्यक्तं नेति वक्ष्यामहे वयम्	॥ १४ ॥**

**स नो बहुमतान्** इत्यत्र बुद्धौ बहुमतान्नः यज्ञार्थं पृच्छतीति सम्बन्धः।

**दर्शयन्तो बहून् दोषान् प्रेत्य चेह च दारुणान् ।**
**हेतुभिः कारणैश्चैव यथा यज्ञो भवेन्न सः	॥ १५ ॥**

**हेतुभिः कारणैश्चैव** इत्यत्र **हेतुभिः** हिंसात्वादधर्मसाधनमित्याद्यनुमानैः **कारणैः** कृतेऽपि यज्ञे मृतस्य तव पितुः पुनरागमनं न भवतीत्यादिकारणैः ।

**[४] सम्पत्सुधर्ममूला वै व्यसने शान्तिरुत्तमा ।**
**अधर्मोत्तरता नाम कृत्स्नं व्यापादयेज्जगत्	॥ २० ॥**

**सम्पत्सुधर्ममूला** इत्यत्र सम्पत् सुधर्ममूला शोभनधर्म एव मूलं यस्याः सा तथोक्ता ।

॥ इति विंशोऽध्यायः ॥

---

१. केनापि तदन्तरायेण सो.मु.पा.
२. $\tilde{N}_3$,$B_4$,G,M; BORI पृ. १६९; **'बुद्ध्या'** इति कुं पाठः
३. **'प्रक्ष्यति'** इति कुं.पाठः ।
४. $G_1$; BORI पृ. १६९; **'सम्यक्सद्धर्ममूला'** इति कुं पाठः ।

## ।। अथ एकविंशोऽध्यायः ।।

[१] न स यज्ञो न भविता न स राजा तथाविधः ।
जनमेजयः पाण्डवेयो यतोऽस्माकं महद्भयम् ।। ४ ।।

**न स यज्ञो न भविता** इत्यत्र स यज्ञः भवदुक्तविधया न भवितेति न, स राजाऽपि न भवितेति न इति नञावृत्त्या योजनीयम् । भवद्भिर्यज्ञ-विघ्नोऽपि कर्तुं न शक्यते, राजवधोऽपि कर्तुं न शक्यत इति भावः ।

तदिदं [२] दैवमस्माकं भयं पन्नगसत्तमाः ।
दैवमेवाश्रयामोऽत्र शृणुध्वं च वचो मम ।। ६ ।।

**तदिदं दैवमस्माकं भयम्** इत्यत्र दैवं देवाज्जातम् ।

अहं शापे समुत्सृष्टे समश्रौषं वचस्तदा ।
मातुरुत्सङ्गमारूढो भयात्पन्नगसत्तमाः ।
देवानां पन्नगश्रेष्ठास्तीक्ष्णास्तीक्ष्णा इति प्रभो ।। ७ ।।

पितामहमुपागम्य [३] दुःखार्तानां महात्मनाम् ।

देवा ऊचुः –
का हि लब्ध्वा प्रियान् पुत्रान् शपेदेवं पितामह ।
ऋते कद्रूं तीक्ष्णरूपां देववेव तवाग्रतः ।। ९ ।।

**देवानां पन्नगश्रेष्ठा** इत्यत्र पितामहं मम मातुरग्रे आगत्य स्थितं

१. कुं. ३८ अध्यायः
२. BORI पृ. १७१; **'चैत्रमस्माकं'** इति कुं.पाठः ।
३. $G_{2,3}$,$M_{1,5}$ ; BORI पृ. १७२; **'देवा वचनमब्रुवन्'** इति कुं.पाठः ।

पितामहम् **उपागम्य** सहायेनोपागम्य 'इयं कद्रू तीक्ष्णा' इति वदतां दुःखार्तानां महात्मनां देवानां वचः **भयात्** अदृष्टपूर्वब्रह्मादिभयङ्कर-पुरुषदर्शनोत्थभयात् मातुरुत्सङ्गमारूढः स(मा)मश्रौषमिति पूर्वेण सम्बन्धः।

**तथेति च वचस्तस्यास्त्वयाप्युक्तं पितामह।**
**इच्छाम एतद्विज्ञातुं कारणं यन्न वारिता** ॥ १० ॥

**कारणं यन्न वारिता** इत्यत्र **यत्** यस्मात्कारणात् समीपस्थोऽपि त्वं **वारिता** शापस्य निवारयिता न, यद्वा शापकर्त्री सा त्वया **न वारिता** न निवारिता एतत्कारणं विज्ञातुमिच्छाम इति सम्बन्धः। 'यन्न वारितम्' इति पाठे स्पष्टोऽर्थः। 'मातुरुत्सङ्गमारूढः देवानां वचः स(मा)मश्रौषम्' इति वचनात् 'तवाग्रतः' इति वचनात् 'यन्न वारिता' इति वचनात् 'सत्यस्य च तथाग्रतः' इति प्रागुक्तवासुकिवचनाच्च देवैः सह ब्रह्मा शापदानसमये अधार्मिकसर्पनाशाय शापमनुमन्तुं धार्मिक-सर्परक्षणाय शापपरिहारं च सूचयितुं कद्रुगृहं प्रत्यागत इति कथा कथितप्रायेति ज्ञेयम्।

**तस्य पुत्रो जरत्कारोर्भविष्यति तपोधनः।**
**आस्तीको नाम यज्ञं स प्रतिषेत्स्यति तं तदा।**
**तत्र मोक्ष्यन्ति भुजगा ये भविष्यन्ति धार्मिकाः** ॥ १५ ॥

**प्रतिपेत्स्यति तं तदा** इत्यत्र **प्रतिषेत्स्यति** प्रतिषेधं करिष्यति।

॥ इति एकविंशोऽध्यायः ॥

---

१. आदि ३७-५

## ।। अथ द्वाविंशोऽध्यायः ।।

**ब्रह्मोवाच –**

**[१] मयैव तद्वितीर्णं वै वचनं मनसाऽमराः ।**
**एलापत्रेण नागेन यदस्याभिहितं पुरा ।। ८ ।।**

**तत्करोत्वेव नागेन्द्रः [२] काले प्राप्ते वचस्तदा ।**
**विनशिष्यन्ति ये पापाः न तु ये धर्मचारिणः ।। ९ ।।**

**मयैव तद्वितीर्णं वै** इत्यत्र तत् भयं **वितीर्णं** विशेषेण तारितं अत्र सर्पभयमोचने पुरा एलापत्रेण वासुकेः पुरस्तात् यद्वचनमभिहितं तन्मम वचनं **काले** जरत्कारोभार्यापेक्षाकाले प्राप्ते **तदा** तदैव तद्वचः करोतु इति सम्बन्धः । तदा ये पापाः ते विनशिष्यन्ति, ये धर्मचारिणः ते न विनशिष्यन्तीत्युत्तरत्र वा सम्बन्धः ।

**स्वसारमुद्यम्य तदा जरत्कारुमृषिं प्रति ।**
**[३] सर्पान् बहून् जरत्कारोः [४] नित्ययुक्तः समादधात् ।। १३ ।।**

**नित्ययुक्तः समादधात्** इत्यत्र जरत्कारोरर्थे **समादधात्** तत्र तत्र सम्यगादधात् तं मुनिं दृष्ट्वा वक्तुं स्थापितवानित्यर्थः ।

।। इति द्वाविंशोऽध्यायः ।।

---

१. कुं. ३९ अध्यायः

२. $G_{2.3}$ ; BORI पृ. १७४; **'प्राप्तकालं वचः स्वयम्'** इति कुं.पाठः ।

३. S,$G_{2.3}$,$M_{1.5}$ ; BORI पृ. १७४; **'सर्पान् बहून् जरत्कारौ'** इति कुं. पाठः ।

४. **'नित्ययुक्तान्समादधत्'** इति कुं.पाठः ।

## ।। अथ त्रयोविंशोऽध्यायः ।।

सौतिरुवाच –

[१] जरेति क्षयमाहुर्वै दारुणं कारुसंज्ञितम् ।
शरीरं कारु तस्यासीत्तत्स धीमान् शनैः शनैः ।। ३ ।।

**शरीरं कारु तस्यासीत्** इत्यत्र **तस्य** ऋषेः क्षुत्पिपासाद्यायासदातृत्वात् शरीरमेव कारागृहवत् कारु दारुणमासीदिति सम्बन्धः ।

एवमुक्तस्तु धर्मात्मा शौनकः प्राहसत्तदा ।
उग्रश्रवसमामन्त्र्य उपपन्नमिति ब्रुवन् ।। ५ ।।

**उग्रश्रवसमामन्त्र्य** इत्यत्र **उग्रश्रवसं** सूतम् ।

स तेन समनुज्ञातो ब्रह्मणा गृहमेयिवान् ।
सख्योक्तः क्रीडमानेन स तत्र हसता किल ।। २७ ।।

संरब्धः कोपनोऽतीव विपकल्पो मुनेः सुतः ।
उद्दिश्य पितरं तस्य यच्छ्रुत्वा रोषमाहरत् ।
ऋषिपुत्रेण [२] चर्मार्थं कृशेन द्विजसत्तम ।। २८ ।।

**सख्योक्तः क्रीडमानेन** इत्यत्र क्रीडमानेन सख्या **कृशेन** कृशनामकेन ऋषिपुत्रेण सह **चर्मार्थं** कृष्णाजिनार्थं **संरब्धः** कुपितः चर्म देहीत्युक्ते न दिशतीति कुपित इति यावत् । अतीव कोपनः शृङ्गी हसता तेन उक्तः वक्ष्यमाणप्रकारेणोक्तः इति योजना ।

---

१. कुं. ४० अध्यायः
२. '**नर्मार्थे**' इति कुं.पाठः ।

[1] स राजा मृगयां यातः परिक्षिदभिमन्युजः ।
ससार मृगमेकाकी [2] विद्धोऽयान्नष्टवान् मृगः ।
न चापश्यन् मृगं राजा चरंस्तस्मिन् महावने ॥६,७॥

**विद्धोऽयान्नष्टवान् मृग** इत्यत्र विद्धः मृगः नष्टवान् 'नश अदर्शने' इति धातोः नष्टम् अदर्शनं तद्वान् सन्; **अयात्** गतवानिति योजना ।

॥ इति त्रयोविंशोऽध्यायः ॥

## ॥ अथ चतुर्विंशोऽध्यायः ॥

क्षन्तव्यं पुत्र धर्मो हि हतो हन्ति न संशयः ।
यदि राजा न संरक्षेत्पीडा नः परमा भवेत् ॥ २३ ॥

**हतो हन्ति न संशय** इत्यत्र हतः पुरुषः हन्तारं **हन्ति** देहनाशेन वा तपोनाशेन वा हन्ति ।

चरामो विपुलं धर्मं तेषां [3] नाशोऽस्ति धर्मतः ।
सर्वथा वर्तमानस्य राज्ञः क्षन्तव्यमेव हि ॥ २५ ॥

**तेषां नाशोऽस्ति धर्मत** इत्यत्र **तेषां** राज्ञां कदाचित् **धर्मतः** धर्मस्य, सार्वविभक्तिकस्तसिः । नाशोऽस्ति बहुप्रजानां रक्षणे शिक्षणे च क्रियमाणे राज्ञां [4] क्वचिद्धर्मनाशोऽपि भवति । धावतः स्खलनमिव क्वाचित्कधर्मनाशस्तेषां दोषो न भवतीति भावः ।

---

१. कुं. ४१ अध्यायः

२. **'विद्धा बाणेन शीघ्रगम्'** इति कुं.पाठः ।

३. **'भागोऽस्ति'** इति कुं.पाठः ।

४. **क्वचिद्धर्मनाशः** सो.मु.पा.

तेनेह क्षुधितेनैत्य श्रान्तेन मृगलिप्सुना ।
अजानता व्रतमिदं[1] कृतमेतदसंशयम् ॥ ३२ ॥

**व्रतमिदम्** इत्यत्र इदं मौनव्रतमजानता तेन राज्ञा एतत् शवारोपणं कृतमिति सम्बन्धः ।

॥ इति चतुर्विंशोऽध्यायः ॥

## ॥ अथ पञ्चविंशोऽध्यायः ॥

[2] तेन शप्तोऽसि राजेन्द्र पितुरज्ञातमद्य वै ।
तक्षकः सप्तरात्रेण मृत्युस्तव भविष्यति ॥ २० ॥

**पितुरज्ञातमद्य वै** इत्यत्र अज्ञातं यथा भवति तथा ।

॥ इति पञ्चविंशोऽध्यायः ॥

## ॥ अथ सप्तविंशोऽध्यायः ॥

काश्यप उवाच –
[3] दश नागेन्द्र वृक्षं त्वं यद्येतदभिमन्यसे ।
अहमेनं त्वया दष्टं जीवयिष्ये भुजङ्गम ।
पश्य मन्त्रबलं मेऽद्य न्यग्रोधं दश पन्नग ॥ ३ ॥

**दश नागेन्द्र** इत्यत्र वृक्षं दश दंशनं कुर्वित्यर्थः ।

---

१. BORI पृ. १८०; 'कृतं मन्ये व्रतमेतदिदं मम' इति कुं.पाठः ।
२. कुं. ४२ अध्यायः ।
३. कुं. ४३ अध्यायः ।

**ततस्तापसरूपेण प्राहिणोत् स भुजङ्गमान् ।**
**फलपत्रोदकं गृह्य राज्ञे नागोऽथ तक्षकः ॥२३-२४॥**

**फलपत्रोदकं गृह्य** इत्यत्र फ(लं)ले स्वयं सूक्ष्मजन्तुरूपेण अन्तः प्रविश्य तदेव फलं पत्रं उदकं च मुनिरूपान् तान् भुजङ्गमान् **गृह्य** ग्राहयित्वा प्राहिणोदिति शेषं पूरयित्वा योजनीयम् । अन्यथा फलान्तस्तक्षकप्रवेशस्य अनुक्त्या[1] उपरितनकथा निर्मूला स्यात् ।

**सत्यवागस्तु स मुनिः कृमिको[2] मां दशत्वयम् ।**
**तक्षको नाम भूत्वा वै तथा परिहृतं भवेत् ॥ ३३ ॥**

**तथा परिहृतं भवेत्** इत्यत्र **तथा** तेन प्रकारेण ऋषिवाक्यमिति शेषः। परिहृतं भवतु अस्यैव जन्तोस्तक्षकनाम्नि दत्ते अनेन दंशने च कृते 'तक्षको दशतु' इति वाक्यस्यैवमपि परिहारः स्यात् । एवञ्च ऋषिवाक्यमपि सत्यं भवेत् , मम मरणं च न स्यादिति भावः ।

॥ इति सप्तविंशोऽध्यायः ॥

## ॥ अथ त्रिंशोऽध्यायः ॥

**सौतिरुवाच –**
**एतस्मिन्नेव[3] काले तु जरत्कारुर्महातपाः ।**
**चचार पृथिवीं कृत्स्नां यत्रसायङ्गृहो मुनिः ॥ १ ॥**

---

१. अनुक्तत्वात् सो.मु.पा.
२. BORI पृ. १८७ ; **'कृमिर्मां दशतामयम्'** इति कुं.पाठः ।
३. कुं. ४५ अध्यायः ।

**यत्रसायङ्गृहो मुनिः** इत्यत्र यत्र स्थले सायं सायङ्कालो भवति तदेव गृहं यस्य स **यत्रसायङ्गृहः** ।

**एकतन्त्ववशिष्टं वै वीरणस्तम्बमाश्रितान् ।**
**तं तन्तुं च शनैराखुमाददानं बिलेशयम् ॥ ४ ॥**

**वीरणस्तम्बमाश्रितान्** इत्यत्र **वीरणस्तम्बं** कटतृणगुल्मम् औशीरं वा ।

**त्यजेयमप्रिये हित्वा कृते वासं च ते गृहे ।**[1]
**एतद्गृहाण वचनं मया यत्समुदीरितम् ॥ ९ ॥**

**त्यजेयमप्रिये हित्वा कृते वासं च ते गृह** इत्यत्र अप्रिये कृते सति ते गृहे वासं हित्वा त्यजेयमिति सम्बन्धः ।

**तथैव सा च भर्तारं दुःखशीलमुपाचरत् ।**
**उपायैः श्वेतकाकीयैः प्रियकामा यशस्विनी ॥ ११ ॥**

**दुःखशीलमुपाचरत्** इत्यत्र दुःखकरं शीलं यस्येति मध्यमपदलोपी समासः । **उपायैः श्वेतकाकीयैः** इत्यत्र **श्वेतकाकीयैः** अनुकूलैः **उपायैः** भाषितचेष्टिताद्युपायैः । तथाऽऽह वागुरिः 'वदन्ति काकतालीयं दैवात् सम्प्राप्तमेव यत् । तथा च श्वेतकाकीयं अनुकूलार्थवाचकम्' इति ।

**सन्ध्यामुपास्स्व भगवन्नपः स्पृष्ट्वा यतव्रतः ।**
**प्रादुष्कृताग्निहोत्रोऽयं मुहूर्तो रम्यदारुणः ॥ २२ ॥**

---

१. BORI पृ. १९५; 'त्यजेयं विप्रिये च त्वां' इति कुं.पाठः । कुं.४७ अध्यायः

**मुहूर्तो रम्यदारुण** इत्यत्र अग्निहोत्रकरणे रम्यः अकरणे दारुण इति **रम्यदारुणः।**

**अस्तं गन्तुं यथाकालमिति मे हृदि वर्तते।**
**न[1] चाह्यवमतस्येह वासो रोचेत कस्यचित् ॥ २६ ॥**

**न चाह्यवमतस्येह** इत्यत्र अहिरियमाही तस्याः सम्बुद्धिः हे आहि।

**एवमुक्तस्तु स मुनिर्भार्यां वचनमब्रवीत्।**
**यद्युक्तमनुरूपं च जरत्कारूं तपोधनः ॥ ४१ ॥**

**यद्युक्तमनुरूपश्च** इत्यत्र यद्वाक्यं युक्तं तस्याः प्रकृतोपयुक्तं, अनुरूपं स्वस्य गमनानुकूलं च तदब्रवीदिति सम्बन्धः।

॥ इति त्रिंशोऽध्यायः ॥

## ॥ अथ एकत्रिंशोऽध्यायः ॥

**वासुकिरुवाच –**
**[2]जानासि भद्रे यत्कार्यं प्रदाने कारणं च यत्।**
**पन्नगानां हितार्थाय पुत्रः[3] स्यात्ते ततो यदि ॥ ३ ॥**

**पुत्रः स्यात्ते ततो यदि** इत्यत्र ततः त्वद्भर्तुः।

---

१. **'न चाप्यवमतस्येह'** इति कुं.पाठः।

२. कुं. ४८ अध्यायः

३. **'पुत्रस्ते स्यात्ततो यदि'** इति कुं. पाठः।

**[१]दुर्वासतां विदित्वा च भर्तुस्तेऽतितपस्विनः ।**
**नैनमन्वागमिष्यामि कदाचिद्धि शपेत्स माम् ॥ ७ ॥**

**दुर्वासतां विदित्वा च** इत्यत्र दुःखेन एकत्र वासो यस्य सः दुर्वासः तस्य भावः दुर्वासता ताम् ।

**स्वैरेष्वपि [२]ततो नाहं स्मरामि वितथं वचः ।**
**उक्तपूर्वं कुतो राजन्साम्पराये स वक्ष्यति ॥ ११ ॥**

**स्वैरेष्वपि ततो नाहम्** इत्यत्र **स्वैरेषु** स्वेच्छानुसारेण मया सह विलासेष्वपि **ततः** तेन मुनीश्वरेण **उक्तपूर्वं** मन्मनोरञ्जनाय पूर्वमुक्तं **वितथं** अनृतं वाक्यं न स्मरामि । **साम्पराये** मम मोक्षणकाले वितथं वाक्यं कुतो वा वक्ष्यति । गमनकाले [३]मयि [४]प्रेमाभावः, मत्प्रियायोक्तत्वादपीदं वाक्यमनृतं नेति भावः ।

**सान्त्वमानार्थदानैश्च पूजया चारुरूपया ।**
**सोदर्यां पूजयामास स्वसारं पन्नगोत्तमः ॥ १५ ॥**

**सान्त्वमानार्थदानैश्च** इत्यत्र **सान्त्वं** सामवचनं, **मानः** [५]सन्मानः ।

**॥ इति एकत्रिंशोऽध्यायः ॥**

---

१. BORI पृ. १९८ ; '**दुर्वार्यतां**' इति कुं.पाठः ।
२. $G_{1.5}$ ; BORI पृ. १९९; '**न तेनाहं**' इति कुं.पाठः ।
३. **मयि प्रेमाभावाभिप्रायेणोक्तत्वादपीदं** इति सो.मु.पा.
४. **प्रेमाभावात्** सो.मु.पा.
५. **सम्मानः** सो.मु.पा.

## ।। अथ द्वात्रिंशोऽध्यायः ।।

**जनमेजय उवाच–**

**[१]जानन्ति स्म भवन्तस्तद्यथावृत्तं पितुर्मम ।**
**आसीद्यथा स निधनं गतः काले महायशाः ।। ३ ।।**

**आसीद्यथा च निधनं गत** इत्यत्र यथा निधनं गत आसीदिति सम्बन्धः ।

**समः सर्वेषु भूतेषु प्रजापतिरिवाभवत् ।**
**ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव स्वकर्मसु ।। १० ।।**
**स्थिताः सुमनसो राजंस्तेन राज्ञा [२]स्वनुष्ठिताः ।**
**विधवानाथविकलान् कृपणांश्च बभार सः ।। ११ ।।**

**तेन राज्ञा स्वनुष्ठिता** इत्यत्र तेन राज्ञा(क)कारणेन सु शोभने कर्मण्येव अनु अनुकूलतया स्थिताः स्थापिताः सन्तः स्वकर्मसु स्थिता इति पूर्वेणान्वयः ।

**प्रजा इमास्तव पिता षष्टिवर्षाण्यपालयत् ।**
**ततो दिष्टान्तमापन्नः [३]सर्पेणानतिवर्तिना ।। १७ ।।**

**ततो [४]दिष्टान्तमापन्न** (इति पाठे) इत्यत्र **दिष्टान्तं** नाशम् । [५]'दिष्टान्तः

---

१. कुं. ४९ अध्यायः
२. BORI पृ. २०१; **'स्वधिष्ठिताः'** इति कुं.पाठः ।
३. $T_2$,G,$M_{2.4}$ ; BORI पृ. २०१; **'सर्वेषां दुःखमावहन्'** इति कुं.पाठः ।
४. **दिष्टान्तमापेदे** सो.मु.पा.
५. अ.को. २-८-११६

प्रलयो(प्य)त्ययः' इत्यमरः । **सर्पेणानतिवर्तिना** इत्यत्र **अनतिवर्तिना** शृङ्गिऋषेर्वचनं अतिवर्तितुं उल्लङ्घयितुमशक्तेन ।

**ततस्त्वं पुरुषश्रेष्ठ धर्मेण प्रतिपेदिवान् ।**
**इदं वर्षसहस्राय[1] राज्यं कुलधरागतम्[2] ।**
**बाल एवाभिजातोऽसि[3] सर्वभूतानुपालकः ॥ १८ ॥**

**इदं वर्षसहस्राय** इत्यत्र पाण्डवेभ्यः उपरि क्षेमकपर्यन्तं **वर्षसहस्राय** वर्षसहस्रपर्यन्तं **कुलधरागतं** कुलधरेभ्यः तव प्रपितामहेभ्यः आगतम् इदं राज्यं प्रति त्वं बाल एवाभिजातोऽसीति सम्बन्धः ।

**स तं पप्रच्छ राजेन्द्रो मुनिं मौनव्रते स्थितम् ।**
**न च किञ्चिदुवाचेदं स मुनिः पृच्छतोऽपि सन्[4] ॥ २७ ॥**

**स मुनिः पृच्छतोऽपि सन्** इत्यत्र पृच्छतोऽपि राज्ञः सन्नुत्तमः स मुनिः किञ्चिन्नोवाच ।

**॥ इति द्वात्रिंशोऽध्यायः ॥**

## ॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

**[5]जितेन्द्रियं विशुद्धं च स्थितं कर्मण्यथाद्भुतम् ।**
**तपसा द्योतितात्मानं स्वेष्वङ्गेषु युतं[6] तथा ॥ ६ ॥**

१. BORI पृ. २०२ ; **'वर्षसहस्राणि'** इति कुं.पाठः ।
२. $G_1$,$M_{2.4}$ ; BORI पृ. २०२; **'कुरुकुलागतम्'** इति कुं.पाठः ।
३. BORI पृ. २०२; **'एवाभिषिक्तस्त्वं'** इति कुं.पाठः ।
४. BORI पृ. २०२; **'पृष्टोऽपि स मुनिस्तदा'** इति कुं.पाठः ।
५. **कुं. ५० अध्यायः** ; ६. **'यतं तदा'** इति कुं.पाठः ।

**स्वेष्वङ्गेषु युतं[1] तथा** इत्यत्र **स्वेष्वङ्गेषु** शिक्षाकल्पादिषडङ्गेषु ।

**तस्मिन् प्रतिगते विप्रे तक्षकच्छद्मनाऽऽकृतः[2] ।**
**तं नृपं नृपतिश्रेष्ठं पितरं धार्मिकं तव ॥ २८ ॥**

**तक्षकच्छद्मनाऽऽकृत** इत्यत्र च्छद्मना **आकृतः** आकारवान् जन्त्व-न्तराकारवानित्यर्थः ।

**सौतिरुवाच –**

**मन्त्रिणां तु वचः श्रुत्वा स राजा जनमेजयः ।**
**पर्यतप्यत दुःखार्तः पर्यपिङ्क्षत्करे करम्[3] ॥ ४४ ॥**

**पर्यपिङ्क्षत्करे करम्** इत्यत्र करे करं निधाय **पर्यपिङ्क्षत्** पेषणं कृतवान् ।'पिष पेषणे' इति धातोर्लुङि रूपम् ।

**इयं दुरात्मता तस्य काश्यपं यो न्यवर्तयत् ।**
**यद्यागच्छेत्स वै विप्रो ननु जीवेत्पिता मम ॥ ५० ॥**

**ननु जीवेत्पिता मम** इत्यत्र **जीवेत्** काश्यपप्रभावेन जीवेत् इति योजना ।

**परिहीयेत किं तस्य यदि जीवेत्स पार्थिवः ।**
**काश्यपस्य प्रयोगेण[4] मन्त्रिणः सुनयेन[5] च ॥ ५१ ॥**

---

१. यतं सो.मु.पा. २. **'छद्मनोपेत्यताक्षकः'** इति कुं.पाठः ।
३. $G_{1,2,4,5}$,$M_{2,4}$; BORI पृ. २०७; **'प्रत्यपिंपत्करं करे'** इति कुं.पाठः ।
४. $N_{1,3}$, S; BORI पृ. २०७; **'प्रसादेन'** इति कुं.पाठः ।
५. $N_{1,3,5}$; BORI पृ. २०७; **'मन्त्रिणां विनयेन'** इति कुं.पाठः ।

**काश्यपस्य प्रयोगेण** इत्यत्र **सुनयेन** मम पितुः शोभनविनयेन विनयदर्शिनेनेति यावत् । **मन्त्रिणः** मन्त्रशक्तिमतः काश्यपस्य **प्रयोगेण** मन्त्रप्रयोगेण यदि जीवेदिति सम्बन्धः ।

**उत्तङ्कस्य प्रियं कर्तुमात्मनश्च महत्प्रियम् ।**
**भवतां चैव सर्वेषां गच्छाम्यपचितिं पितुः** ॥ ५४ ॥

**अपचितिं पितुः** इत्यत्र **अपचितिः** पूजा । [1]'पूजा नमस्याऽपचितिः' इत्यमरः ।

॥ इति त्रयस्त्रिंशोऽध्यायः ॥

## ॥ अथ चतुस्त्रिंशोऽध्यायः ॥

[2]**राजानं दीक्षयामासुः सर्पसत्राप्तये तदा ।**
**इदं चासीत्तत्र पूर्वं सर्पसत्रे भविष्यति** ॥ १३ ॥

**निमित्तं महदुत्पन्नं यज्ञविघ्नकरं तदा** ॥ १४ ॥

**इदं चासीत्तत्र पूर्वं सर्पसत्रे भविष्यति** इत्यत्र सर्पसत्रे उपरि भविष्यति सति **पूर्वं** यज्ञशालाकरणसमये **इदं** स्थपतिना वक्ष्यमाणं **यज्ञविघ्नकरं** यज्ञविघ्नसूचकं निमित्तमुत्पन्नमासीदिति योजना ।

**स्थपतिर्बुद्धिसम्पन्नो वास्तुविद्याविशारदः ।**
**इत्यब्रवीत्सूत्रधारः सूतः पौराणिकस्तदा** ॥ १५ ॥

**इत्यब्रवीत्सूत्रधार** इत्यत्र **सूत्रधारः** रथरश्मिरूपसूत्रधारः नौकासूत्रधारो वा। **पौराणिको** वृद्धः सूतः लोहिताक्षनामको जनमेजयसारथिः

---

१. अ.को. २-७-३४ ; २. कुं. ५१ अध्यायः

राजानं प्रति **स्थपतिः** कारुः, 'स्थपतिः कारुभेदे च'[१] इत्यमरः । यज्ञायतने क्रियमाणे वचोऽब्रवीदित्यब्रवीत् । अनिष्टवार्तां स्वयमेव वक्तुमशक्तः स्थपतिः वृद्धसारथिमुखेन वाचितवानि[२]ति भावः ।

**एतच्छ्रुत्वा तु राजासौ प्राग्दीक्षाकालमब्रवीत् ।**
**क्षत्तारं न हि मे कश्चिदज्ञातः प्रविशेदिति ॥ १७ ॥**

**प्राग्दीक्षाकालम्** इत्यत्र समुद्रस्य मध्ये मध्येसमुद्रमितिवत् दीक्षा-कालात्प्राक् प्राग्दीक्षाकालम् । 'क्षत्ता स्यात्सारथौ द्वास्स्थे'[३] इत्यभि-धानात् **क्षत्तारं** द्वारपालम् ।

[४]**विस्फुरन्तः श्वसन्तश्च वेष्टयन्तः परस्परम् ।**
**पुच्छैः शिरोभिश्च भृशं चित्रभानुं प्रपेदिरे ॥ ५ ॥**

**पुच्छैः शिरोभिः** इत्यत्र पुच्छैः शिरोभिश्च **वेष्टयन्तः** इतस्ततः कम्पनं कुर्वन्त इत्यर्थः । सङ्कटे प्राप्ते शिरःकम्पनं बालचालनं च सर्पाणां जातिरिति भावः ।

**क्रोशयोजनमात्रा हि गोकर्णस्य प्रमाणतः ।**
**पतन्त्यजस्रं प्र[५]थमं अश्मावग्निमतोऽपरे ॥ ७ ॥**

**गोकर्णस्य प्रमाणत** इत्यत्र [६]'प्रादेशतालगोकर्णास्तर्जन्यादियुते तते' इत्यभिधानात् विस्तृताङ्गुष्ठाग्रादारभ्य अनामिकाग्रपर्यन्तं यत्प्रमाणं तद्गोकर्णस्य प्रमाणम् । अतिसूक्ष्माश्च पतन्तीत्यर्थः । **अश्मौ** अश्मात्य-

---

१. अ.को. ३-३-६१ ; २. सूचितवान् सो.मु.पा.
३. अ.को. ३.३.६३ ; ४. कुं. ५२ अध्यायः
५. 'अंगेन वह्नावग्निमतां वर' इति कुं.पाठः । ; ६. अ.को. २-६-८३

नेनाग्निरित्यश्निः स्रुक्, तस्यां प्रथमं प्रपतन्ति; अतः अग्निम् । **अपरे** अन्येऽप्येवमेव पतन्तीति योजना ।

**[१]उन्दुरा इव तत्रान्ये हस्तिहस्ता इवापरे ।**
**मत्ता इव च मातङ्गा महाकाया महाबलाः ॥ ९ ॥**

**[२]उन्दुरा इव तत्रान्य** इत्यत्र *उन्दुराः मूषिकाः [३]'आखुर्वृषो मूषिकः *स्यादुन्दुरः कनकाह्वये' इति हलः ।

॥ इति चतुस्त्रिंशोऽध्यायः ॥

## ॥ अथ पञ्चत्रिंशोऽध्यायः ॥

**[४]दह्यन्तेऽङ्गानि मे भद्रे [५]दिशो न प्रतिभान्ति माम् ।**
**सीदामीव च संमोहाद्घूर्णतीव च मे मनः ॥ २१ ॥**

**दिशो न प्रतिभान्ति माम्** इत्यत्र मां प्रति दिशो न प्रतिभान्ति ।

**तद्वत्से ब्रूहि वत्सं [६]तदास्तीकं वृद्धसम्मतम् ।**
**ममाद्य त्वं सभृत्यस्य मोक्षार्थं वेदवित्तमम् ॥ २६ ॥**

**तदास्तीकम्** इत्यत्र स चासावास्तीकस्तदास्तीकस्तम् । 'तमास्तीकम्' इति पाठे स्पष्टोऽर्थः ।

॥ इति पञ्चत्रिंशोऽध्यायः ॥

---

१. **'तुरगा'** इति कुं.पाठः ।
२. **'इन्दुराः ।** इन्दुराः इति '*' चिह्नितस्थलेषु च ।' सो.मु.पा.
३. ह.को. २.२३५. **'खनकस्तथा'** इति मुद्रितकोशेषु ।
४. कुं. ५३ अध्यायः ; ५. BORI पृ. २१३; **'न दिशः'** इति कुं.पाठः ।
६. **'स्वं कुमारं'** इति कुं.पाठः ।

## ।। अथ षट्त्रिंशोऽध्यायः ।।

[१] उच्चैःश्रवसोऽश्वराज्ञो यन्मिथ्या कुरुतेह मा ।
विनतार्थाय पणिते दासभावाय पुत्रकाः ।। ६ ।।

**उच्चैश्श्रवसोऽश्वराज्ञो यन्मिथ्या कुरुतेह मा** इत्यत्र **यत्** यस्मात् कारणात् **इह** उच्चैःश्रवसः पुच्छे **मिथ्या** मिथ्याभूतं नीलिमानं **मा कुरुत** न कृतवन्त इति योजना ।

प्रागेवानागते काले [२] तत्र त्वं मय्यजायथाः ।
अयं स कालः सम्प्राप्तो भयान्नस्त्रातुमर्हसि ।। १५ ।।

**प्रागेवानागते काल** इत्यत्र **तत्र** तस्मिन् **काले** सर्पयागकाले अनागते सति प्रागेव त्वमजायथाः ।

भ्रातरं चापि मे तस्मात् त्रातुमर्हसि पावकात् ।
[३] अमोघं नः कृतं न स्यात् यदहं तव धीमते ।
पित्रे दत्ता विमोक्षार्थं कथं वा पुत्र मन्यसे ।। १६ ।।

**अमोघं नः कृतं न स्यात्** इत्यत्र यदि त्वमिदं न करोषि तर्हि नः कृतं अमोघं न स्यात्, किन्तु मोघमेव स्यादित्यर्थः ।

स सम्भवाय नागेन्द्र मयि सर्वं महामते ।
न ते मयि मनो जातु मिथ्या भवितुमर्हति ।। २२ ।।

---

१. कुं. ५४ अध्यायः ; 'उच्चैःश्रवाः सोऽश्वराजो यन्मिथ्या न कृतो मम' इति कुं.पाठः ।

२. BORI पृ. २१५ ; 'तस्मात्त्वं' इति कुं.पाठः ।

३. 'न मोघं तु कृतं तत्स्याद्यदहं' इति कुं.पाठः ।

**न ते मयि मनो जातु मिथ्या भवितुमर्हति** इत्यत्र मयि इयं शक्तिर्मिथ्येति ते मनो भवितुं नार्हतीति योजना ।

**वासुकिरुवाच –**

**आस्तीक परिघूर्णामि हृदयं मे विदीर्यते ।**
**दिशो न प्रतिजानामि ब्रह्मदण्डेन[1] पीडितः ॥ २३ ॥**

**ब्रह्मदण्डेन पीडित** इत्यत्र ब्रह्मभिः चण्डभार्गवादिब्राह्मणैः क्रियमाणदण्डेन दण्डनेन शिक्षयेति यावत् ।

**ब्रह्मदण्डं महाघोरं कालाग्निसमतेजसम् ।**
**नाशयिष्यामि मान्यस्त्वं[2] भयं कार्षीः कदाचन[3] ॥ २५ ॥**

**मान्यस्त्वं भयं कार्षीः** इत्यत्र त्वं मम अन्यो मा; किन्तु मातुलः। अत एव मान्यः । तस्मात्कदाचन भयं मा कार्षीरिति योजना ।

**सौतिरुवाच –**

**ततः स वासुकेर्घोरमपनीय मनोऽज्वरम् ।**
**आधाय चात्मनोऽङ्गेषु जगाम त्वरितो भृशम् ॥ २६ ॥**

**आधाय चात्मनोऽङ्गेषु** इत्यत्र आत्मनः **अज्वरं** भाविकार्यशङ्काज्वररहितं मनः **अङ्गेषु** षडङ्गेषु आधाय अग्न्यादींस्तोतुं शिक्षाकल्पव्याकरणादीन् स्मरन्नेव **भृशं** त्वरितः जगामेति मनोऽज्वरपदस्यावृत्त्या

---

१. $D_5$,$G_1$,$M_{(except\ M1.5)}$ ; BORI पृ. २१६; **'ब्रह्मदण्डनिपीडितः'** इति कुं.पाठः ।

२. **'माऽत्र त्वं'** इति कुं पाठः ।

३. **'कथञ्चन'** इति कुं. पाठः ।

उत्तरार्धस्य योजना। यद्वा स्तोत्राङ्गभूतवाक्कौशलेषु सर्पयागस्तुत्यङ्गभूतेषु पुण्यश्लोकचक्रवर्तियज्ञेषु **आत्मनः** परमात्मनः **अङ्गेषु** करचरणाद्यङ्गेषु वा अज्वरं मनः आधायेति योजना।

॥ इति षट्त्रिंशोऽध्यायः ॥

## ॥ अथ सप्तत्रिंशोऽध्यायः ॥

**[१]कृष्णस्य यज्ञः सत्यवत्याः सुतस्य**
**[२]स्वयं स्वकर्म प्रचचार यत्र।**
**तथा यज्ञोऽयं तव भारताग्र्य**
**पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः** ॥ ७ ॥

**स्वयं स्वकर्म प्रचचार यत्र** इत्यत्र **यत्र** यज्ञे **स्वकर्म** स्वपूजात्मकं यज्ञकर्म स्वयमेव **प्र** प्रचयाय **चचार** कृतवान्। अनेन लोकशिक्षार्थं यज्ञकरणात् यज्ञभोक्तृत्वाच्च व्यासो न ऋषिमात्रं, किन्तु साक्षान्नारायण इति सूचितम्।

**इमे च ते सूर्यसमानवर्चसः**
**· समासते वृत्रहणः क्रतुं यथा।**
**नैषां [३]यज्ञो विद्यते [४]ज्ञानमत्या-**
**दानं चैभ्यो न प्रणश्येत् कदाचित्** ॥ ८ ॥

---

१. कुं. ५५ अध्यायः
२. $G_1$ ; BORI पृ. २१७; **'स्वयं च कर्म प्रचकार यत्र'** इति कुं.पाठः।
३. **'ज्ञातुं'** इति कुं.पाठः।
४. **'ज्ञानमद्य दत्तं येभ्यो'** इति कुं.पाठः।

**नैषां यज्ञो[1] विद्यत** इत्यत्र एषां यो[2] यज्ञो विद्यते, सोऽपि अन्तरायादिना न प्रणश्येत्। एभ्यः[3] **ज्ञानमत्यादानम्** अपरोक्षपरोक्षज्ञानयोरादानं च न प्रणश्येदिति योजना।

**दम्भोद्भवेनासि समो बलेन**
**रामो यथा शस्त्रविदस्त्रविच्च।**
**और्वात्रिजाभ्यामसि तुल्यतेजा**
**दुष्प्रेक्षणीयोऽसि भगीरथेन** ॥ १६ ॥

**और्वात्रिजाभ्यामसि तुल्यतेजा दुष्प्रेक्षणीयोऽसि[4] भगीरथेन** इत्यत्र भगीरथेन तुल्यतेजास्त्वं, भगी भाग्यवान्, 'रथ गतौ' इति धातोः दूरादागतेन मया दुष्प्रेक्षणीयोऽसीति योजना।

॥ इति सप्तत्रिंशोऽध्यायः ॥

## ॥ अथ अष्टत्रिंशोऽध्यायः ॥

**सदस्या ऊचुः –**
**[6]बालोऽपि विप्रो मान्य एवेह राज्ञा**
**यश्चाविद्वान्यश्च विद्वान्यथावत्।**
**प्रसादयैनं त्वरितो नरेन्द्र**
**द्विजातिवर्यं सकलार्थसिद्धये।**

---

१. **योगज्ञो** सो.मु.पा. ; २. **योगज्ञो** सो.मु.पा.; ३. **येभ्यः** सो.मु.पा.
४. **उत्प्रेक्षणीयोऽसि** सो.मु.पा.
५. **उत्प्रेक्षणीयः** सो.मु.पा.
६. कुं. ५६ अध्यायः

**सर्वान्कामांस्त्वत्त एवार्हतेऽद्य**
**यथा च नस्तक्षक एति शीघ्रम्** ॥ २ ॥

**सर्वान् कामांस्त्वत्त एवार्हतेऽद्य** इत्यत्र तक्षकः यथा शीघ्रं **एति** आयाति तथा सर्वान् कामान् अर्हते । तक्षकानागमनमपि अस्मै वरं न देहीति भावः । अथवा तक्षकः यथा **एति** गच्छति तथा सर्वान् कामानर्हते तुष्टेन राज्ञा विप्राय किं न देयम् । अतस्तक्षकमोक्षणमपि दिशसि चेद्दिशेति भावः ।

**पुराणमागम्य ततो ब्रवीम्यहं**
**दत्तं तस्मै वरमिन्द्रेण राजन् ।**
**वसेह त्वं मत्सकाशे सुगुप्तो**
**न पावकस्त्वां प्रदहिष्यतीति** ॥ ७ ॥

**पुराणमागम्य ततो ब्रवीम्यहम्** इत्यत्र पुराणि नानापत्तनानि अणति तत्रत्यवार्तां वेत्तुं[१] गच्छतीति **पुराणः** अमरावतीवार्तां ज्ञात्वा आगतः चारः तम् **आगम्य** प्राप्य **ततः** तन्मुखात् **पुराणं** पूर्वेद्युर्जातं प्रमेयम् **आगम्य** अवगम्य अहं ब्रवीमीत्यर्थः । अत एव प्राचीनवार्तायाः पुराणमिति लो(क)के प्रवादः । महापुराणमपि प्राचीनवार्तारूपत्वादेव हि पुराणम् ।

**हूयमाने तथा चैव तक्षकः सपुरन्दरः ।**
**आकाशे ददृशे तत्र क्षणेन व्यथितस्तदा** ॥ १४ ॥

**हूयमाने तथा चैव** इत्यत्र **हूयमाने** 'आजुहाव' इति प्रागुक्तत्वादाहूयमाने इत्यर्थः ।

---

१. श्रांतुं सो.मु.पा.

**पुरन्दरस्तु तं यज्ञं [१] दृष्ट्वा तु भयमाविशत् ।**
**हित्वा तु तक्षकं त्रस्तः स्वमेव भवनं ययौ ॥ १५ ॥**

**तं यज्ञं दृष्ट्वा तु भयमाविशत्** इत्यत्र **भयमाविशत्** इत्यस्य भयाब्धौ मग्न इति भावः ।

॥ इति अष्टत्रिंशोऽध्यायः ॥

## ॥ अथ चत्वारिंशोऽध्यायः ॥

**[२] सायं प्रातः [३] पन्नगेन्द्रा नरेन्द्राः**
**लोके विप्रा मानवाश्चेतरेऽपि ।**
**धर्माख्यानं ये पठेयुर्ममेदं**
**तेषां युष्मन्नैव किञ्चिद्भयं स्यात् ॥ २१ ॥**

**सायं प्रातः पन्नगेन्द्रा** इत्यत्र पन्नगेन्द्रा इति सम्बोधनम् ।

**यो जरत्कारुणा जातो जरत्कारौ महायशाः ।**
**आस्तीकः सर्पसत्रे वः पन्नगान्योऽभ्यरक्षत ।**
**[४] इतिस्मरं महानागा न मां हिंसितुमर्हथ ॥ २४ ॥**

**इतिस्मरं महानागा** इत्यत्र इति **स्मरः** स्मरणं यस्य सः तं इतिस्मरम् ।

**[५] तमप्याकाशगोचरे** इत्यत्र आकाशे **गवि** भूमौ च **चरे** भवतां सञ्चारे सति हिंसितुं नार्हथेति पूर्वेणान्वयः ।

---

१. **'दृष्ट्वोरु'** इति कुं.पाठः । ; २. **कुं. ५६ अध्यायः**

३. $G_1, M_3$ ; BORI पृ. २२९; **'ये प्रसन्नात्मरूपा'** इति कुं.पाठः ।

४. **'तं स्मरन्तं महाभागा'** इति कुं.पाठः ।

५. एतत्प्रतीकघटितश्लोको मुद्रितकोशेषु नोपलभ्यते ।

**मोक्षयित्वा तु भुजगान् सर्पसत्राद्द्विजोत्तमः ।**
**जगाम काले धर्मात्मा दिष्टान्तं पुत्रपौत्रवान्** ॥ २९ ॥

**दिष्टान्तं पुत्रपौत्रवान्** इत्यत्र **दिष्टान्तो** नाशः । [1]'दिष्टान्तः प्रलयोऽत्ययः' इत्यमरः ।

**श्रुत्वा धर्मिष्ठमाख्यानमास्तीकं पुण्यवर्धनम् ।**
**सर्वपापविनिर्मुक्तो दीर्घमायुरवाप्नुयात्** ॥ ३४ ॥

**श्रुत्वा [2]धर्मिष्ठमाख्यानम्** इत्यत्र श्रुत्वा **पुण्यवर्धनं** पुण्यस्याभिवर्धनं भवतीति योग्यक्रियाध्याहारेण योजना ।

॥ इति श्रीमन्महाभारते आदिपर्वण्यास्तीके श्रीभाविसमीरवादिराजपूज्यचरणविरचितलक्षालङ्काराख्यटीकायां चत्वारिंशोऽध्यायः ॥

॥ आस्तीकपर्व समाप्तम् ॥

# अंशावतरणपर्व

## ॥ अथ प्रथमोऽध्यायः ॥

**[3]यन्नातितपसा कश्चिन्न वेदाध्ययनेन च ।**
**न व्रतैर्नोपवासैश्च न [4]प्रशान्त्या न मन्युना** ॥ ४ ॥

---

१. अ.को. २-८-११६.

२. धर्मसमाख्यानं सो.मु.पा.

३. कुं. ६० अध्यायः

४. $D_{2,5}$,S ; BORI पृ. २३३; 'प्रसूत्या' इति कुं.पाठः ।

**यन्नाति तपसा कश्चिन्न वेदाध्ययनेन च** इत्यत्र **अति** अत्येति । 'उपसर्गाश्च क्रियासन्निधाने सति तद्विशेषका भवन्ति, असन्निधाने तु ससाधनां क्रियामाहुः' इति वचनात् अतीत्युपसर्गोऽयं तिङ्साधन-सहितां क्रियां वक्ति । **तपसा** आलोचनेन दुर्वादिनां मनस्सन्ताप-करणेन वा । **वेदाध्ययनेन** वेदानां **अधि** अधिकतया, 'अय पय गतौ' इति धातोः **अयनेन** ज्ञानेन ब्रह्मणः सकलवेदार्थवेदित्वेऽपि व्यासज्ञान-वत् स्पष्ट(त्वा)ताभावान्न साम्यम् । [1]'वेदो वेदविदव्यङ्गः' इति वचनात् वेदनामक भगवज्ज्ञानेन वा । यद्वा, वेदानाम् आधिः मनोव्यथस्थानीया उत्सन्नता अप्रमाणता अनित्यता पौरुषेयता चेत्यादिः, [2]तस्य **अयनेन** त्याजनेन, वेदानां सकलविद्याभ्यः **अधि** आधिक्यस्य **अयनेन** प्रापणेन वा । **व्रतैः** कल्पे कल्पे भारतपुराणब्रह्मसूत्रादिग्रन्थकरणव्रतैः । **उपवासैः** सकलचेतनाचेतनात्मकजगतः उप समीपे वासैः, ब्रह्मणः शतवर्षपर्यन्तं प्रलये अन्नाद्यनपेक्षणेन स्थितावपि देहपुष्टेरन्यूनत्वादुपवासैर्वा । **प्रशान्त्या** भृगुणा स्व(पा)पदेनैव वक्षस्ताडने सति सोढ्वैव स्थितत्वात् प्रकृष्टया **शान्त्या** क्षमया । **मन्युना** मननानुकूलचेतोव्यापारेण, अनाद्यनन्त-कालेऽपि अयोग्येष्वेव नियमेन क्रियमाणेन योग्येष्वपि सत्यपराधे सानुग्रहं क्रियमाणेन च कोपेन वा ।

**पाद्यमाचनीयं च [3]राज्यं गां च विधानतः ।**
**पितामहाय कृष्णाय तदर्हाय न्यवेदयत्** ॥ १३ ॥

---

१. **वि.सहस्रनाम, अनुशासनपर्व - ४९ अध्यायः ।**
२. **तस्याः** सो.मु.पा.
३. $K_{0-2}$,M ; BORI पृ. २३४; **'अर्घ्यं'** इति कुं.पाठः ।

**राज्यं गां च विधानत** इत्यत्र **गां** प्रियवाक्यं बहुक्षीरवर्ती धेनुं वा ।

**भगवानपि तं दृष्ट्वा कुशलं प्रतिवेद्य च ।**
**सदस्यैः पूजितः सर्वैः सदस्यानभ्यपूजयत्[1] ॥१६॥**

**सदस्यानभ्यपूजयत्** इत्यत्र **अभि** स्वाभिमुख्येन अपूजयत्, तां पूजामपि अन्तर्यामिणः स्वस्यैवाकरोदिति यावत् । 'महसि महीयसे च' इति श्रुतिः ।

**ततस्तु सहितस्सर्वैः[2] कथान्ते जनमेजयः ।**
**इदं पश्चाद्विजश्रेष्ठं पर्यपृच्छत्कृताञ्जलिः ॥ १७ ॥**

**कथान्ते जनमेजय** इत्यत्र **कथान्ते** कथामध्ये ।

॥ इति **प्रथमोऽध्यायः** ॥

## ॥ अथ द्वितीयोऽध्यायः ॥

**सौतिरुवाच –**

**[3]तस्य तद्वचनं श्रुत्वा कृष्णद्वैपायनस्तदा ।**
**शशास शिष्यमासीनं वैशम्पायनमन्तिकात्[4] ॥ २१ ॥**

**वैशम्पायनमन्तिकात्** इति पाठे स्पष्टोऽर्थः । 'वैशम्पायनमुक्तवान्' इति पाठे, **उक्तवान्** उक्तं वचनं, तद्वान् प्रशस्तवचनवानित्यर्थः ।

---

१. BORI पृ. २३४; **'सदस्यान्प्रत्यपूजयत्'** इति कुं.पाठः ।
२. **'सदस्यैः'** इति कुं.पाठः ।
३. कुं.पाठानुसारेण पूर्वाध्याय एव अनुसरति ।
४. $G_{2,4,5}$, $M_3$ ; BORI पृ. २३५; **'वैशम्पायनमन्तिके'** इति कुं.पाठः ।

**[१]श्रोतुं पात्रं च राजंस्त्वं प्राप्येमां भारतीं [२]शुभाम् ।**
**[३]गुरोर्वक्तुं परिस्पन्दो मुदा प्रोत्साहयतीव माम् ॥ ४ ॥**

**प्राप्येमां भारतीं शुभाम्** इत्यत्र **गुरोः** व्यासात् शुभामिमां **भारतीं** जनमेजयाय कथां वदेत्याज्ञारूपवचनं प्राप्य **मुदा** सन्तोषेण जातः **परिस्पन्दः** दक्षभुजादिषु चलनं, परितः रोम्णां स्पन्दः चलनं रोमाञ्चो वा । 'मे' इति पाठे मे परिस्पन्द इति सम्बन्धः । **वक्तुं** उपरितनकथां वक्तुं मां **प्रोत्साहतीव** अन्तर्णीतणिजर्थत्वात् प्रोत्साहयतीव प्रकर्षेणो-त्साहवन्तं करोतीव । सच्छिष्यलाभात् शकुनाच्च वदानीत्युल्लासो जायत इति भावः ।

**प्रमाणकोट्यां संसुप्तं पुनर्बद्ध्वा वृकोदरम् ।**
**तोयेषु भीमं गङ्गायाः प्रक्षिप्य [४]पुनराव्रजन् ॥ १२ ॥**

**प्रक्षिप्य पुनराव्रजन्** इत्यत्र **आव्रजन्** स्वपुरं प्रत्यागताः ।

**यदा विबुद्धः कौन्तेयस्तदा [५]संच्छिद्य बन्धनान् ।**
**उदतिष्ठन्महाबाहुर्भीमसेनो गतव्यथः ॥ १३ ॥**

**तदा संच्छिद्य बन्धनान्** इत्यत्र बध्नन्तीति **बन्धनाः** पाशाः तान् ।

---

१. कुं. ६१ अध्यायः
२. $K_4$,$\tilde{N}_3$,$M_5$ ; BORI पृ. २३६; **'कथाम्'** इति कुं.पाठः ।
३. BORI पृ.२३६; **'गुरोर्वक्त्रपरिस्पन्दो मनः प्रोत्साहतीव मे'** इति कुं.पाठः ।
४. $\tilde{N}_3$,$D_5$,T,G ; BORI पृ. २३६; **'पुरमाव्रजत्'** इति कुं.पाठः ।
५. **'संच्छिद्य बन्धनम्'** इति कुं.पाठः ।

**स[1] तेषां विप्रकारेषु तेषु तेषु महाकविः[2] ।**
**मोक्षणे प्रतिघाते[3] च विदुरः प्रहितोऽभवत्[4] ॥ १५ ॥**

**स तेषां विप्रकारेषु** इत्यत्र तेषु तेषु **विप्रकारेषु** विषदानादिरूपेषु विरुद्धप्रकारेषु कृतेषु सत्सु महान् कविः सः विदुरः **प्रतिघाते** विषदाने सर्पदंशने च इच्छाव्यक्त्या[5] स्वमूलरूपात् विषनिर्हरणशक्त्याकर्षणेन विषा(द्य)ख्यापकारस्यैव नाशने, भीमस्य ततः मोक्षणे च; प्रमाणकोटौ श्वासनिरोधशक्तेः पाशच्छेदनशक्तेश्चाकर्षणेन जलाद्यपकारस्यैव नाशने, भीमस्य सुखेनैव परावृत्यागमनाख्यमोक्षणे च; लाक्षागृहे अग्निना लाक्षागृहाद्यपकारस्यैव नाशने, गुहाद्वारा मात्रा सह पञ्चानामपि सुखेन मोक्षणे च **प्रहितः** प्रकर्षेण पाण्डवानां हितः अभवदिति सम्बन्धः ।

**यदा तु विविधोपायैः संवृतैर्विवृतैरपि ।**
**नाशकद्विनिहन्तुं तान् दैवभाव्यर्थरक्षितान् ॥ १७ ॥**

**संवृतैर्विवृतैः** इत्यत्र **संवृतैः** आच्छन्नैः विषदानादिभिः; **विवृतैः** स्पष्टैः अन्योन्यमुष्टिघातादिभिः ।

**तत्र तान् वासयामास पाण्डवानमितौजसः ।**
**स[6] दाहयंच्च विस्रब्धान् पावकेन पुनस्तदा ॥ १९ ॥**

---

१. S ; BORI पृ. २३६; 'तेपां तु' इति कुं. पाठः ।
२. $K_{2,3}$,$\tilde{N}_3$,$T_1$,$G_3$,M ; BORI पृ. २३६; '**महामतिः**' इति कुं. पाठः ।
३. BORI पृ. २३६; '**प्रतिकारे**' इति कुं. पाठः ।
४. '**विदुरोऽवहितोऽभवत्**' इति कुं . पाठः ।
५. **इच्छाशक्त्या** सो.मु.पा.
६. '**स्तुतप्रियैषी तान् राजा पाण्डवानम्बिकासुतः**' इति कुं. पाठः ।

**स**[१] **दाहयच्च विस्रब्धान्** इत्यत्र यः[२] 'मोक्षणे प्रतिघाते च विदुरः प्रहितोऽभवत्' इत्यत्रोक्तः **सः** विदुरः **विस्रब्धान्** पुरोचनादीन् **पावकेन** भीमदत्तपावकेनैव **तदा** लाक्षागृहात् स्वनिर्गमनसमये **दाहयत्** अदाहयत् ।

**विदुरस्यैव**[३] **वचनात् खनित्री विहिता ततः ।**
**मोक्षयामास योगेन ते मुक्ताः प्राद्रवन् भयात् ॥**

विदुरस्यैव वचनात् **खनित्री**[५] खनित्राणां उद्दालकादीनां[४] सम्बन्धिनी या गुहा विहिता, 'खनित्रमवदारणम्' इत्यमरः । यां च गुहां अस्यैव वचनात् पाण्डवाश्च विदुः ततः तया **योगेन** उपायेन स विदुर एव मोक्षयामासेति योजना । यद्वा **स** भीमः विदुरस्यैव वचनात् दाहयत्[६] । विदुरस्यैव वचनात् या खनित्री कृता ततः तया **योगेन** उपायेन मात्रादीनूढ्वा स भीमः स्वयमेव मोक्षयामास । एवञ्च 'विदुरस्यैव वचनात्' इति मध्यस्थितं वाक्यं देहलीदीपन्यायेन पूर्वत्र उत्तरत्र च सम्बध्यत इति ज्ञेयम् ।

**अथ**[७] **सन्धाय ते वीरा एकचक्रां व्रजंस्तदा ।**
**ब्रह्मरूपधरा भूत्वा मात्रा सह परन्तपाः ॥**

**अथ सन्धाय ते वीरा** इत्यत्र **सन्धाय** क्षत्रवेषमाच्छादयाम इत्यनुसन्धाय ।

---

१. **सोदाहयच्च** सो.मु.पा. ; २. **सः** सो.मु.पा. ; ३. BORI पृ. २३७
४. (खु)**कुद्दालादीनां** सो.मु.पा. ; ५. अ.को. २-९-१२
६. **अदाहयत्** सो.मु.पा.
७. BORI पृ २३७;

**वासाय खाण्डवप्रस्थं व्रजध्वं गतमत्सराः ।**

**तयोस्ते वचनाज्जग्मुः सह सर्वैः सुहृज्जनैः ॥ ३५ ॥**

[१] **वासाय खाण्डवप्रस्थ** इत्यत्र खाण्डववनसमीपस्थत्वादिन्द्रप्रस्थं खाण्डवप्रस्थमित्युच्यते ।

**बीभत्सुर्वासुदेवेन सहितो नृपसत्तम ।**

**नातिभारो हि पार्थस्य केशवेनाभवत्सह ॥ ४८ ॥**

**[३] व्यवसायद्वितीयेन विष्णोः शत्रुवधेष्विव ।**

**पार्थायाग्निर्ददौ चापि गाण्डीवं धनुरुत्तमम् ॥ ४९ ॥**

**केशवेनाभवत्सह । व्यवसायद्वितीयेन** इत्यत्र **व्यवसायः** कर्तव्यार्थनिश्चय एव **द्वितीयः** सहायो यस्य तेन केशवेन सह स्थितस्य पार्थस्य, **विष्णोः** तस्य कृष्णस्य **शत्रुवधेषु** कंसादिशत्रुवधेष्विव अतिभारो नाभूदिति योजना । 'व्यवसायद्वितीयस्य' इति पाठे विष्णोरितिपदस्य विशेषणम् ।

**स्वं धाम याते वार्ष्णेये कृष्णदारान्प्ररक्ष्य च ।**

**[४] महाप्रस्थानिकान् कृत्वा गताः स्वर्गमनुत्तमम् ॥ ५७ ॥**

**महाप्रस्थानिकान् कृत्वा** इत्यत्र महच्च तत्प्रस्थानं च महाप्रस्थानं तत्सम्बन्धिनो व्यापाराः प्रदक्षिणहर्यर्चनशरीरविनिपातनाद्याः ।

---

१. **वासाय खाण्डवप्रस्थमित्यत्र 'खण्डवो बलसूदन' इत्यभिधानात् खाण्डवशब्दस्येन्द्रशब्दपर्यायत्वात् खाण्डववनसमीपस्थत्वाच्चेन्द्रप्रस्थं खाण्डवप्रस्थमित्युच्यते** । सो.मु.पा.

२. BORI पृ. २३९; **'केशवेन सहाभवत्'** इति कुं.पाठः ।

३. **'व्यवसायसहायस्य'** इति कुं.पाठः । ; ४. **'महाप्रस्थानिकं'** इति कुं.पाठः ।

**एवमेतत्पुरावृत्तं तेषामक्लिष्टकर्मणाम् ।**
**भेदो राज्यविनाशश्च जयश्च जयतांवर ॥ ५८ ॥**

**एवमेतत्पुरावृत्तम्** इत्यत्र **अक्लिष्टकर्मणां तेषां** पाण्डवानां **भेदः** दुर्योधनादिभिः सह विरोधः,राज्यविनाशः दुर्द्यूतकरणेन राज्यनाशः, अन्ते जयश्चेत्येतत् **पुरावृत्तं** पूर्वं जातं चरित्रम् ।

**॥ इति द्वितीयोऽध्यायः ॥**

## ॥ अथ तृतीयोऽध्यायः ॥

**[१]न तत्कारणमल्पं वै धर्मज्ञा यत्र पाण्डवाः ।**
**अवध्यान्सर्वशो जघ्नुः [२]प्रशास्यन्तश्च मानवैः ॥ ४ ॥**

**प्रशास्यन्तश्च मानवैः** इत्यत्र 'व्यत्ययो बहुलम्' इति वचनात् **प्रशास्यन्तः** प्रशास्यमानाः ।

**अक्षुद्रान् दानशीलाञ्श्च सत्यशीलाननास्तिकान् ।**
**कार्ष्णं वेदमिमं विद्वान् श्रावयित्वाऽर्थमश्नुते ॥ २० ॥**

**कार्ष्णं वेदमिमम्** इत्यत्र **कार्ष्णं** कृष्णस्य वेदव्यासस्य सम्बन्धी कार्ष्णः तम् ।

**महीं विजयते राजा शत्रूंश्चापि पराजयेत् ।**
**इदं पुंसवनं [३]चैव तथा स्वस्त्ययनं महत् ॥ २३ ॥**

---

१. कुं. ६२ अध्यायः
२. **'प्रशास्यन्ते च'** इति कुं.पाठः ।
३. $G_{1,3}$, M (except M5) ; BORI पृ. २४२; **'श्रेष्ठमिदं'** इति कुं. पाठः ।

**इदं पुंसवनं चैव** इत्यत्र पुंसां [१] पुमपत्यानां सवनं प्रसूतिर्यस्य श्रवणात् तत्पुंसवनमित्यर्थः ।

**[२] महर्षियुवराजाभ्यां श्रोतव्यं [३] बहुशस्तदा ।**
**वीरं जनयते पुत्रं कन्यां वा राज्यभागिनीम् ॥ २४ ॥**

**महर्षियुवराजाभ्याम्** इत्यत्र युवा चासौ राजा च युवराजः । अनेन यौवनवयस्येव भारतश्रवणं कर्तव्यं; न तु वार्धके बधिरान्धतादशाया-मिति सूचयति । ज्ञानिनां मोक्षाय राज्यार्थिनां राज्याय च श्राव्यमिति सूचयति । राज्यस्थेन जनमेजयेन श्रुतत्वात् 'यस्तु राजा शृणोतीदम्' इति वक्ष्यमाणवचनविरोधाच्च, श्वस्तनो राजा युवराज इति नात्र ग्राह्यम् । **तदा** यौवनवयस्येव ।

**सम्प्रत्याचक्षते चेदं तथा श्रोष्यन्ति चापरे ।**
**पुत्राः शुश्रूषवः सन्ति प्रेष्याश्च प्रियकारिणः ॥ २७ ॥**

**पुत्राः शुश्रूषव** इत्यत्र भारतानां महज्जन्म अनसूयया शृण्वतः पुरुष-स्य पुत्राश्च सन्ति शिष्याश्च सन्तीत्यर्थः ।

**भगवांश्चापि देवेशो यत्र देवी च कीर्त्यते ।**
**[४] अनेकजन्मनो यत्र कार्तिकेयस्य सम्भवः ॥ ३७ ॥**

**अनेकजन्मन** इत्यत्र गौरीवह्निगङ्गाशरादिषु जन्म यस्य सोऽनेक-जन्मा तस्य ।

---

१. पुंमत्यांनां सो.मु.पा
२. $B_1, G_6, M_{6-3}$ ; BORI पृ. २४२; **'महिषीयुवराजाभ्यां'** इति कुं. पाठः ।
३. **'बहुशस्तदा'** इति कुं. पाठः ।; ४. 'अनेकजननो' इति कुं.पाठः ।

[१] ब्रह्मणो भार्गवानां च माहात्म्यं यत्र कीर्त्यते ।
सर्वश्रुतिसमूहोऽयं श्रोतव्यो धर्मबुद्धिभिः ॥

**ब्रह्मणो भार्गवानाम्** इत्यत्र **ब्रह्मणः** ब्राह्मणकुलस्य वेदस्य वा ।

[२] इह नैकाश्रयं जन्म राजर्षीणां महात्मनाम् ।
इह मन्त्रपदं युक्तं धर्मं चानेकदर्शनम् ॥

**इह नैकाश्रयं जन्म** इत्यत्र **नैकाश्रयं** अनेकप्रकाराश्रयं नानाविधं जन्मेत्यर्थः ।

चतुरो वार्षिकान्मासान्सर्वपापैः प्रमुच्यते ।
विज्ञेयः [३] सर्ववेदानां पारणे भारतं वदन् ॥ ३९ ॥

**विज्ञेयः सर्व वेदानाम्** इत्यत्र सर्ववेदानां **पारणे** पारायणे क्रियमाणे सति भारतं च वदन् विशिष्टज्ञेय[४] इति सम्बन्धः ।

[५] इह तत्तत्समासाद्य विहितो वाक्यविस्तरः ।
तीर्थानां नाम पुण्यानां दर्शनं चैव कीर्तितम् ॥

**इह तत्तत्समासाद्य** इत्यत्र गत्यर्थानां ज्ञानार्थकत्वात् **समासाद्य** ज्ञात्वा । **दर्शनं चैव कीर्तितम्** इत्यत्र दर्शनं कर्तव्यमिति कीर्तितमिति योग्यपदाध्याहारः ।

---

१. BORI पृ. २४३
२. BORI पृ. ८९२
३. 'स च वेदानां पारगो भारतं पठन्' इति कुं.पाठः ।
४. वि विशिष्टो ज्ञेयः सो.मु.पा.
५. BORI पृ. ८९२

**तन्महाभारताख्यानं श्रुत्वैव प्रविलीयते ।**
**भारतानां[1] महज्जन्म महाभारतमुच्यते ॥ ४२ ॥**

**महाभारतमुच्यत** इत्यत्र महाभारतमपि सूक्तिरत्नाकर इत्युच्यत इत्यर्थः । **भारतानां महज्जन्म** इत्यत्र यत्रोच्यते तन्महाभारतमुच्यत इत्युत्तरपदाकर्षणेन योजना ।

**श्रावयेद्ब्राह्मणान् श्राद्धे यश्चेमं पादमन्ततः ।**
**अक्षय्यं स्वर्गगामीयमुपावर्तेत्पितॄनिह[2] ॥ ४० ॥**

**अक्षय्यं स्वर्गगामीयम्** इत्यत्र स्वर्गगामिनामपेक्षितं स्वर्गगामीयं अक्षय्यं स्थानं सुखं वा तस्य पितॄनुपतिष्ठिति[3] । 'अन्नपानं तत्' इति पाठे स्पष्टोऽर्थः ।

**प्रातर्यदेनः कुरुते इन्द्रियैर्ब्राह्मणश्चरन्[4] ।**
**महाभारमाख्याय पश्चात्सन्ध्यां प्रमुच्यते ॥ ४१ ॥**

**प्रातर्यदेनः कुरुत** इत्यत्र महाभारतमाख्याय[5] **पश्चात्सन्ध्यां** पश्चिमसन्ध्यां चरन् प्रातः यदेनः कुरुते तस्मादेनसः प्रमुच्यत इति योजना । एवमुत्तरश्लोकेऽपि ।

---

१. **'भरतानां'** इति कुं.पाठः ।

२. **'तस्य तच्छ्राद्धमुपावर्तेत्पितॄनिह'** इति कुं.पाठः ।

३. **उपतिष्ठते** सो.मु.पा.

४. BORI पृ. ८९२ ; **'इन्द्रियैर्मनसापि वा । ज्ञानादज्ञानतो वापि प्रकरोति नरश्च यत् '** इति कुं. पाठः ।

५. **प्रच्युतः** सो.मु.पा.

**महतो ह्येनसो मर्त्यान् मोचयेदनुकीर्तितः ।**
**त्रिभिर्वर्षैर्महाराज[१] कृष्णद्वैपायनोऽब्रवीत्** ॥ ४४ ॥

**त्रिभिर्वर्षैर्महाराज** इत्यत्र अब्रवीत् स्वावतारानन्तरं त्रिभिर्वर्षैरतीतैः सद्भिः उत्पत्त्यनन्तरं वर्षत्रये जाते सतीत्यर्थः। **अब्रवीत्** कृतवान्। [२]'जातमात्रः सः ववृधे सप्तवर्षोऽभवत्तदा' इति वक्ष्यमाणत्वादुत्पत्तिदिन[३] एवोपनीतो भूत्वा वर्षत्रयात्प्रागेव वेदादिकं कृत्वा वर्षत्रये जाते सत्येव भारतं कृतवानिति भावः । अनेन पाण्डवानां वनवासादिनानाचरित्रस्य विचित्रयुद्धकौशलस्य च पाण्डवोत्पत्तेः प्रागेव वर्णनात् व्यासस्य महासार्वज्ञं सूच्यते । अत एव [४]'को ह्यन्यः पुण्डरीकाक्षात् महाभारतकृद्भवेत्' इत्युक्तम् ।

॥ इति तृतीयोऽध्यायः ॥

## ॥ अथ चतुर्थोऽध्यायः ॥

**वैशम्पायन उवाच –**

**[५]पुरोर्वंशं महाधन्यं राज्ञाममिततेजसाम् ।**
**प्रवक्ष्यामि पितॄणां ते तेषां नामानि मे शृणु** ॥ १ ॥

**पूरोर्वंशं[६] महाधन्यम्** इत्यत्र पूरोर्वंशं प्रवक्ष्यामि । तेषां तद्वंशोद्भवानां ते पितॄणां नामानि **मे** मत्तः शृण्विति सम्बन्धः ।

---

१. **'त्रिभिर्वर्षैर्महाभागः'** इति कुं.पाठः ।
२. आदि ६०-३ **'जातमात्रश्च यः सद्यः इष्ट्या देहमवीवृधत्'** इति मुद्रितकोशेषु।
३. **विभज्य** सो.मु.पा. ; ४. शान्ति पर्व ३५६-११
५. कुं. ६३ अध्यायः । **'पुरोर्वंशमहं धन्यं'** इति कुं.पाठः ।
६. **पूरोर्वंशमहं धन्यं** सो.मु.पा.

**अव्यक्तप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः ।**
**तस्मान्मरीचिः सञ्जज्ञे दक्षश्चैव प्रजापतिः ॥ २ ॥**

**अव्यक्तप्रभवो ब्रह्मा** इत्यत्र अव्यक्तो नारायणः तस्मात्प्रभवो यस्य स तथोक्तः । **शाश्वतत्वं** नित्यत्वं अव्ययत्वं न विष्णुवत् सर्वदेति सूचनाय विसन्धिकरणम् ।

**तत्रानुवंशो भवति ।**
**यदुं च तुर्वसुं चैव देवयानी व्यजायत ।**
**द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥ ७ ॥**

**तत्रानुवंशो भवति** इत्यत्र अनुवंशो नाम [१]वंशवर्णनानुकूलश्लोकः ।

**जनमेजयस्तु सुनन्दां नामोपयेमे । मागधीं तस्यामस्य जज्ञे प्राचीन्वान् ॥१०॥**

**मागधीं** मगधवंशजाम् ।

**यः प्राचीं दिशं जिगाय । यावत्सूर्योदयात् तत्तस्य प्राचीनत्वम् ॥ ११ ॥**

**यः प्राचीं दिशं जिगाय** इत्यत्र यावत् प्राचीं दिशं यावती प्राची दिक् तां सर्वां **सूर्योदयात्** सूर्योदयकालमात्रात् जिगायेति सम्बन्धः ।

**प्राचीन्वांस्तु खल्वाश्मकीमुपयेमे यादवीम् । तस्यामस्य जज्ञे शय्यतिः ॥ १२ ॥**

**आश्मकीं** अश्मकपुत्रीम् । एवमुत्तरत्रापि द्रष्टव्यम् ।

---

१. दौष्यन्तिं सां.मु.पा.

**अन्त्यनारस्तु खलु सरस्वत्यां द्वादशवार्षिकं सत्रमाजहार ।**
**तमुदवसाने सरस्वत्यभिगम्य भर्तारं वरयामास ॥ २६ ॥**

**तमुदवसान** इत्यत्र उत् उत्सवस्यावसाने उद्वसाने ।

**तत्रेमौ श्लोकौ भवतः ।**

**माता भस्त्रा पितुः पुत्रो यस्माज्जातः स एव सः ।**
**भरस्व पुत्रं दुष्यन्त[1] सत्यमाह शकुन्तला ॥ ३२ ॥**

**माता भस्त्रा पितुः पुत्रो यस्माज्जातः स एव सः । भरस्व पुत्रं दुष्यन्त[2] ! सत्यमाह शकुन्तला** इत्यत्र स्वोदरे वायुं परिपूर्य काले काले मुञ्चन्ती चर्ममयी कारूणामुपकारिणी काचन सामग्री भस्त्रा । तद्वन्माता । पुत्रस्तु पितुरेव । यस्मात् सः पितैव मातुरुदरे स्वरेतोरूपेण जातः । शुक्रान्तस्थितजीवस्य मातुरुदरप्रवेशानन्तरं जीवावरकं तदेव शुक्रं मातृभुक्तान्नरसादिना देहाकारेण परिणतं भवति । शोणितं तु बिसजस्य पङ्क इव आधारमात्रमिति भावेन स एवेत्युक्तम् । यथा कारुकरपूरितभस्त्रानिस्सृतो वायुः कारोरेवोपकारकस्तथेति भावः ।

**रेतोधाः पुत्रं[3] नयति नरदेव यमक्षयम् ।**
**त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥ ३३ ॥**

**हे नरदेव** दुष्यन्त! यं यः, **पुत्रं** पुत्रः, **रेतोधाः** रेतोधातारं पितरमिति पदत्रयस्य [4]'व्यत्यासः प्रातिलोम्यं च' इति वचनात् विभक्ति-

---

१. **'दौष्यन्ति'** इति कुं.पाठः । ; २. **दौष्यन्तिं** सो.मु.पा.
३. **'पुत्र उन्नयति नरदेव यमक्षयात्'** इति कुं.पाठः ।
४. म.भा.ता.नि. ९-१४०

व्यत्यासेन योजना । अक्षयं लोकं नयति; 'नापुत्रस्य लोकोऽस्ति' इति श्रुतेः । तस्यास्य **गर्भस्य** सर्वदमनाख्यस्य शकुन्तलागर्भस्य **धाता** रेतोधाता च त्वम् । अतः कारणात् तव पुत्रं त्वमेव भरस्वेति पूर्वेणान्वयः ।

**यं यं कराभ्यां स्पृशति जीर्णं स सुखमश्नुते ।**
**पुनर्युवाऽऽभ्यां[१] भवति तस्मात्तं शन्तनुं विदुः ॥ ४९ ॥**

**यं यं कराभ्यां स्पृशति जीर्णं स सुखमश्नुते । पुनर्युवाऽऽभ्यां भवति तस्मात्तं शन्तनुं विदुः** इत्यत्र **सः** शन्तनुः यं यं **जीर्णं** वार्धकवशाज्जी(र्ण)र्णसर्वावयवसन्धिं कराभ्यां स्पृशति, स **सुखं** घुरघुरायमाणकण्ठादिषु यद्दुःखं तदपोह्य सुखमश्नुते । पुनराभ्यां कराभ्यां तमेव यदा स्पृशति, तदा सः **युवा** सर्वाङ्गकार्श्यं परित्यज्य यौवनवयस्यवत्पुष्टाङ्गो[२] भवति । तस्मात्तं शन्तनुं सुखदायकत्वात् शं, 'तनु विस्तारे' इति धातोर्देहपुष्टिहेतुत्वात् तनुः । शं चासौ तनुश्चेति शन्तनुः । 'शान्तो भव' इत्युक्ते तनुत्वमल्पत्वं गत इति व्युत्पत्तिः समुद्राख्यमूलरूपगुणादागता । इयं तु व्युत्पत्तिः कार्यरूपावतारगुणादेवेति विवेकः । 'पुनर्युवा च' इति कचित्पाठः । तत्राप्येवमेव योजना ।

**योऽकृतार्थं हि मां क्रूर बाणेनाघ्रा मृगव्रतम् ।**
**त्वामप्येतादृशो भावः [३]क्षिप्रमेव गमिष्यति ॥ ६१ ॥**

**त्वामप्येतादृशो भावः क्षिप्रमेव गमिष्यति** इत्यत्र **एतादृशः**

---

१. **'पुनर्युवा च'** इति कुं.पाठः ।
२. **यौवनवयस्स्थवत्** सो.मु.पा.
३. **'क्षिप्रमेवागमिष्यति'** इति कुं.पाठः ।

(यादृशो मम, एतादृशः) एतत्सदृशः भावः अवस्था, स्त्रीसङ्गे सति मरणमित्यर्थः । त्वामपि क्षिप्रं गमिष्यतीति योजना ।

**अहं जीवयामि कुमारमनन्तवीर्यं जात एवायमजायत । अभिमन्योः सत्येन चेयं पृथिवीधारयत्विति वासुदेवस्य पादस्पर्शात् सजीवोऽजायत ॥ नाम तस्याकरोत्सुभद्रा ॥ ८४ ॥**

**जात एवायमजायत** इत्यत्र जात एवायं कुमारः **अजायत** अजवत् अजातवदाचरमाणो बभूव, श्वासोच्छ्वासादिकं नासीदिति भावः । अभिमन्योः सत्येन इयं पृथिवी अनेन कुमारेण धारिता पालिता आसीत् । अभिमन्योर्जात एवायं कुमारः, **सत्येन** सत्यकामेन परमात्मना, तदाज्ञयेत्यर्थः, इयं पृथिवी धारयत्विति च अजायतेति योजना ।

**॥ इति चतुर्थोऽध्यायः ॥**

## ॥ पञ्चमोऽध्यायः ॥

**[१] तमाश्रमे न्यस्तशास्त्रं निवसन्तं तपोनिधिम् ।**
**देवराड् यज्ञसहितः उपतस्थे मरुद्गणैः ॥ ३ ॥**

**देवराड्यज्ञसहित** इत्यत्र **यज्ञो** यज्ञाभिमानी देवः ।

**[२] इन्द्रोऽहमिति धैर्येण तपसा चेत्यमन्यत ।**
**तं सान्त्वेन नृपं साक्षात्तपसः सन्यवर्तयन् ॥ ४ ॥**

---

१. कुं. ६४ अध्यायः

२. S; BORI पृ. २४४; '**इन्द्रस्त्वमर्हो राजाऽयं तपसेत्यनुचिन्त्य वै**' इति कुं. पाठः ।

**इन्द्रोऽहमिति धैर्येण** इत्यत्र सः वसुः धैर्येण, **तपसा** स्वकीयोग्रतपसा इति पूर्वोक्तप्रकारेण[1] च इन्द्रादीनामुपास्त्या च अहमेवेन्द्र इत्यमन्यतेति योजना। अन्यथा इतिशब्दद्वयस्य वैयर्थ्यं स्यात्।

**देवा ऊचुः –**

**न सङ्कीर्येत धर्मोऽयं पृथिव्यां पृथिवीपते।**
**त्वया हि धर्मो विधृतः कृत्स्नं धारयते जगत् ॥ ५ ॥**

**न सङ्कीर्येत धर्मोऽयम्** इत्यत्र अयं यस्य यस्य हरिणा या या पदवी दत्ता, ब्रह्मणो ब्रह्मता इन्द्रस्येन्द्रता चक्रवर्तिनश्चक्रवर्तितेत्यादिरूपेण प्रतीयमानो धर्मः **न सङ्कीर्येत**; इन्द्रस्यैव ब्रह्मत्वं चक्रवर्तिन एवेन्द्रत्वमित्यादिरूपेण सङ्करवान्न भवत्वित्यर्थः। त्वं च चक्रवर्त्येव भव, मदिन्द्रत्वं त्वयि न मन्यस्वेति भावः।

**दिविष्ठस्य भुविष्ठस्त्वं सखाभूतो मम प्रियः।**
**ऊधः पृथिव्या यो देशस्तमावस नराधिप ॥ ७ ॥**
**पशव्यश्चैव पुण्यश्च प्रभूतधनधान्यवान्।**
**स्वारक्ष्यश्चैव सौम्यश्च भोग्यैर्भूमिगणैर्युतः ॥ ८ ॥**

**ऊधः पृथिव्या यो देश** इत्यत्र गोरूपाया उत्तराभिमु(ख्याः)-स्थायाः परशुरामभूमेः गोकर्णाख्यप्रदेशः कर्णस्थानीयः, वसुपुराख्यनगरीं परितो विद्यमानो यो देशः स ऊधस्स्थानीयः क्षीरस्थानीयैः मधुरसस्यफलादिभिः परिपूर्ण इति भावः। वसुचक्रवर्तिना रक्षितत्वाद्धि वसुपुरम्। 'बसुरूरु' इत्यपभ्रंशभाषा। तदेव स्पष्टयति – **पशव्यश्चेत्यादिना ॥**

---

१. **पूर्वार्धोक्तप्रकारेण** सो.मु.पा.

**[१] अत्यन्यानेष देशो हि धनरत्नादिभिर्युतः ।**
**वसुपूर्णा च वसुधा [२] वस वेदिषु चेदिप ॥ ९ ॥**

**अत्यन्यानेष देशो हि** इत्यत्र एष देशः अन्यान् देशान् **अति** अत्येतीत्यर्थः । **वस वेदिषु चेदिप** इत्यत्र **वेदिषु** समुद्रसह्याचलयोर्मध्ये दीर्घाकारेण तिर्यग्वर्तमानत्वात् वेदिस्थानीयेषु, बहुयज्ञवेदिभरितत्वाद्वा **वेदिषु** देशेषु । वेदिष्वित्युक्त्या यज्ञवेदिसम्पन्नान् ब्राह्मणान् अहिच्छत्रादानीय तत्र स्थापयेति (च) सूचयति ।

**न च पित्रा विभज्यन्ते पुत्रा गुरुहिते रताः ।**
**[३] युञ्जन्ति धुरि नागाश्च कृशान् सन्धुक्षयन्ति च ॥ ११ ॥**

**युञ्जन्ति धुरि नागाश्च** इत्यत्र **नागाः** सर्पाः **कृशान्** दरिद्रान् **धुरि** ऐश्वर्ये **युञ्जन्ति**, अनिष्टं कु(ष्ठा)ष्टादिकं **सन्धुक्षयन्ति** नाशयन्तीत्यर्थः । 'युञ्जन्ति धुरि नो गाश्च' इति पाठे **गाः** वृषभान् **धुरि** भारोद्वहने न युञ्जन्ति । घट्टोपरिस्था एव गोषु भारोद्वहनं कुर्वन्ति । तौलवदेशस्थास्तु कर्षणमात्रे युञ्जन्ति, न तु भारोद्वहने । **कृशान्** व्याधिग्रस्तान् **सन्धुक्षयन्ति** 'धिक्ष् पोषणे' इति धातोः पोषयन्ति । उकारस्ताच्छील्यार्थकः । 'सम्पुष्णयन्ति' इति पाठे सम्यक् पुष्टान् कुर्वन्ति । यद्वा **कृशान्** दरिद्रान् धुरि बलान्नो युञ्जन्ति; वेतनदानेन **सन्धुक्षयन्ति** तद्दारिद्र्यं नाशयन्ति च । 'धूञ् कम्पने' इति धातुः । अतोऽसौ देशो धर्मिष्ठ इति भावः ।

---

१. **'अर्थवानेष देशो'** इति कुं.पाठः ।
२. **'वस चेदिपु चेदिप'** इति कुं.पाठः ।
३. **'युञ्जते धुरि नो गाश्च'** इति कुं.पाठः । ; ४. धिक्ष सा.मु.पा.

**देवोपभोग्यं दिव्यं त्वामाकाशं स्फाटिकं महत् ।**
**आकाशगं त्वां मद्दत्तं विमानमुपपत्स्यते ॥ १३ ॥**

**आकाशं स्फाटिकं महत्** इत्यत्र आ समन्तात्काशत इति **आकाशं** विमानम् । 'काशृ दीप्तौ' इति धातुः ।

**एवं तु[1] सान्त्वात् नृपतिः तपसः सन्न्यवर्तयत् ।**
**प्रययौ देवतैः सार्धं कृत्वा कार्यं दिवौकसाम् ॥ १८ ॥**

**एवं तु सान्त्वात्** इत्यत्र **सान्त्वात्** सामवचनात् ।

**[2]तस्मै च वैणवीं यष्टिं ददौ वृत्रनिषूदनः ॥ १७ ॥**

**वैणवीं यष्टिम्** इत्यत्र **यष्टिं** इन्द्रध्वजरूपाम् ।

**इष्टप्रदानमुद्दिश्य शिष्टानां प्रतिपालिनीम् ॥ १७ ॥**

**इष्टप्रदानमुद्दिश्य** इत्यत्र इष्टप्रदानाख्यं फलमुद्दिश्य इयं यष्टिः तवेष्ट-प्रदानं करिष्यतीत्युक्त्वा इत्यर्थः ।

**तस्याः शक्रस्य पूजार्थं भूमौ भूमिपतिस्तदा ।**
**प्रवेशं कारयामास सर्वोत्सववरं तदा ॥ २० ॥**

**प्रवेशं कारयामास** इत्यत्र प्रविशन्त्यत्र नाना(जा)जनपदा इति **प्रवेश** उत्सवः ।

**प्रवेशः क्रियते राजन्यथा तेन प्रवर्तितः ।**
**अपरेद्युस्ततस्तस्याः क्रियतेऽत्युच्छ्रयो नृपैः ॥ २२ ॥**

---

१. 'संसान्त्व्य नृपतिं' इति कुं. पाठः । ; २.
२. 'यष्टिं च वैणवीं यष्टिं' इति कुं. पाठः ।

**अपरेद्युस्ततस्तस्या** इत्यत्र **अपरेद्युः** तस्माद्दिनादपरदिन इत्यर्थः। योग्यतया पूर्वदिनं लभ्यते।

**अलङ्कृतायाः पुलकैः[१] गन्धमाल्यैश्च भूषणैः।**
**माल्यादामपरिक्षिप्तां द्वात्रिंशत्किष्कुसम्मिताम्** ॥ २३ ॥

**अलङ्कृतायाः पुलकैः** इत्यत्र **पुलकैः** वनमार्जारवीर्यरूपपरिमलद्रव्यैः।

**उद्धृत्य पिटके चापि द्वादशारत्निकोच्छ्रये।**
**महारजनवासांसि परिक्षिप्य ध्वजोत्तमम्** ॥ २४ ॥

**महारजनवासांसि** इत्यत्र **महारजनवासांसि** रक्तकौसुम्भरसरञ्जितवासांसीत्यर्थः।

**नानाराज्येषु च सुतान् स सम्राडभ्यषेचयत्।**
**महारथो मगधराट्[२] विश्रुतो यो बृहद्रथः** ॥ ४३ ॥

**प्रत्यग्रहः कुशाम्बश्च यमाहुर्मणिवाहनम्।**
**मत्सिल्लश्च यदुश्चैव राजन्यश्चापराजितः** ॥ ४४ ॥

**महारथो मगधराट्** इत्यत्र महारथः महान् रथो यस्य सः। **मगधराट्** मगधविषयाधिपतिः बृहद्रथ इति विश्रुतो यः जरासन्धपिता स एकः, अपराजितः राजा यदुश्च यदुनामक एकः पुत्रः।

---

१. **'पिटकैः'** इति कुं.पाठः।
२. BORI पृ. २४७; **'मागधानां'** इति कुं.पाठः।

**वासवाः पञ्चराजानः पृथग्वंशाश्च शाश्वताः ।**
**वसन्तमिन्द्रप्रासादात् आकाशस्फाटिके च तम् ॥ ४६ ॥**

**इन्द्रप्रासादात्** इत्यत्र प्रसाद एव प्रासादः । यद्वा इन्द्रदत्तस्वस्व-[1]प्रासादात्, ल्यब्लोपनिमित्ता पञ्चमी, प्रासादमारुह्येत्यर्थः । **आकाश-स्फाटिके** आकाशस्थस्फटिकमयविमाने ।

**उपतस्थुर्महात्मानं गन्धर्वाप्सरसो नृपम् ।**
**राजोपरिचरेत्येवं नाम तस्याथ विश्रुतम् ॥ ४७ ॥**

**राजोपरिचर** इत्यत्र राज्ञामुपरि चरतीति राजोपरिचर ।

**पुरोपवाहिनीं तस्य नदीं शुक्तिमतीं गिरिः ।**
**अरौत्सीच्चेतनायुक्तः कामात्कोलाहलः किल ॥ ४८ ॥**

**पुरोपवाहिनीं तस्य** इत्यत्र **तस्य** वसोः पुरं वसुपुरं, तत्समीप-वाहिनीं नदीं **चेतनायुक्तः** चेतनायोग्यदेहयुक्तः, **कामात्** मय्येवेयं नदी स्थातव्येति कामात्, **कोलाहलः** कोलाहलनामको गिरिः ।

**गिरिकायाः प्रयच्छाशु तस्या ह्यार्तवमद्य वै ॥ ७० ॥**

**तस्या ह्यार्तवमद्य वै** इत्यत्र **आर्तवं** ऋतुकालसम्बन्धि दिनम् ।

**आश्चर्यभूतं तद्गत्वा राज्ञेऽथ प्रत्यवेदयन् ।**
**काये मत्स्या इमौ राजन् सम्भूतौ मानुषाविति ॥ ७७ ॥**

**काये मत्स्या** इत्यत्र मत्स्यस्य स्त्री मत्सी तस्याः काय इत्यर्थः ।

---

१. इन्द्रदत्तः **प्रासादस्तस्मात्प्रासादत** सो.मु.पा.

**सा कन्या दुहिता मत्स्या मत्स्यसुगन्धिनी ।**
**राज्ञा दत्ता च दाशाय कन्येयं ते भवत्विति ॥ ८२ ॥**

**सा कन्या दुहिता मत्स्या** इत्यत्र यस्मात्कारणात्सा कन्या **मत्स्या** मत्स्यस्त्रियाः दुहिता तस्मात्सा च मत्स्यगन्धिनीति योजना ।

[1]**विद्वांस्तां वासवीं कन्यां कार्यवान् मुनिपुङ्गवः ॥**

**सम्भवं चिन्तयित्वा तां ज्ञात्वा प्रोवाच शक्तिजः ।**
**क्व कर्णधारो नौर्येन नीयते ब्रूहि भामिनि ॥ ८७ ॥**

**सम्भवं चिन्तयित्वा ताम्** इत्यत्र **सम्भवं** श्येनकराज्जले पतित-वसुरेतसः सकाशादुत्पत्तिं चिन्तयित्वा ज्ञात्वा च तां वासवीं कन्यां विद्वान् **कार्यवान्** व्यासावताराख्यकार्यवान् शक्तिजः मुनिपुङ्गवः तां (प्रो)प्रत्युवाचेति योजना ।

**पराशर उवाच –**

**शोभनं वासवि शुभे किं चिरायसि वाह्यताम् ।**
**कलशं भविता भद्रे सहस्रार्धेन सम्मितम् ॥ ८९ ॥**

**अहं शेषो भविष्यामि नीयतामचिरेण वै ॥ ९० ॥**

**कलशं भविता भद्रे सहस्रार्धेन सम्मितम्** इत्यत्र **कलशं** मम कमण्डलुः **सहस्रार्धेन** पञ्चशतजनेन, तावद्भारेणेति यावत् । सम्मितं भविता । **शेषः** उर्वरितः सहस्रार्धेन सम्मितः अहं भविष्यामि । एवं सहस्रजनभारो भविष्यतीति सहस्रजनसम्पन्ना नौर्मया वाह्यत इति

---

१. BORI पृ. २५०

तत्कौशलोक्तेः प्रत्युक्तिरियम् । वस्तुगत्या सहस्रजनेषु मिलितेष्वेव तारयामीत्यस्यासम्भावितत्वाद्विनोद एवायम् । यद्वा **सहस्रार्द्धेन** सहस्र-शङ्कया आ समन्तात् ऋद्धेन मुनिजनेन । सम्यक् **मितं** दृष्टं, सूत्र-बन्धादिना निर्मितं वा । **कलशं** कस्मिंश्चिन्मङ्गलकार्ये पूज्यमानं कलशं **भविता** अपरपारे भविता । अहं तत्रावश्यापेक्षितः शिष्यत इति **शेषः** अवशिष्टः भविष्यामि । यद्वा **सहस्रार्द्धेन** सहस्रेण शीर्षपादादिना सहस्रमहिमभिः सहस्रमूर्तिभिर्वा आ समन्तात् ऋद्धेन नारायणेन **सम्मितं** सदृशं **कलशं** 'कल ज्ञाने' इति धातोः ज्ञानसुखात्मकमपत्यं हे भद्रे **भविता** त्वयि भविष्यति । अहं शेषः, मातापित्रोर्मध्ये त्वयि मातरि जातायां **शेषः** उर्वरितः पिता अहं भविष्यामि । अतस्तव च मम च हिताय अचिरेण[१] नौर्नीयतामिति गूढाभिसन्धेरुत्तरमिदम् ।

**पराशर उवाच –**

**दिव्यज्ञानेन दृष्टं हि दृष्टमात्रेण ते वपुः** ॥ ९२ ॥

**प्रणयग्रहणार्थाय वक्ष्ये वासवि तच्छृणु** ॥ ९३ ॥

**दृष्टमात्रेण ते वपुः** इत्यत्र दृष्टाः **मात्राः** रूपरसादितन्मात्रात्मक-सकलपदार्था येन तद्दृष्टमात्रं तेन दिव्यज्ञानेन दृष्टं ते वपुः **प्रणय-ग्रहणार्थाय** त्वयि स्नेहग्रहणार्थं वक्ष्ये इति सम्बन्धः ।

[२] **हररूपेण** इत्यत्र स्वयमेव गृहीतेन भूमेः स्वयमेवोद्भूतेन **हररूपेण**[३] स्वयं(भू)हरलिङ्गरूपेणेत्यर्थः ।

---

१ अचिरेणैव सो.मु.पा.

२ एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

३ स्वयंभूहरलिङ्गरूपेण सो.मु.पा.

**त्रसरेणुप्रमाणांस्तांस्तत्रापश्यत्स्वकान् पितॄन् ।**
**सुसूक्ष्मानपरिव्यक्तानङ्गैरङ्गेष्विवाहितान् ॥ ९९ ॥**

**अङ्गैरङ्गेष्विवाहितान्** इत्यत्र **अङ्गेषु** भुजाद्यङ्गेषु **अङ्गैः** प्रकोष्ठाद्यङ्गैः **आहितान्** प्रविष्टानिव स्थितान् । अतिसूक्ष्मत्वादेकाङ्गं अपराङ्गं प्रविष्टमिव तिष्ठतीति भावः ।

**भ्रष्टैश्वर्या स्वदोषेण पतसि त्वं शुचिस्मते ।**
**यैरारभन्ते कर्माणि शरीरैरिह देवताः ॥ १०२ ॥**

**यैरारभन्ते कर्माणि** इत्यत्र देवानां कल्पान्तजीवित्वेन देहान्तरासम्भवात् तेनैव देहेन पापफलभोगः । यथा रुद्रस्य कपालधारिता, इन्द्रस्य सहस्राक्षता । शापात् क्वचिद्देहान्तरसद्भावोऽस्ति, न केवलं पापादिति भावः । मनुष्याणां क्वचिदत्युत्कटपापफलस्य तेनैव देहेनानुभवेऽपि प्रायः पापानुभवो नरके जन्मान्तरे वेति भावः ।

**पितृहीना तु कन्यात्वं वसोर्हि त्वं सुता मता ।**
**मत्स्ययोनौ समुत्पन्ना सुता राज्ञो भविष्यसि ॥ १०५ ॥**

**पितृहीना तु कन्यात्वम्** इत्यत्र त्वं **पितृहीना** पितृविवेकहीना । अग्र्याहितादिवत् अस्मत्तोऽपि हीनपित्रङ्गीकारवती वा । वक्तॄणां स्वेषामेव पितृत्वेन साक्षात्पितृहीनत्वस्यायोगादेवं योजना । **कन्यात्वं** कन्याभावं वसोः[1] कन्यात्वं यतः समुपागता अतो राज्ञः सुता मत्स्ययोनौ भविष्यसि । तत्रापि स्वपितृमातृविवेकशून्या हीनस्य दाशस्य कन्येत्येव मतिं करिष्यसीति भावः ।

---

१. **अत्रापि** सो.मु.पा.

**तस्यां जातासि सा कन्या राज्ञो वीर्येण चैव हि ।**
**तस्माद्वासवि भद्रं ते याचे[1] त्वां शङ्करं सुतम् ॥ ११२ ॥**

शङ्करं सुतम् इत्यत्र शङ्करं सुखकरः ।

**[2]दृष्ट्वा तां तु समाधाय विचार्य च पुनः पुनः ।**
**स चिन्तयामास मुनिः [3]किङ्कृते च कृतं भवेत् ॥ ३ ॥**

**किङ्कृते च कृतं भवेत्** इत्यत्र **कृतं** सुकृतम् ।

**शिष्टानां तु समाचारः शिष्टाचार इति स्मृतः ।**
**श्रुतिस्मृतिविदो विप्रा धर्मज्ञा ज्ञानिनः स्मृताः ॥ ४ ॥**

**श्रुतिस्मृतिविदो विप्रा** इत्यत्र श्रुतिस्मृतिविदः विप्रा इत्युच्यन्ते । ज्ञानात् धर्मिष्ठ इत्युच्यत इति योजना ।

**पैशाचो नैव कर्तव्यः विवाहश्चाष्टमोऽधमः ।**
**सामर्षां व्यङ्गिकां कन्यां मातुश्च कुलजां तथा ॥ १० ॥**

**विवाहश्चाष्टमोऽधम** इत्युक्त्या सप्तमो राक्षस इत्यूह्यम् ।

**वृद्धां [4]पतिव्रतां वन्ध्यां पतितां च रजस्वलाम् ।**
**अपस्मारकुले जातां पिङ्गलां कुष्ठिनीं व्रणीम् ॥ ११ ॥**

**वृद्धां पतिव्रतां वन्ध्याम्** इत्यत्र **वृद्धां** स्वस्माद्वयोवृद्धां, **पतिव्रतां** पत्या पतित्वयोग्येन सह वाङ्निश्चयरूपव्रतवर्ती, **वन्ध्यां** सामुद्रिकोक्त-वन्ध्यालक्षणेन वन्ध्याम् ।

---

१. **'वंशकरं'** इति कुं.पाठः । ; २. **कुं. ६४ अध्यायः**
३. **'किं कृतं सुकृतं भवेत्'** इति कुं.पाठः । ; ४. **'प्रव्राजितां'** इति कुं.पाठः ।

**पितृगणा ऊचुः –**

**अस्माकं मानसीं कन्यां[१] अस्मच्छासनवाससीम्** ॥ १९ ॥

**अस्मच्छासनवाससीम्** इत्यत्र अस्मच्छासनमेव वासः वस्त्रस्थानीयं यस्याः सा तथोक्ता। वस्त्रं यथा न मुञ्चति तथाऽस्मदाज्ञामपि नोल्लङ्घय-तीति भावः।

**यदीच्छेच्छसि पुत्रार्थं कन्यां गृह्णीष्व मा चिरम्** ॥ १९ ॥

[२]**यदीच्छेच्छसि** इत्यत्र वरो न्यसिष्णुश्चेत् पित्रादीनामिच्छा व्यर्था। अतः इच्छा वरस्येच्छा यदीत्युक्तम्। अकुलीना रूपवती वरस्येच्छा-मात्रेण न स्यात्। अतस्त्वं चेच्छसीत्युक्तम्।

**अरुन्धती महाभागा अदृष्यन्त्या सहैव सा।**
**विश्वकर्मकृतां दिव्यां पर्णशालां प्रविश्य सा** ॥ २३ ॥

**अदृश्यन्त्या सहैव सा** इत्यत्र **अदृश्यन्त्या** अदृश्यन्तीनाम्न्या पराशरमात्रा स्वस्नुषया।

**भद्रासने प्रतिष्ठाप्य इन्द्राणीं [३]समकारयत्।**
**आपूर्यमाणपक्षे तु वैशाखे सोमदैवते** ॥ २५ ॥

**इन्द्राणीं समकारयत्** इत्यत्र **इन्द्राणीं** शचीसन्निधानवतीम्।

**तस्य मध्ये प्रतिष्ठाप्य [४]ब्रस्यां मुनिवरं तदा।**
**सिद्धार्थयवकल्कैश्च स्नातं सर्वौषधैरपि** ॥ २९ ॥

---

१. **'कन्यामस्मच्छापेन वासवीम्'** इति कुं.पाठः।
२. **यदीच्छसीत्यत्र** सो.मु.पा. ; ३. **'समकल्पयत्'** इति कुं.पाठः।
४. **'बृस्यां'** इति कुं.पाठः।

**ब्रस्यां मुनिवरम्** इत्यत्र **ब्रस्यां** ऋषीणामासने [१]'व्रतिनामासनं ब्रसी' इत्यमरः।

**गन्धानुलिप्तः स्रग्वी च [२]सर्वतोदोवधूगृहे।**
**अपदातिस्तदा गत्वा वधूज्ञातिभिरर्चितः ॥ ३१ ॥**

**सर्वतोदोवधूगृह** इत्यत्र **अदोवधूगृहे** अमुष्मिन्वधूगृहे। यद्वा सर्वतः दाः शोभनं शोभनमित्यक्षतदातारो यस्य स तथोक्तः। **सर्वतः** सर्वाणि विवाहोचितकण्ठसूत्रकर्णपत्रहरिद्रादिमङ्गलद्रव्याणि **दाः** दातारो यस्य निकटे स तथोक्तः। यद्वा सर्वतः सर्वान् विघ्नकारिणो राक्षसादीन् स्वतपस्सामर्थ्येन तुदति व्यथयतीति सर्वतोदः। 'तुद व्यथने' इति धातुः। 'अपदातिस्तदा गत्वा' इत्यनेन शिबिकया [३]ब्रह्मरथेनैवागत इति सूच्यते।

**स्नातामहतसंवीतां गन्धलिप्तां स्रगुज्ज्वलाम्।**
**वधूं मङ्गलसंयुक्तामिषुहस्तां समीक्ष्य च ॥ ३२ ॥**

**इपुहस्तां समीक्ष्य च** इत्यत्र क्षत्रियस्य वसोः पुत्रीत्वात् **इषुहस्तां** शरहस्तामित्युक्तम्।

स्वैर्दास्यमानसुकृतकरणदुष्कृताकरणरूपदक्षिणायाः स्वर्ग एव फलमिति वक्तुमारभन्ते– **कर्मभूमिर्हि मानुष्यमिति॥**

**[४]कर्मभूमिर्हि मानुष्यं भोगभूमिस्त्रिविष्टपम्।**
**इह पुण्यकृतो यान्ति स्वर्गलोकं न संशयः ॥ ३९ ॥**

---

१. अ.को. २-७-४६ ; २. **'सप्रतोदो'** इति कुं.पाठः।
३. **ब्रह्मरथेन वा गतः** सो.मु.पा. ; ४. **'कर्मभूमिस्तु'** इति कुं.पाठः।

**इह लोके दुष्कृतिनो नरकं यान्ति निर्घृणाः ।**
**दक्षिणाबन्ध इत्युक्ते [1]इमे सुकृतदुष्कृते ॥ ४० ॥**
**दक्षिणाबन्धसंयुक्ता योगिनः [2]प्रतिवर्तते ।**
**तस्मान्नो मानसीं कन्यां योगाद् भ्रष्टां विशाम्पते ॥ ४१ ॥**

**दक्षिणाबन्ध इत्युक्त** इत्यत्र **इमे** स्वर्गनरकसाधनीभूते **सुकृतदुष्कृते** सुकृतमेव कुरु दुष्कृतं कदाऽपि मा कुरु इति भावमुखेन अभावमुखेन च वराय दत्ते सुकृतदुष्कृते दक्षिणाबन्ध इत्युक्ते । ऐहिकभोगमात्रानुकूलबाह्यधनदानादपि कन्यादातृभिर्विशिष्टैः आशीर्वादरूपेण वरस्य हृदयान्तस्स्थिरीकृता धर्मशीलता अधर्मदूरता च मुख्या दक्षिणेति पितॄणां हृदयम् । दक्षिणाबन्ध इत्येकवचनं तु साक्षादधर्मस्य विवाहकाले सर्वथा हेयस्य दक्षिणात्वायोगात् तमपि स्वाभावमुखेन धर्मानुस्यूतमेव स्वीकुर्विति सूचनार्थम् । योगिनः सकाशात् ईदृशदक्षिणाबन्धसंयुक्ता विवाहक्रिया प्रतिवर्तत इति योजना ।

**वसुरुवाच –**

**पराशर महाप्राज्ञ तव दास्याम्यहं सुताम् ।**
**[3]प्रतीच्छयैनां भद्रं ते पाणिं गृह्णीष्व पाणिना ॥ ४४ ॥**

**प्रतीच्छयैनाम्** इत्यत्र **एनां** कन्यां पाणिना पाणिं 'कामेन त्वा प्रतिगृह्णामि' इति वचनात् **इच्छया** कामेन प्रतिगृह्णीष्वेति योजना ।

**जातमात्रः स ववृधे सप्तवर्षोऽभवत्तदा ।**
**स्नात्वाभिवाद्य पितरं तस्थौ व्यासः समाहितः ॥ ५१ ॥**

---

१. **'उभे'** इति कुं.पाठः । ; २. **'प्रपतन्ति ते'** इति कुं. पाठः ।
३. **'प्रतीच्छ चैनां'** इति कुं.पाठः ।

**सप्तवर्षोऽभवत्तदा** इत्यत्र **सप्तवर्षः** सप्तवर्षबालोपमः ।

**त्वया स्पृष्टः परिष्वक्तो मूर्ध्नि चाघ्रायितो मुहुः ।**
**एतावन्मात्रया प्रीतो भविष्येषु नृपात्मजे ॥ ७२ ॥**

**एतावन्मात्रया** इत्यत्र एतावन्मात्रया उपचारक्रिययेति योग्य-पदाध्याहारः ।

**गत्वाश्रमपदं पुण्यं[१] दृश्यन्त्याश्च पराशरः ।**
**जातकर्मादिसंस्कारं कारयामास धर्मतः ॥ ७५ ॥**

**दृश्यन्त्याश्च पराशर** इत्यत्र सत्यवत्याः **दृश्यन्त्याः** पश्यन्त्याः सत्या इत्यर्थः ।

**पादापसारिणं धर्मं विद्वान् स तु युगे युगे ॥ ७८ ॥**

**आयुः शक्तिं च मर्त्यानां युगाद्युगमवेक्ष्य च ॥ ७९ ॥**

**पादापसारिणं धर्मम्** इत्यत्र **धर्मं** मर्त्यानामायुः शक्तिं युगाद्युगं च **पादापसारिणं** एकैकपादस्यापसारः अपसरणं गमनं न्यूनता यस्य तम् । लिङ्गानुसारेण सम्बन्धो द्रष्टव्यः ।

अधुना सत्यवतीकथाशेषं वक्तुमारभते– **ततः सत्यवतीति ।**

**ततः सत्यवती हृष्टा जगाम स्वं निवेशनम् ।**
**तस्यास्तु योजनाद्गन्धमाजिघ्रन्ति नरा भुवि ॥ ८३ ॥**

**ततः** व्यासेन सह पराशरस्य स्वाश्रमगमन(स्य)दर्शनानन्तरम् ।

---

१. **'पुण्यमदृश्यन्त्या'** इति कुं.पाठः ।

सत्यवत्युवाच –

**शक्तेः पुत्रो महाप्राज्ञः पराशर इति श्रुतः ।**
**नावं वाहयमानाया मम दृष्ट्वा सुशिक्षितम् ।**
**अपास्य मत्स्यगन्धत्वं योजनाद्गन्धतां ददौ ॥ ८५ ॥**

**मम दृष्ट्वा सुशिक्षितम्** इत्यत्र सुशिक्षितं नौकाप्रापणकौशलम् ।

॥ इति पञ्चमोऽध्यायः ॥

## ॥ अथ सप्तमोऽध्यायः ॥

**[1]तथा भीष्मः शान्तनवो गङ्गायाममितद्युतिः ।**
**वसुवीर्यात् [2]समभवत् महावीर्यो महायशाः ॥ १३३ ॥**

**वसुवीर्यात्समभवत्** इत्यत्र ल्यब्लोपनिमित्ता पञ्चमी । अष्टवसूनां शौर्यं स्वात्मनि सन्निधाप्य समभवदित्यर्थः । यदाहुः [3]'तथा बलं नोऽखिलानामुपैतु' इति ।

**अणीमाण्डव्य इत्येवं विख्यातः स महायशाः ।**
**स धर्ममाहूय पुरा [4]महर्षिरिदमब्रवीत् ॥ १३५ ॥**

**तन्मे सहस्रसमितं कस्मान्नेहाजयत्तपः ।**
**गरीयान् ब्राह्मणवधः सर्वभूतवधाद्यतः ।**
**तस्मात्त्वं किल्बिषादस्माच्छूद्रयोनौ जनिष्यसि ॥ १३७ ॥**

---

१. अत्र कुं. पाठानुसारेण पूर्वोध्याय एव अनुसरति ।
२. **'समभवत्'** इति कुं. पाठः ।
३. म.भा.ता.नि. ११.२९ ; ४. **'महर्षिरिदमुक्तवान्'** इति कुं.पाठः ।

**स धर्ममाहूय पुरा** इत्यत्र महर्षिः आणिमाण्डव्यः **पुरा** पूर्वं मक्षिकावधाच्छूलं प्राप्तोऽसीति स्वात्मानं प्रत्युक्तवन्तं धर्मं **पुनराहूय** आमन्त्र्य इदमब्रवीदिति सम्बन्धः । सहस्रसमितं मे तपः तपआख्यं कर्तृ **तत्** मक्षिकावधोत्थक्षुद्रपापं इह कस्मान्नाजयत् अजयदेव । तथापि तदेव पापं पर्वतीकृत्य मक्षीवधाच्छूलं प्राप्तोऽसीत्युक्त्वा मां मत्तपश्चाल्पीकुर्वंस्त्वमेव ब्राह्मणं मामवधीरिति अर्थात्प्राप्तवाक्यशेषः । यतः ब्रह्मवधः सर्वभूतवधाद्गरीयान्, तस्मात् कारणात् **किल्बिषात्** मद्वधरूपकिल्बिषात् त्वं शूद्रयोनौ जनिष्यसीति योजना ।

**आत्मानमव्ययं चैव प्रकृतेः[1] प्रभवं परम् ।**
**पुरुषं विश्वकर्माणं सत्वयोगं ध्रुवाक्षरम् ॥ १४३ ॥**

**प्रकृतेः प्रभवं परम्** इत्यत्र प्रभवत्यस्मादिति व्युत्पत्त्या **प्रभवं** उत्पत्तिकारणम् । 'प्रकृतिं परम्' इति पाठे, प्रकर्षेण करोतीति **प्रकृतिः** ।

**अनन्तमचलं मेरुं[2] हंसं नारायणं प्रभुम् ।**
**धातारमजमव्यक्तं यमाहुः परमव्ययम् ॥ १४४ ॥**

**अनन्तमचलं मेरुम्** इत्यत्र 'ईर प्रेरणे' इति धातोः मायाः लक्ष्म्याः ईः प्रेरणशीलं महामेर्वन्तर्गतं च ।

**तथा पुत्रशतं जज्ञे धृतराष्ट्रस्य धीमतः ।**
**दुर्योधनप्रभृतयो युयुत्सुः करुणस्तथा[3] ॥ १६० ॥**

---

१. T,G ; BORI पृ. २५३; **'प्रकृतिं प्रभवं प्रभुम्'** इति कुं.पाठः ।
२. S (except G1) ; BORI पृ. २५३; **'देवं'** इति कुं.पाठः ।
३. M1,6; BORI पृ. २५४; **'करणस्तथा'** इति कुं.पाठः ।

**युयुत्सुः करुणस्तथा** इत्यत्र करुणयति यस्मिन् पिता स करुणः कृपाविषय एव; न तु राज्यार्ह इति भावः । 'कारणात्' इति पाठे कस्माच्चित्कारणादित्यर्थः ।

**[1]तेषामपरिमेयानां नामधेयानि सर्वशः ।**
**[2]न शक्यं परिसङ्ख्यातुं वर्षाणामर्बुदैरपि ॥**
**एते तु कीर्तिता मुख्या यैराख्यानमिदं ततम् ॥ १६९ ॥**

**तेषामपरिमेयानि नामधेयानि सर्वशः । न शक्यं परिसङ्ख्यातुं वर्षाणामर्बुदैरपि** इत्यनेन अनादिकालमारभ्यानन्तकालपर्यन्तं प्रतिकल्पं भूत्वा भूत्वा मुक्तिं गताः सज्जीवास्तमोगता दुर्जीवाश्चानन्तानन्ताः सन्तीति तत्त्वमभिप्रैति ।

**॥ इति सप्तमोऽध्यायः ॥**

## ॥ अथ अष्टमोऽध्यायः ॥

**[3]तदा निःक्षत्रिये लोके भार्गवेण कृते सति ।**
**ब्राह्मणान् क्षत्रिया राजन् सुतार्थिन्योऽभिचक्रमुः ॥ ५ ॥**

**ब्राह्मणान् क्षत्रिया राजन्** इत्यत्र **क्षत्रियाः** क्षत्रियस्त्रियः ।

**ताभिः सह समापेतुर्ब्राह्मणाः संशितव्रताः ।**
**ऋतावृतौ नरव्याघ्र न कामान्नानृतौ तथा ॥ ६ ॥**

---

१. D(except Da,D5); BORI पृ. २५५; **'तेषामपरिमेयानि'** इति कुं. पाठः ।
२. BORI पृ.२५५; **'न शक्यानि समाख्यातुं वर्षाणामयुतैरपि'** इति कुं.पाठः ।
३. कुं. ६५ अध्यायः

**न कामान्नानृतौ तथा** इत्यत्र **अनृतौ** ऋतुरहितकाले ।

**न बाल एव म्रियते तदा कश्चिज्जनाधिप ।**
**न च स्त्रियं प्रजानाति कश्चिदप्राप्तयौवनाम्** ॥ १७ ॥

**न च स्त्रियं प्रजानाति** इत्यत्र सम्भोगयोग्या नारी स्त्रीत्युच्यते ।

**फेनपांश्च तथा वत्सान्न दुहन्ति स्म मानवाः** ॥ २२ ॥

**फेनपांश्च तदा वत्सान्न दुहन्ति स्म मानवा** इत्यत्र फेनपान् वत्सान् मानवा **न दुहन्ति** 'दुह प्रपूरणे' इति धातोः अन्नरसादिना न पूरयन्ति । क्षीरं सर्वं स्वयमेव गृहीत्वा फेनमात्रपायिनो वत्सान् कृत्वा पुनस्तदुदरपूर्त्यर्थं मानवा न प्रयतन्ते । किन्तु गाव एव स्वक्षीरेण तान् पूरयन्ति। वत्सोदरपूर्त्यनन्तरमुर्वरितं क्षीरमेव मानवा गृह्णन्तीति भावः । यद्वा वत्सान् फेनपान् कृत्वा क्षीरं स्वयमेव न दुहन्तीत्यर्थः ।

**न कूटमानैर्वणिजः पण्यं विक्रीणते तदा** ॥ २२ ॥

**न कूटमानैर्वणिज** इत्यत्र **कूटमानैः** कपटेन कृतमानैः । मानपदं प्रस्थादीनामप्युपलक्षणम् ।

**काले गावः प्रसूयन्ते नार्यश्च भरतर्षभ ।**
**फलन्त्यृतुषु**[१] **वृक्षाश्च पुष्पाणि च फलानि च** ॥ २५ ॥

**फलन्त्यृतुषु वृक्षाश्च** इत्यत्र 'फल निष्पत्तौ' इति धातोः **फलन्ति** निष्पादयन्ति ।

---

१. BORI पृ.२५७; **'भवन्त्यृतुषु वृक्षाणां'** इति कुं.पाठः ।

**इह देवत्वमिच्छन्तो मानुषेषु प्रजज्ञिरे[१] ।**
**उत्पद्य[२] भुवि भूतेषु तेषु तेष्वसुरा विभो ॥ २९ ॥**

**इह देवत्वमिच्छन्तो मानुषेषु प्रजज्ञिर** इत्यत्र मनुष्येषु उत्पद्य तपः कृत्वा देवत्वं प्राप्स्याम इतीच्छन्त इत्यर्थः ।

**जातैरिह महीपाल जायमानैश्च तैर्मही ।**
**न शशाकात्मनात्मानमियं धारयितुं धरा ॥ ३१ ॥**

**न शशाकात्मनाऽऽत्मानम्** इत्यत्र **आत्मना** प्रयत्नेन ।

**वीर्यवन्तोऽवलिप्तास्ते नानावीर्यधरा[३] महीम् ।**
**इमां सागरपर्यन्तां परीयुररिमर्दनाः ॥ ३३ ॥**

**नानावीर्यधरा महीम्** इत्यत्र नानावीर्यान् गजतुरगादीन् धारयन्तीति ते तथोक्ताः । अतो न पौनरुक्त्यम् । 'नानारूपा' इति पाठे स्पष्टोऽर्थः ।

**आश्रमस्थान्महर्षींश्च धर्षयन्तस्ततस्ततः ।**
**अब्रह्मण्या वीर्यमदा मत्ता बलमदेन[४] च ॥ ३६ ॥**

**बलमदेन** सेनामदेन ।

**इमां[५] महीं तदा राजन् नागाश्च न नगा गजाः ।**
**तदा धारयितुं शेकुराक्रान्तां दानवैर्बलात् ॥ ३८ ॥**

---

१. **'तपस्विनः'** इति कुं.पाठः । ; २. **'जज्ञिरे'** इति कुं. पाठः ।
३. **'नानारूपधरा'** इति कुं.पाठः ।
४. $\tilde{N}_3$,$D_2$,T,M ; BORI पृ. २५७; **'मदबलेन'** इति कुं.पाठः ।
५. **'न ह्यमी भूतसत्त्वौधाः पन्नगाः सनगां महीम्'** इति कुं.पाठः ।

**इमां महीं तदा राजन्** इत्यत्र **नागाः** शेषाद्याः, भूगर्तेषु तत्र तत्रोद्धृतफणा नागाश्च भुवं धारयन्तीत्यतो बहुवचनम्। **नगाः** भूधारिणः पर्वताः। **गजाः** दिग्गजाः।

**ततो मही महीपाल भारार्ता भयपीडिता।**
**जगाम शरणं देवं सर्वभूतपितामहम्** ॥ ३९ ॥

**तत्**[१] तस्मात् अधर्मोपचयात्।

**तत्प्रधानात्मनस्तस्य भूमेः कृत्यं स्वयम्भुवः।**
**पूर्वमेवाभवद्राजन् विदितं परमेष्ठिनः** ॥ ४३ ॥

**तत्प्रधानात्मन** इत्यत्र **प्रधानात्मनः** सकलजीवेषु श्रेष्ठस्वरूपस्य। **तत्** कृत्यम्।

॥ इति अष्टमोऽध्यायः ॥

## ॥ अथ नवमोऽध्यायः ॥

**आदिश्य च स्वयं शक्रः सर्वानेव दिवौकसः।**
**निर्जगाम पुनस्तस्मात् क्षयान्नारायणस्य ह** ॥ २ ॥

**क्षयान्नारायणस्य ह** इत्यत्र **क्षयात्** मन्दिरात्। [२]'निवेशः शरणं क्षयः' इत्यमरः।

**असुराणामुपाध्यायः शुक्रः[३] पुत्रः कवेर्ऋषिः।**
**ख्याताश्चोशनसः पुत्राश्चत्वारोऽसुरयाजकाः** ॥ ३६ ॥

---

१. तत् शब्दो मूलकोशेषु न दृश्यते। कचित् 'ततः' इति उपलभ्यते।

२. अ.को. २-२-६

३. $T_1, M_{6,8}$; BORI पृ. २६२; **'शुक्रस्त्वृषिसुतोऽभवत्'** इति कुं. पाठः।

**असुराणामुपाध्याय** इत्यत्र शुक्र इति ख्यातः कवेः कविनामक-भृगुपुत्रस्य पुत्रः असुराणामुपाध्याय इति योजना। कविपुत्रत्वादेव हि शुक्रः काव्य इत्युच्यते।

**त्वष्टाऽवरस्तथात्रिश्च[1] द्वावन्यौ भद्रकर्मिणौ[2]।**
**तेजसा सूर्यसङ्काशा ब्रह्मलोक परायणाः ॥ ३७ ॥**

**त्वष्टाऽवर** इत्यत्र त्वष्टा **अवरः** अनुजः, तथा अत्रिश्चेति द्वौ; अन्यौ भद्रकर्मिणौ पुत्रौ।

**तथा शालिशिरा राजन्पर्जन्यश्च चतुर्दशः।**
**कलिः पञ्चदशास्तेषां नारदश्चैव षोडशः।**
**इत्येते देवगन्धर्वा मौनेयाः परिकीर्तिताः ॥ ४४ ॥**

**मौनेयाः परिकीर्तिता** इत्यत्र **मौनेयाः** मुनिनामककश्यपपत्नी-पुत्राः।

**इत्येते देवगन्धर्वाः प्राधेयाः परिकीर्तिताः।**
**इमं त्वप्सरसां वंशं विदितं पुण्यलक्षणम् ॥ ४८ ॥**

**इमं त्वप्सरसाम्** इत्यत्र **इमं** वक्ष्यमाणम्।

**सुप्रिया[3] च सुबाहुश्च विख्यातौ च हाहा हूहूः।**
**तुम्बुरुश्चेति चत्वारः स्मृता गन्धर्वसत्तमाः ॥ ५१ ॥**

---

१. BORI पृ. २६२ ; **'त्वष्टा धरस्तथात्रिश्च'** इति कुं. पाठः।
२. $D_3$,$S_{(G5\ omit)}$ ; BORI पृ. २६२; **'रौद्रकर्मिणौ'** इति कुं.पाठः।
३. $K_{0,1,3}$,$V_1$,$D_5$; BORI पृ. २६४; **'सुप्रिया सुबाहुश्च'** इति कुं. पाठः।

**सुप्रिया च सुबाहुश्च** इत्यत्र [१]'सुप्रिया' इत्यस्य पूर्वेणान्वयः ।

॥ इति नवमोऽध्यायः ॥

## ॥ अथ दशमोऽध्यायः ॥

**वैशम्पायन उवाच –**

**[२]ब्रह्मणो मानसाः पुत्रा विदिताः षण्महर्षयः ।**
**एकादश [३]तथा रुद्राः स्थाणोश्चैव हि मानसाः** ॥ १ ॥

**स्थाणोश्चैव हि मानसा** इत्यत्र स्थिरत्वात् **स्थाणुः** ब्रह्मा ।

**क्रतोः क्रतुसमाः पुत्राः पतङ्गसहचारिणः ।**
**विश्रुतास्त्रिषु लोकेषु सत्यव्रतपरायणाः** ॥ ९ ॥

**पतङ्गसहचारिण** इत्यत्र **पतङ्गः** सूर्यः । [४]'पतङ्गौ पक्षिसूर्यौ च' इत्यमरः ।

**[५]पितामहो मुनिर्देवस्तस्य पुत्रः प्रजापतिः ।**
**तस्याष्टौ वसवः पुत्रास्तेषां वक्ष्यामि विस्तरम्** ॥ १७ ॥

**पितामहो मुनिर्देव** इत्यत्र देवः पितामहः **मुनिः** आदिमुनिः, **तस्य पुत्रः** परम्परया पुत्रः **प्रजापतिः** कश्यपः ।

---

१. सुप्रिया च अप्सराः । तस्मात् पूर्वोक्तासु अप्सरासु गणनीया ।
२. कुं. ६७ अध्यायः
३. S; BORI पृ. २६५; **'सुताः स्थाणोः ख्याताः परमतेजसः'** इति कुं. पाठः ।
४. अ.को. ३-३-२०
५. S; BORI पृ. २६६; **'पैतामहो वसवः पुत्रास्तेषां वक्ष्यामिविस्तरम्'** इति कुं.पाठः ।

उर्वरितपञ्चशतकन्यानां पुत्रानाह– **धूम्राया** इत्यादिना ।

**धूम्रायास्तु धरः पुत्रो ब्रह्मविद्यो ध्रुवस्तथा ।**
**चन्द्रमास्तु मनस्विन्याः श्वासायाः श्वसनस्तथा ॥ १९ ॥**

**स्तनं तु दक्षिणं भित्वा ब्रह्मणः[1] पुरुषोत्तमः ।**
**निस्सृतो भगवान् धर्मः सर्वलोकसुखावहः ॥ ३१ ॥**

**ब्रह्मणः पुरुषोत्तम** इत्यत्र पुरुषः उत्तमो भवति यस्माद्धर्मात् स पुरुषोत्तमः ।

**कामस्य तु रतिर्भार्या शमस्य प्राप्तिरङ्गना ।**
**[2]नन्दी तु भार्या हर्षस्य यासु लोकाः प्रतिष्ठिताः ॥ ३३ ॥**

**नन्दी तु भार्या हर्षस्य** इत्यत्र नन्दयतीति **नन्दी** ।

**त्वाष्ट्री तु सवितुर्भार्या वडवारूपधारिणी ।**
**असूयत महाभागा सान्तरिक्षेऽश्विनावुभौ ॥ ३५ ॥**

**वडवारूपधारिणी** इत्यत्र **वडवा** अश्वा । [3]'वाम्यश्वा वडवा' इत्यमरः । **असूयत** असूत । स्वार्थिको णिच् ।

**त्रयस्त्रिंशत इत्येते देवास्तेषामहं तव ।**
**अन्वयं सम्प्रवक्ष्यामि पक्षैश्च कुलतो गणैः[4] ॥ ३७ ॥**

---

१. S ; BORI पृ. २६८; **'ब्रह्मणो नरविग्रहः'** इति कुं.पाठः ।
२. S ; BORI पृ. २६८; **'नन्दा'** इति कुं.पाठः ।
३. **अ.को. २-८-४६**
४. **'गणान्'** इति कुं.पाठः ।

**पक्षैश्च कुलतो गणैः** इत्यत्र **पक्षैः** [१]तत्पक्षस्थैः सह ।

[२]**रुद्राणामपरं पक्षं साध्यानां मरुतां तथा ।**
**वसूनां भार्गवं विद्याद् विश्वेदेवांस्तथैव च ॥ ३८ ॥**

**रुद्राणामपरं पक्षम्** इत्यत्र **रुद्राणामपरं पक्षं** अपरपक्षाभिमानि-देवतागणं रुद्राणां पक्षं [३]विद्यादित्यावृत्त्या योजना । साध्यानां मरुतां तथा वसूनां च भार्गवं पक्षं विद्यात् ।

[४]**अश्विभ्यां गुह्यकान्विद्धि सर्वौषध्यस्तथा पशून् ।**
**एते देवगणा राजन् कीर्तितास्तेऽनुपूर्वशः ॥ ४० ॥**

**अश्विभ्यां गुह्यकान्विद्धि** इत्यत्र **सर्वौषध्यः** सर्वौषधीः पशून् गुह्यकांश्च अश्विभ्यां विद्यादिति पक्षैरित्यत्रोक्तपक्षभूतदेवानां निर्णयः ।

**भृगोः पुत्रः कविर्विद्वान् शुक्रः कविसुतो ग्रहः ।**
**त्रैलोक्यप्राणयात्रार्थं वर्षावर्षे नयानये[५] ।**
**स्वयम्भुवा नियुक्तः सन् भुवनं परिधावति ॥ ४२ ॥**

**वर्षावर्षे नयानये । स्वयम्भुवा नियुक्त** इत्यत्र वर्षं च अवर्षं च वर्षावर्षं, नयश्च अनयश्च नयानयमिति द्वन्द्वैकवद्भावेन सप्तमी । तत्र शुक्रः स्वयम्भुवा नियुक्तः सन् **परिधावति** ज्योतिश्चक्रे स्थित्वा भुवनं परितो धावति । स्वानुकूलगत्या वर्षं स्वानुकूलस्थित्या नयं विपरीतं विपर्ययं च दर्शयतीति भावः ।

---

१. **तत्तत्पक्षस्थैः** सो.मु.पा. ; २. **'रुद्राणामपरः पक्षः'** इति कुं. पाठः ।
३. **विन्द्यात्** सो.मु.पा. ; ४. BORI पृ. २६८; **'अश्विनौ'** इति कुं.पाठः ।
५. S ; BORI पृ. २६८; **'भयाभये'** इति कुं.पाठः ।

**तस्मिन्नियुक्ते [१] गुरुणा योगक्षेमाय भार्गवे ।**
**अन्यमुत्पादयामास पुत्रं भृगुरनिन्दितम् ॥ ४४ ॥**

**तस्मिन्नियुक्ते गुरुणा** इत्यत्र **गुरुणा** ब्रह्मणा । 'विधिना' इति पाठे स्पष्टोऽर्थः ।

**च्यवनं दीप्ततपसं धर्मात्मानं [२] अतीन्द्रियम् ।**
**यः स रोषाच्च्युतो गर्भान्मातुर्मोक्षाय भारत ॥ ४५ ॥**

**धर्मात्मानमतीन्द्रियम्** इत्यत्र इन्द्रियाण्यतिक्रम्य वर्तमानः **अतीन्द्रियः** जितेन्द्रिय इत्यर्थः । तम् ।

**आरुषी तु मनोः कन्या तस्य पत्नी मनीषिणः ।**
**और्वस्तस्यां समभवदूरुं भित्त्वा [३] विनिर्गतः ॥ ४६ ॥**

**ऊरुं भित्वा विनिर्गत** इत्यत्र **ऊरुं** मातुरूरुम् ।

**[४] तयोस्तु भगिनी ज्येष्ठा लक्ष्मीः पद्मगृहा शुभा ।**
**तस्यास्तु मानसाः पुत्रास्तुरगा व्योमचारिणः ॥ ५१ ॥**

**तयोस्तु भगिनी ज्येष्ठा लक्ष्मीः पद्मगृहा** इत्यत्र **तयोः** धातृविधात्रोः ।

**वरुणस्य भार्या या ज्येष्ठा शुक्राद्देवी व्यजायत ।**
**तस्याः पुत्रं बलं विद्धि सुरां च सुरनन्दिनीम् ॥ ५२ ॥**

---

१. $T_2$ ; BORI पृ. २६८; **'विधिना'** इति कुं.पाठः ।
२. $M_3$ ; BORI पृ. २६८; **'यशस्विनम्'** इति कुं.पाठः ।
३. $D_3$,S ; BORI पृ. २६८; **'महायशाः'** इति कुं.पाठः ।
४. G,$M_3$ ; BORI पृ. २६८; **'तयोरेव स्वसा देवी'** इति कुं.पाठः ।

**सुरां च सुरनन्दिनीम्** इत्यत्र **सुरां** वारुणीम् ।

**प्रजानामन्नकामानां अन्योन्यपरिभक्षणात् ।**
**अधर्मस्तत्र सञ्जातः सर्वभूतविनाशकः** ॥ ५३ ॥

**अधर्मस्तत्र सञ्जात** इत्यत्र **तत्र** सुरायाम् ।

**धृतराष्ट्री तु हंसांश्च कलहंसांश्च सर्वशः ।**
**चक्रवाकांश्च [1]भद्रं ते जनयामास सैव तु** ॥ ५८ ॥

**चक्रवाकांश्च भद्रं त** इत्यत्र 'भद्रं ते' इति मध्ये मध्ये राज्ञ आशीर्दानाम् ।

**[2]ततः क्रोधवशा नारीः [3]विजज्ञे ह्यात्मसम्भवान् ।**
**मृगी च मृगमन्दा च हरी भद्रमना अपि** ॥ ६० ॥

**ततः क्रोधवशाः** इत्यादिना पुनर्दक्षपुत्रीसन्तानमाह । **विजज्ञे ह्यात्मसम्भवान्** इत्यत्र **आत्मसम्भवान्** पुत्रान् **विजज्ञे** जनयामास ।

**अपत्यं तु मृगाः सर्वे मृग्या नरवरोत्तम ।**
**ऋक्षाश्च मृगमन्दायाः [4]सृमराश्चमरा अपि** ॥ ६२ ॥

**सृमराश्चमरा अपि** इत्यत्र **सृमराः** [5]गवयाः । [6]'सृमरो गवयः शशः' इत्यमरः ।

---

१. BORI पृ. २७०; **'भद्रा तु'** इति कुं.पाठः ।
२. $D_3$,S ; BORI पृ. २७०; **'नव'** इति कुं.पाठः ।
३. $D'_3$,S ; BORI पृ. २७०; **'प्रजज्ञे क्रोधसम्भवाः'** इति कुं.पाठः ।
४. BORI पृ. २७०; **'सृमराश्च परन्तप'** इति कुं.पाठः ।
५. पशुजातिविशेषाः सो.मु.पा.; ६. अ.को. २-४-११

**प्रजज्ञे त्वथ शार्दूली [1] सिंहान् व्याघ्रांश्च भारत ।**
**द्वीपिनश्च महासत्वान्सर्वानेव न संशयः ॥ ६५ ॥**

**सिंहान् व्याघ्रांश्च भारत** इत्यत्र देहे तिर्यकृश्यामरेखाशतोपेताः स्थूलशार्दूला **व्याघ्राः** । वर्तुलनानावर्णरोमाङ्काः सूक्ष्मशार्दूला **द्वीपिनः** ।

**इरायाः कन्यका जातास्तिस्रः कमललोचनाः ।**
**वनस्पतीनां वृक्षाणां वीरुधां चैव मातरः ॥ ६९ ॥**

**वनस्पतीनां वृक्षाणाम्** इत्यत्र विना पुष्पं फलन्ति ये पनसाद्याः ते वनस्पतयः; अनीदृशास्तरवो वृक्षा इति विभागः ।

**॥ इति दशमोऽध्यायः ॥**

## ॥ अथ एकादशोऽध्यायः ॥

[2] **दैतेयः सोऽभवद्राजा हार्दिक्यो मनुजर्षभः ।**
**वृषपर्वेति विख्यातः श्रीमान्यस्तु महासुरः ॥ १५ ॥**

**हार्दिक्यो मनुजर्षभ** इत्यत्र **हार्दिक्यः** कृतवर्मानुजः कश्चित् हृदिकतनयः ।

**प्रह्लादो नाम बाह्लीकः स बभूव नराधिपः ।**
**चन्द्रस्तु दितिजश्रेष्ठो लोके ताराधिपोपमः ॥ ३१ ॥**

---

१. BORI पृ. २७८; **'सिंहान् व्याघ्राननेकशः'** इति कुं.पाठः ।
२. कुं. ६८ **अध्यायः**

**प्रह्लादो नाम बाह्लीक** इत्यत्र **बाह्लीकः** बाह्लीकविषयाधिपतिः **प्रह्लादः** प्रह्लादो नाम कश्चिद्राजा।

**महादेवान्तकाभ्यां च कामात् क्रोधाच्च भारत।**
**एकत्वमुपसम्पद्य जज्ञे शूरः परन्तपः** ॥ ७२ ॥

**अश्वत्थामा महावीर्यः शत्रुपक्षभयावहः।**
**वीरः कमलपत्राक्षः क्षितावासीन्नराधिपः** ॥ ७३ ॥

**महादेवान्तकाभ्यां च कामात्क्रोधाच्च भारत** इत्यत्र कामान्निमित्तात् योऽर्धनारीश्वरः स महादेवः, दिव् धातोः क्रीडायां प्रयोगात्; क्रोधान्निमित्तात् जगत्संहारकर्ता यः कालाग्निरुद्रः सोऽन्तकः अश्वत्थाम्नि कलौ रागाय योग्येषु पाण्डवेषु द्वेषाय च ताभ्यामंशाभ्यामेकत्वमुपसम्पद्य अश्वत्थामा जज्ञ इति योजना।

**उद्दीपितं येन वैरं भूतान्तकरणं महत्।**
**पौलस्त्या भ्रातरः[१] सर्वे जज्ञिरे मनुजेष्विह** ॥ ८९ ॥

**पौलस्त्या भ्रातरः सर्व** इत्यत्र **पौलस्त्याः** पुलस्त्यकुलोत्पन्नाः रावणपुत्राः।

**तानि षोडश देवीनां सहस्राणि नराधिप।**
**बभूवुर्मानुषे लोके वासुदेवपरिग्रहाः** ॥ १५५ ॥

**तानि षोडश देवीनाम्** इत्यत्र **देवीनां** गोपस्त्रीरूपदेवाङ्गनानां तानि षोडश सहस्राणि बभूवुः।

---

१. BORI पृ. २७९; **'भ्रातरश्चास्य'** इति कुं.पाठः।

**श्रियस्तु भागः सञ्जज्ञे रत्यर्थं पृथिवीतले ।**
**द्रुपदस्य कुले जाता वेदिमध्यादनिन्दिता ॥ १५७ ॥**

**श्रियस्तु भागः सञ्जज्ञ** इत्यत्र शंरूपे वायौ रतत्वात् श्रीर्भारती ।

॥ इति एकादशोऽध्यायः ॥

## ॥ अथ त्रयोदशोऽध्यायः ॥

१
**सहस्रसङ्ख्यान् सम्भूतान् दक्षपुत्रांश्च नारदः ।**
**मोक्षमध्यापयामास साङ्ख्यज्ञानमनुत्तमम् ॥ १० ॥**

**मोक्षमध्यापयामास** इत्यत्र मोचयतीति व्युत्पत्त्या मोक्षमिति ज्ञानस्य विशेषणम् । **साङ्ख्यज्ञानं** तत्वसङ्ख्यासम्बन्धितया साङ्ख्य-पदोक्तं सच्छास्त्रं तत्वसङ्ख्यानाख्यं पाञ्चरात्रं वा साङ्ख्यं तज्जनितं ज्ञानम् ।

२
**नाशीस्त्वं योजयामास दिगन्तज्ञानकर्मसु ।**
**ततः पञ्चाशतं कन्याः पुत्रिका अभिसन्दधे ॥**
**प्रजापतिः प्रजा दक्षः सिसृक्षुर्जनमेजय ॥ ११ ॥**

**नाशीस्त्वं योजयामास दिगन्तज्ञानकर्मसु** इत्यत्र न विद्यते आशीः आशा येषां ते नाशिषः तेषां भावः **नाशीस्त्वं,** यतित्वमित्यर्थः । भूप्रदक्षिणेन दिगन्तानां ज्ञानमेव कर्म स्वकर्तव्यं येषां ते तथोक्ताः ।

**कारूषमथ शर्यातिं तथैवात्राष्टमीमिलाम् ।**
**पृषध्रं नवमं प्राहुः क्षत्रधर्मपरायणम् ॥ १९ ॥**

---

१. कुं. ६९ अध्यायः ; २. 'नाशार्थं' इति कुं.पाठः ।

**तथैवात्राष्टमीम्** इति इलाया अपि वैवस्वतमनुकुमारित्वकथनात् कुमारपरम्परया सूर्यवंशः कुमारीपरम्परया सोमवंशश्च वैवस्वत-मन्वन्तरारम्भकालमारभ्यैव प्रवृत्तः। अतः कार्तवीर्यार्जुनस्याष्टाविंशति-मकृतयुगे भार्गवरामेण समागमो न्यायप्राप्त इति न काचिदनुपपत्तिः।

**सा वै तस्याभवन्माता पिता चैवेति नः श्रुतम्।**
**त्रयोदश समुद्रस्य द्वीपानश्नन् पुरूरवाः ॥ २२ ॥**

**त्रयोदश समुद्रस्य द्वीपान्** इत्यत्र **समुद्रस्य** लवणसमुद्रस्य अन्त-र्गतलङ्काद्यवान्तरद्वीपषट्कैः सहिताः समुद्रस्य जात्येकवचनमिदम्। सप्तसमुद्राणां सम्बन्धिनो ये सप्तद्वीपाः ते त्रयोदशद्वीपाः।

**अनुदर्शं ततश्चक्रे प्रत्यगृह्णान्न चाप्यसौ।**
**ततो महर्षिभिः क्रुद्धैः [1]शप्तः सद्यो व्यनश्यत ॥ २५ ॥**

**शप्तः सद्यो व्यनश्यत** इत्यत्र **व्यनश्यत** राज्यात् भ्रष्टो बभूव।

**यौवनेन चरन् कामान् युवा युवतिभिः सह।**
**विहर्तुमहमिच्छामि साह्यं कुरुत पुत्रकाः ॥ ४१ ॥**

**साह्यं कुरुत पुत्रका** इत्यत्र सहेत्यस्य भावः **साह्यं**, सहायमित्यर्थः।

**तं पुत्रो दैवयानेयः पूर्वजो वाक्यमब्रवीत्।**
**[2]यत्कार्यं भवता कार्यमस्माकं यौवनेन च ॥ ४२ ॥**

---

१. BORI पृ. ३२० ; **'सद्यः शप्तो'** इति कुं.पाठः।
२. D₁ ; BORI पृ. ३२१; **'किं कार्यं भवतः कार्यमस्माकं यौवनेन ते'** इति कुं.पाठः।

**यत्कार्यं भवता कार्यमस्माकं यौवनेन च** इत्यत्र भवता यौवनेन **यत्** स्त्रीभोगादिकं कार्यं तदेव यौवनेन अस्माकं च कार्यमिति सर्वान् गर्भीकृत्य यदोर्वचनम् । अत एवम् 'अस्माकम्' इति प्रयोगः ।

**यजतो दीर्घसत्रैर्मे शापाच्चोशनसो मुनेः ।**
**कामार्तः[१] परिहीणोऽयं तप्येयं तेन पुत्रकाः ॥ ४४ ॥**

**कामार्तः परिहीण** इत्यत्र **परिहीणः** कामेन परिहीणः ।

**राजंश्चराभिनवया तन्वा यौवनगोचरः ।**
**अहं जरां समादाय राज्ये स्थास्यामि ते ज्ञया ॥ ४७ ॥**

**राजंश्चराभिनवया** इत्यत्र अभिनवया तन्वा 'चर गतिभक्षणयोः' इति धातोः **चर** भुङ्क्ष । **स्थास्यामि ते ज्ञया** इत्यत्र **ज्ञया** आज्ञया आ सम्यक् ज्ञा ह्याज्ञा ।

**नाध्यगच्छत्तदा तृप्तिं कामानां स महायशाः ।**
**अवेक्ष्य[२] मनसा तस्य राजन् गाथां तदा जगौ ॥ ५२ ॥**

**अवेक्ष्य मनसा तस्य** इत्यत्र **तस्य** कामस्य तृप्तिं 'नाध्यगच्छत्' इत्यत्रोक्ता(म)तृप्तिं मनसा अवेक्ष्येति योजना ।

**यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।**
**नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत् ॥ ५४ ॥**

**यत्पृथिव्यां व्रीहियवम्** इत्यत्र व्रीहयश्च यवाश्च व्रीहियवम् ।

---

१. $G_2$,$M_5$ ; BORI पृ. ३२१; **'कामार्थः'** इति कुं.पाठः ।
२. **'अवेत्य मनसा राजन्निमां'** इति कुं. पाठः ।

'हिरण्यम्' इति जात्येकवचनम् । एवञ्च पृथिव्यां यावन्तो व्रीहयः यावन्ति हिरण्यानि यावन्तः पशवः यावत्यः स्त्रियः तदेतत्सर्वं **एकस्य** कामातुरस्य पुरुषस्य नालम् । एतावदपि नालं चेत् स्वर्गस्थमपि सर्वं सङ्ग्राह्यम् । शमः किंनिमित्त इति शङ्कापरिहाराय 'इति' इत्युक्तम् । **इति** अनेन प्रकारेण **मत्वा** विचार्य यन्नालमिति प्रागुक्तं, तदेव महता प्रयत्नेनापि दुर्लभम् । इतोऽतिरिक्तं तु सुतरां दुर्लभम् । अत आशाया अपर्यवसानात् असाध्यपरम्पराविषयिणी अलाभेन सदा दुःखदायिनी च आशैवेयं त्याज्येत्येतावत्प्रकारान् मत्वा विचार्येति भावः ।

**न बिभेति यदा चायं यदा चास्मान्न बिभ्यति ।**
**यदा नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा ॥ ५६ ॥**

**न बिभेति यदा चायम्** इत्यत्र **अयं** ज्ञानी यदा **न बिभेति** लोकान्न बिभेति सर्वत्र निराशत्वादिति भावः । अस्मात् लोकाः यदा न बिभ्यति अतिशान्तत्वादिति भावः ।

**जनमेजय उवाच –**

**ययातिः[१] पूर्वजोऽस्माकं दशमो यः प्रजापतेः ।**
**कथं स शुक्रतनयां लेभे परमदुर्लभाम् ॥ १ ॥**

**दशमो यः प्रजापतेः** इत्यत्र [२]'अव्यक्तप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः । तस्मान्मरीचिः सञ्जज्ञे दक्षश्चैव प्रजापतिः । अङ्गुष्ठाद्दक्षम-[illegible]जच्चक्षुर्भ्यां च मरीचिनम् । मरीचेः कश्यपः पुत्रो दक्षस्य दुहिताऽदितिः । अदित्यां कश्यपाद्विवस्वान्, विवस्वतो मनुः, मनोरिळा, इळायां पुरूरवाः, पुरूरवस आयुः, आयुषो नहुषः, नहुषाद्ययातिः'

१. कुं. ७० अध्यायः ; २. आदि ६३-२-३

इति वंशसङ्ग्रहाध्यायोक्तरीत्या ययातेर्दशमत्वमनुसन्धेयम् । यद्वा प्रजानां पतिरीश्वर इति विष्णुरेव प्रजापतिः । ब्रह्मणो विष्णुप्रजारूपत्वान्न मुख्यं प्रजापतित्वम् । एवञ्च वंशस्यादिपुरुषो नारायणः, ततो ब्रह्मा, ततो मरीचिः, ततः कश्यपः, ततः शशाङ्कः, ततो बुधः, ततः पुरूरवाः, तत आयुः, ततो नहुषः, ततो ययातिरिति ययातेर्दशमत्वमिति भावः ।

**एतदिच्छाम्यहं श्रोतुं व्यासतो[१] द्विजसत्तम ।**
**आनुपूर्व्या च मे शंस राज्ञो वंशकरान् पृथक् ॥ २ ॥**

**श्रोतुं व्यासतो द्विजसत्तम** इत्यत्र **व्यसतो** विस्तारतः । 'व्यासः प्रपञ्चो विस्तारः स तु शब्दस्य विस्तरः' इत्यभिधानम् ।

**ययातिरासीन्नृपतिर्देवराजसमद्युतिः ।**
**तं शुक्रवृषपर्वाणौ वव्राते वरमुत्तमम्[२] ॥ ३ ॥**

**वव्राते वरम्** इत्यत्र **वरं** जामातरम् । 'वरो जामातरि श्रेष्ठः' इत्यभिधानम् ।

**तथेत्युक्त्वा ततः प्रायात् मुहूर्तोऽलघुमार्दवे[३] ।**
**तदाऽभिपूजितो देवैः समीपे वृषपर्वणः ॥ १७ ॥**

**मुहूर्तेऽलघुमार्दव** इत्यत्र शान्तग्रहयोगात् **अलघुमार्दवे** बहु-सान्त्वगुणदायिनि । मृदोर्भावो हि मार्दवं, सान्त्वमित्यर्थः । सान्त्वेन खलु कार्यं साधनीयं, अतस्तादृशमुहूर्तं साधयित्वा गत इति भावः ।

---

१. S ; BORI पृ. ३२३; **'विस्तरेण तपोधन'** इति कुं.पाठः ।
२. S ; BORI पृ. ३२३; **'वै यथा पुरा'** इति कुं. पाठः ।
३. $D_3$,S; BORI पृ. ३२४; **'बृहस्पतिसुतः कचः'** इति कुं. पाठः ।

**ब्रह्मचर्यं चरिष्यामि त्वय्यहं परमं गुरौ ।**
**अनुमन्यस्व मां ब्रह्मन्सहस्रं परिवत्सरान् ॥ २० ॥**

**ब्रह्मचर्यं चरिष्यामि** इत्यत्र ब्रह्म वेदं चरतः 'चर गतिभक्षणयोः' इति धातोः अभ्यासं कुर्वतः वटोः सम्बन्धि कार्यं, गुरुसेवामित्यर्थः ।

**[१]व्रतं संव्रतकाले स यथोक्तं [२]सङ्गृहीतवान् ।**
**आराधयन्नुपाध्यायं देवयानीं च भारत ॥ २३ ॥**

**व्रतं संव्रतकाले स** इत्यत्र एतावन्तं कालं त्वत्सेवां करोमीति नियमेन सहितः सहस्रपरिवत्सरसम्मितः कालः **संव्रतकालः**, तमवधीकृत्य **व्रतं** ब्रह्मचर्यव्रतं सेवाव्रतं च यथा पूर्वं स्वेनैवोक्तं तथा **सं** सम्यक् यथा भङ्गो न भवति तथेत्यर्थः । गृहीतवानिति योजना । 'व्रतं च व्रतकल्पं च' इति पाठे **व्रतकल्पं** एतावन्तं कालं एतावद्व्रतमिति च कल्पं कल्पनां, **यथोक्तं** उक्तं गुरोर्वचनं यथा अनतिक्रम्य तद्व्रतं च गृहीतवानित्यर्थः ।

**नित्यमाराधयिष्यंस्तां युवा यौवनगां [३]मखे ।**
**गायन्नृत्यन्वादयंश्च देवयानीमतोषयत् ॥ २४ ॥**

**युवा यौवनगां मख** इत्यत्र **मखे** नित्याग्निहोत्रे ।

**गायन्तं चैव [४]शल्कं च दातारं प्रियवादिनम् ।**
**नार्यो नरं कामयन्ते रूपिणं स्रग्विणं तथा ॥ २७ ॥**

---

१. **'व्रतस्य प्राप्तकालं'** इति कुं.पाठः ।
२. N, ;,S;BORI पृ. ३२५; **'प्रत्यगृह्णत'** इति कुं. पाठः ।
३. **'मुनिः'** इति कुं.पाठः ।
४. **'शुल्कं'** इति कुं.पाठः ।

**गायन्तं चैव शल्कं च** इत्यत्र **शल्कं** पुनःपुनः प्रियवादिनम् । 'शल्को मधुरभाषी स्यात्' इत्यनुशासनम् । '**शुल्कं** द्रव्यं दातारं च' इति सम्बन्धः ।

**भित्त्वा भित्त्वा शरीराणि वृकाणां स विनिर्गतः ।**
**आहूतः प्रादुरभवत् कचो रिष्टोऽथविद्यया** ॥ ३५ ॥

**कचो रिष्टोऽथ विद्यया** इत्यत्र **रिष्टो** नष्टः विद्यया प्रादुरभूदिति सम्बन्धः ।

**इत्युक्तमात्रे मां हत्वा पेशीकृत्वा तु दानवाः ।**
**दत्त्वा शालावृकेभ्यस्तु सुखं जग्मुः स्वमालयम्** ॥ ३९ ॥

**पेशीकृत्वा तु दानवा** इत्यत्र **पेशीकृत्वा** पक्ष्यण्डवत्सूक्ष्ममांसीकृत्य, तिलशः (कृत्वे) छित्त्वेति यावत् । [2]'पेशी कोशः स्मृतोऽण्डश्च' इति हलः ।

**ततस्तृतीयं हत्वा तं दग्ध्वा कृत्वा च चूर्णशः ।**
**प्रायच्छन् ब्राह्मणायैव सुरायामसुरास्तथा** ॥ ४४ ॥

**प्रायच्छन् ब्राह्मणायैव** इत्यत्र **ब्राह्मणाय** शुक्राय सुरायां मेलयित्वा **प्रायच्छन्** इति सम्बन्धः ।

**शुक्र उवाच–**

**असंशयं मामसुरा द्विषन्ति**
**ये शिष्यं मेऽनागसं सूदयन्ति ।**

---

१. '**हृष्टोऽथविद्यया**' इति कुं.पाठः । ; २. ह.को. २-२४०

[१] **अब्राह्मणं लोकमिच्छन्ति रौद्रा**
**स्ते मां यथा व्यभिचरन्ति नित्यम्** ॥ ५४ ॥

**अब्राह्मणं लोकम्** इत्यत्र न विद्यते ब्राह्मणो यस्मिन्नसौ **अब्राह्मणः** तम् ।

**अप्यस्य पापस्य भवेदिहान्तः**
**कं [२] ब्रह्मवध्या न दहेदपीन्द्रम्** ॥ ५४ ॥

**अप्यस्य पापस्य भवेदिहान्त** इत्यत्र अस्य पापस्य दैत्यैः कृत-कचहननाख्यब्रह्महत्यापापस्य सम्बन्धी **अन्तः** तत्फलरूपो नाशः **इह** दैत्येष्वेव **भवेत्** भविष्यति । ब्रह्मवध्या कं न दहेत्; इन्द्रमपि दहेत् ।

**वैशम्पायन उवाच –**

**सञ्चोदितो देवयान्या महर्षिः पुनराह्वयत् ।**
[३] **संरभेणैव काव्यो हि बृहस्पति सुतं कचम्** ॥ ५५ ॥

**संरभेणैव काव्य** इत्यत्र **संरभेण** संरम्भेण ।

**कचोऽपि राजन् स महानुभावो**
**विद्याबलाल्लब्धमहिर्महात्मा ।**
[४] **गुरोर्भीतो विद्यया चोपहूतः**
**शनैर्वाक्यं जठरे व्याजहार** ॥ ५६ ॥

---

१. D५,S; BORI पृ. ३२७; **'कर्तुमिच्छन्ति रौद्रा'** इति कुं.पाठः ।
२. $M_{6,8}$ ; BORI पृ. ३२८; **'ब्रह्महत्या'** इति कुं.पाठः ।
३. $G_{1,5}$,$M_5$ ;BORI पृ. ३२८; **'संरम्भेणैव'** इति कुं. पाठः ।
४. D (except D2.5) ; BORI पृ. ३२८; **'गुरोर्हि भीतो'** इति कुं. पाठः ।

कच उवाच –

तव प्रसादान्न जहाति मां स्मृतिः
स[१] वै सर्वं यच्च यथा च वृत्तम् ।
[२] नन्वेव तु स्यात् तपसो व्ययो मे
ततः क्लेशं घोरमिमं सहामि ॥ ५९ ॥

**गुरोर्भीत** इत्यत्र **गुरोर्भीतः** गुरोरुदरभङ्गो भविष्यतीति भीतः । **स वै सर्वम्** इत्यत्र **स** भावानित्यर्थः । 'वेद्मि' इति पाठे स्पष्टोऽर्थः । **नन्वेव तु स्यात्तपसो व्यय** इत्यत्र मयैव कथने पैशुन्यदोषेण तपसो व्ययः स्यान्नन्विति सम्बन्धः ।

तथापि गुर्वाज्ञोल्लङ्घनदोषाद्भीतो वदामीति भावेनाह – **असुरैः सुरायामिति** ।

असुरैः सुरायां भवतोऽस्मि दत्तो
हत्वा दग्ध्वा चूर्णयित्वा च काव्य ।
ब्राह्मीं मायां चासुरीं विप्र मायां
त्वयि स्थिते कथमेवातिवर्तेत् ॥ ६० ॥

**ब्राह्मीं मायाम्** इत्यत्र **मायां** माहात्म्यम् । 'ब्राह्मी माया' इति पाठे स्पष्टोऽर्थः ।

देवयान्युवाच –

द्वौ मे [३]शोकौ वह्निकल्पौ दहेतां

१. $G_{4\text{-}5}$,M ; BORI पृ. ३२८; **'स्मरामि सर्वं'** इति कुं. पाठः ।
२. **'न त्वेवं स्यात्तपसः सङ्क्षयो मे'** इति कुं.पाठः ।
३. $T_2$, $G_{3\text{-}5}$,M ; BORI पृ. ३२९; **'शोकावग्निकल्पौ'** इति कुं. पाठः

कचस्य नाशस्तव चैवोपघातः
कचस्य नाशे मम शर्म नास्ति
तवोपघाते जीवितुं नास्मि शक्ता ॥ ६२ ॥

**द्वौ मे शोकौ वह्निकल्पौ** इत्यत्र कचस्य यो नाशः तस्मात्तव **उपघातो** नाशो यः स एको नाशः; तथा कचरक्षणार्थं [1] 'वधेन मे जीवितं स्यात्कचस्य' इति प्रागुक्तरीत्या ममोदरभङ्गेऽपि मम नाशः, कचस्य नाशे तु मम शर्मास्ति,त(था)दापि [2] तवोपघाते जीवितुं शक्तो नास्मीति उभयथापि यो मम नाशः स एको नाश इति मन्नाशस्त्वन्नाशश्चेति यौ द्वौ नाशौ तन्निमित्तौ वह्निकल्पौ मे द्वौ शोकौ **दहेतां** मां दहेतामिति योजना । कचनाशे तव नाशः तव नाशाद्वा ममोदरभङ्गाद्वा मम नाश इति द्वावपि नाशावसह्याविति भावः ।

पुत्रो भूत्वा भावय भावितो मा
अस्मद्देहादुपनिष्क्रम्य तात ।
समीक्षेथा धर्मवतीमवेक्षां
गुरोः सकाशात् प्राप्यविद्यां सविद्यः ॥ ६५ ॥

**पुत्रो भूत्वा** इत्यत्र ममोदरजातत्वात् पुत्रो भूत्वा **भावितः** भावेन मद्दत्तविद्याप्रभावेन युक्तत्वाद्भावितः त्वं मां [3] **भावय** जीवय । **समीक्षेथा धर्मवतीमवेक्षाम्** इत्यत्र मत्तः विद्याः प्राप्य मदुदरान्निष्क्रम्य नदीं तीर्त्वा उत्तारकस्यैव उपेक्षणवत् । मामजीवयित्वा तव गमने

---

१. आदि ७०-६१
२. तत्रोपघातात् सो.मु.पा.
३. मञ्जीविनीविद्यायाः सो.मु.पा.

महानधर्मः स्यात् । मम जीवने तु कृतज्ञतया महान् धर्मः स्यात् । अतो हेतोः धर्मवर्ती **अवेक्षाम्** अवेक्षेथा इत्यर्थः ।

**संसिद्धरूपोऽसि बृहस्पतेः सुत**
**यत्त्वां भक्तं भजते देवयानी ।**
**विद्यामिमां प्राप्नुहि जीवनीं त्वं**
**न चेदिन्द्रः कचरूपी त्वमद्य ॥ ६३ ॥**

**संसिद्धरूपोऽसि** इत्यत्र देवान् प्रति विद्यां यापयतीति **देवयानी** इति व्युत्पत्त्या स्वपुत्र्याः देवयानीशब्दवाच्यत्वात्तस्याः पक्षपातात् तव कार्य-संसिद्धिर्जातैवेति भावः । यद्वा संसिद्धं रूपं [१]सञ्जीव(न)नीविद्याया निरूपणं यस्य स तथोक्तः ।

**वैशम्पायन उवाच –**

**गुरोः सकाशात्समवाप्य विद्यां**
**भित्त्वा कुक्षिं निर्विचक्राम विप्रः ।**
**कचोऽभिरूपस्तत्क्षणाद्ब्राह्मणस्य**
**शुक्लात्यये पौर्णमास्यामिवेन्दुः ॥ ६६ ॥**

**शुक्लात्यये पौर्णमास्यामिवेन्दुः** इत्यत्र **शुक्लात्यये** शुक्लपक्षस्यावसाने या पौर्णमासी तस्याम् ।

**दृष्ट्वा च तं [२]ब्राह्मणं ब्रह्मराशि-**
**मुत्थापयामास मृतं कचोऽपि ।**

---

१. **सञ्जीविनीविद्यायाः** सो.मु.पा.
२. S ; BORI पृ. ३२९; **'पतितं'** इति कुं. पाठः ।

**विद्यां सिद्धां तामवाप्याभिवाद्य**
**ततः कचस्तं गुरुमित्युवाच** ॥ ६७ ॥

**ब्राह्मणं ब्रह्मराशिम्** इत्यत्र ब्रह्मणः वेदस्य राशिर्यस्मिन् स तथोक्तः ।

**ऋतस्य दातारमनुत्तमस्य**
**निधिं निधीनामपि लब्धविद्याः ।**
**ये नाद्रियन्ते गुरुमर्चनीयं**
**पापाँल्लोकांस्ते व्रजन्त्यप्रतिष्ठाः** ॥ ६९ ॥

**ऋतस्य दातारम्** इत्यत्र **निधीनां** नितरां धीयन्ते तत्वानि येषु ते निधयः । एतादृशानां नयानां शास्त्राणां, दुःशास्त्रव्यावृत्त्यर्थं निधीनामिति विशेषणम् । निधिं, अत एव [१]'ऋतं यथार्थविज्ञानम्' इति वचनात् 'ऋ गतौ' इति धातोश्च **ऋतस्य** यथार्थज्ञानस्य **दातारं** चतुरं असुरैः सर्वथा विनाशितं मां स्वविद्यया पुनरुज्जीव्य मदर्थं स्वमरणमपि सोढ्वा मयि दत्तस्वविद्ययैव पुनः स्वस्याप्युज्जीवनेन गुरुहननाख्यपापान्मम रक्षितृत्वादिचातुर्ययुक्तं, अत एव अर्चनीयम् । 'चतुरन्वयानाम्' इति पाठे **चतुरन्वयानां** चतुर्वेदानामित्यर्थः । गुरुं ये नाद्रियन्त इति सम्बन्धः ।

वैशम्पायन उवाच –

**सुरापानाद्वञ्चनां प्राप्य विद्वान्**
**सञ्ज्ञानाशं चैव महातिघोरम् ।**

---

१. तै.भा. १.१७

**दृष्ट्वा कचं चापि तथा[1] स जीवितं**
**पीतं तदा सुरया मोहितेन** ॥ ७० ॥

**दृष्ट्वा कचं चापि तथा स जीवितम्** इत्यत्र तथा मद्यपायिभिर्दैत्यैः भस्मीकृतस्य यथा पूर्वं रूपं तथैव आत्मना जीवितं च कचं दृष्ट्वा । कचाख्यब्राह्मणमरणमपि परम्परया सुरापानदोषादेव जातमिति भावः ।

**मया चैतां विप्रधर्मोक्तिसीमां**
**मर्यादां वै स्थापितां सर्वलोके ।**
**सन्तो विप्राः शुश्रुवांसो गुरूणां**
**देवा लोकाश्चोपशृण्वन्तु सर्वे** ॥ ७३ ॥

**शुश्रुवांसो गुरूणाम्** इत्यत्र गुरूणां सकाशात् **शुश्रुवांसः** शास्त्रश्रवणं कुर्वन्तः ।

**योऽकार्षीद्दुष्करं कर्म देवानां कारणात् कचः ।**
**न[2] चेत्किञ्चिच्चिरां गच्छेश्श्रेयाञ्जीयो भविष्यसि** ॥ ७६ ॥

**न चेत्किञ्चिच्चिरां गच्छेः** इत्यत्र **किञ्चिच्चिरां** किञ्चिद्बहुकालीनां, अधिकवयस्कमिति यावत् । स्त्रियं न गच्छेश्श्रेयाञ्जीयो भविष्यसीति कचं प्रति शुक्रस्याशीर्वादः। 'न ते कीर्तिर्जरां गच्छेत्' इति पाठे स्पष्टोऽर्थः।

॥ इति त्रयोदशोऽध्यायः ॥

* * *

---

१. $D_3$,S ; BORI पृ. ३२९; **'तथाभिरूपं'** इति कुं.पाठः ।
२. **'न तत्कीर्तिर्जरां गच्छेद्याञ्जीयश्च भविष्यति'** इति कुं.पाठः ।

## ।। अथ चतुर्दशोऽध्यायः ।।

**देवयान्युवाच –**

**गुरुपुत्रस्य[१] पुत्रो मे[२] नत्वं पुत्रश्च मे पितुः ।**
**तस्मात्पूज्यश्च मान्योऽसि[३] ममापि त्वं द्विजोत्तम ।। ९ ।।**

**गुरुपुत्रस्य पुत्रो म** इत्यत्र मे **पितुर्गुरोः** विद्यया वयसा च श्रेष्ठस्य अङ्गिरसः पुत्रस्य बृहस्पतेः मत्पितृसमानस्कन्धस्य पुत्रः त्वं मे **असि** योग्योऽसीत्यर्थः ।

**फलिष्यति न ते विद्या नेतियच्चात्थ[४] मां तथा ।**
**अध्यापयिष्यामि तु यं तस्य विद्या फलिष्यति ।। २० ।।**

**नेति यच्चात्थ मां तथा** इत्यत्र मां प्रति यदात्थ तत्तथा ।

**तमागतमभिप्रेक्ष्य देवा इन्द्रपुरोगमाः ।**
**बृहस्पतिं सभाज्येदं कचं वचनमब्रुवन् ।। २२ ।।**

**बृहस्पतिं सभाज्येदम्[५]** इत्यत्र **सभाज्य** सम्भाव्य ।

।। इति चतुर्दशोऽध्यायः ।।

* * *

---

१. कुं. ७१ अध्यायः
२. $D_{1,5}$,T,$G_{1,3}$,$M_3$; BORI पृ. ३३२; **'वै'** इति कुं. पाठः ।
३. T,$G_{1,3}$ ; BORI पृ. ३३३; **'मान्यश्च'**इति कुं. पाठः ।
४. S; BORI पृ. ३३३; **'यत्त्वं मामात्थ तत्तथा'** इति कुं. पाठः ।
५. सभाज्येत्यत्र सो.मु.पा.

## ।। अथ पञ्चदशोऽध्यायः ।।

**[१] क्रीडन्तीनां तु कन्यानां वने चैत्ररथोपमे ।**
**वायुभूतः स वस्त्राणि सर्वाण्येव व्यमिश्रयत्** ।। ४ ।।

**सः** इन्द्रः ।

देवयान्युवाच –

**कस्माद्गृह्णासि मे वस्त्रं शिष्या भूत्वा ममासुरि ।**
**समुदाचारहीनाया न ते साधु भविष्यति** ।। ८ ।।

**समुदाचारहीनाया** इत्यत्र **सं** सम्यक् **उत्** उत्कृष्ट **आचारः** समुदाचारः ।

**[२] आधून्वस्व विधून्वस्व द्रुह्य [३] कुप्य च याचकि ।**
**अनायुधा सायुधाया रिक्ता क्षुभ्यसि भिक्षुकि** ।। ११ ।।

**लप्स्यसे प्रतियोद्धारं न हि त्वां गणयाम्यहम् ।**
**प्रतिकूलं वदसि चेदितः प्रभृति याचकि ।** । १२ ।।

**आधून्वस्व विधून्वस्व** इत्यत्र **आ** समन्तात् **धून्वस्व** हस्तादिकं भवत्यः पश्यन्तु भवत्यः पश्यन्त्विति चालय । **विधून्वस्व** मां प्रत्येव **वि** वैपरीत्येन चालय । **प्रतियोद्धारं** त्वां प्रति योद्धारं ब्राह्मणकन्यासमूहमेव त्वं लप्स्यसे । तव समानस्कन्धया विप्रकन्यया कलहं कुरु । अहं तु

---

१. कुं. ७२ अध्यायः
२. DN$_{(Sic)}$ ; BORI पृ. ३३४; **'आदुन्वस्व विदुन्वस्व'** इति कुं.पाठः ।
३. **'कुप्यस्व'** इति कुं. पाठः ।

राजकन्या त्वां न गणयामीति योजना । **द्रुह्य** द्रोहं कुरु । **कुप्य** कोपं कुरु । इति लोटि मध्यमपुरुषैकवचनम् । अत एव हे भिक्षुकीति सम्बुद्धिः ।

**वैशम्पायन उवाच –**

**समुच्छ्रयं देवयानीं गतां सक्तां च वाससि ।**
**शर्मिष्ठा प्राक्षिपत्कूपे ततः स्वपुरमागमत् ।**
**हतेयमिति विज्ञाय शर्मिष्ठा पापनिश्चया ॥ १३ ॥**

**शर्मिष्ठा प्राक्षिपत्कूप** इत्यत्र देवयानीमिति योग्यपदाध्याहारः ।

**श्रान्तयुग्यहयः[१] श्रीमान् मृगलिप्सुः पिपासितः ।**
**स नाहुषः प्रेक्षमाण उदपानं गतोदकम् ॥ १९ ॥**

**श्रान्तयुग्यहय** इत्यत्र श्रान्ताः **युग्याः** रथयुगयोग्याः हया यस्य स तथोक्तः ।

**गृहीत्वा दक्षिणे पाणावुज्जहार ततोऽवटात् ।**
**उद्धृत्य चैनां तरसा तस्मात्कूपान्नराधिपः ॥ २३ ॥**

**उज्जहार ततोऽवटात्** इत्यत्र **अवटात्** भूगर्तरूपात् कूपात् । [२]‘गर्ता-गर्तौ भुवि श्वभ्रे सरन्ध्रे सुषिरं त्रिषु’ इत्यमरः ।

**[३]आचष्ट ते महाप्राज्ञ देवयानी वने [४]गता ।**
**शर्मिष्ठया महाभाग दुहित्रा वृषपर्वणः ॥ ३८ ॥**

---

१. $D_{1,4}$,S ; BORI पृ. ३३९; **‘श्रान्तयुग्यः श्रान्तहयो’** इति कुं. पाठः ।
२. अ.को. १-८-२ ; ३. **‘आचचक्षे महाप्राज्ञं देवयानीं वनेहताम्’**इति कुं.
४. **‘हता’** इति कुं. पाठः ।

**आचष्ट ते महाप्राज्ञ** इत्यत्र शर्मिष्ठया निमित्तेन **वने** वन एव गता अस्मीति देवयानी ते आचष्टेति योजना।

**यद्यहं स्तुवतस्तात दुहिता प्रतिगृह्णतः।**
**प्रसादयिष्ये शर्मिष्ठामित्युक्ता [१] हि सखी मया ॥ ४६ ॥**

**इत्युक्ता हि सखी मया** इत्यत्र **सखी** शर्मिष्ठायाः सखी यद्येवं तर्हि शर्मिष्ठां प्रसादयिष्य इति हे तात मया उक्ता। शर्मिष्ठां प्रत्येव वक्तुं भीतया तत्सखीमाहूयेत्थमुक्तमिति भावः।

**वृषपर्वैव तद्वेद शक्रो राजा च नाहुषः।**
**[२] अचिन्त्यं ब्रह्म कल्याणि ऐश्वरं हि बलं मम ॥ ४९ ॥**
**[३] गर्ह्यं शाठ्यं च जैह्यं च नास्ति मे यदधर्मतः ॥**

**अचिन्त्यं ब्रह्म कल्याणि** इत्यत्र हे **कल्याणि** एषोऽहम् **अचिन्त्यं** क्षत्रियादिभिश्चिन्तयितुमप्यशक्यं **ब्रह्म** ब्राह्मणोऽस्मि। अतो वृषपर्वणैव मत्सेवा कर्तव्या। अहं तु मत्तोऽपि नीचस्य तस्य गायी वन्दिकश्च न। परं ब्रह्मास्मीत्यर्थस्तु वृषपर्वणोऽपि साम्यात् न प्रकृतोपयोगी। **निर्द्वन्द्वं** प्रतिद्वन्द्वरहितम्, असदृशमिति यावत्। **ऐश्वरम्** ईश्वरप्रतिपादकम् **अचिन्त्यम्** अनन्तत्वाच्चिन्तयितुमशक्यम्। **ब्रह्म** वेदः मम बलं हि। हिशब्देन गानादिकमवैदिकानामिति सूचयति। **गर्ह्यं** निन्द्यं कर्म।

---

१. **'तु'** इति कुं.पाठः।

२. $D_3$,$T_1$,$G_3$,$M_5$; BORI पृ. ३३७; **'अचिन्त्यं ब्रह्म निर्द्वन्द्वमैश्वरं'** इति कुं.पाठः।

३. $D_3$; BORI पृ. ३३८; **'दैत्यं'** पाठः।

**जैह्यं** जिह्मस्य कुटिलस्य सम्बन्धि अनृतम् । 'अधर्मतो न' इति वदता क्वचिद्धर्मसङ्कटे अस्तीति सूचितम् ।

॥ इति पञ्चदशोऽध्यायः ॥

## ॥ अथ षोडशोऽध्यायः ॥

**[१] यः समुत्पतितं क्रोधं निगृह्णाति हयं यथा ।**
**स यन्तेत्युच्यते सद्भिः न [२] हये रश्मिलम्बिते ॥ २ ॥**

**न हये रश्मिलम्बित** इत्यत्र **हये** बाह्यरथतुरगे रश्मिना **लम्बिते** इतस्ततः प्रापिते सति यन्ता न ।

**तस्मादक्रोधने यज्ञतपोदानफलं महत् ।**
**[३] तिष्ठत्यसंशयं भद्रे नेतरस्मिन्कदाचन ॥ ८ ॥**

**तस्मादक्रोधन** इत्यत्र अक्रोधने पुरुषे यज्ञस्तपो दानं महत्फलं मोक्षश्च तिष्ठन्तीति योजना ।

**यत्कुमाराः कुमार्यश्च वैरं कुर्युरचेतसः ।**
**न तत्प्राज्ञोऽनुकुर्वीत [४] विद्वांस्तस्य बलाबलम् ॥ ११ ॥**

**विद्वांस्तस्य बलाबलम्** इत्यत्र **तस्य** क्रोधस्य बलं ऋष्यादिभिर्निग्रहीतुमशक्यत्वेन प्राबल्यम् । क्रोधे सति (हि) सर्वधर्महानेः तदग्रे धर्मान्तरबलाभावं च **विद्वान्** जानन्नित्यर्थः ।

---

१. कुं. ७३ अध्यायः
२. $D_1$ ; BORI पृ. ३३८; **'यो रश्मिषु लम्बते'** इति कुं.पाठः ।
३. **'भवेदसंशयं'** इति कुं. पाठः ।
४. $N_{1,2}, B_6, D_N, D_{1,2,4}$ ; BORI पृ. ३३९; **'न विदुस्ते'** इति कुं.पाठः ।

**स्वनिवृत्तिमननुष्ठाय धर्ममुत्सृज्य तत्त्वतः ।**
**शिष्यस्याशिष्यवृत्तेस्तु न क्षन्तव्या[1] बुभूषुता ॥ १३ ॥**
**[2]प्रेष्ये शिष्यार्यवृत्तिं हि [3]उत्सृज्य विफलं गतः ।**
**तस्मात्सङ्कीर्णवृत्तेषु वासो मम न रोचते ॥ १४ ॥**

[4]**प्रेष्ये शिष्यार्यवृत्तिं हि** इत्यत्र शिष्यस्य **आर्या** श्रेष्ठा या वृत्तिः गुरुभक्त्यादिः तामुत्सृज्य [5]प्रेष्ये शिष्ये **विपथं** विरुद्धमार्गं गुर्ववज्ञादिकं गते सति न क्षन्तव्येति पूर्वेणान्वयः ।

**[6]सुयन्त्रिता वरा नित्यं विहीनाश्च धनैर्वराः ।**
**दुर्वृत्ताः पापकर्माणश्चण्डाला धनिनोऽपि च ॥ १७ ॥**

**सुयन्त्रिता वरा नित्यम्** इत्यत्र सु सुकृतेन **यन्त्रिताः** नियमिताः नियमेन पुण्यकृत इत्यर्थः । **वराः** श्रेष्ठाः ।

**[7]न हि जात्या हि चण्डालाः स्वकर्मविहितैर्विना ।**
**धनाभिजनविद्यासु सक्ताश्चण्डालधर्मिणः ॥ १८ ॥**

**न हि जात्या हि चण्डाला** इत्यत्र **स्वकर्मविहितैः** स्वस्य नित्य-नैमित्तिककर्मकरणार्थं विहितैः धनाभिजनविद्याभिर्विना केवलं भोगाय

---

१. $D_3,T_1,G_{1.2.4},G_5$; BORI पृ. ३३९; **'क्षन्तव्यं'** इति कुं. पाठः ।
२. **'प्रेष्यः शिष्यः स्ववृत्तिं'** इति कुं.पाठः ।
३. BORI पृ. ३३९; **'विसृज्य विफलं गतः'** इति कुं. पाठः ।
४. **प्रेष्यशिष्यार्यवृत्तिं हीत्यत्र प्रेष्यस्य शिष्यस्य** सो.मु.पा.
५. **प्रेष्यशिष्ये** सो.मु.पा.
६. **'सुयन्त्रितपरा'** इति कुं.पाठः ।
७. **'नैव'** इति कुं.पाठः ।

केवलं जनपूज्यतायै केवलं पाण्डित्याय च धनाभिजनविद्यासु सक्ताः चण्डालधर्मिण इति योजना ।

**सुकृते दुष्कृते वापि यत्र सज्जति यो नरः ।**
**ध्रुवं रतिर्भवेत्तस्य तस्मात्तेषां[1] न रोचयेत् ॥ २० ॥**

**तेषां न रोचयेत्** इत्यत्र **तेषां** दुष्कृतानां विषये **न रोचयेत्** रुचिं न कुर्यात् ।

**[2]परस्य वै मर्मसु ये पतन्ति**
**तान् पण्डितो नावसृजेत्परेषु ।**
**शनैर्दुःखं शस्त्रविषाग्निजातं**
**रोहन्न संरोहति वाग्व्रणं तु ॥**

**न संरोहति वाग्व्रणम्** इत्यत्र वाग्व्रणं शनैर्न **संरोहति** चित्तारोहणं न करोति । किन्तु सद्य एव चित्तं क्षोभयतीत्यर्थः । शस्त्रविषाग्निजातदुःखं तु शनैरेव रोहेत् । तदानीमल्पं क्रमेणोत्तरोत्तरं भवतीति भावः ।

**संरोहति [3]शनैर्विद्धं [4]वनं परशुना हतम् ।**
**वाचा दुरुक्तं बीभत्सं न [5]संरोहति वाक्क्षतम् ॥ २६ ॥**

**संरोहति शनैर्विद्धम्** इत्यत्र **परशुना हतं** छिन्नं शरेण विद्धं च वनं **शनैः संरोहति** पुनरङ्कुरान्तरमुत्पाद्य च्छेदं विस्मारयति । वाक्क्षतं तु **न संरोहति** पुनः पूर्ववन्मैत्र्याख्याङ्कुरोत्पत्तिं न कारयति । अतः वाचा

---

१. BORI पृ. ३३९; **'तस्माद् द्वेषं'** इति कुं.पाठः । ; २. BORI पृ. ३४०;
३. BORI पृ . ३४०; **'शरैर्विद्धं'** इति कुं.पाठः ।
४. **'नवं'** इति कुं. पाठः ।; ५. **'संरोहेत'** इति कुं.पाठः ।

दुरुक्तं **बीभत्सं** अत्यन्तजुगुप्सं[1] अत्यन्तभयजनकं वा । तस्मान्न पौनरुक्त्यम् ।

॥ इति षोडशोऽध्यायः ॥

## ॥ अथ सप्तदशोऽध्यायः ॥

**नाधर्मश्चरितो[2] राजन् सद्यः फलति गौरिव ।**
**शनैरावर्त्यमानो हि कर्तुर्मूलानि कृन्तति ॥ २ ॥**

**सद्यः फलति गौरिव** इत्यत्र **गौरिव** दुरुक्तिरिव । यथा दुरुक्तिः सद्यः फलति एवमधर्मः सद्यो न फलतीति व्यतिरेकदृष्टान्तः । यद्वा **गौरिव** घृष्टिरिव । यथा घृष्टिः शनैरेव फलति तथा अधर्मोऽपि शनैः फलतीत्यन्वयदृष्टान्तो वा ।

**पुत्रेषु वा नप्तृषु वा न चेदात्मनि पश्यति ।**
**फलत्येव ध्रुवं पापं गुरुभुक्तमिवोदरे ॥ ३ ॥**

**गुरुभुक्तमिवोदरे** इत्यत्र **गुरुभुक्तं** बहुभोजनम् ।

**अधीयानं हितं राजन् क्षमावन्तं जितेन्द्रियम् ।**
**यदघातयथा विप्रं विप्रमाङ्गिरसं[3] तदा ।**
**अपापशीलं धर्मज्ञं शुश्रूषुं मद्गृहे रतम् ॥ ४ ॥**

**विप्रमाङ्गिरसम्** इत्यत्र अङ्गिरसः कुलोत्पन्नं **विप्रं** कचम् ।

---

१. अत्यन्तं जुगुप्सितं सो.मु.पा.
२. कुं. ७४ अध्यायः
३. 'कचमाङ्गिरसं' इति कुं. पाठः ।

सा न कल्येत[1] वासाय तयाहं रहितः कथम् ।
वसेयमिह तस्मात्ते त्यजामि विषयं नृप ॥ ६ ॥

**कल्येत** समर्था भवति[2] ।

वृषपर्वोवाच –

यदि ब्रह्मन् घातयामि यदि वा क्रोशयाम्यहम् ।
शर्मिष्ठया देवयानीं तेन गच्छाम्यसद्गतिम् ॥ ९ ॥

**शर्मिष्ठया देवयानीम्** इत्यत्र कूपे पातयितुमुपदिशामीति योग्यपदाध्याहारेण योजना ।

शुक्र उवाच –

अहो मामभिजानासि दैत्य मिथ्याप्रलापिनम् ।
[3]तथेममात्मनो दोषं [4]मयि कर्तुं चिकीर्षसि ॥ १० ॥

**तथेममात्मनो दोषम्** इत्यत्र **इमं** मिथ्याप्रलापित्वाख्यमात्मनो दोषं **तथा** त्वद्वत्[5] मयि कर्तुं चिकीर्षसीति योजना ।

देवयान्युवाच –

यदि त्वमीश्वरस्तात राज्ञो वित्तस्य भार्गव ।
नाभिजानामि तत्तेऽहं राजा तु वदतु स्वयम् ॥ १९ ॥

**यदि त्वम्** इति देवयान्या अनुवादबलात् मम मद्वित्तस्य च त्वमेव

---

१. **'कल्पेत'** इति कुं. पाठः । ; २. **भवेत्** सो.मु.पा.
३. **'यथेममात्मनो'** इति कुं. पाठः ।; ४. S ; BORI पृ. ३४१; **'न नियच्छस्युपेक्षसे'** इति कुं. पाठः । ; ५. **तद्वत्** सो.मु.पा.

इति वृषपर्वणा प्रार्थितत्वात् राज्ञः वृषपर्वणः तद्वित्तस्य चाहमेवेश्वरोऽस्मीति शुक्रवाक्यमप्यनुमीयते ।

**सर्वमाहृत्य कर्तव्यमेष धर्मः सनातनः ।**[1]
**एवं कृत्वा करिष्यामि यन्मां वक्ष्यसि शोभने ॥**

**एवं कृत्वा करिष्यामि** इत्यत्र **करिष्यामि** तव दास्यं करिष्यामि ।

**दैवेनोपहता सुभ्रूरुताहो तपसापि वा ।**[2]
**अन्यथैषाऽनवद्याङ्गी दासी नेह भविष्यति ॥ १६ ॥**

**दैवेनोपहता सुभ्रू** इत्यत्र **उपहता** ऐश्वर्यादुपहता ।

**देवयान्युवाच –**

**सर्व एव नरश्रेष्ठ विधानमनुवर्तते ।**
**विधानविहितं मत्वा मा विचित्राः कथाः कृथाः ॥ १८ ॥**

**विधानमनुवर्तत** इत्यत्र **विधानं** विधिः दैवमित्यर्थः ।

**ययातिरुवाच –**

**मृगलिप्सुरहं भद्रे पानीयार्थमुपागतः ।**
**बहुचाप्यनुयुक्तोऽस्मि तदनुज्ञातुमर्हसि ॥ २२ ॥**

**बहुचाप्यनुयुक्तोऽस्मि** इत्यत्र बहुसैन्यं **अनु** अनुसृत्य **युक्तोऽस्मि** सहितोऽस्मि । यद्वा बहुकार्यमुद्दिश्य प्रजाभिः **अनुयुक्तोऽस्मि** नियुक्तोऽस्मीत्यर्थः ।

---

१. BORI पृ. ३४३. ; २. कुं. ७५ अध्यायः
३. BORI पृ. ३४५; '**बहुधाऽप्यनुयुक्तोऽस्मि**' इति कुं. पाठः ।

**परभार्या स्वसा श्रेष्ठा सगोत्रा पतिता स्नुषा ।**
**अवरा भिक्षुकाऽस्वस्था अगम्याः कीर्तिता बुधैः ॥ २६ ॥**

**अवरा भिक्षुका** इत्यत्र **अवरा** नीचकुलोत्पन्ना **भिक्षुका** धनभिक्षामपेक्षमाणा वेश्येत्यर्थः ।

**देवयान्युवाच –**

**संसृष्टं ब्रह्मण क्षत्रं क्षत्रेण ब्रह्म संहितम् ।**
**अन्यत्वमस्ति न तयोरेकान्ततरमास्थिते ॥ २७ ॥**

**अन्यत्वमस्ति न तयोः** इत्यत्र **अन्यत्वम्** अत्यन्तदुरत्वम् । **एकान्ततरमास्थिते** एकं कण्ठमेव मध्यं कृत्वा हरेर्मुखबाह्वोर्ब्रह्मक्षत्रे स्थिते इत्यर्थः । 'तयोरभ्यन्तरं नास्ति' इति पाठे स्पष्टोऽर्थः ।

**ऋषिश्चाप्यृषिपुत्रश्च नाहुषाङ्ग वहस्व माम् ।**

**ऋषिश्चाप्यृषिपुत्र** इत्यत्र **ऋषिपुत्रः** 'ब्राह्मणास्ताः समभ्ययुः' इति वचनात् ऋषीणां ब्राह्मणानां पुत्राः क्षत्रिया अपि ऋषय एव । जात्येकवचनमिदम् ।

**ययातिरुवाच –**

**एकत्रैवोद्भवा[१] वर्णाश्चत्वारोऽपि वराङ्गने ।**
**पृथग्धर्माः पृथक्शौचास्तेषां तु ब्राह्मणो वरः ॥ २८ ॥**

**एकत्रैवोद्भवा** इत्यत्र **एकत्र** एकस्मिन्नेव नारायणे उद्भवन्तीति **उद्भवा** जाता इत्यर्थः ।

---

१. $T_2$,G; BORI पृ. ३४५; **'एकदेहोद्भवा'** इति कुं. पाठः ।

त्वरितं देवयान्याथ [१]प्रेषितं पितुरात्मनः ।
सर्वं निवेदयामास धात्री तस्मै यथातथम् ॥ ३७ ॥

प्रेषितं पितुः इत्यत्र प्रेषितं प्रेषणं कृतम् ।

देवयान्युवाच -

राजायं नाहुषस्तात [२]दुर्गे मे पाणिमस्पृशत् ।
नान्यपूर्वगृहीतं मे तेनाहमभया कृता ।
नमस्ते देहि मामस्मै लोके नान्यं पतिं वृणे ॥ ३९ ॥

दुर्गे मे पाणिमस्पृशत् इत्यत्र दुर्गे गन्तुमशक्ये कूपे ।

अन्यो धर्मः प्रियस्त्वन्यो [३]वृतस्त्वन्नाहुषः पतिः ।
कचशापात्त्वया पूर्वं नान्यद्भवितुमर्हति ॥ ४० ॥

वृतस्त्वन्नाहुषः पतिः इत्यत्र त्वत् त्वत्तः ।

॥ इति सप्तदशोऽध्यायः ॥

## ॥ अथ अष्टादशोऽध्यायः ॥

[४]ऋतुकाले तु सम्प्राप्ते देवयानि वराङ्गना ।
लेभे गर्भं प्रथमतः [५]कुमारं चाप्यजायत ॥ ८ ॥

कुमारं चाप्यजायत इत्यत्र अजायत जनयामास ।

---

१. BORI पृ. ३४६; 'सन्दिष्टं' इति कुं. पाठः ।
२. $S_{(except\ M3.5)}$; BORI पृ. ३४७; 'दुर्गमे पाणिमग्रहीत्' इति कुं.पाठः ।
३. 'वृतस्ते नाहुषः' इति कुं.पाठः । ; ४. कुं. ७६ अध्यायः
५. 'कुमारं च व्यजायत' इति कुं.पाठः ।

**अशोक शोकापनुद शोकोपहतचेतसाम् ।**
**त्वन्नामानं कुरुष्वाद्य प्रियसंदर्शनेन माम् ।**
**एवमुक्तवती सा तु शर्मिष्ठा पुनरब्रवीत् ॥ १२ ॥**

**त्वन्नामानं कुरु** इत्यत्र **त्वन्नामानं** शोकापहरणादशोकाख्य-नामवतीम् ।

**देवयानी प्रजाताऽसौ वृथाऽहं प्राप्तयौवना ।**
**तथा तया वृतो भर्ता तथैवाहं वृणोमि तम् ॥ १४ ॥**

**देवयानी प्रजाता** इत्यत्र **प्रजाता** प्रजया अता व्याप्ता । यद्वा प्रकर्षेण जाता सपुत्रत्वात् सार्थकजन्मवती ।

**केशे[१] बद्ध्वा तु राजानं याचेऽहं सदृशं पतिम् ।**
**स्पृहेदिदं देवयानी पुत्रमीक्ष्य पुनः पुनः ॥ १६ ॥**

**केशे बद्ध्वा** इत्यत्र '[२]अञ्जलिं कृत्वा' इति वक्ष्यमाणत्वात् केशे अञ्जलिं बद्ध्वेत्यर्थः ।

**क्रीडन्नन्तः पुरे तस्याः क[३](कि)श्चित्क्षणमवाप स ॥ १६ ॥**

**क(कि)श्चित्क्षणमवाप स** इत्यत्र **क्षणम्** अवसरमित्यर्थः ।

शर्मिष्ठोवाच –

**सोमस्येन्द्रस्य विष्णोर्वा यमस्य वरुणस्य वा ।**
**तव वा नाहुष कुले[४] कः स्त्रियं स्प्रष्टुमर्हति ॥ १९ ॥**

---

१. $K_4$,$D_4$,S ; BORI पृ. ३४९; '**केशैर्बध्वा तु**' इति कुं.पाठः ।
२. आदि. ७६-१८ ; ३. '**कचित्क्षणमवाप्य च**' इति कुं.पाठः ।
४. BORI पृ. ३४९; '**गृहे कः स्त्रियं द्रष्टुमर्हति**' इति कुं.पाठः ।

**तव वा नाहुष! कुले कः स्त्रियं स्प्रष्टुमर्हति** इत्यत्र तव कुले वा स्थितां **स्त्रियं** दासीभूतां वा पत्नीभूतां वा **कः** अन्यः स्प्रष्टुमर्हति । 'कुल'पदेन गृहमुपलक्ष्यते ।

**रूपाभिजनशीलैर्हि त्वं राजन् वेत्थ मां सदा ।**
**सा त्वां याचे प्रसाद्याहमृतुं देहि नराधिप ॥ २० ॥**

**ऋतुं देहि नराधिप** इत्यत्र **ऋतुं देहि**; मम पतिर्भवेति भावः ।

**पृष्टं तु साक्ष्ये प्रवदन्तमन्यथा**
**वदन्ति मिथ्या पतितं नरेन्द्र ।**
**एकार्थतायां तु समाहितायां**
**मिथ्यावदन्तं ह्यनृतं हिनस्ति ॥ २९ ॥**

**एकार्थतायाम्** इत्यत्र कस्यचिद्वस्तुनः **एकार्थतायां** एकस्य द्रव्यतायां **समाहितायां** सम्यङ्निश्चितायां सत्यां; साक्षिवचनेऽप्यनृतं दोषः द्रव्यविषये च अनृतं दोष इति भावः ।

**त्रय एवाधना राजन्भार्या दासस्तथा सुतः ।**
**यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥ ३७ ॥**

**यत्ते समधिगछन्ति** इत्यत्र **ते** भार्यादयः स्वबन्धुभ्यः स्वभर्तुः सकाशाद्वा **यत्** वस्त्राभरणादिरूपं धनं समधिगच्छन्ति तद्धनं एते यस्य वशे तस्यैव । स्वाधीनधनाभावात् स्वयं त्वधना एवेति भावः ।

**बहिःस्थं दानमित्युक्तं न शरीराश्रितं नृप ।**
**पुष्कलं[१] पुत्रदानं च आत्मदानं च दुष्करम् ॥ ३१ ॥**

१. M; BORI पृ. ३५०; 'दुष्करं' इति कुं. पाठः ।

**शरीरदानात्तत्सर्वं दत्तं भवति मारिष ॥ ३२ ॥**

**पुष्कलं पुत्रदानं च** इत्यत्र **हे मारिष** श्रेष्ठ ययाते इति सम्बुद्धिः । **आत्मदानं** परमात्मनो हृदि सन्निधापनं नारीणां पुत्रदानमात्मदानं च पत्या स्वशरीरे दत्ते सत्येव भवति । 'पतिरेव गुरुः स्त्रीणाम्' इति वचनात् पत्युः प्रसादादात्माऽपि हृदि सन्निहितो भवति । पुत्रोऽपि भवति । तस्मात्पतिभावं प्राप्य तव शरीरं मह्यं देयमिति भावः ।

**वैशम्पायन उवाच –**

**एवमुक्तस्तु राजा स [१]तथ्यमित्येव जज्ञिवान् ।**
**पूजयामास शर्मिष्ठां धर्मं च प्रत्यपादयत् ॥ ४० ॥**

**तथ्यमित्येव जज्ञिवान्** इत्यत्र **जज्ञिवान्** ज्ञातवान् ।

॥ इति अष्टादशोऽध्यायः ॥

## ॥ अथ एकोनविंशोऽध्यायः ॥

**[२]तस्मिन्काले तु राजर्षिर्ययातिः पृथिवीपतिः ।**
**माध्वीकरससंयुक्तां मदिरां मदवर्धनीम् ॥ १३ ॥**

**पाययामास शुक्रस्य तनयां [३]रक्तपिञ्जराम् ॥ १४ ॥**

**माध्वीकरससंयुक्ता** इत्यत्र **माध्वीका** [४]मधुरगुडादिद्रव्यैर्निष्पन्ना, अत एव रससंयुक्ता ताम् । माध्वी, गौडी, पौष्पी, पैष्टी चेति चतुर्विधा

---

१. **'तथ्यमित्यभिजज्ञिवान्'** इति कुं.पाठः । ; २. कुं. ७७ अध्यायः ।
३. $D_4$,S ; BORI पृ. ३५२; **'रक्तपिङ्गलाम्'** इति कुं.पाठः ।
४. **मधुरमध्वादिद्रव्यैर्निष्पन्ना** सो.मु.पा.

मदिरा । तत्र गुडरसोत्पन्ना गौडीत्युच्यते । [१] इयमपि मदिरा गौडीति भावः । रक्तपिञ्जरां रक्ता, **पिञ्जरा** सुवर्णवर्णा च ।

**[२] जरावली [३] मे तात पलितानि च पर्यगुः ।**
**काव्यस्योनशसः शापान्न च तृप्तोऽस्मि यौवने ॥ २ ॥**

**जरावली च मे तात** इत्यत्र जरया उद्बुद्धा **वली** नाडी ।

**इत्येव प्रलपन्तीं तां देवयानीं तु नाहुषः ।**
**भर्त्सयामास वचनैः [४] अपापां पापवर्धिनीम् ॥ १८ ॥**

**अपापां पापवर्धिनीम्** इत्यत्र वस्तुगत्या अपापां, मद्यपानजनित-भ्रान्त्या दिने दिने पतिधिक्कारादिपापं वर्धयन्तीम् ।

**ततो वर्षवरान्मूकान्व्यङ्गान् [५] वृद्धान् सपण्डकान् ।**
**रक्षणे देवयान्याः स पोषणे च शशास तान् ॥ १९ ॥**

**ततो वर्षवरान्** इत्यत्र **वर्षवरान्** बहुवयस्कान् वृद्धानिति सम्बन्धः । **पण्डकाः** [६] नपुंसकाः । [७] 'पण्डकः स्यान्नपुंसकः' इति हलः ।

**तेऽदर्शयन् प्रदेशिन्या तमेव नृपसत्तमम् ।**
**शर्मिष्ठां मातरं चैव तथाऽऽचख्युश्च दारकाः ॥ ३० ॥**

अङ्गुष्ठसमीपवर्तिनी अङ्गुलिः **प्रदेशिनी** ॥

---

१. **इयन्तु मदिरा माध्वीति भावः** सो.मु.पा. ; २. **कुं. ७८ अध्यायः** ।
३. $K_2$,$D_{1.5}$,S ; BORI पृ. ३५७; **'मां'** इति कुं.पाठः ।
४. **'वचनैरनर्हां पापवर्धनीम्'** इति कुं.पाठः ।
५. **'वृद्धांश्च पङ्गुकान्'** इति कुं. पाठः । ; ६. **शिखण्डिनः** सो.मु.पा.
७. ह.को. २-४३०

**इत्येतानि समीक्ष्याहं कारणानि भृगूद्वह ।**
**अधर्मभयसंविग्नः शर्मिष्ठामुपजग्मिवान् ।**
**मत्वैतन्मे धर्मेति कृतं ब्रह्मन् क्षमस्व माम्** ॥ ५७ ॥

**कृतं ब्रह्मन्** इत्यत्र धर्मेण **कृतं** मम एतत्कर्म ।

॥ इति एकोनविंशोऽध्यायः ॥

## ॥ अथ विंशोऽध्यायः ॥

[१] **अशक्तः कार्यकरणे परिभूतः [२] सयौवनैः ।**
**सहोपजीविभिश्चैव तां जरां नाभिकामये** ॥ ७ ॥

**परिभूतः सयौवनैः** इत्यत्र **सयौवनैः** समानयौवनैः पुम्भिः ।

**वस्तानां च गवां चैव शिबिकायास्तथैव च ।**
[३] **स चोडुप्लवसन्तारः यत्र नित्यं भविष्यति ।**
**अराजा भोजशब्दं त्वं तत्र प्राप्स्यसि सान्वयः** ॥ २२ ॥

**स चोडुप्लवसन्तार** इत्यत्र **उडुप्लवसन्तारः, उडुवत्** नक्षत्रवत् इतस्ततः सञ्चरन् यः प्लवः तस्य **सन्तारः** नौकोत्तारको भव ।

**प्रजाश्च यौवनप्राप्ता विनशिष्यन्त्यनो तव ।**
[४] **अग्नि प्रस्पन्दनपरः त्वं चाप्येवं भविष्यसि** ॥ २६ ॥

---

१. कुं. ७८ अध्यायः
२. **'स यौवतैः'** इति कुं.पाठः ।
३. **'उडुपप्लवसन्तारो'** इति कुं. पाठः ।
४. **'अग्निप्रस्कन्दनपरस्त्वं'** इति कुं. पाठः ।

**अग्निप्रस्पन्दनपर** इत्यत्र अग्नेः **प्रस्पन्दनम्** आहुतिदानेन ऊर्ध्व-ज्वलनं तत्र **परः** तात्पर्यवान्न **भविष्यसि** ।

**न हस्तिनं पीठकं च जीर्णो भुङ्क्ते न च स्त्रियाम् ।**
**वाग्भङ्गश्चास्य भवति तां जरां नाभिकामये ॥ १९ ॥**

**न हस्तिनम्** इत्यत्र **भुङ्क्ते** पालयति । [1]नारोहतीत्यर्थः । **पीठकं** पीठा-कारेण कृतविमानम् ।

**[2]यत्राश्वरथयुग्याना[3]मध्वानः स्याद्गतं न च ।**
**हस्तिनां पीठकानां च गर्दभानां तथैव च ॥ २१ ॥**

**रथयुग्यानाम्** इत्यत्र **रथयुग्यानां** रथयुगयोग्यानां अश्वतरीवृषभा-दीनाम् **अध्वा** तदारो(हे)हणगमनयोग्यमार्गः ।

**॥ इति विंशोऽध्यायः ॥**

## ॥ अथ एकविंशोऽध्यायः ॥

**[4]मातापित्रोर्वचनकृत् [5]पथ्यस्य विहितस्य च ।**
**स पुत्रः पुत्रवद्यश्च वर्तते पितृमातृषु ॥ २५ ॥**

**मातापित्रोर्वचनकृत्** इत्यत्र **पथ्यस्य** ज्वरितः पिता क्षीरं देहीति

---

१. **आरोहतत्यिर्थः** सो.मु.पा.

२. B(except B4), D(except D2.5); BORI पृ. ३६०; **'यत्रोश्वरथ-मुख्यानाम्'** इति कुं.पाठः ।

३. **'मश्वानां'** इति कुं.पाठः । ; ४. **कुं. ७९ अध्यायः**

५. **'हितः पथ्यश्च यः सुतः'** इति कुं. पाठः ।

वदति चेत् न देयम् । अतः 'पथ्यस्य' इत्युक्तम् । 'कलञ्जं देहि' इत्युक्ते न देयम् । अतः **विहितस्य** शास्त्रविहितस्येत्युक्तम् । पथ्यस्य विहितस्य च अनुकूलं यथा भवति तथा मातापित्रोर्वचनकृदिति योग्यपदाध्याहारेण योजना ।

**[१]पुतीति नरकस्याख्या दुःखं च नरकं विदुः ।**
**पुतस्त्राणात्ततः पुत्रमिहेच्छन्ति परत्र च ॥ २६ ॥**

**पुतीति नरकस्याख्या** इत्यत्र पुन्नाम्नो नरकस्य पुतीत्यपि सञ्ज्ञा । अतः पुतीति नरकस्याख्येत्युक्तम् ।

**वेदोक्तं सम्भवं मह्यमनेन हृदयोद्भवम् ।**
**तस्य जातमिदं कृत्स्नमात्मा पुत्र इति श्रुतिः ॥ ३० ॥**

**वेदोक्तं सम्भवं मह्यम्** इत्यत्र सम्यक् भवः शोभनं यस्मात्तत्सम्भवं शोभनं कर्म । हृदयान्मनस एवोद्भवो यस्य वनितादिविषयसेवनस्य तत् **हृदयोद्भवम्** । **अनेन** पूरुणा मम पुत्रेण, **कृत्स्नं** तथ्यं, **जातम्** एतद्दत्त-यौवनेन यज्ञादिकर्माण्यनुष्ठितम् । नानाविषयभोगा अपि भुक्ताः । तस्मादयमेव राज्यमर्हतीति भावः ।

**भवतोऽनुनयाम्येवं पूरू राज्येऽभिषिच्यताम् ॥ ३५ ॥**

**भवतोऽनुनयामि** इत्यत्र **भवतः** युष्मान् **अनुनयामि** सान्त्वयामि ।

॥ इति एकविंशोऽध्यायः ॥

---

१. M ; BORI पृ. ३६३; **'पुदिति'** इति कुं.पाठः ।

## ।। अथ द्वाविंशोऽध्यायः ।।

[१] निपतन्प्रच्युतः स्वर्गादप्राप्तो मेदिनीतलमम् ।
स्थित आसीदन्तरिक्षे स तदेति श्रुतं मया ।। ५ ।।

**स तदेति श्रुतं मया** इत्यत्र श्रुतं मुनीनां प्रवादाच्छ्रुतम् ।

सर्वमेतदशेषेण श्रोतुमिच्छामि तत्त्वतः ।
कथ्यमानं त्वया विप्र [२] देवर्षिगणसन्निधौ ।। ८ ।।

**देवर्षिगणसन्निधौ** इत्यत्र देवसमाना ऋषयः ।

।। इति द्वाविंशोऽध्यायः ।।

## ।। अथ त्रयोविंशोऽध्यायः ।।

इन्द्र उवाच –
[३] त्वं हि धर्मविदो राजन् कत्थसे धर्ममुत्तमम् ।
कथयस्व पुनर्मेऽद्य लोकवृत्तान्तमुत्तमम् ।। १३ ।।

**त्वं हि धर्मविद** इत्यत्र **धर्मविदः** पुरुषस्य धर्मं कत्थस इति सम्बन्धः ।

ययातिरुवाच –
अक्रोधनः क्रोधनेभ्यो विशिष्ट-
स्तथा तितिक्षुरतितिक्षोर्विशिष्टः ।

---

१. कुं. ८० अध्यायः
२. $D_{a1}$,$M_{6-8}$ ; BORI पृ. ३६५; **'विप्रर्षिगण-'** इति कुं.पाठः ।
३. कुं. ८१ अध्यायः

**अमानुषेभ्यो मानुषाश्च प्रधाना**
**विद्वांस्तथैवाविदुषः प्रधानः** ॥ १४ ॥

**अमानुषेभ्यो मानुषा** इत्यत्र **अमानुषाः** पशुपक्ष्यादयः ।

**आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षतः ।**
**आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति** ॥ १५ ॥

**आक्रुश्यमानो नाक्रोशेत्** इत्यत्र **आक्रुश्यमानः** परुषवचनैस्तुद्यमानः **नाक्रोशेत्** परं प्रति परुषवचनं न वदेत् । **तितिक्षतः मन्युः** क्षमावतः पुरुषस्योपरि कृतः मन्युः परुषवक्तरि स्थितः कोप एव, **आक्रोष्टारं** स्वात्मानमेव निर्दहति । **अस्य** आक्रोष्टुः सुकृतं **विन्दति** क्षमावान् प्राप्नोति ।

**नारुन्तुदः स्यान्न नृशंसवादी न हीनतः परमभ्याददीत ।**
**ययाऽस्य वाचा पर उद्विजेत न तां वदेद्रुशतीं पापलोक्याम्**
॥ १६ ॥

**नारुन्तुदः स्यात्** इत्यत्र **अरुन्तुदो** मर्मभेदी । [1]'अरुन्तुदः स्याद्व्यथकः' इति हलः। **नृशंसवादी** तूष्णीं गालीदानेन निष्ठुरवादि । **न हीनतः परमभ्याददीत** इत्यत्र परं पुरुषं प्रति **हीनतः** हीनात् दोषात्, **नाभ्याददीत** न वदेदिति यावत् । तस्मिन् हीनान् दोषानिति वा । यया वाचा पर **उद्विजेत** उद्वेगं दुःखं प्राप्नोति **तां पापलोक्यां** नरकादिपापलोकसम्बन्धिनीं, नरकदायिनीमित्यर्थः । **रुशतीं** क्रूरां [2]'रुशती वागकल्याणी' इत्यमरः । न वदेदिति सम्बन्धः ।

---

१. ह.को. २.३७१ ; २. अ.को. २-६-१८

अरुन्तुदं पुरुषं तीक्ष्णवाचं
वाक्कण्टकैर्वितुदन्तं मनुष्यान् ।
विद्यादलक्ष्मीकतमं जनानां
मुखे निबद्धां निकृतिं[1] वहन्तम् ॥ १७ ॥

**मुखे निबद्धां निकृतिम्** इत्यत्र **निकृतिं** कैतवम् । [2]'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे । कुसृतिर्निकृतिः शाठ्यम्' इत्यमरः ।

सद्भिः पुरस्तादभिपूजितः स्यात्
सद्भिस्तथा पृष्ठतो रक्षितः स्यात् ।
सदाऽसतामतिवादांस्तितिक्षेत्
सतां वृत्तं चाददीतार्यवृत्तः ॥ १८ ॥

**सद्भिः पुरस्तात्** इत्यत्र **अभिपूजितः** श्लाघितः, श्लाघायोग्य-गुणयुक्तः स्यादिति भावः । पृष्ठतः आशीर्वादादिना रक्षितः स्यात् । तथा सत्सु प्रवणः स्यादिति भावः । असतां **अतिवादान्** दोषोद्दीपक-वचनानि तितिक्षेत् ।

वाक्सायका वदनान्निष्पतन्ति
यैराहतः शोचति रात्र्यहानि ।
[3]परस्य चामर्मसु ये पतन्ति
तान् पण्डितो नावसृजेत् परेषु ॥ १९ ॥

---

१. $K_0$,S ; BORI पृ. ३६५; '**निर्कृतिं**' इति कुं.पाठः ।
२. अ.को. १-७-३०
३. '**परस्य ये मर्मसु सम्पतन्ति**' इति कुं.पाठः ।

**परस्य चामर्मसु ये पतन्ति** इत्यत्र अमर्मसु च ये पतन्ति साधारणापवादा इत्यर्थः । तेऽपि न वक्तव्याः । मर्मस्पर्शिनो न वक्तव्या इति किं वक्तव्यमिति भावः ।

**नहीदृशं संवननं त्रिषु लोकेषु विद्यते ।**
**दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥ २० ॥**

सम्यक् **वननं** भजनं यस्मात्तत्संवननम् । 'वन सम्भक्तौ' इति धातुः ।

**तस्मात्सान्त्वं सदा वाच्यं न वाच्यं परुषं कचित् ।**
**पूजान् सम्पूजयेद्दद्यान्न याचेत्कदाचन ॥ २१ ॥**

**सान्त्वं** सामवचनम् ।

**इन्द्र उवाच –**[१]

**यदाऽवमंस्थाः सदृशः श्रेयसश्च**
**पापीयसश्चाप्युदितप्रभावः ।**[२]
**तस्माल्लोकास्त्वन्तवन्तस्तवेमे**
**क्षीणे पुण्ये पतिताऽस्यद्य राजन् ॥ ३ ॥**

**यदाऽवमंस्था** इत्यत्र **यत्** यस्मात् **आ** समन्तात् **अवमंस्थाः** देवगन्धर्वादीनामवज्ञामकरोः । पापीयसश्च किमु । यद्वा पापीयसः अवमंस्था इत्येव योजना । अतिपापिन्यपि महता दयैव कर्तव्या; न त्ववमान इति भावः । उदितप्रभावः उदितः कथितः प्रभावः स्वमहिमा येन सः । **॥ इति सम्भवे त्रयोविंशोऽध्यायः ॥**

---

१. कुं. ८२ अध्यायः
२. $T_1$,$M_{6-8}$; BORI पृ. ३६८; **'अल्पीयसश्चाविदितप्रभावः'** इति कुं.पाठः ।

## ।। अथ चतुर्विंशोऽध्यायः ।।

**[१]सतां सकाशे पतितासि राजं-**
**श्रुतः प्रतिष्ठां यत्र लब्धासि भूयः ।**
**[२]एवं विदित्वा नाहुष मा स्म सर्वान्**
**न चाऽवमंस्थाः सदृशान् श्रेयसश्च ।। ५ ।।**

**मा स्म सर्वान्** इत्यत्र **मा** मां सदृशान् श्रेयसश्च न चावमंस्थाः ।

**वैशम्पायन उवाच –**

**ततः प्रहायामरराजजुष्टान्**
**पुण्याँल्लोकान् पतमानं ययातिम् ।**
**सम्प्रेक्ष्य राजर्षिवरोऽष्टकस्तं**
**उवाच सद्धर्मविधानगोप्ता ।। ६ ।।**

**राजर्षिवरोऽष्टक** इत्यत्र अष्टको नाम ययातेर्दौहित्रः कश्चन राजर्षिः । अत्रेयं वक्ष्यमाणोद्योगपर्वस्थकथाऽनुसन्धेया । माधवी नाम ययातेः कन्या, तस्याः [३]'प्रसूत्यन्ते प्रसूत्यन्ते कन्यैव त्वम्' इति वरदान-बलात् चतुर्धा विवाहे जाते सति हर्यश्वात् दिवोदासात् उशीनरात् विश्वामित्राच्च वसुमनाः प्रतर्दनः शिबिरष्टक इति चत्वारः पुत्रा जाताः । ते च ययातेर्दौहित्राः । स्वाहङ्कारवशाद्दिवः पतितो ययातिः दौहित्र-कृतपुण्यवशात् भुवमस्पृशन्नेव पुनर्दिवमारुरोहेति ।

---

१. अत्र कुं. पाठानुसारेण पूर्वअध्याय एव अनुसरति ।

२. S ; BORI पृ. ३६९; **'एतद्विदित्वा च पुनर्ययाते त्वं माऽवमंस्थाः सदृशः श्रेयसश्च'** इति कुं.पाठः ।; ३. **उद्योग - ११६-१७**

दृष्ट्वा च त्वां [1] विष्ठितं देवमार्गे
शक्रार्कविष्णुप्रतिमप्रभावम् ।
अभ्युद्गतास्त्वां वयमद्य सर्वे
तत्त्वं पाते तव जिज्ञासमानाः ॥ ९ ॥

**विष्ठितं** [2] **देवमार्गे** इत्यत्र **विष्ठितं** विशेषेण स्थितम् । **तत्त्वं पात** इत्यत्र तव **पाते** पतने **तत्त्वं** यथार्थं कारणं जिज्ञासमाना इति योजना ।

न चापि त्वां [3] धृष्णुमप्रष्टुमग्रे
[4] न च त्वमस्मान्पृच्छसि ये वयं स्मः ।
ते त्त्वां पृच्छामि स्पृहणीयरूप
कस्य त्वं वा किंनिमित्तं त्वमागाः ॥ १० ॥

**धृष्णुमप्रष्टुमग्र** इत्यत्र **अग्रे** तव पुरोभागे स्थिता वयं **धृष्णुं** धारणशीलं धीरं त्वां **अप्रष्टुम्** अविचारयितुं **न** न शक्ताः स्मः । तव गुरुत्वसन्दर्शने सति विचारं कुर्म इति मनो जायत इति भावः । **ते त्वाम्** इत्यत्र **ते** वयम् ।

भयं तु ते व्येतु विषादमोहौ
त्यजाशु चैवेन्द्रसमप्रभाव ।
त्वां वर्तमानं हि सतां सकाशे
नालं प्रसोढुं बलहाऽपि शक्रः ॥ ११ ॥

---

१. '**-धिष्ठितं**' इति कुं.पाठः । ; २. **देवमार्गविष्ठितमित्यत्र** सो.मु.पा.
३. '**धृष्णुमः प्रष्टुमग्रे**' इति कुं.पाठः ।
४ D,,S; BORI पृ. ३६९;'**तत्त्वां**' इति कुं. पाठः ।

**नालं प्रसोढुम्** इत्यत्र **बलहा** बलाख्यदैत्यहन्ता **प्रसोढुं** बलात्कर्तुं, बलात्पातयितुमिति यावत् ।

**सन्तः प्रतिष्ठा हि सुखच्युतानां**
**सतां सदैवाममरराजकल्प ।**
**ते सङ्गताः स्थावरजङ्गमेशाः**
**प्रतिष्ठितस्त्वं सदृशेषु सत्सु ॥ १२ ॥**

**प्रतिष्ठा** प्रतितिष्ठत्य(नये)नेनेति प्रतिष्ठा आधार इत्यर्थः ।

**प्रभुरग्निः प्रतपने भूमिरावपने प्रभुः ।**
**प्रभुः सूर्यः प्रकाशित्वे सतां चाभ्यागतः प्रभुः ॥ १३ ॥**

**आवपने** बीजावापे ।

॥ इति चतुर्विंशोऽध्यायः ॥

## ॥ अथ पञ्चविंशोऽध्यायः ॥

[१] **अविद्वांश्चेत् वयसा यः स वृद्धः**
**इति राजन्नाभिवाद्यः कथञ्चित् ।**
**यो वै विद्वान् वयसा न स्म वृद्धः**
**स एव पूज्यो भवति द्विजानाम् ॥ ३ ॥**

**अविद्वांश्चेत्** इत्यत्र अविद्वांश्चेत् वयसा वृद्ध इति कृत्वा स पुरुषो

---

१. कुं. ८३ अध्यायः । BORI पृ. २७०; **'अवादीस्त्वं वयसा यः प्रवृद्धः स वै राजन्नाभ्यधिकः कथ्यते च । यो विद्यया तपसा सम्प्रवृद्धः'** इति कुं. पाठः ।

नाभिवाद्यः । स्म प्रसिद्धम् । यो वै विद्वान् (सः) वयसा वृद्धो न, स एव पूज्य इति सम्बन्धः ।

**ययातिरुवाच –**

**प्रतिकूलं कर्मणां पापमाहुः [१]तद्वर्तने प्रापणे पापलोक्यम् ।**
**सन्तोऽसतां नानुवर्तन्ति चैतत् [२]यदात्मैषामप्यनुकूलवादी ॥ ४**

**प्रतिकूलं कर्मणां पापमाहुः** इत्यत्र **पापलोक्यं** नरकादिपापलोकसाधनं पापं **कर्मणां** सत्कर्मणां **प्रापणे** सत्कर्मफलभूतस्वर्गादिपुण्यलोकप्रापणे **तद्वर्तने** तेषां सत्कर्मणां प्रवर्तने अनुष्ठाने च प्रतिकूलमाहुः । केचित्कृत्वाऽपि पापं तन्निगूहयन्तः सन्ध्यादिकर्माचरन्ति । छद्मना रात्रौ कृतागम्यागमनादिपापप्रतिबन्धेन प्रातस्तत्कृतसन्ध्यावन्दनादिपुण्यात् स्वर्गादिफलं न भवति । प्राकट्येन पापं कुर्वाणास्तु लोकभयाभावात् सन्ध्यामेव नाचरन्तीति भावः । तस्मात्सन्तः असतां [३]तत्पापं नानुवर्तन्ति । 'पापे न वर्तन्ते' इत्येतावता पूर्तौ नानुवर्तन्ति इति पदं पापे वर्तमानानामनुसरणमपि [४]न कुर्वन्तीति सुचयितुम् । चशब्दात्पुण्यमेवाचरन्ति च । लोकशिक्षार्थं[५] भगवानपि पापं नाचरति, किमुतान्य इति सूचयितुं परस्मैपदम् । यदा आत्मा कश्चिज्जीवः **एषां** सज्जनानामनुकूलवादी भवति तदा सोऽपि [६]पापं नानुवर्तते । अनुकूलवादित्वमपि बहुपुण्यसाध्यमिति सूचयितुं यदा इत्युक्तम् ।

---

१. S.T$_{1.om}$ ; BORI पृ. ३७१; **'तद्वर्ततेऽप्रवणे'** इति कुं. पाठः ।
२. **'यथा चैषामनुकूलास्तथाऽसन्'** इति कुं. पाठः ।
३. **एतत्पापं** सो.मु.पा.; ४. **नास्तीति** सो.मु.पा.
५. **लोकं शिक्षार्थं** सो.मु.पा.; ६. **पापं च** सो.मु.पा.

**अभूद्धनं मे विपुलं महद्वै[१]**
**विचेष्टमानो नाधिगन्ता तदस्मि ।**
**एवं प्रधार्यात्महिते निविष्टो**
**यो वर्तते नावजानाति[२] जीवन् ॥ ५ ॥**

**अभूद्धनं म** इत्यत्र **विपुलं** बहु[३] **महत्** श्रेष्ठं धनं मे अभूत् । **विचेष्टमानः** विषयेषु चेष्टमानः अहं तद्धनं **अधिगन्ता** ज्ञाता नास्मि । विषयलम्पटस्य मम धनवार्तैव नाभूदिति भावः । यद्वा **विचेष्टमानः** चेष्टारहितः मृतः तद्धनं **अधिगन्ता** प्राप्तो[४] नास्मि । मरणानन्तरं तद्धनं मम पृष्ठतः नागतमिति भावः । तस्माद्धनं **प्रधार्य** मदीयमिति निश्चित्य **आत्महिते** स्वोदरभरणे **निविष्टः जीवन्** जीवनमात्रे तात्पर्यवान् यः पुरुषो वर्तते सः **अव** अधस्तात् नरके गमनमित्यर्थः । न जानाति । अथवा सः धनलुब्धः पुरुषः आत्मानं **नावजानाति** मम जन्म वृथा गतमिति कदाऽप्यवज्ञां न करोति । यद्वा आत्महिते निविष्टः स्वस्य हितं जानन्नित्यर्थः । **धनं** सुकृताख्यधनं **प्रधार्य** स्वर्गे अन्वागमनशीलमिति निश्चित्य जीवन्नेव यः वर्तते सः तत्पुण्यधनं **नावजानाति** किमनेनेत्यवज्ञां न करोति । किन्तु पुनः पुनरार्जयत्येवेति[५] भावः ।

**महाधनो यो यजते स यज्ञैः[६]**
**यः सर्वविद्यासु विनीतबुद्धिः ।**

---

१. **'गतं तत्'** इति कुं. पाठः ।
२. S,$G_{5om}$ ; BORI पृ. ३७१; **'स विजानाति जीवः'** इति कुं. पाठः ।
३. **बहुलं** सो.मु.पा.; ४. **प्राप्ता** सो.मु.पा
५. **आर्जयत एवेति भावः** सो.मु.पा. ; ६. **'सुयज्ञैः'** इति कुं. पाठः ।

**वेदानधीत्य तपसा योज्य देहं**
**दिवं इयात्[1] पुरुषो वीतमोहः** ॥ ६ ॥

**महाधनो यो यजते स यज्ञैः** इत्यत्र यो यज्ञैर्यजते यः सुविनीतबुद्धिः स पुरुषः वेदानधीत्य तपसा देहं योज्य दिवम् इयादिति योजना ।

**न जातु हृष्येन्महता धनेन**
**वेदानधीयीतानहङ्कृतः स्यात् ।**
**नानाभावा बहवो जीवलोके**
**दैवाधीना नष्टचेष्टाधिकाराः** ॥ ७ ॥

**न जातु हृष्येन्महता धनेन** इत्यत्र **नानाभावाः** [2]'ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी' इत्यादिप्रकारेण नानादुर्भावनासहिताः **बहवः** कंसजरासन्धाद्याः दैवाधीनाः सन्तः नष्टौ चेष्टाधिकारौ चेष्टा सज्जनद्रोहादिचेष्टा, अधिकारः राज्याधिकारश्च येषां ते तथोक्ता जाताः । तस्माद्धनमदादिकं न कर्तव्यमिति भावः ।

**तत्तत्प्राप्य न विहन्येत धीरो**
**दिष्टं बलीय इति मत्वाऽऽत्मबुद्ध्या ॥**

**तत्तत्प्राप्य** इत्यत्र **तत्तत्** तस्मिन् काले जातं दुःखं प्राप्य **न विहन्येत** कराभ्यां स्वोरस्ताडनादिना न विहन्येतेत्यर्थः ।

**सुखं हि जन्तुर्यदि वाऽपि दुःखं**
**दैवाधीनं विन्दते नात्मशक्त्या ।**

---

१. 'यायात्' इति कुं. पाठः । ; २. भ.गी. १६-१४

**तस्माद्दिष्टं बलवन्मन्यमानो**
**न सञ्ज्वरेन्नापि हृष्येत् कथञ्चित्** ॥ ८ ॥

**सुखं हि जन्तुः** इत्यत्र सुखमात्मशक्त्या नेति स्फोरणाय **दुःखं** च सहैव गृहीतम् ।

**भये न मुह्याम्यष्टकाहं कदाचित्**
**सन्तापो मे मानसो**[1] **कश्चिदासीत् ।**
**धाता यथा मां विदधीत लोके**
**ध्रुवं तथाऽहं**[2] **लभितेति मत्वा** ॥ १० ॥

**लभितेति मत्वा** इत्यत्र तथा **लभिता** लाभवान् इति मत्वा मे सन्तापो नासीदिति सम्बन्धः । 'भविता' इति पाठे स्पष्टोर्थः ।

**संस्वेदजा अण्डजाश्चोद्भिदश्च**
**सरीसृपाः कृमयोऽथाप्सु मत्स्याः ।**
**तथाश्मानस्तृणकाष्ठं च सर्वे**
**दिष्टक्षये स्वां प्रकृतिं**[3] **भजन्ते** ॥ ११ ॥

**दिष्टक्षय** इत्यत्र **दिष्टक्षये** उद्दिष्टकालक्षये **स्वां प्रकृतिं भजन्ते;** तत्तद्देहाः स्वकारण एव विलीना भवन्तीत्यर्थः । अश्माऽपि अशनि-पातादिना चूर्णीभवति; किमु देहादिरिति सूचनायाश्मनो इति ग्रहणम् ।

---

१. **'नास्ति कश्चित्'** इति कुं. पाठः ।
२. **'भवितेति'** इति कुं. पाठः ।
३. **'भजन्ति'** इति कुं.पाठः ।

अनित्यतां सुखदुःखस्य बद्ध्वा
कस्मात्सन्तापमष्टकाहं भजेयम् ।
किं कार्यं[1] वै किं च कृत्वा न तप्ये
तस्मात्सन्तापं वर्जयाम्यप्रमत्तः ॥ १२ ॥

**किं कार्यं वै किं च कृत्वा न तप्य** इत्यत्र इदानीं गगने लम्बमानेन मया किं कार्यं वै; किमपि कर्तुं न शक्यते । किं च कृत्वा सज्जनावमानादिमहापापमहमेव कृत्वा न तप्ये । स्वकृतापराधपरिहारस्यायं कालो न । अतः स्वकृतापराधफलमवश्यं मयैव भोक्तव्यमिति च मत्वा न तप्ये ।

[2]दृष्टो हि परतश्चापि लोकः प्राप्ता भोगाः सर्वतो नास्ति निष्ठा ॥

**नास्ति निष्ठा** इत्यत्र नितरां स्थितिर्निष्ठा ।

अष्टक उवाच –

ये ये लोकाः पार्थिवेन्द्रप्रधाना-
स्त्वया भुक्ता यं च कालं यथावत् ।
तान्मे राजन् ब्रूहि सर्वान्यथावत्
क्षेत्रज्ञवद्भाषसे त्वं हि धर्मान् ॥ १४ ॥

**क्षेत्रज्ञवत्** सर्वसाक्षिभूतपरमात्मवत् ।

राजाहमासमिह सार्वभौम-
स्ततो लोकान् महतश्चाजयं वै ।

---

१. 'कुर्यां' इति कुं.पाठः । ; २. BORI पृ. ३७२

**तत्रावसं वर्षसहस्रमात्रं**
**ततो लोकं परमस्म्यभ्युपेतः ॥ १५ ॥**

ततः महतो **लोकान्** सूर्यचन्द्रादिलोकान् अजयं[1] प्राप्तोऽस्मि । 'जि प्राप्तौ' इति धातुः । **ततः** सूर्यादिलोकात् **परं** उपरितनं ध्रुवादिलोकम् ।

**ततः पुरीं पुरुहूतस्य रम्यां सहस्रद्वारं शतयोजनायताम् ।**
**अध्यावसं वर्षसहस्रमात्रं ततो लोकं परमस्म्यभ्युपेतः ॥ १६ ॥**

**ततः** ध्रुवादिलोकात् पुरुहूतस्य **पुरीं** अमरावतीम् । **ततः परं लोकं** जनलोकादिलोकम् । **ततः** ब्रह्मणो लोकात् **परं** उपरि विद्यमानम् अमुक्तगम्यं सान्तानिकादिलोकम् ।

**तत्र स्थितं मां देव सुखेषु सक्तं**
**कालेऽतीते महति ततोऽतिमात्रम् ।**
**दूतो देवानामब्रवीदुग्ररूपो**
**ध्वंसेत्युच्चैस्त्रिः प्लुतेन स्वरेण ॥ २० ॥**

**त्रिः प्लुतेन** इत्यत्र **प्लुतेन** दीर्घेण ।

**तैराख्याता भवतां यज्ञभूमिः**
**समीक्ष्य चेमां त्वरितमुपागतोऽस्मि ।**
**हविर्गन्धं देशिकं यज्ञभूमे-**
**र्धूमापाङ्गं प्रतिगृह्य प्रतीतम्[2] ॥ २३ ॥**

---

१. जयेयं सो.मु.पा.
२. '**प्रतीतः**' इति कुं. पाठः ।

**देशिकं यज्ञभूमे** इत्यत्र **यज्ञभूमेर्देशिकं** यज्ञभूमिदेशादुत्पन्नम् । **प्रतीतं** मां प्रति इतं प्राप्तं, प्रसिद्धं वा ।

**॥ इति पञ्चविंशोऽध्यायः ॥**

## ॥ अथ षड्विंशोऽध्यायः ॥

**अष्टक उवाच –**

**[1] यदाऽवसो नन्दने कामरूपी**
**संवत्सराणामयुतं शतानाम् ।**
**किं कारणं कार्तयुगप्रधान**
**[2] हित्वा त्वं तत् वसुधामन्वपद्यः ॥ १ ॥**

**हित्वा त्वं तत्** इत्यत्र **हे कार्तयुगप्रधान** कृतयुगे विद्यमानाः कार्तयुगाः तेषु प्रधानेति ययातेः सम्बुद्धिः ।

**अष्टक उवाच –**

**[3] कथं तत्र क्षीणपुण्या भवन्ति**
**सम्मुह्यते मेऽत्र मनोऽतिमात्रम् ।**
**[4] के वा शिष्टाः कस्य धामोपयान्ति**
**तद्वै ब्रूहि क्षेत्रवित्त्वं मतो मे ॥ ३ ॥**

**कथं तत्र क्षीणपुण्या भवन्ति** इत्यत्र **तत्र** स्वर्गे क्षीणपुण्याः जनाः

---

१. कुं. ८४ अध्यायः; २. **'हित्वा च त्वं'** इति कुं.पाठः ।
३. S; BORI पृ. ३७४; **'तस्मिन्कथं'** इति कुं.पाठः ।
४. $M_5$; BORI पृ. ३७४; **'किं वा विशिष्टाः'** इति कुं.पाठः ।

**कथं भवन्ति** 'भू प्राप्तौ' इति धातोः प्राप्नुवन्ति, कं लोकं प्राप्नुवन्तीति यावत् । **के वा शिष्टाः कस्य धामोपयान्ति** इत्यत्र **शिष्टाः** स्वर्गफल-भोगानन्तरमुर्वरिताः के पुरुषाः कस्य **धाम** स्थानमुपयान्ति, अन्तरिक्षं वा [1] भुवि नरकं वेति प्रश्नार्थः ।

**ययातिरुवाच –**

**इमं भौमं नरकं ते पतन्ति लालप्यमाना नरदेव सर्वे ।**
[2] **ते कङ्कगोमायुवलाशनार्थं क्षीणे पुण्ये बहुधा प्रव्रजन्ति ॥ ४ ॥**

**इमं भौमं नरकं ते पतन्ति** इत्यत्र 'क्षीणे पुण्ये' इत्येकदेशोक्त्या [3] 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति समग्रगीतावाक्यं स्मारयति । भोगेन पुण्यं क्षपयन्तीति भावः । इदं 'कथं तत्र क्षीणपुण्या भवन्ति' इति प्रश्नस्योत्तरम् । **ते** स्वर्गाच्च्युताः **सर्वे लालप्यमानाः** अतिशयेन विलापं कुर्वन्तः सन्तः **नरकं** बहुदुःख-मिश्रत्वान्नरकोपमं **भौमं** भूसम्बन्धिनं इमं लोकं प्रति **पतन्ति** अन्तरिक्षेऽपि न तिष्ठन्ति । भूगर्तस्थितनरकं प्रत्यपि न गच्छन्ति । किन्तु भूलोकं प्रत्येवायान्तीति 'कस्य धामोपयान्ति' इत्यस्योत्तरम् । **ते** भूलोकं प्राप्तास्ते पुरुषाः, **कङ्कगोमायुवलाशनार्थं** कङ्कवत् गोमायुवश्च 'वल परिवर्तने' इति धातोः वलेन परिवर्तनेन इतस्ततो गमनेनेत्यर्थः । **अशनार्थम्** अन्नार्थं, **बहुधा** भृतकाध्ययनप्रजापीडनकृषिवाणिज्यादि-बहुविधवृत्त्या, **प्रव्रजन्ति** संन्यासिवत् पुत्रमित्रकलत्रादिकं त्यक्त्वा देशे

---

१. भुवं वा सो.मु.पा.

२. $G_{1,2,4-6}$,$M_{6-8}$ ;BORI पृ. ३७४; **'ते कङ्कगोमायुबलाशनार्थे'** इति कुं.पाठः ।

३. भ.गी. ९-२१

देशे सञ्चरन्ति । इदं च पूर्वार्धोक्तनरकत्वस्फोरणार्थम् । 'तस्मादेतद्वर्जनीयम्' इति श्लोकस्य स्पष्टोऽर्थः ।

**अष्टक उवाच –**

**यदा [1]समन्तात्पतितांस्तुदन्ति**
**वयांसि गृध्राः पिशिताशनश्च ।**
**कथं भवन्ति [2]कतमा भवन्ति**
**न भौममन्यं नरकं शृणोमि ॥ ६ ॥**

**यदा समन्तात्पतितांस्तुदन्ति** इत्यत्र यदा **पतितान्** स्वर्गात्पतितान् जनान् **वयांसि** अन्तरिक्षे चरन्तः पक्षिणः **गृध्राः पिशिताशना** राक्षसाश्च **तुदन्ति** मध्येमार्गं व्यथयन्ति । एते गृध्राद्याः अन्तरिक्षे सुखेन सञ्चरन्ति, अहं तु अधोमुखः पतामि; हा कष्टमिति तान् दृष्ट्वा व्यथा जायत इति भावः । यद्वा **वयांसि** नानापक्षिरूपिणः गृध्ररूपाश्च **पिशिताशना** राक्षसाः **समन्तात् तुदन्ति** दंशनं कृत्वा व्यथयन्ति । अथवा **वयांसि** स्वर्गभोगानुभवकाले यानि स्वस्य वयांसि तानि, **पिशिताशनाः** 'चिन्ता जीवन्तमप्यहो' इति वचनात् पिशितानि स्वदेहमांसानि अश्नन्ति [3]क्षपयन्तीति पिशिताशनाः, **गृध्राः** 'गृधु अभिकाङ्क्षायाम्' इति धातोः विषयोत्कण्ठाश्च तुदन्ति । स्वर्गे सुखदायकविषयः स्मृत्वा स्वर्गस्थनानाभोगांश्च स्मृत्वा मध्येमार्गं तदभावात् चित्तवनं व्यथयतीति भावः । 'इदं लालप्यमाना' इति ययातिना

१. S: BORI पृ. ३७५; **'तु तान्वितुदन्ते वयांसि तथा गृध्राः शितिकण्ठाः पतङ्गाः'** इति कुं. पाठः ।
२. **'कथमाभवन्ति'** इति कुं. पाठः । ; ३. **भक्षयन्तीति** सो.मु.पा.

सम्मुग्धाकारेणोक्तविलापस्य विस्तरेणानुवादः । **कथं भवन्ति** ते पतन्तः पुरुषाः कथं भवन्ति अल्पकालेनैव पतमाना भवन्ति वा उत बहुकालेनेति प्राथमिकप्रश्नार्थः । पुनश्च **कतमाः** कीदृशा भवन्ति बहुकालविशिष्टत्व-पक्षेऽपि समकालविशिष्टा वा विषमकालविशिष्टा वेति द्वितीय-प्रश्नस्यार्थः । **भौमं** नरकं कथं अल्पकालेन वा बहुकालेन वा समकालेन वा विषमकालेन वा पतन्तीति शृणोमि । एवञ्च तृतीयः कथं शब्दः उक्तचतुर्विधप्रश्नानुवादार्थ एव । न तु पृथक् प्रश्न इत्यपि ज्ञेयम् । 'न भौममन्तर्नरकं शृणोमि' इति पाठे, **भौमं** भूसम्बन्धिनम् **अन्तर्नरकं** भूगर्ते विद्यमानं नरकं न शृणोमि । किन्तु भूमेरुपरि संसाररूपं नरकमेव शृणोमीति भावः ।

उक्तानुवादपूर्वकं प्रथमप्रश्नस्योत्तरमाह– **ऊर्ध्वं देहात्प्राणिनो जृम्भ-माणा** इति ।

**ययातिरुवाच –**

**ऊर्ध्वं[१] देहात्प्राणिनो जृम्भमाणा**
**व्यक्तं पृथिव्या[२]मिह सञ्चरन्ति ।**
**इमं भौमं नरकं ते पतन्ति**
**नावेक्षन्ते वर्षपूगाननेकान्** ॥ ७ ॥

**देहादूर्ध्वं** देहप्राप्तेरनन्तरं **व्यक्तं** स्पष्टं इह पृथिव्यां सञ्चरन्ति । एवञ्च उक्तविधया इमं भौमं नरकं ये पतन्ति ते अनेकान् वर्षपूगान् **नावेक्षन्ते** संसारासक्तत्वान्न पश्यन्तीति योजना । बहुकालेनैवायान्ति, न त्वल्प-कालेनेति ययातेर्हृदयम् ।

---

१. **'ऊर्ध्वं देहात्कर्मणो जृम्भमाणात्'** इति कुं.पाठः ।
२. S ; BORI पृ. ३७५; **'पृथिव्यामनुसञ्चरन्ति '** इति कुं. पाठः ।

द्वितीयप्रश्नेऽपि समबहुकालवन्तो न, किन्तु स्वकर्मानुसारेण विषम-बहुकालवन्त इति भावेन द्वितीयप्रश्नस्योत्तरमाह **षष्टिं सहस्राणि** इति ।

**षष्टिं सहस्राणि पतन्ति व्योम्नि**
**तथा अशीतिं परिवत्सराणि ।**
**तान्वै तुदन्ति पततः प्रपाते[1]**
**भीमा भौमा राक्षसास्तीक्ष्णदंष्ट्राः ॥ ८ ॥**

परिवत्सरशब्देन सप्तविंशतिनक्षत्रैरेको मास इति कल्पनया द्वादश-मासात्मको वत्सरो गृह्यते । केचित् षष्टिं, केचित्सहस्राणि, केचिद-शीतिं परिवत्सराणि, केचिदन्यथा च पतन्तीति यथासम्भवमूह्यम् । **तान्वै तुदन्ति पततः प्रपात** इत्यत्र **प्रपाते** प्रकृष्टः पातो यस्मिन् लोके स प्रपातः, तत्र पततः[2] **तान्** स्वर्गच्युतान्[3] **भीमाः** भयङ्कराः **भौमाः** भू-सम्बन्धिनः तीक्ष्णदंष्ट्रा राक्षसा अन्तरिक्षलोकं गत्वा तुदन्ति ।

**अष्टक उवाच –**

**यदेनसस्ते[4] पततस्तुदन्ति भीमा भौमा राक्षसास्तीक्ष्णदंष्ट्राः ।**
**कथं भवन्ति कतमा[5] भवन्ति कथंभूता गर्भभूता भवन्ति ॥ ९ ॥**

**यदेनस** इत्यत्र यदा **एनसा** पापेन पततः जीवान् भीमा भौमा-स्तीक्ष्णदंष्ट्रा राक्षसास्तुदन्ति तदा उक्तविधया स्वकृतपापशेषमनुभूय[6] पुनः **कथं** केन प्रकारेण **भवन्ति** उत्पद्यन्ते, रेतोरूपेण वा तद्भिन्नेव वा ।

---

१. 'प्रपातं' इति कुं.पाठः । ; २. ततः सो.मु.पा.
३. स्वर्गाच्युतान् सो.मु.पा.
४. K₁.M₃.₅; BORI पृ. ३७५; 'यदेनस्ते' इति कुं.पाठः ।
५. 'कथमाभवन्ति' इति कुं. पाठः । ; ६. स्वकृतं पापदोषं सो.मु.पा.

रेतोरूपेणेति पक्षेऽपि **कतमाः** कीदृशाः रेतःप्राप्तिकाले किंकिंद्वार-विशिष्टा भवन्तीत्यर्थः । **कथम्भूताः** रेतःप्राप्त्यनन्तरमपि कं प्रकार-माश्रिताः **गर्भभूता भवन्ति** गर्भत्वं प्राप्ता भवन्तीति प्रश्नवाक्यार्थः ।

अत्रापि गर्भोत्पत्तेरेवान्तरङ्गत्वात् प्रथमतृतीयप्रश्नयोः सहैवोत्तर-माह– **असृग्रेत** इति ।

**ययाति रुवाच –**

**असृग्रेतः[१] पुष्पकालानुपृक्तं[२]**
**अन्वेति तद्वै पुरुषेण सृष्टम् ।**
**स[३] चैतस्या रज आपद्यते वै**
**स गर्भभूतः समुपैति तत्र** ॥ १० ॥

पुरुषेण सृष्टं तच्छुक्लरूपं रेतः **पुष्पकालानुपृक्तं** पुष्पकाले ऋतुकाले, ऋतुस्नानकाल इति यावत् । **अनुपृक्तं** अनु अनुकूलतया पृक्तं स्वेन सह सम्बद्धं **असृक्** शोणितात्मकं स्त्रीरेतः **अन्वेति** अनुकूलतया प्राप्नोति । स च उत्पत्स्यमानो जीवः **एतस्याः** नार्याः **रजः** 'रञ्ज रागे' इति धातोः, रक्तं तच्छोणितम् । **आपद्यते** शुक्लद्वारा प्राप्नोति । पुनः स एव जीवः तत्र **गर्भभूतः** शुक्लशोणितसमागमेन गर्भाकारेण सम्भूतः **तत्र** मातु-रुदरान्तस्स्थगर्भवासयोग्ये[४] जरायुस्थाने समुपैति । योऽन्याकाशाज्जरायु-योग्यं मातुरुदराकाशं गच्छतीति भावः ।

---

१. M; BORI पृ. ३७५; **'अस्रं रेतः'** इति कुं.पाठः ।
२. **'पुष्पफलानुपृक्तं'** इति कुं. पाठः ।
३. $D_4$ ; BORI पृ. ३७५; **'स वै तस्या'** इति कुं. पाठः ।
४. **उदरान्तरस्थगर्भावासयोग्ये** सो.मु.पा.

**वनस्पतीनोषधीश्चाविशन्ति आपो वायुं पृथिवीं चान्तरिक्षम्।**
**चतुष्पदं द्विपदं चाति सर्वमेवंभूता गर्भभूता भवन्ति ॥ ११ ॥**

'कतमा भवन्ति' इत्यस्योत्तरं – **वनस्पतीन्** इति। फलद्वारा पुरेतः प्राप्नुवन्तः वनस्पतीनाविशन्ति । धान्यद्वारा चेदोषधीः । पानद्वारा चेदपः। पुष्पसौरभादिद्वारा चेद्वायुम्। मृदास्वादनद्वारा चेत्पृथिवीम्। अकस्माच्चेदाकाशम् । पशुमांसभक्षणाच्चेच्चतुष्पदम् । मनुष्यमांस-भक्षणद्वारा चेत् द्विपदं **एवं भूताः** एवं प्राप्ताः गर्भभूता भवन्तीत्यर्थः।

पुनश्च स्वेच्छया वा प्रागुक्तगर्भस्थानं प्राप्नोति, अन्येच्छया वेति पृच्छति– **अन्यो हि** इति।

**अष्टक उवाच–**

**अन्यो[१] हि वैनं विदधाति गर्भ-**
**मुताहोस्वित्स्वेन कायेन याति ।**
**आपाद्यमानो नरयोनिमेता**
**माचक्ष्व मे संशयात् प्रब्रवीमि ॥ १२ ॥**

**गर्भं** गर्भस्थानं **प्रब्रवीमि** पृच्छामि।

**[२]शरीरदेहादिसमुच्छ्रयं च**
**चक्षुःश्रोत्रे लभते केन सञ्ज्ञाम्।**
**एतत्तत्त्वं सर्वमाचक्ष्व पृष्टं[३]**
**क्षेत्रज्ञं त्वां तात मन्याम सर्वे ॥ १३ ॥**

---

१ F.,G; BORI पृ. ३७६; '**अन्यद्वपुर्विदधातीह**' इति कुं. पाठः।
२ '**शरीरंदहातिसमुच्छ्रयं**' इति कुं. पाठः।
३ G; BORI पृ. ३७६; '**पृष्टः**' इति कुं. पाठः।

**शरीरदेहादिसमुच्छ्रयं च** इत्यत्र शरीरं प्राक् शरीरकारं पुनस्तस्यैव देहादिसमुच्छ्रयं सूक्ष्ममध्यदेहस्यादिपदोक्तकरचरणादेश्च **समुच्छ्रयं** अभिवृद्धिं केन लभते । **चक्षुःश्रोत्रं** चक्षुःश्रोत्रपदोपलक्षितज्ञानेन्द्रियषट्कं केन लभते । **सञ्ज्ञां** ज्ञानं च केन लभते । यद्यन्मया पृष्टं तत्तत्सर्वं तत्त्वं पृष्टस्त्वमाचक्ष्व ।

**ययातिरुवाच –**

**वायुः समुत्कर्षति गर्भयोनि-**
**मृतौ रेतः [१]पुष्पकालानुपृक्तम् ।**
**स तत्र तन्मात्रकृताधिकारः**
**क्रमेण संवर्धयतीहगर्भम्** ॥ १४ ॥

**वायुः समुत्कर्षति** इत्यत्र पुष्पकालानुपृक्तं रेतः **ऋतौ** षड्तूनां मध्ये एकस्मिन् तज्जननयोग्यऋतौ **गर्भयोनिं** गर्भस्थानं प्रति **वायुः** मुख्यप्राणः समुत्कषति, इति 'अन्यो हि वै (वि)निदधाति' इत्यस्योत्तरम् । **तन्मात्रकृताधिकारः** तन्मात्रेषु रूपरसादिपञ्चतन्मात्रेषु कृतः अधिकारः अभिमानरूपाधिकारो यस्य समानादिरूपेण गन्धरसाद्यभिमानीत्यर्थः । स वायुरेव क्रमेण तं गर्भं संवर्धयति । कललबुद्बुदमांसमज्जाकरचरणमुखाद्याकारेण संवर्धयतीत्यर्थः । इदं 'शरीरदेहादिसमुच्छ्रयं च केन लभते' इत्यस्योत्तरम् ।

**स जायमानो [२]निगृहीतगात्रः**
**[३]प्रज्ञाननिष्ठायतनो मनुष्यः** ॥ १५ ॥

---

१. **'पुष्पफलानुपृक्तम्'** इति कुं. पाठः । ; २. **'विगृहीतमात्रः'** इति कुं.पाठः ।
३. $T_2$,$M_{3,5}$; BORI पृ. ३७६; **'सञ्ज्ञामधिष्ठाय ततो'** इति कुं. पाठः ।

**स जायमानो निगृहीतगात्र** इत्यत्र **जायमानः** उदर एवाभिवर्धमानः स मनुष्यः **निगृहीतगात्रः** नितरां गृहीतं गात्रं येन सः । **प्रज्ञाननिष्ठायतनः** प्र प्रकृष्टेन मुख्यप्राणेनैव ज्ञाननिष्ठायतनः ज्ञानस्य निष्ठा उत्कर्षः तस्या आयतनः आधारभूतः भवति । [1]'निष्ठोत्कर्षे व्यवस्थायाम्' इत्यभिधानम् ।

सञ्ज्ञोत्कर्षप्रकारमेव प्रपञ्चयति– **स श्रोत्राभ्याम्** इत्यादिना ।

**स श्रोत्राभ्यां वेदयतीह शब्दं**
**स वै रूपं पश्यति चक्षुषा च** ॥ १५ ॥
**घ्राणेन गन्धं जिह्वयाऽथो रसं च**
**त्वचा स्पर्शं मनसा वेदभावम् ।**
[2]**इत्यष्टकैतान्विहितांश्च विद्धि**
**महात्मनः प्राणभृतः शरीरे** ॥ १६ ॥

**महात्मनो** महापुरुषात् मुख्यप्राणादेव **शरीरे** मातुः शरीरे **एतान्** त्वया पृष्टान् गर्भस्थानप्राप्त्यादीन् **विहितान्** कृतान् विद्धि । मातुरुदरे गर्भोपचयकरचरणाद्याकारज्ञानादिलाभः सर्वोऽपि मुख्यप्राणकृपयैव भवति, न स्वेच्छया न मातुरिच्छयेति सकलप्रश्नानामप्युत्तरम् ।

**अष्टक उवाच –**

**यः संस्थितः पुरुषो दह्यते वा**
**निखन्यते वापि निकृष्यते वा ।**

---

१ 'निष्ठा क्लेशेऽवसाने च व्यवस्थोत्कर्षयोर्व्रते' इति च हलः ।

२ S. BORI पृ. ३७६; **'इत्यष्टकेहोपहितम्'** इति कुं. पाठः ।

**अभावभूतः स विनाशमेत्य**
**केनात्मानं चेतयते परस्तात्** ॥ १७ ॥

**यः संस्थित** इत्यत्र **संस्थितः** मृतः । **अभावभूतः** अदर्शनं गतः । **चेतयते परस्तात्** इत्यत्र **परस्तात्** देहान्तरे **चेतयते** जानाति ।

**ययातिरुवाच –**

**हित्वा सोऽसून्सुप्तवन्निष्टनित्वा**
**पुरोधाय सुकृतं दुष्कृतं वा ।**
**अन्यां योनिं पवमानानुसारी**[१]
**हित्वा देहं भजते राजसिंह** ॥ १८ ॥

**पवमानानुसारी** इत्यत्र **पवमानो** मुख्यप्राणः **तदनुसारी** तेन नीत इत्यर्थः । पवमानेन अग्रे पुरतः सारी गच्छन् (इति वा ) ।

**पुण्यां योनिं पुण्यकृतो वदन्ति**
**पापां योनिं पापकृतो व्रजन्ति ।**
**कीटाः पतङ्गाश्च भवन्ति पापा**
**न मे विवक्षाऽस्ति महानुभाव** ॥ १९ ॥

**विवक्षा** पापफलानां विवक्षा, नारकयातनाया अतिक्रूरत्वेन यावता[२] वर्णयितुमशक्यत्वादिति भावः ।

**चतुष्पदाः द्विपदाः षट्पदाश्च**
**तथाभूता गर्भभूता भवन्ति ।**

---

१. **'पवनाग्रानुसारी'** इति कुं.पाठः । ; २. **दयावता** सो.मु.पा.

आख्यातमेतन्निखिलेन सर्वं
भूयस्तु किं पृच्छसि राजसिंह ॥ २० ॥

**आख्यातमेतन्निखिलेन** इत्यत्र **निखिलेन** सकलशास्त्रेण[१]।

**ययातिरुवाच –**

तपश्च दानं च शमो दमश्च
ह्रीरार्जवं सर्वभूतानुकम्पा ।
स्वर्गस्य लोकस्य वदन्ति सन्तो
द्वाराणि सप्तैव महान्ति पुंसाम् ॥
नश्यन्ति मानेन सदा[२]ऽभिभूताः
पुंसः सदैवेति वदन्ति सन्तः ॥ २२ ॥

**मानेन सदा** इत्यत्र **मानेन** अहङ्कारेण[३]।

अधीयानः पण्डितंमन्यमानो
यो विद्यया हन्ति यशः परेषाम् ।
तस्यान्तवन्तश्च भवन्ति लोका
न चास्य तद्ब्रह्म फलं ददाति ॥ २३ ॥

**ब्रह्म** वेदः परब्रह्म वा ।

चत्वारि कर्माण्यभयङ्कराणि
भयं प्रयच्छन्त्ययथाकृतानि ।

---

१. निखिलशास्त्रेण सो.मु.पा. ;  २. 'तमोऽभिभूताः' इति कुं.पाठः ।
३. मानाख्याहङ्कारेण सो.मु.पा.

**मानाग्निहोत्रमुत मानमौनं**
**मानेनाधीतमुत मानयज्ञः** ॥ २४ ॥

**चत्वारि कर्माण्यभयङ्कराणि** इत्यत्र मानाख्याहङ्कारेण सह कृतत्वात् मानाग्निहोत्राद्याख्यान्येतानि । अत एव अयथाकृतानि भयं प्रयच्छन्ति ।

**इति[1] दद्यादिति यजेदित्यधीयीत मे व्रतम् ।**
**इत्येमानि[2] भयान्याहुस्तानि वर्ज्यानि सर्वशः** ॥ २६ ॥

**इति दद्यादिति यजेदित्यधीयीत मे व्रतम्** इत्यत्र मे व्रतमित्युक्त्वा दद्यात् । एवमुत्तरत्रापि । इत्यनेन प्रकारेण दानादिसत्कर्मसहितोऽहमस्मीति वदेच्चेत् इमानि स्वाहङ्कारप्रकटनपूर्वकं कृतत्वाद् **भयानि** भयप्रदानि । पूर्वश्लोके मनोदोषः, अस्मिन् श्लोके वाग्दोष इति विवेकः ।

**ये चाश्रयं वेदयन्ते पुराणं**
**मनीषिणो[3] मनसा संविभक्तान् ।**
**तन्निःश्रेयस्तैजसं देहमेत्य**
**परां शान्तिं प्राप्नुयुः प्रेत्य चेह** ॥ २७ ॥

**ये चाश्रमान्** इत्यत्र **मनीषिणः** ज्ञानिनः **संविभक्तान्** अस्येदमस्येदमिति सम्यग्विभज्य कथितान् आश्रमान् **वेदयन्ते** मरणकाले

१. BORI पृ. ३७८; **'इति दद्यामिति यज इत्यधीय इति व्रतम्'** इति कुं. पाठः ।

२. **'इत्येतानि'** इति कुं. पाठः ।

३. **'मानसमार्गरुद्धम् तन्निःश्रेयस्तेन संयोगमेत्य'** इति कुं. पाठः ।

स्मरन्ति । **प्रेत्य** मरणानन्तरं **निःश्रेयः** नितरां श्रेष्ठं **तैजसं** तेजोमयं तद्रूपं पुण्यफलभोगयोग्यं देहमेत्य । 'योगम्' इति पाठे, युज्यत इति **योगो** देहः तम् । **इह** पूर्वोक्तस्वर्गादिलोकेषु **परां शान्तिं** सुखं प्राप्नुवन्ते ।

**।। इति षड्विंशोऽध्यायः ।।**

## ।। अथ सप्तविंशोऽध्यायः ।।

**अष्टक उवाच –**

**चरन्[1] गृहस्थः कथमेति धर्मान्**
**कथं भिक्षुः कथमाचार्यकर्मा ।**
**वानप्रस्थः सत्पथे सन्निविष्टो**
**बहून्यस्मिन् सम्प्रति वेदयन्ति ।। १ ।।**

**आचार्यकर्मा** आचार्यस्य सेवारूपं कर्म यस्य स तथोक्तः ब्रह्मचारित्यर्थः । **बहून्यस्मिन्** इत्यत्र **अस्मिन्** आश्रमचतुष्टये बहूनि फलानि ।

**अशिल्पजीवी न[2] गृहस्थश्च नित्यं**
**जितेन्द्रियः सर्वतो विप्रयुक्तः ।**
**अनोकशायी लघुरल्पचारश्[3]चरन्देशानेकचरः स भिक्षुः ।। ५ ।।**

**न गृहस्थश्च नित्यम्** इत्यत्र कस्मिंश्चिद्गृहे स्वाधीनगृहे स्थितः, **अल्पचारः** 'चर गतिभक्षणयोः' इति धातोः अल्पाहारः ।

---

१. पु. ८५ अध्यायः ; २. S; BORI पृ. ३७८; **'गुणवांश्चैव'** इति कुं. पाठः
३. BORI पृ. ३७९; **'लघुरल्पप्रचारः'** इति कुं. पाठः ।

राज्या यया वाऽभिजिताश्च लोका
भवन्ति कामा[१] विजिताः सुखाश्च ।
तामेव रात्रिं प्रयतेत विद्वा-
नरण्यसंस्थो भवितुं यतात्मा ॥ ६ ॥

**विजिताः सुखाश्च** इत्यत्र सुखयन्तीति **सुखाः** सुखकरा विषयाः । **भवितुं** विरक्तो भवितुम् ।

दशैव पूर्वान् दश चापरांश्च ज्ञातीनथात्मानमथैकविंशम् ।
अरण्यवासी सुकृते दधाति विमुच्यारण्ये स्वशरीरधातून् ॥ ७ ॥

**दशैव पूर्वान्** इत्यत्र दशपूर्वान् ज्ञातीन् अपरान् दशैव एकविंशमात्मानं च ।

**ययातिरुवाच –**

अरण्ये वसतो यस्य ग्रामो भवति पृष्ठतः ।
ग्रामे चा[२]वसतोऽरण्यं स मुनिः स्याज्जनाधिप ॥ ९ ॥

**ग्रामे चावसतोऽरण्यम्** इत्यत्र अरण्यं पृष्ठतो भवतीत्यावृत्त्या योजना ।

**ययातिरुवाच –**

न[३] ग्राम्यानुपयुञ्जीत स[४] आरण्यो मुनिर्भवेत् ।
तथाऽस्य वसतोऽरण्ये ग्रामो भवति पृष्ठतः ॥ ११ ॥

---

१. BORI पृ. ३७९; **'कामाभिजिताः'** इति कुं. पाठः ।
२. **'वा'** इति कुं. पाठः ।
३. $\tilde{N}_3, B_1, D_2, M_3$ ; BORI पृ. ३८१; **'ग्राम्यमुपयुञ्जीत'** इति कुं.पाठः ।
४. **'य'** इति कुं. पाठः ।

**न ग्राम्यानुपयुञ्जीत स आरण्यो मुनिर्भवेत् । तथाऽस्य वसतोऽरण्ये ग्रामो भवति पृष्ठत** इत्यत्र **ग्राम्यान्** ग्रामस्थ-दधिक्षीरादिभोगान् ग्रामस्थजनांश्च नोपयुञ्जीत न सेवेत । तथा पूर्वार्धो-क्तप्रकारेण ग्रामस्थसकलभोगांस्त्यक्त्वा ग्राम्यभोगान्विहायैव अरण्ये वसतोस्य योगिनः ग्रामः **पृष्ठतः** कृतो **भवति** धिक्कृतो भवतीत्यर्थः ।

**[१]अनग्निरनिकेतश्च अगोत्रावरणो मुनिः ।**
**कौपीनाच्छादनी चीरी सर्वस्वादुविवर्जितः ॥ १२ ॥**
**यावत्प्राणाभिसन्धानं तावदिच्छेच्च भोजनम् ।**
**तथाऽस्य वसतो ग्रामेऽरण्यं भवति पृष्ठतः ॥ १३ ॥**

**अनग्निरनिकेतश्च अगोत्रावरणो मुनिः । कौपीनाच्छादनी चीरी सर्वस्वादुविवर्जितः ॥ यावत्प्राणाभिसन्धानं तावदिच्छेच्च भोजनम् । तथाऽस्य वसतो ग्रामेऽरण्यं भवति पृष्ठत** इत्यत्र तथा अनग्निरनिकेत इति श्लोकोक्तप्रकारेण स्ववैराग्यमविहायैव ग्रामे वसतोऽपि **अस्य** संन्यासिनः अरण्यं **पृष्ठतो भवति** अनुचरवत्स्वपृष्टभाग एवायाती-त्यर्थः । एतादृशवैराग्यादिभाग्यवान् भिक्षुर्ग्रामे स्थितो(प्य)रण्यस्थ एवेति भावः ।

वेदशास्त्रादिगोष्ठ्या अरण्येऽप्यपेक्षितत्वात् सर्वथा व्याहारवर्जनं न मौनं, किन्तु दुर्गोष्ठीपरित्याग एव मौनमिति भावेनाह– **यस्तु कामानिति** ।

---

१. S; BORI पृ. ३८०; **'अनग्निरनिकेतश्चात्यगोत्र चरणो मुनिः । कौपीना-च्छादनं यावत्तावदिच्छेच्च चीवरम्'** इति कुं.पाठः ।

**यस्तु कामान् परित्यज्य त्यक्तकर्मा जितेन्द्रियः ।**
**आतिष्ठेच्च मुनिर्मौनं स लोके सिद्धिमाप्नुयात् ॥ १४ ॥**

**कामान्** काम्यार्थप्रसङ्गान् । **मौनं** दुर्गोष्ठीपरित्यागम् ।

**धौतदन्तं कृत्तनखं सदा स्नातमलङ्कृतम् ।**
**असितं [1] सितकर्मस्थं कस्तमर्हति नार्चितुम् ॥ १५ ॥**

**अलङ्कृतं** ऊर्ध्वपुण्ड्रादिना अलङ्कृतम् । **असितं सितकर्मस्थं कस्तं नार्चितुमर्हति** इत्यत्र [2] 'षिञ् बन्धने' इति धातोः **सितकर्मस्थं** स्वहृदिस्थहर्यर्पणबुद्ध्या बन्धकस्रक्चन्दनादिविषयेषु स्थितं हृदि स्थितं वैराग्यमजानतां मन्दानां दृष्टिपथेन विषयाभिलाषिवत् स्थितं ब्रह्मादियोगिसमूहं **असितं** तत्रासक्तिशून्यत्वात् बन्धगन्धविधुरमित्यर्थः । 'विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः' [3] इति वचनात् अतिधीरयोगीश्वरमित्यर्थः । कः अर्चितुं नार्हतीति योजना ।

**आस्येन तु यदाऽहारं गोवन्मृगयते मुनिः ।**
**अथास्य लोकः [4] पूर्वो यः सोऽमृतत्वाय कल्पते ॥ १८ ॥**

**आस्येन मृगयत** आस्यस्य यावदपेक्षितं तावदेव मृगयते, न तु परदिनार्थमार्जयतीत्यर्थः । **अथास्य लोक** इत्यत्र **अस्य** यतेः पूर्वो यो लोकः स एवामृतत्वाय कल्पते । मोक्षवदत्रापि कुतश्चिद्भयरहितत्वादिति भावः ।

---

१. **'सितकर्मकाणं'** इति कुं. पाठः ।
२. **स्थित** सो.मु.पा. ; ३. कु. सं. १.५९
४. **'सर्वोऽयं'** इति कुं. पाठः ।

ययाति रुवाच –

**अष्टौ ग्रासा मुनेः प्रोक्ताः षोडशारण्यवासिनः ।**
**द्वात्रिंशत्तु गृहस्थस्य अमितं ब्रह्मचारिणः ॥ २१ ॥**
**[१] इत्येतत्कारणं ज्ञेयमष्टकैतच्छुभाशुभम् ॥ २२ ॥**

**इत्येतत्कारणं ज्ञेयम्** इत्यत्र शुभाशुभं **एतत्कारणम्** एतानि सुचरित्रदुश्चरित्राणि कारणानि यस्य तत्तथोक्तम् ।

॥ इति सप्तविंशोऽध्यायः ॥

## ॥ अथ अष्टाविंशोऽध्यायः ॥

[२] अष्टक उवाच –

**[३] कतरस्त्वेतयोः पूर्वं देवानामेति साम्यताम् ।**
**उभयोर्धावतो राजन् सूर्याचन्द्रमसोरिव ॥ १ ॥**

**कतरस्त्वेतयोः** इत्यत्र **एतयोः** गृहस्थसंन्यासिनोः ।

**अप्राप्य दीर्घमायुस्तु यः प्राप्तो विकृतिं चरेत् ।**
**तप्यते यदि तत्कृत्वा चरेत्सोऽ[४]न्यस्ततस्तपः ॥ ३ ॥**

**अप्राप्य दीर्घमायुस्तु** इत्यत्र **प्राप्तः** विशिष्टकुलं प्राप्तः[५] । विरुद्धा-चारो विकृतिः पापम् । **अन्यः** देहान्तरं गतः **तपश्चरेत्** तपश्चरेत् ।

---

१. 'इत्येवं कारणैर्ज्ञेय' इति कुं.पाठः । ; २. कुं. ८६ अध्यायः

३. BORI पृ. ३८१; 'कतरस्त्वनयोः' इति कुं.पाठः ।

४. $M_{1,5}$ ; BORI पृ. ३८१; 'सोऽन्यत्तपस्ततः' इति कुं. पाठः ।

५. ततः(तपः)चरेत् सो.मु.पा.

**यद्वै नृशंसं तदसत्यमाहुर्यत्सेवते धर्ममनर्थबुद्धिः ।**
**अस्वोऽप्यनीशश्च तदेव[1] राजंस्तदार्जवं स समाधिस्तदाढ्यम्[2] ५**

**यद्वै नृशंसं तदसत्यमाहुः** इत्यत्र यत् नृशंसं निष्ठुरत्वं भावप्रधानो निर्देशः। तदसत्यमाहुः। निष्ठुरवचनमेवानृतं, न त्वनृतवचनमिति भावः। यस्मिन् असत्ये **अनर्थबुद्धिः** अनर्थोऽयमिति बुद्धिर्यस्य सोऽनर्थबुद्धिः सः धर्मं सेवते[3], सः **अस्वोऽपि** अधनोपि अत एव बहुवित्तसाध्ये यज्ञादौ **अनीशश्च**[4] असमर्थोपि **धर्मं** नित्यनैमित्तिकात्मकनिवृत्तिरूपधर्मं **अनर्थबुद्धिः** अर्थे स्वर्गादौ बुद्धिर्यस्य न सोऽनर्थबुद्धिः सन् सेवते । धारयतीति धर्मो नारायणस्तं च सेवेत । तदेव 'आर्जवम्' इति वदन्ति, स एव 'समाधिः' इति, तदेव 'आढ्यं' यज्ञादिभ्योऽप्यतिशयितं च वदन्ति ।

**अष्टक उवाच –**

**केनासि दूतः[5] प्रहितोऽसि राजन्**
**युवा स्रग्वी दर्शनीयः सुवर्चाः ।**
**कुत आयातः कतरस्यां दिशि त्व-**
**मुताहोस्वित्पार्थिवं स्थानमस्ति ॥ ६ ॥**

**केनासि दूतः प्रहित** इत्यत्र केन दूतवत्प्रहितोऽसि । 'दूतेन केन' इति पाठे स्पष्टोऽर्थः ।

---

१. **'तथैव'** इति कुं. पाठः ।; २. **'समाधिस्तदार्यम्'** इति कुं. पाठः ।
३. **सेवेत** सो.मु.पा.
४. **अनीश्वरः** सो.मु.पा.
५. **'हूतः'** इति कुं. पाठः ।

ययातिरुवाच –

इमं भौमं नरकं क्षीणपुण्यः प्रवेष्टुमुर्वीं गगनाद्विप्रहीणः।
विद्या[१] चैवमतिमाना च बुद्धिर्ममाभवत्कर्मलोक्यं च सर्वम्॥
उक्त्वाऽहं वः प्रहितोऽस्मीत्यनन्तरं[२]
त्वरन्ति मां लोकपा ब्राह्मणा ये ॥ ७ ॥

**विद्या चैवमतिमाना च बुद्धिः** इत्यत्र विद्या, **लोक्यं** पापलोक-साधनं सर्वं कर्म च ममाभवत्। अतिमाना बुद्धिश्चाभवत्। तेन भूलोकं प्रति प्रहितोऽस्मीति केन 'प्रहितोऽस्मि' इत्यस्योत्तरम्। मम दुर्बुद्ध्यैव प्रहितोऽस्मि, न त्वन्येन केनचिदिति भावः। **उक्त्वा** वः एतावदुक्त्वा। **ब्राह्मणाः** ब्रह्म अणन्तीति ब्राह्मणाः सकलवेदपारङ्गता इति लोक-पालानां विशेषणम्।

नाब्राह्मणः कृपणो जातु जीवे
 द्या चाप्यस्याऽब्राह्मणी वीरपत्नी।
सोऽहं नैवाकृतपूर्वं चरेयं
 विधित्समानः किमु तत्र साधु ॥ १३ ॥

**नाब्राह्मण** इत्यत्र **अब्राह्मणः** ब्राह्मणव्यतिरिक्तः क्षत्रियः।

कुर्यादिवं[३] न कृतं यदन्यैर्विधित्समानः किमु तत्र साधु।
धर्माधर्मौ सुविनिश्चित्य सम्यक्कार्याकार्येष्वप्रमत्तश्चरेद्यः ॥१९॥

---

१. 'विद्वांश्चैव मतिमानार्यबुद्धि-' इति कुं. पाठः।
२. 'प्रणतिप्याम्यनन्तरं' इति कुं. पाठः।
३. 'कुर्यादपूर्वं' इति कुं.पाठः।

**कुर्यादेवं न कृतं यदन्यैः** इत्यत्र अन्यैः यदकृतं[1] तदहमपि न कुर्यामिति नञावृत्त्या योजना ।

**स वै धीमान्सत्यसन्धः कृतात्मा राजा भवेल्लोकपालो महिम्ना ।**
**यदा भवेत्संशयो धर्मकार्ये कामार्थौ वा यत्र विन्दन्ति सम्यक् ।**
**कार्यं तत्र प्रथमं धर्मकार्यं यन्नो विरुद्ध्येदर्थकामौ स धर्मः २०**

**यदा भवेत्संशयो धर्मकार्य** इत्यत्र धर्मकार्ये सम्यक् शेत इति **संशयः** धर्म एव स्थिरबुद्धिरित्यर्थः । यत् अर्थकामौ न विरुद्ध्येत् स धर्मः ।

॥ इति अष्टाविंशोऽध्यायः ॥

## ॥ अथ एकोनत्रिंशोऽध्यायः ॥

[2] वसुमानुवाच –

**तांस्ते ददानि मा प्रपत प्रपातं**
**ये मे लोकास्तव ते वै भवन्तु ।**
**क्रीणीष्वैतांस्तृणकेनापि राजन्**
**प्रतिग्रहस्ते यदि धीमन् प्रदुष्टः ॥ ३ ॥**

**क्रीणीष्वैनान्** इत्यत्र **तृणकेन** दूर्वादितृणेन, स्वार्थे कप्रत्ययः । कुत्सिततृणेन वा, दानं नेच्छसि चेत् अस्माकं किञ्चित्तृणमेव क्रयरूपेण[3] दत्त्वा तान् लोकान् क्रीणीष्वेति भावः ।

---

१. यन्न कृतं सो.मु.पा.
२. कुं. ८७ अध्यायः
३. क्रयरूपं सो.मु.पा.

ययातिरुवाच –

न मिथ्याऽहं विक्रयं वै स्मरामि
[1] यथा गृहीतं शिशुके शङ्कमानः ।
कुर्यां न चैवाकृतपूर्वमन्यै-
र्विधित्समानः किमु तत्र साधुः ॥ ४ ॥

**यथा गृहीतं शिशुक** इत्यत्र शिशुके कदलीफलादिकं दत्त्वा गृहीतं आभरणादिकं यथा तथा अहमपि शङ्कमानः ।

अकृतहोमसमाप्तीनां अवभृथायोगात् होमोऽपि समापित इत्याह – **अश्वमेधे महायज्ञ** इति ।

वैशम्पायन उवाच –

अश्वमेधे महायज्ञे स्वयम्भुविहिते पुरा ।
हयस्य यानि चाङ्गानि सन्निकृत्य यथाक्रमम् ॥ १४ ॥

होताऽध्वर्युरथोद्गाता ब्रह्मणा सह भारत ।
[2] अग्नौ हूयन्त विधिवत् समस्ताः षोडशर्त्विजः ॥ १५ ॥

पुरा **स्वयम्भुविहिते** कर्तव्यतया विहिते **अश्वमेधे** अष्टकादिभिः [illegible]गाणाश्वमेधे [3] **हूयन्तः** होमं कुर्वन्तः । अथवा [4] ब्रह्मणा सह ये [illegible]शर्त्विजः, हयस्य यान्यङ्गानि [5] तानि हूयन्त इति योजना ।

---

[1] '[illegible]था गृहीतं शिशुकाच्छङ्कमानः' इति कुं. पाठः ।
[2] 'अग्नौ प्रास्यन्ति' इति कुं. पाठः ।
[3] [illegible]यन्त होमं कृतवन्तः सो.मु.पा.
[4] [illegible]णास्त एव सो.मु.पा.
[5] तान्यहूयन्तेति सो.मु.पा.

अश्वमेधफलमाह – **धूमगन्धं वपा** इति।

**धूमगन्धं [१]वपायास्तु ये जिघ्रन्ति नरा भुवि।**
**विमुक्तपापाः पूतास्ते तत्क्षणेनाभवन्नराः** ॥ १६ ॥

**मृगैः परिचरन्ती सा [२]परिणामे मृगव्रता** ॥ १८ ॥

**परिणामे मृगव्रता** इत्यत्र **परिणामे** वार्धके **मृगव्रता** मृगवत् तृणकणादिभक्षणेन प्राणान् धारयन्ती।

**वैशम्पायन उवाच –**

**तस्यास्तद्वचनं श्रुत्वा [३]मा मा भ्रष्टेति चाब्रवीत्।**
**सा पुत्रस्य वचः श्रुत्वा [४]सन्नमाविष्टचेतना** ॥ २५ ॥

**मा मा भ्रष्टेति चाब्रवीत्** इत्यत्र हे मातामह स्वर्गात् **मा भ्रष्ट** भ्रष्टो मा भवेत्यब्रवीच्च। **सन्नमाविष्टचेतना** इत्यत्र भावे क्तः, **सन्नं** सादम्।

**[५]पुत्राणामपि पौत्राणां धर्मादधिगतं धनम्।**
**स्वार्थमेव वदन्तीह ऋषयो धर्मपाठकाः।**
**तस्माद्दानेन तपसा चास्माकं दिवमाव्रज** ॥ २७ ॥

**पुत्राणामपि पौत्राणाम्** इत्यत्र पुत्रपुत्रोऽपि पौत्रः पुत्रीपुत्रोऽपि पौत्र इति माधव्या हृदयम्।

---

१. $T_2, G_{4-6}$; BORI पृ ९०३; **'च पापिष्ठा'** इति कुं. पाठः।
२. **'मृगाहारविचेष्टिता'** इति कुं. पाठः। अयं पाठः मुद्रितपुस्तकेषु नोपलभ्यते।
३. **'स्वर्गाद्भ्रष्टेति'** इति कुं.पाठः।
४. **'सम्भ्रमाविष्टचेतना'** इति कुं. पाठः।
५. **'पुत्राणामिव'** इति कुं. पाठः।

**त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वराम् ।**
**भोक्तारः परिवेष्टारः श्रापितार[१]ः पवित्रकाः ॥ ३० ॥**

श्राद्धे **श्र(श्रा)पितारः** अन्नश्रवणं कुर्वन्तः पाचका इत्यर्थः ।

**लब्ध्वा पात्रं तु विद्वांसं श्रोत्रियं सुव्रतं शुचिम् ।**
**[२]स काले कालतो दत्तं नान्यथा काल इष्यते ॥ ३३ ॥**

**स काले कालत** इत्यत्र **स** एव श्राद्धकालः (एव), तस्मिन् काले दत्तमेव कालतो दत्तम् ।

**एवं वृत्तो [३]ह्रीनिषेधश्च यस्मात्तस्माच्छिबिरत्यगाद्वै रथेन ॥४२॥**

**ह्रीनिषेधः** ह्रिया निषेधति सकलदुष्कर्माणीति **ह्रीनिषेधः** ।

**सर्वामिमां पृथिवीं निर्जिगाय**
**[४]प्रस्थे बद्ध्वा ह्यददं ब्राह्मणेभ्यः ।**
**मेध्यानश्वानेकशतान् सुरूपान्**
**तदा देवाः पुण्यभाजो भवन्ति ॥ ४५ ॥**

**प्रस्थे बद्ध्वा** इत्यत्र **प्रस्थे** मानविशेषे बद्ध्वा भूषणरत्नकनकादीनि पूरयित्वा । अथवा प्रस्थे निक्षिप्य अबद्ध्वा कोशान्तग्रन्थीं बन्धनमकृत्वा ।

॥ इति एकोनविंशोऽध्यायः ॥

---

१ **'श्रावितारः'** इति कुं. पाठः ।
२ **'स कालः कालतो'** इति कुं.पाठः ।
३ **'ह्रीनिपेवश्च'** इति कुं.पाठः ।
४ BORI पृ. ३८८; **'दत्वा प्रतस्थे'** इति कुं. पाठः ।

## ।। अथ त्रिंशोऽध्यायः ।।

[१] **विस्तरेण पुनर्ब्रूहि दौष्यन्तेर्जनमेजयात् ।**
**सम्बभूव यथा राजा भरतो द्विजसत्तम** ।। २ ।।

**दौष्यन्तेर्जनमेजयात्** इत्यत्र जनमेजयादनन्तरम् ।

[२] **यवीयान्सुन्वतः पुत्रो रथन्तर्यामजायत ।**
**शूराद्या दृढधन्वा च वपुष्मान् स नृपोत्तमः ।।**

**यवीयान् सुन्वतः पुत्रो रथन्तर्यामजायत** इत्यत्र **यवीयान्** यवीयोनामकः कुमारः ज्येष्ठः । शूराद्यास्त्वनुजा इति विवेकः ।

**अनाधृष्टिसुतस्त्वासीद्राजसूयाश्वमेधकृत् ।**
[३] **मतिनारस्ततो राजा विद्वांश्चर्चे पुतोऽभवत्** ।। १२ ।।

**विद्वांश्चर्चे पुतोऽभवत्** इत्यत्र च ऋचे पुतः इति पदच्छेदः । **चर्चे पुनोऽभवत्** इत्यत्र च ऋचे पुत इति पदच्छेदः ।

[४] **रथान्तर्यामृषीन्पञ्च पञ्चभूतोपमांस्ततः ।**
**ईलिनो जनयामास दुष्यन्तप्रभृतीन्नृपान्** ।। १६ ।।

**रथन्तर्यामृषीन्** इत्यत्र **ऋषीन्** राजर्षीन् ।

।। इति त्रिंशोऽध्यायः ।।

---

१. कुं. ८८ अध्यायः ; २. BORI पृ. ३९०
३. BORI पृ. ३९१; **'मतिनार इति ख्यातो राजा परमधार्मिकः'** इति कुं. पाठः ।
४. **'रथन्तर्यां सुतान्पञ्च'** इति कुं. पाठः ।

## ।। अथ एकत्रिंशोऽध्यायः ।।

[१] न वर्णसङ्करकरं [२] नाकृष्टकरकृज्जनः ।
न पापकृत्कश्चिदासीत्तस्मिन् राजनि शासति ।। ९ ।।

**अकृष्टकरकृत्** इत्यत्र कृष्टं कृषिः तद्रहिताः अकृष्टाः तेभ्यः करं करोति ददातीति करकृत् । अकृष्टश्चासौ करकृच्च तादृशो न भवतीति **नाकृष्टकरकृत्** ।

।। इति एकत्रिंशोऽध्यायः ।।

## ।। अथ द्वात्रिंशोऽध्यायः ।।

[३] पश्यन्तः स्त्रीगणास्तत्र [४] शक्तिपाणिं स्म मेनिरे ।
अयं स पुरुषव्याघ्रो रणे वसुपराक्रमः ।। १० ।।

**शक्तिपाणिं स्म मेनिर** इत्यत्र **शक्तिपाणिः** षण्मुखः । [५] ‘षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः’ इत्यमरः ।

[६] विपमं पर्वतस्त्रस्तै रश्मिभिश्च समावृतम् ।
निर्जरं निर्मनुष्यं च बहुयोजनमायतम् ।। १८ ।।

**निर्जरम्** इत्यत्र **जरा** जरणं नाशः तद्रहितमित्यर्थः ।

।। इति सम्भवे द्वात्रिंशोऽध्यायः ।।

---

१. पू. ८९. अध्यायः ; २. ‘न कृष्याकरकृज्जनः’ इति कुं. पाठः ।
३. पू. ९० अध्यायः; ३. ‘वज्रपाणिं’ इति कुं.पाठः ।
५. अ. को. १-१-४०
६. ‘निर्जरं’ इति कुं.पाठः ।

## ।। अथ त्रयस्त्रिंशोऽध्यायः ।।

[१] **एक एवोत्तमबलः क्षुत्पिपासाश्रमान्वितः ।**
**स वनस्यान्तमासाद्य [२] सोऽपश्यदिरिणं ततः ।। ४ ।।**

**सोऽपश्यदिरिणं तत** इत्यत्र **इरिणं** ईरिणं ऊषरभूमिमित्यर्थः । [३] 'भवेदीरिणमूषरम्' इति हलः ।

**एवं गुणसमायुक्तं ददर्श स वनं नृपः ।**
**नदीकच्छोद्भवं कान्तमुच्छ्रितध्वजसन्निभम् ।। १९ ।।**

**नदीकच्छोद्भवम्** इत्यत्र **कच्छः** तीरम् । 'कच्छो रोधस्तटं तीरम्' इति निघण्टुः ।

**नैकपक्षिगणाकीर्णां तपोवनमनोरमाम् ।**
**तत्र व्यालमृगान्सौम्यान्पश्यन्प्रीतिमवाप सः ।। २४ ।।**

**तत्र व्यालमृगान् सौम्यान्** इत्यत्र **व्यालो** दुष्टगजः, [४] 'व्यालो दुष्टगजः प्रोक्त' इति हलः । व्यालः सर्पो वा, मृगाः सिंहादयः तान् सर्वान् आश्रमप्रभावेन **सौम्यान्** आगतानामपीडाकरान् परस्परं च प्रसन्नान् पश्यन्निति सम्बन्धः ।

**सचक्रवाकपुलिनां पुष्पफेनप्रवाहिनीम् ।**
**सकिन्नरगणावासां वानरर्क्षनिषेविताम् ।। २७ ।।**

---

१. कुं. ९१ अध्यायः
२. S ; BORI पृ. २८६; **'महच्छून्यं समासदत्'** इति कुं. पाठः ।
३. ह.को. २-१५८ ; ४. ह.को. २-२२५

**सचक्रवाकपुलिनाम्** इत्यत्र चक्रवाकैः सहितं पुलिनं सैकतं यस्याः सा ताम्। 'सैकतं पुलिनं द्वीपं सिकता वालुका स्मृता' इति हलः।

**भारुण्डसामगीताभिरथर्वशिरसोद्गतैः।**
**यतात्मभिः सुनियतैः शुशुभे स तदाश्रमः ॥ ४१ ॥**

तच्छिरोभिः इति पाठे तेषां वेदानां शिरोभिरुपनिषद्भिः। **भारुण्डसामगीताभिः** उद्गीथशौवादिनामवत् भारुण्डमिति कस्यचित्साम्नो नाम।

**स्थापनाक्षेपसिद्धान्तपरमार्थज्ञतां गतैः।**
**शब्दच्छन्दोनिरुक्तज्ञैः कालज्ञानविशारदैः ॥ ४६ ॥**

**स्थापनाक्षेपसिद्धान्तपरमार्थज्ञतां गतैः** इत्यत्र स्थापनं स्वसिद्धान्तस्थापनं, आक्षेपः परपक्षनिराकरणं, सिद्धान्तः सत्सिद्धान्तः।

**नानाशास्त्रेषु मुख्यैश्च शुश्राव स्वनमीरितम्।**
**लोकायतिकमुख्यैश्च समन्तादनुनादितम् ॥ ४८ ॥**

**लोकायतिकमुख्यैश्च** इत्यत्र लोकान् आ समन्तात्सञ्चरन्ति ये यतयः ते लोकायतिकाः, स्वार्थे कप्रत्ययः। तेषु मुख्यैः। वैदिकशिरोमणीनामृषीणां संसदि चार्वाकादीनामसम्भवादुक्त एवार्थः।

॥ इति त्रयस्त्रिंशोऽध्यायः ॥

## ॥ अथ चतुस्त्रिंशोऽध्यायः ॥

**[१]स्थितोस्म्यमितसौभाग्ये विवक्षुश्चास्मि किञ्चन ।**
**शृणु मे नागनासोरु वचनं मत्तकाशिनि ॥ १८ ॥**

**वचनं मत्तकाशिनि** इत्यत्र 'मत्तकाशिनि' इति उत्तमस्त्रिया नाम । 'वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी'[२] इत्यमरः । 'अमत्ता मत्तवद्भाति या स्त्री सा मत्तकाशिनी' इति च निघण्टुः ।

**दुष्यन्त उवाच –**

**ऊर्ध्वरेता महाभागे भगवाँल्लोकपूजितः ।**
**चलेद्धि [३]चित्तं धर्मात्तु न चलेत्संशितव्रतः ॥ २६ ॥**

**चलेद्धि चित्तम्** इत्यत्र पुण्यानां मध्ये कचिन्निक्षिप्तं चित्तं कदाचिच्चलेत् पुण्यान्तरं प्रति चालयेत्, धर्मात्तु न चलेदेव ।

**[४]विगृह्य स वसिष्ठं यः पुत्रैरिष्टैर्व्ययोजयत् ।**
**क्षत्रजातश्च यः पूर्वमभवद्ब्राह्मणो बलात् ॥ ४१ ॥**

**विगृह्य स वसिष्ठम्** इत्यत्र **विगृह्य** वसिष्ठं विरुद्धतया गृह्य वैरिणं कृत्वेत्यर्थः ।

**बभार यत्रास्य पुरा काले दुर्गे महात्मनः ।**
**दारान्मतङ्गो धर्मात्मा राजर्षिर्व्याधतां गतः ॥ ४३ ॥**

**दुर्गे महात्मन** इत्यत्र **दुर्गे** विषमस्थले कुरुक्षेत्र इत्यर्थः ।

---

१. कुं. ९२ अध्यायः ; २. अ.को. २-६-४
३. **'वृत्ताद्धर्मोपि'** इति कुं.पाठः । ; ४. **'महाभागं वसिष्ठं'** इति कुं.पाठः ।

**मतङ्गं याजयाञ्चक्रे यत्र प्रीतमनाः स्वयम् ।**
**त्वं च सोमं भयाद्यस्य गतः पातुं सुरेश्वर ॥ ४५ ॥**

**त्वं च सोमम्** इत्यत्र **सोमं** सोमरसम् ।

**अतिनक्षत्रवंशानि क्रुद्धो नक्षत्रसम्पदा ।**
**प्रति श्रवणपूर्वाणि नक्षत्राणि ससर्ज यः ॥ ४६ ॥**

**अतिनक्षत्रवंशानि** इत्यत्र एतावत्सु जातः ब्राह्मणो भवति, एतावत्सु नक्षत्रेषु क्षत्रियः, एतावत्सु वैश्यः, एतावत्सु शूद्र इति नक्षत्रेषु पूर्वकल्पनाऽस्ति । **अतिनक्षत्रवंशानि** क्षत्रवंशो न भवतीति **नक्षत्रवंशो** ब्राह्मणवंशः, सः अतीतो यैः स्वोत्पत्तिकालीननक्षत्रैः तानि नक्षत्राणि **अतिनक्षत्रवंशानि** क्षत्रकुलोत्पत्तियोग्यश्रवणादिनक्षत्राणीति यावत् । इति कृत्वा **नक्षत्रसम्पदा क्रुद्धः** उत्पत्तिकालीनश्रवणादिनक्षत्रदोषात् खलु स्वयं क्षत्रकुले जात इति नक्षत्रेषु कोपवानित्यर्थः । **प्रति** अश्विन्यादिनक्षत्राणि प्रति तत्प्रतिकूलतयेत्यर्थः । श्रवणपूर्वाणि श्रवणमेव **पूर्वम्** आदिर्येषां तानि नक्षत्राणि ससर्ज । श्रवणस्यैव पूर्वत्वे ब्राह्मणजन्मयोग्यप्राथमिकनक्षत्रेषु श्रवणस्य प्राक् पठितत्वात् स्वस्य ब्राह्मणजन्म भविष्यतीति मत्वेति भावः ।

**हुताशनमुखं दीप्तं सूर्यचन्द्राक्षितारकम् ।**
**कालजिह्वं सुरश्रेष्ठ कथमस्मद्विधा स्पृशेत् ॥ ४७ ॥**

हुताशनमुखत्वादिकं तदन्तर्यामिनारायणमपेक्ष्यैवोक्तमिति द्रष्टव्यम् ।

॥ इति चतुस्त्रिंशोऽध्यायः ॥

## ॥ अथ पञ्चत्रिंशोऽध्यायः ॥

**[१]गृध्रां वाससि सम्भ्रान्तां मेनकां मुनिसत्तमः ।**
**अनिर्देश्यवयोरूपां अपश्यद्विवृतां तदा ॥ ६ ॥**

**गृध्रां वाससि** इत्यत्र वाससि **गृध्राम्** आकाङ्क्षावतीम् । 'गृधु आकाङ्क्षायाम्' इति धातुः ।

**तपसा दीप्तवीर्योऽसावाकाशादेति याति च ।**
**अद्य सञ्ज्ञां विजानामि [२]ययाऽस्य तपसः क्षयम् ॥ १३ ॥**

**अद्य सञ्ज्ञाम्** इत्यत्र **सञ्ज्ञां** मदागमनसूचनाय पादेन जल-ताडनाख्यसङ्केतं, **यया** सञ्ज्ञया अस्य तपसः **क्षयं** निर्यातं प्राप्तम् ।

॥ इति पञ्चत्रिंशोऽध्यायः ॥

## ॥ अथ षट्त्रिंशोऽध्यायः ॥

**[३]सुवर्णमालां वासांसि कुण्डले [४]परिपादुके ।**
**नानापत्तनजे शुभ्रे मणिरत्ने च शोभने ॥ २ ॥**

**कुण्डले परिपादुक** इत्यत्र **परिपादुके** परितः सञ्चारयोग्यपादुके ।

**किं पुनर्विधिवत्कृत्वा सुप्रजास्त्वमवाप्स्यसि ।**
**धर्मात्मा च महात्मा च दुष्यन्तः पुरुषोत्तमः ॥ ६१ ॥**

---

१. कुं. ९३ अध्यायः ; $K_{2.4}$,$D_3$,$D_{a1}$,$D_1$; BORI पृ. २९५; '**गृद्धां**' इति कुं. पाठः ।

२. '**ययाऽद्य तपसः क्षयः**' इति कुं. पाठः ।

३. कुं. ९४ अध्यायः ; ४. BORI पृ. ३०२; '**परिहाटके**' इति कुं.पाठः ।

[1] **सुप्रजास्त्वमवाप्स्यसि** इत्यत्र शोभना प्रजा[2] यस्याः सा **सुप्रजाः** सुप्रजाया भावः **सुप्रजास्त्वं** इति वैदिकपदम्। 'सुप्रजास्त्वमङ्गिरसो वो अस्तु' इति प्रयोगात्।

**स च सर्वां समुद्रान्तां कृत्स्नां भोक्ष्यति मेदिनीम्।**
**परं चाभिप्रयातस्य चक्रं तस्य महात्मनः ॥ ६३ ॥**

**परं चाभिप्रयातस्य** इत्यत्र **परं** वैरिणं, **चक्रम्** आज्ञाचक्रम्।

॥ इति षट्त्रिंशोऽध्यायः ॥

## ॥ अथ सप्तत्रिंशोऽध्यायः ॥

**[3] सूतिकाले [4] प्रसूयेति भगवांस्ते पिताऽब्रवीत्।**
**करिष्यामीति कर्तव्यं तदा ते सुकृतं भवेत् ॥ ८ ॥**

**सूतिकाले प्रसूयेति** इत्यत्र त्वरां न कुरु। सूतिकाले प्राप्ते सति **प्रसूय** एवं कुरु इति पिता यदब्रवीत् तत्करिष्यामीति त्वयाऽप्युक्तम्। तद्वचनं कर्तव्यम्।

**चक्राङ्कितकरः श्रीमान् स्वयं विष्णुरिवापरः।**
**[5] चतुष्किष्कुश्च किष्कुश्च महामूर्धा महाबलः ॥ १९ ॥**

**चतुष्किष्कुश्च किष्कुश्च** इति पाठे आयामेन **चतुष्किष्कुः** [6] चतु-

---

१. सुप्रजसः सो.मु.पा. ; २. ऋ.सं. १०-६२-३
३. कुं. ९८ अध्यायः ; ४. BORI पृ. २९७; '**प्रसूय्वेति**' इति कुं.पाठः।
५. '**चतुष्किष्कुर्महातेजा**' इति कुं.पाठः।
६. **चतुर्हस्तः प्रमाणतः** सो.मु.पा.

हस्तप्रमा(णकः)णः । [1] 'किष्कुर्हस्ते वितस्तौ च' इत्यमरः । **किष्कुः** विस्तारेण एकहस्तप्रमाण इत्यर्थः ।

**[2]प्रतिवाक्यं न दद्यास्त्वं [3]शापिता मम पादयोः ॥ ९ ॥**

**शापिता मम पादयोः** इत्यत्र मम पादयोः **शापिता** शपथं प्रापिता ।

**अनूपजाङ्गलयुतं धनधान्यसमाकुलम् ।**
**प्रतिष्ठितं पुरवरं गङ्गायामुनसङ्गमे ॥ ४७ ॥**

**अनूपजाङ्गलयुतम्** इत्यत्र **अनुना** पूरुज्येष्ठेन अधिष्ठितम् **उपजाङ्गलं** जाङ्गलाख्यजनपदसमीपे वर्तमानं स्थलम् **अनूपजाङ्गलं** तेन युतम् ।

**[4]सर्वतः पुष्करिण्यैश्च उद्यानैश्च समावृताम् ।**
**वर्णाश्रमैः स्वधर्मस्थैर्नित्योत्सवसमाहितैः ॥ ५८ ॥**

**सर्वतः पुष्करिण्यैः** इत्यत्र **पुष्करिण्यैः** पुष्करिण्युद्भवकमलादिभिः ।

**॥ इति सप्तत्रिंशोऽध्यायः ॥**

## ॥ अथ अष्टत्रिंशोऽध्यायः ॥

**[5]सिंहेक्षणः सिंहदंष्ट्रः सिंहस्कन्धो महाभुजः ।**
**[6]सिंहानूकः सिंहगतिः सिंहविक्रान्यगाम्ययम् ॥ ११ ॥**

---

१. अ.को. ३-३-७ ; २. कुं. ९६ अध्यायः ; ३. **'शापिता'** इति कुं.पाठः ।
४. **'सर्वपुष्करिणीभिश्च'** इति कुं.पाठः ।
५. कुं. ९७ अध्यायः
६. **'सिंहोरस्कः सिंहबलः'** इति कुं.पाठः ।

**सिंहानूकः सिंहगतिः** इत्यत्र **सिंहानूकः** सिंहवत् **अनूकं** शीलं धैर्यादिगुणस्वभावो यस्य स तथोक्तः । 'अनूकमन्ववाये च शीलेऽपि च निगद्यते' इति निघण्टुः ।

**मया समागमे पूर्वं यथा तत्समये त्वया ।**[१][२]
**तत्त्वं स्मर महाबाहो कण्वाश्रमपदं प्रति** ।। २७ ।।

**यथा तत्समय** इत्यत्र तस्मिन् **समये** विवाहकाले कृतसङ्केते ।

**यमो वैवस्वतस्तस्य निर्यातयति दुष्कृतम् ।**
**हृदि स्थितः कर्मसाक्षी क्षेत्रज्ञो तस्य तुष्यति** ।। १२ ।।

**यमो वैवस्वत** इत्यत्र दुष्कृतं **निर्यातयति** तस्माद्बहिः प्रापयति ।

**न तुष्यति च यस्यैष पुरुषस्य दुरात्मनः ।**
**तं यमः पापकर्माणं निर्यातयति दुष्कृतम्**[३] ।। १३ ।।

**तं यमः पापकर्माणं निर्यातयति दुष्कृतम्** इत्यत्र **निर्यातयति** दुष्कृतमनुसृत्य तं निर्यातयति नितरां यातनां प्रापयति ।

**योऽवमत्यात्मनात्मानं अन्यथा प्रतिपद्यते ।**
**न तस्य देवाः श्रेयांसि यस्यात्माऽपि न कारणम्** ।। १४ ।।

**यस्यात्माऽपि न कारणम्** इत्यत्र **आत्माऽपि** परमात्माऽपि **कारणं** [illegible] श्रेयःकारणं न ।

---

१ पृ. ९८ अध्यायः

२ 'कृतः स समयस्त्वया' इति कुं.पाठः ।

३ BORI पृ. ३०६; 'निर्भर्त्सयति' इति कुं.पाठः ।

**किमर्थं मां प्राकृतवदुपप्रेक्षसि संसदि ।**
**[1]न खल्विदमहं शून्यं न करोमि शृणोषि मे ॥ १६ ॥**

[2]**न खल्विदम्** इत्यत्र इदं पुरं शून्यं न करोमि, शापेन न भस्मीकरोमीत्यर्थः ।

**[3]कान्तारेष्वथ विश्रामो जनस्याध्वनि कस्य वै ।**
**यः सदारः स विश्वास्यस्तस्माद्दाराः परा गतिः ॥ २६ ॥**

**कान्तारेष्वथ विश्राम** इत्यत्र **विश्रामः** वृक्षच्छायादिकमाश्रित्यालस्यपरिहरणम् ।

**शिशोरालिङ्गनं तस्माच्चन्दनादधिकं भवेत् ।**
**न वाससां न रामाणां नापां स्पर्शस्तथाविधः ॥ ५० ॥**
**[4]शिशुमालिङ्ग्यमानस्य स्पर्शः सूनोर्यथा सुखः ।**
**पुत्रस्पर्शात्प्रियतरः स्पर्शो लोके न विद्यते ॥ ५१ ॥**

**शिशुमालिङ्ग्यमानस्य** इत्यत्र शिशुं आलिङ्ग्यमानस्य पितुः सूनोः स्पर्शः यथा सुखं तथेति पूर्वेणान्वयः ।

**सुनिकृष्टा च योनिस्ते पुंश्चली प्रतिभासि मे ।**
**यदृच्छया कामरागाज्जाता मेनकया ह्यसि ॥ ८७ ॥**

---

१. $K_1$, BORI पृ. ३०६; **'न खल्वहमिदं शून्ये रौमि किं'** इति कुं.पाठः ।
२. **न खल्वहमिदमित्यत्र** सो.मु.पा. ।
३. $K_2$,$G_{3,6}$,$M_{6-8}$; BORI पृ. ३०६; **'कान्तारेष्वपि विश्रामो'** इति कुं पाठः ।
४. **'शिशुनालिङ्ग्यमानस्य'** इति कुं.पाठः ।

**पुंश्चली प्रतिभासि मे** इत्यत्र **पुंश्चली** वेश्या । 'पुंश्चली बन्धकी वेश्या' इत्यभिधानम् ।

**सर्वमेव परोक्षं मे यत्त्वं वदसि तापसि ।**
**सर्वा वामाः स्त्रियो लोके सर्वाः कामपरायणाः ॥ ८८ ॥**
**सर्वाः स्त्रियः परवशाः सर्वाः क्रोधसमाकुलाः ।**
**असत्योक्ताः स्त्रियः सर्वा न कण्वं वक्तुमर्हसि ॥ ८९ ॥**

**सर्वा वामाः स्त्रिय** इत्यत्र **वामाः** भर्तुः प्रतीपाः । [1]'वामा वध्वां वल्गुरम्यप्रतीपेषु' इत्यमरः । **असत्योक्ताः** असत्यमुक्तं वचनं यासां ता असत्योक्ताः स्त्रियः ।

**मेनका निरनुक्रोशा वर्धकी जननी तव ।**
**यया हिमवतः पादे [2]निर्माल्येव प्रवासिता ॥ ९० ॥**

**निर्माल्येव प्रवासिता** इत्यत्र **निर्माल्येव** धृत्वोज्झितपुष्पमालेव **प्रवासिता** प्रवासं प्रापिता त्यक्तेति यावत् ।

**[3]अरिष्ट इव दुर्बुद्धिः कण्वो वर्धयिता पिता ।**
**अश्रद्धेयमिदं वाक्यं यत्त्वं जल्पसि तापसि ॥ ९१ ॥**

**अरिष्ट इव दुर्बुद्धिः** इत्यत्र **अरिष्टः** काकः । [4]'अरिष्टः करटः काक' इति कोशः ।

॥ इति अष्टत्रिंशोऽध्यायः ॥

---

१. अ.को. २-६-२; प्र.पाठस्तु एवं 'प्रतीपदर्शिनी वामा वनिता महिला तथा' ।
२. Ms. BORI पृ. ३१०; **'निर्माल्यवदुपेक्षिता'** इति कुं.पाठः ।
३. **'अरिष्टमिव'** इति कुं.पाठः । ; ४. ह.को. २-२४५

## ।। अथ एकोनचत्वारिंशोऽध्यायः ।।

**[1]अतीव रूपसम्पन्नो न कश्चिदवमन्[2]यते ।**
**अतीव जल्पन् दुर्वाचो भवतीह विपोटकः ।। १० ।।**

**भवतीह विपोटक** इत्यत्र 'सदोषः स्वयमन्येषां निन्दकस्तु विपोटकः' इत्यभिधानात् **विपोटकः** दुर्वाक्यैः परनिन्दकः ।

**स्वपत्नीप्रभवाँल्लब्धान् [3]क्रीतान् सर्वविवर्जितान् ।। २५ ।।**
**[4]कृतानन्यासु चोत्पन्नान् पुत्रान्वै मनुरब्रवीत् ।**
**ते च षड्बन्धुदायादाः षडदायादबान्धवाः ।। २६ ।।**

**क्रीतान् सर्वविवर्जितान्** इत्यत्र **सर्वविवर्जितान्, सर्वैः** पितृमातृसहोदरादिबन्धुजनैः **विवर्जितान्** रहितान्, अनाथानिति यावत् । **अन्यासु चोत्पन्नान्** इत्यत्र **कृतान्** [5]पुत्रीकृतान् दत्तपुत्रानिति यावत् । **अन्यासु** स्वगृहस्थदास्यादिषु । मनुः –औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च । गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् । कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा । [6]स्वयं जातश्च शौद्रश्च षडदायादबान्धवाः ।

**अनृतश्चेत्प्रसङ्गस्ते श्रद्धधासि न चेत्स्वयम् ।**
**[7]आत्मानमवगच्छाशु तादृशेनास्ति सङ्गतम् ।। ३८ ।।**

---

१. कुं. ९९ अध्यायः ; २. $M_3$; BORI पृ. ३१२; '**विहेतुकः**' इति कुं.पाठः
३. $T_1$,$G_{3-6}$,$M_5$; BORI पृ. ३१३; '**कृतान्समयवर्धितान् । क्रीतान्कन्यासु चोत्पन्नान्**' इति कुं.पाठः । ; ४. '**क्रीतकन्यासु**' इति कुं.पाठः ।
५. **म. स्मृ. ९.१५९-१६०**; ६. '**स्वयं दत्तश्च**' इति प्र. पाठः ।
७. '**आश्रमं गन्तुमिच्छामि त्वादृशो नास्ति सङ्गतम्**' इति कुं.पाठः ।

**आत्मानमवगच्छाशु** इत्यत्र **आत्मानं** परमात्मानम् **अवगच्छ** मनसा स्मर । **तादृशेन** परमात्मस्मरणशीलेन ।

**॥ इति एकोनचत्वारिंशोऽध्यायः ॥**

## ॥ अथ चत्वारिंशोऽध्यायः ॥

**माता[1] भस्त्रा पितुः पुत्रो यस्माज्जातः स एव सः ।**
**भरस्व पुत्रं दुष्यन्त[2] सत्यमाह शकुन्तला ॥ २ ॥**

**माता भस्त्रा पितुः पुत्रो यस्माज्जातः स एव सः । भरस्व पुत्रं दुष्यन्त सत्यमाह शकुन्तला** इत्यत्र स्वोदरे वायुं परिपूर्य काले काले मुञ्चती चर्ममयी कारूणामुपकारिणी काचन सामग्री तद्वन्माता । पुत्रस्तु पितुरेवोपकारकः यस्मात् सः पितैव मातुरुदरे दत्तस्वरेतोरूपेण जातः । शुक्रान्तस्स्थितजीवस्य मातुरुदरप्रवेशानन्तरं जीवावरकं तदेव शुक्रं मातृभुक्तान्नरसादिना देहाकारेण परिणतं भवति । शोणितं तु बीजस्य पङ्किलं सरोजलमिव आधारमात्रमिति भावेन स एवेत्युक्तम् । यथा कारुकरपूरितभस्त्रानिस्सृतो वायुः कारोरेवोपकारकः तथेति भावः ।

**रेतोधाः पुत्रं[3] नयति नरदेव यमक्षयात् ।**
**त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥ ७ ॥**

**रेतोधाः पुत्रं नयति** इत्यत्र हे **नरदेव** दुष्यन्त **पुत्रं** पुत्रः **रेतोधाः** ...तारं पितरम् अक्षयं लोकं नयति । 'नापुत्रस्य लोकोऽस्ति' इति

---

१. ...१०० अध्यायः । ; २. **'दौष्यन्तिं'** इति कुं.पाठः ।
३. D...S: BORI पृ. ३१५; **'पुत्र उन्नयति'** इति कुं.पाठः ।

श्रुतेः । **अस्य** सर्वदमनाख्यस्य शकुन्तलागर्भस्य **धाता** रेतोधाता च सः त्वम् । अतः कारणात्तं भरस्वेति पूर्वेणान्वयः । 'व्यत्ययो बहुलम्' इति सूत्रात् स्वग्रन्थस्य च्छन्दस्समानत्वद्योतनाय विभक्तिव्यत्यासोऽयमिति ज्ञातव्यम् ।

**सर्वेभ्यो ह्यङ्गमङ्गेभ्यः साक्षादुत्पद्यते सुतः ।**
**आत्मा चैव सुतो नाम तेनैव तव पौरव ॥ ३ ॥**

**सर्वेभ्यो ह्यङ्गमङ्गेभ्य** इत्यत्र सर्वेभ्यः **अङ्गेभ्यः** पित्रङ्गेभ्यः **अङ्गं** स्वाङ्गं सम्पाद्य तदङ्गसदृशसर्वाङ्गतयेत्यर्थः ।

**पतिर्जायां प्रविशति स तस्यां जायते पुनः ।**
**अन्योन्यप्रकृतिर्ह्येषो[1] मावमंस्थाः शकुन्तलाम् ॥ ८ ॥**

**अन्योन्यप्रकृतिर्ह्येष** इत्यत्र **एषः** पतिजायाभावः ।

**अनृतं वाऽप्यनिष्टं वा दुरुक्तं वाऽतिदुष्कृतम् ।**
**त्वयाप्येवं विशालाक्षि क्षन्तव्यं मम दुर्वचः ।**
**क्षम्याः[2] पतिकृते नार्यः पातिव्रत्यं व्रजन्ति ताः ॥ २८ ॥**

**क्षम्याः पतिकृत** इत्यत्र पतिकृते **क्षम्याः** क्षमावत्यः ।

**परिष्वज्य च बाहुभ्यां हर्षादश्रूण्यवर्तयत् ।**
**उवाच वचनं सत्यं लक्षयन्[3] लक्षणानि च ॥ ३४ ॥**

---

१. **'अन्योन्यप्रकृतिर्ह्येपा'** इति कुं.पाठः ।
२. BORI पृ. ३१७; **'क्षान्त्या'** इति कुं.पाठः ।
३. **'लक्षये'** इति कुं.पाठः ।

**लक्षयन् लक्षणानि** इत्यत्र **लक्षणानि** राजयोग्यलक्षणानि लक्षयन् तव पुत्रः ।

**वैशम्पायन उवाच –**

**[1]दुष्यन्ताद्भरतो राज्यं यथान्यायमवाप सः ।**
**तस्य तत्प्रथितं [2]चक्रं प्रावर्तत महात्मनः ॥ १ ॥**

**तस्य तत्प्रथितं चक्रम्** इत्यत्र तत्प्रसिद्धं **चक्रं** नारायणसुदर्शनं **प्रावर्तत** सर्वतो रक्षणाय सेनायां प्रतिष्ठितमभूत् ।

**[3]श्रीमान् गोविततं नाम वाजिमेधमवाप सः ॥ ५ ॥**

**श्रीमान् गोविततं नाम** इत्यत्र **गवि** भूम्यां **विततत्वात्** प्रथितत्वात् **गोविततं** नाम ।

**यस्मिन् सहस्रं पद्मानां कण्वाय भरतो ददौ ॥ ५ ॥**

**सहस्रं पद्मानां** पद्मसङ्ख्याकधनानां, [4]'शतं शतसहस्राणां कोटिमाहुर्मनीषिणः । शतं कोटिसहस्राणां शङ्कुरित्यभिधीयते । शतं शङ्कुसहस्राणां महाशङ्कुरितीर्यते। महाशङ्कुसहस्राणां शतं वृन्दमिहोच्यते । शतं वृन्दसहस्राणां महावृन्दमितीर्यते । महावृन्दसहस्राणां शतं पद्म[illegible]ः ।' इति युद्धकाण्डे वाल्मीकिवचनम् । एवंविधसुवर्णं कण्वाय ददाविति सम्बन्धः ।

---

१ मु.१०१ अध्यायः ।
२ BORI पृ. ३१७; **'कर्म'** इति कुं.पाठः ।
३ BORI पृ. ३१७; **'श्रीमद्गोविततं'** इति कुं.पाठः ।
४ वा.रा. युद्धकाण्ड २८.३३-३६

**ऋक्षं धूमिन्यथो नीली दुष्यन्तपरमेष्ठिनौ ।**
**केशिन्यजनयज्जह्नुं उभौ[1] च जन रूषणम्		॥ २० ॥**

**जह्नुमुभौ च जन रूषणम्** इत्यत्र हे **जन!** जनमेजय इति राज्ञः सम्बोधनम् । जह्नुं रूषणं चेत्युभौ ।

**विषाणभूतं सर्वस्य[2] पृथिव्यामिति नः श्रुतम् ।**
**भरताध्युषितं पूर्वं सोऽध्यतिष्ठत् पुरोत्तमम्		॥ ३४ ॥**

**विषाणभूतं सर्वस्य** इत्यत्र **सर्वस्य** शत्रुसमूहस्य **विषाणभूतं** उत्तुङ्गगोश्रुङ्गवत् भयङ्करत्वाद्विषाणभूतं, विषं **अणति** प्रापयतीति विषाणः सर्पो वा ।

**आजमीढो महायज्ञैर्बहुभिर्भूरिदक्षिणैः ।**
**ततः संवरणात्सौरी तपती सुषुवे कुरुम्		॥ ३६ ॥**

**सौरी तपति** इत्यत्र **सौरी** सूर्यपुत्री तपती ।

**[3]अभिश्वतः परीक्षिच्च शबलाश्वस्तु वीर्यवान् ।**
**आदिराजो विराजश्च शाल्मलिश्च महाबलः		॥ ४० ॥**

**अभीश्वतः परीक्षिच्च** इत्यत्र **अभीश्वतः** अभीश्वन्नामकात् कुरु-पुत्रात् ।

**इन्द्रसेनः सुषेणश्च भीमसेनश्च नामतः ।**
**जनमेजयस्य तनया भुवि ख्याता महाबलाः		॥ ४३ ॥**

---

१. **'सुतौ च जनरूपिणौ'** इति कुं.पाठः । ; २. **'सर्व्वस्यां'** इति कुं.पाठः ।
३. $T_2,B_{3.5},D_2,T_2,G_{1.3}$,M; BORI पृ. ३९९; **'अन्विक्षितः परीक्षित्तु'** इति कुं.पाठः ।

सिंहावलोकनन्यायेन कुरुपुत्रस्य जनमेजयस्य वंशं पुनराह– **जनमेजयस्य तनया** इति ।

**[१] पर्यश्रवसमिन्द्राभं शरावं वाजिनं युधि ।**
**अतिनारश्च नहुषः तथा शक्रपुरञ्जयौ ॥**

**पर्यश्रवसमिन्द्राभम्** इत्यत्र युधि **नारान्** नरसमूहान् **अति** अतिक्रम्य वर्तत इति **युधि अतिनार** इति धृतराष्ट्रस्यैव नामान्तरम् ।

इदानीं परीक्षितः पुत्रस्य भीमसेनस्य वंशमाह – **भीमसेनान्महेष्वासादिति ॥**

**भीमसेनान्महेष्वासात् प्रतीपः समपद्यत ॥**

**प्रतीपस्य त्रयः पुत्रा जज्ञिरे भरतर्षभ ।**
**देवापि शन्तनुश्चैव बाह्लीकश्च महायशाः ॥**
**[२] गङ्गाद्वारं समासाद्य दीक्षितो जनमेजय ।**
**अश्वमेधसहस्राणि वाजपेयशतानि च ॥ ५३ ॥**

भरतवंशपरम्परामुक्त्वा पुनः सिंहावलोकनन्यायेन भरतस्यैव पुण्यचरि(त)त्रमाह– **गङ्गाद्वारं समासाद्य** इत्यादिना ।

**पुनः सहस्रं पद्मानां कण्वाय भरतो ददौ ।**
**[३] जाम्बूनदस्य शुद्धस्य कनकस्य महायशाः ॥ ५६ ॥**

---

१ BORI पृ.३९६

२ $G_1, M_{6,8}$; BORI पृ. ३९७; **'गङ्गातीरं समागम्य'** इति कुं.पाठः ।

३ BORI पृ. ३९७; **'जम्बूनदस्य'** इति कुं.पाठः ।

**जाम्बूनदस्य शुद्धस्य कनकस्य महायशा** इत्यत्र **जाम्बूनदस्य** जम्बूनदीसम्बन्धसमुत्पन्नस्य अत एव शुद्धस्य कनकस्य ।

**यस्य यूपाः शतव्यामाः परिणाहेऽथ काञ्चनाः** ॥ ५७ ॥

**यस्य यूपाः शतव्यामा** इत्यत्र **परिणाहे** वर्तुलतायां **शतव्यामाः** शतं विस्तृतबाहुद्वयान्तरितदेशप्रमाणानि येषां ते तथोक्ताः । [१] 'व्यामो बाह्वोस्सकरयोस्ततयोस्तिर्यगन्तरम्' इत्यमरः । 'मारु' इत्यपभ्रंशभाषा ।

[२] **सहस्रव्याममुद्विद्धा सेन्द्रैर्देवैः समुच्छ्रिताः** ॥ ५७ ॥

**सहस्रव्याममुद्विद्धा** इत्यत्र सहस्रव्यामं यथा भवति तथा **उद्विद्धाः** ऊर्ध्वं विद्धाः उन्नता इत्यर्थः ।

॥ इति चत्वारिंशोऽध्यायः ॥

## ॥ अथ एकचत्वारिंशोऽध्यायः ॥

[३] **इक्ष्वाकूणामन्यतमो राजसीत् पृथिवीपतिः ।**
**महाभिषगिति ख्यातः सत्यवाक्यसत्यविक्रमः** ॥ १ ॥

**इक्ष्वाकूणामन्यतम** इत्यत्र रघूणामितिवत् कुरूणामितिवच्च इक्ष्वाकुवंशजातानामपि इक्ष्वाकुत्वम् ।

**किमिदं नष्टरूपाः स्थ कच्चित्क्षेमं दिवौकसाम् ।**
**तामूचुर्वसवो देवाः शप्ताः स्मो वै महानदि** ॥ १२ ॥

१. अ.को. २-६-८७

२. $M_{6\ 8}$; BORI पृ. ३९७; **'सहस्रव्याममुद्धृद्धाः'** इति कुं.पाठः ।

३. कुं. १०२ अध्यायः । S; BORI पृ. ४१०; **'इक्ष्वाकुवंशप्रभवो'** इति कुं.

१
अस्वयङ्कृतया बुद्ध्या वसिष्ठेन महात्मना ।
विमूढा हि वयं सर्वे प्रच्छन्नमृषिसत्तमम् ॥ १३ ॥

**शप्ता वै स्मो महानदि । अस्वयङ्कृतया बुद्ध्या वसिष्ठेन महात्मना** इत्यत्र महात्मना वसिष्ठेन **अस्वयङ्कृतया** केवलं स्वेनैव कृता न भवतीति **अस्वयङ्कृता तया** हृदिस्थब्रह्मावेशबलेन कृतयेत्यर्थः । शप्ताः स्म इति योजना । अत एव [२] 'ताञ्छशाप, वसिष्ठसंस्थः कमलोद्भवः प्रभुः' इत्याहुः ।

॥ इति एकचत्वारिंशोऽध्यायः ॥

## ॥ अथ द्विचत्वारिंशोऽध्यायः ॥

३
हावभावविलासैश्च लोचनाञ्चलविक्रियैः ।
श्रोणीभरेण मध्येन स्तनाभ्यामुरसा दृशा ॥ ५१ ॥

**हावभावविलासैश्च** इत्यत्र **हावाः** आलम्बनाख्याः स्वाङ्गविलासाः । **भावाः** चन्द्रोदयादिकामोद्दीपनविभावाः ।

॥ इति द्विचत्वारिंशोऽध्यायः ॥

## ॥ अथ त्रिचत्वारिंशोऽध्यायः ॥

४
न च तां किञ्चनोवाच त्यागाद्भीतो महीपतिः ।
अमीमांस्या कर्मयोनिरागमश्चेति शान्तनुः ॥ ६ ॥

---

१. T,G,$M_{6-8}$; BORI पृ. ४११; 'अल्पेऽपराधे संरम्भाद्वसिष्ठेन महात्मना' इति कुं.पाठः ।
२. म.भा.ता.नि. ११-२४
३. 'हावभावविलासैश्च' इति कुं.पाठः ।
४. कुं. १०५ अध्यायः

**स्मरन् पितृवचश्चैव नापृच्छत् पुत्रकिल्बिषम् ।**
**जाताञ्जातांश्च वै हन्ति सा स्त्री सप्त वरान् सुतान् ॥ ७ ॥**

**अमीमांस्या कर्मयोनिः** इत्यत्र **कर्मयोनिः** कर्मणो **योनिः** कारणं अमीमांस्या, **आगमः** कुतस्त्वमागता कस्य पुत्रीत्याद्यागमनप्रकारश्च अमीमांस्य इति स्वपितृवचः स्मरन् **पुत्रकिल्बिषं** पुत्रवधरूपपापं नापृच्छदिति सम्बन्धः ।

**गङ्गोवाच –**

**पुत्रकाम न ते हन्मि पुत्रं पुत्रवतां वर ।**
**जीर्णस्तु मम वासोऽयं यथा स समयः कृतः ॥ १२ ॥**

**जीर्णस्तु मम वासोऽयम्** इत्यत्र **वासः** भवद्गृहे आवासः ।

**इमेऽष्टौ वसवो देवा महाभागा महौजसः ।**
**आपवस्याभिशापेन[1] मानुषत्वमुपागताः ॥ १४ ॥**

**तेषां जनयिता नान्यस्त्वदृते भुवि विद्यते ।**
**मद्विधा मानुषी धात्री लोके नास्तीह काचन ॥ १५ ॥**

**तस्मात्तज्जननीहेतोर्मानुषत्वमुपागता ।**
**जनयित्वा वसूनष्टौ जित्वा लोकास्त्वयाऽक्षयः ॥ १६ ॥**

**आपवस्याभिशापेन** इत्यत्र अप्सु भवः **आपवः** तस्य । यमुना-जलसम्भूतत्वात् **आपव** इति वसिष्ठस्य नाम । '[2]अद्भ्यः सम्भूतो

---

१. S; BORI पृ. ४१९; **'वसिष्ठशापदोषेण'** इति कुं.पाठः ।
२. **महानारायणोपनिषत्** ।

हिरण्यगर्भः' इति वचनात् **आपवो** ब्रह्मा च। उभयोः सङ्ग्रहायापव-पदम्। अन्यथा वसिष्ठस्येत्यवक्ष्यत्। अत एव वसिष्ठे स्वपुत्रशतवधेऽपि कोपाभावेन शापायोगस्य भारत एव विस्तृतत्वात् 'वसिष्ठसंस्थः कमलोद्भवः प्रभुः' इति तात्पर्यमाहुः। तेषां जनयिता नान्य इति वदन्ती गङ्गायां मयि पुत्रस्य जनयिता त्वं वरुण इति च ध्वनयति। **तस्मात्** तव वरुणत्वात् मम गङ्गात्वात्।

**देवानां समयस्त्वेष वसूनां संश्रुतो मया।**
**जातं जातं मोक्षयिष्ये [२]नियोगान्मानुषेष्विति ॥ १७ ॥**

**जातं जातं मोक्षयिष्य** इत्यत्र मानुषेषु जातं जातं पुत्रं **नियोगात्** वसूनामेव नियोगात् **मोक्षयिष्ये** मानुषदेहान्मोक्षयिष्ये। त्वत्कृते अयमष्टमः पुत्रः मया **न मुच्यते** मानुषदेहान्न मोचयिष्यते। **न मुच्यते** जले न निक्षिप्यते वा।

**अयं तव सुतस्तेषां वीर्येण कुलनन्दनः।**
**[३]सम्भूतोऽतिजनान् अन्यान् भविष्यति न संशयः ॥ १९ ॥**

**अयं तव सुत** इत्यत्र **तेषां** वसूनां **वीर्येण** शौर्येण सम्भूतोऽयं अन्यान् जनान् **अति** अतिक्रान्तः भविष्यतीति योजना।

**[४]एष पर्यायवासस्थो मे वसूनां सन्निधौ कृतः।**
**मत्प्रसूतिं विजानीहि गङ्गादत्तमिमं सुतम् ॥ २० ॥**

१. म.भा.ता.नि. ११-२४ ; २. **'जन्मतो मानुषादिति'** इति कुं. पाठः
३. S, BORI पृ. ४१९ ; **'सम्भूऽतोतिजनं कर्म करिष्यति न संशयः'** इति कुं. पाठः।
४. S; BORI पृ. ४२०; **'एष पर्यायवासो'** इति कुं.पाठः।

**एष पर्यायवासस्थ** इत्यत्र पर्यायेण क्रमेण **वासः**[१] बृहस्पतिनिकटे परशुरामनिकटे च आवासः तत्र तिष्ठतीति तथोक्तः ।

॥ इति त्रिचत्वारिंशोऽध्यायः ॥

## ॥ अथ चतुश्चत्वारिंशोऽध्यायः ॥

[२]**दक्षस्य दुहिता या तु सुरभीत्यभिशब्दिता ।**
**गां प्रजाता तु सा देवी कश्यपाद्भरतर्षभ** ॥ ८ ॥

**गां प्रजाता** इत्यत्र **गां** गोरूपसन्ततिं **प्रजाता** प्रसूतवती ।

**दर्शयामास राजेन्द्र पुरा पौरवनन्दन ।**
**द्यौस्तदा तां तु दृष्ट्वैव गां गजेन्द्रेन्द्रविक्रम** ॥ १७ ॥

**द्यौस्तदा तां तु दृष्ट्वा** इत्यत्र **द्यौः** द्युनामको वसुः ।

**ऋषेस्तस्य तपस्तीव्रं न शशाक निरीक्षितुम् ।**
**हृता गौः सा तदा तेन प्रयाता**[३] **न तु शक्तितः** ॥ २८ ॥

**हृता गौस्सा तदा** इत्यत्र सा गौः **शक्तितः** कण्टकादिभिस्ताडन-शक्तितः हृता, न तु स्वयमेव प्रयाता ।

**महाप्रभावो ब्रह्मर्षिर्देवान्क्रोधसमन्वितः ।**
**एवं शप्तास्ततस्तेन मुनिना यामुनेन वै** ॥ ३५ ॥

**महाप्रभावो ब्रह्मर्षिः** इत्यत्र ब्रह्मणा आविष्टो ऋषिः **ब्रह्मर्षिः**, अत एव महाप्रभावः ।

---

१. **वा वासः** सो.मु.पा.; २. कुं. १०६ अध्यायः
३. $M_{3.5}$; BORI पृ. ४२२; **'प्रपातस्तु न तर्कितः'** इति कुं.पाठः ।

**प्रजा ह्यनृतवाक्येन हिंसन् मैनस्तथाऽऽप्नुयात् ॥**

**प्रजा ह्यनृतवाक्येन हिंसमैनस्तथाऽऽप्नुयात्** इत्यत्र प्रजाः हिंसन् एनः यथा आप्नुयात् तथा अनृतवाक्येन **मा** माम् एनः आप्नुयात् तस्मादनृतं न वदामीति भावः ।

**नानृतं तच्चिकीर्षामि क्रुद्धो युष्मान्यदब्रुवम् ।**
**न प्रजास्यति चाप्येप मानुषेपु महामनाः ॥ ४१ ॥**

**न प्रजास्यति** इत्यत्र **न प्रजास्यति** प्र(जाः)जां नाकाङ्क्षति । क्षीरस्यतीतिवच्छब्दोऽयमिति ज्ञातव्यम् ।

॥ इति चतुश्चत्वारिंशोऽध्यायः ॥

## ॥ अथ पञ्चचत्वारिंशोऽध्यायः ॥

**[१] स हास्तिनपुरे रम्ये कुरूणां पुटभेदने ।**
**वसन् सागरपर्यन्तां अन्वशासद्वसुन्धराम् ॥ १२ ॥**

**कुरूणां पुटभेदन** इत्यत्र **पुटभेदने** पत्तने । [२] 'पत्तनं पुटभेदनम्'-इत्यमरः ।

**चकोरनेत्रस्ताम्रास्यः सिंहर्षभगतिर्युवा ।**
**गुणैरनुपमैर्युक्तः [३] समस्तैरभिगामिकैः ।**
**गम्भीरः सत्वसम्पन्नः पूर्णचन्द्रनिभाननः ॥ १७ ॥**

---

१ कुं. १०७ अध्यायः
२ अ.को. २-२-१
३ T1,G1,4; BORI पृ. ४२६; **'समस्तैराभिगामिकैः'** इति कुं. पाठः ।

**समस्तैरभिगामिकैः** इत्यत्र **अभिगामिकैः, अभि** स्वाभिमुख्येन **गमनं** सर्वेषां प्रापणं तत्सम्बन्धिभिरभिगामिकैः, सर्वान् जनान् स्ववशान् कुर्वद्भिरित्यर्थः। अभितः **गामिकैः** गमनशीलैः, सर्वत्र प्रसिद्धैरिति वा।

**यज्ञार्थं पशवः सृष्टाः सन्तानार्थं च मैथुनम्।**
**स समाः षोडशाष्टौ च चतस्रोऽष्टौ तथाऽपराः।**
**[१] रतिमप्राप्नुवन् काश्चिद्बभूव वनगोचरः ॥ २१ ॥**

**स समाः षोडशाष्टौ च** इत्यत्र अग्र्येण तपसा कर्शितः सदा जपध्यानपरः सः **वनगोचरः** ऋषिवर्गः स्वसङ्कल्पानुसारेण स्वफलप्राप्त्यनुसारेण वा षोडशसमाः, ततः प्रागेव फललाभे अष्टौ समाः, तथा चतस्रः समाः, तावता फलाप्राप्तौ पुनरष्टौ च समाः, एवं फलानुसारेण अपराः दशद्वादशादिसमाश्च **काश्चिद्रतिं** अन्नपानवनितादिविषयाभिलाषं अप्राप्नुवन् बभूव।

**तथारूपस्तथाचारस्तथावृत्तस्तथा श्रुतः।**
**गाङ्गेयस्तस्य पुत्रोऽभून्नाम्ना देवव्रतो वसुः ॥ २२ ॥**

**तथारूपस्तथाचार** इत्यत्र **तथा** स्वपितृवत् रूपं यस्य स तथोक्तः। एवमुत्तरत्रापि।

**स [२] कदाचिन्मृगान्निघ्नन् गङ्गामनुसरन्नदीम्।**
**भागीरथीमल्पजलां ददर्श सरितां वराम् ॥ २४ ॥**

---

१. S; BORI पृ. ४२६; **'रतिमप्राप्नुवन्स्त्रीषु बभूव'** इति कुं. पाठः।
२. M; BORI पृ. ४२६; **'कदाचिन्मृगं विद्ध्वा'** इति कुं.पाठः।

**स कदाचिन्मृगान्निघ्नन्** इत्यत्र स शन्तनुः ।

॥ इति पञ्चचत्वारिंशोऽध्यायः ॥

## ॥ अथ षट्चत्वारिंशोऽध्यायः ॥

**[1]सर्वतो भवतः क्षेमं विधेयाः [2]सर्वशात्रवः ।**
**तत्किमर्थमिहाभीक्ष्णं परिशोचसि दुःखितः ॥ ६१ ॥**

**विधेयास्सर्वशात्रव** इत्यत्र विधिः **नियोगः** आज्ञा तद्योग्याः दासा इत्यर्थः । [3]'विधेयो विनयग्राही वचनेस्थित आश्रव' इत्यमरः ।

**[4]अनुवृत्त्या स्मरन् नृणां अतः शोचामि पुत्रक ॥ ६६ ॥**
**कथञ्चित्तव गाङ्गेय विपत्तौ नास्ति नः कुलम् ॥ ६७ ॥**

**अनुवृत्त्या स्मरन्नृणाम्** इत्यत्र नृणाम् **अनुवृत्त्या** अनुकारेण कथञ्चित्तव विपत्तौ नः कुलं नास्तीति स्मरन् शोचामीति सम्बन्धः ।

**त्वं च शूरः सदामर्पी शस्त्रनित्यश्च भारत ।**
**नान्यत्र शस्त्रात्ते पुत्र निधनं विद्यतेऽनघ ॥ ७४ ॥**
**सोऽस्मि संशयमापन्नस्त्वयि शान्ते कथं भवेत् ॥ ७५ ॥**

**नान्यत्र शस्त्रात्ते पुत्र** इत्यत्र शस्त्रादन्यत्र ते निधनं न विद्यते, शस्त्रात्तु जयापराजययोर्दैवाधीनत्वाद्युद्धे कदाचिन्मृतिः स्यादेव । अतः त्वयि **शान्ते** मृते सति **कथं भवेत्** वंशः कथं भवेदिति सम्बन्धः ।

---

१. कुं. १०७ अध्यायः; २. S; BORI पृ. ४२९; **'सर्वपार्थिवाः'** इति कुं.
३. अ.को. ३-१-२४
४. M; BORI पृ. ४२९; **'अनित्यतां च लोकानां'** इति कुं.पाठः ।

**क्षत्रियैः सह धर्मात्मा पुराणैर्धर्मचारिभिः ।**
**उच्चैः श्रवसमागम्य कन्यां वव्रे पितुः स्वयम् ॥ ८४ ॥**

**उच्चैः श्रवसमागम्य** इत्यत्र दीर्घकर्णत्वादुच्चैःश्रवोनामानं दाशराजम् ।

**अपत्यं हीदमार्यस्य यो युष्माकं समो गुणैः ।**
**यस्य शुक्रात् सत्यवती सम्भूता वरवर्णिनी ॥ ८९ ॥**

**अपत्यं हीदम्** इत्यत्र **इदं** पुत्रीरत्नम् **आर्यस्य** उपरिचरवसोः अपत्यं हि ।

**एतज्जानीहि भद्रं ते दानादाने त्वयि[1] स्थिते ॥ ९५ ॥**

**दानादाने त्वयि स्थित** इत्यत्र दानमदानं च **दानादाने** ।

**इदं वचनमाधत्स्व नास्ति वक्तास्य मत्समः ।**
**अन्यो जातो न जनिता न च कश्चन सम्प्रति ॥ ९७ ॥**

**इदं वचनमाधत्स्व** इत्यत्र **अस्य** वचनस्य अन्यो वक्ता सम्प्रति नास्ति अस्य अन्यो वक्ता न जातः न जनिता न जनिष्यति । लुटो रूपमिदम् । समग्रश्लोकस्येयं योजना ।

**समेताश्च पृथक्चैव भीष्मोऽयमिति चाब्रुवन् ।**
**तच्छ्रुत्वा दुष्करं कर्म कृतं भीष्मेण शान्तनुः ॥ ११७ ॥**

**भीष्मोऽयमिति चाब्रुवन्** इत्यत्र **भीष्मः** महासाहसिकः । 'भीष्मः साहसिको मतः' इत्यमरमाला ।[2] 'अभीलं भीषणं भीष्मं भैरवं च भयावहम्' इति हलः ।

**॥ इति षट्चत्वारिंशोऽध्यायः ॥**

---

१. **'परन्तप'** इति कुं.पाठः । ; २. ह.को. ४-७०५

## ॥ अथ सप्तचत्वारिंशोऽध्यायः ॥

वैशम्पायन उवाच –

[१] चेदिराजसुतां ज्ञात्वा दाशराजेन वर्धिताम् ।
विवाहं कारयामास शास्त्रदृष्टेन कर्मणा ॥ १ ॥

चेदिराजसुताम् इत्यत्र चेदिविषयाधिपतिर्वसुचक्रवर्ती चेदिराजः।

ततः शान्तनवो धीमान् सत्यवत्यां अजायत ।
वीरश्चित्राङ्गदो नाम वीर्यवान् पुरुषेश्वरः ॥ ३ ॥

ततः शान्तनव इत्यत्र शान्तनवः शन्तनुवीर्योत्पन्नः ।

॥ इति सप्तचत्वारिंशोऽध्यायः ॥

## ॥ अथ अष्टचत्वारिंशोऽध्यायः ॥

[२] सोद्वेगा इव तं दृष्ट्वा कन्याः परमशोभनाः ।
अपाक्रामन्त ताः सर्वा वृद्ध इत्येव चिन्तया ॥ ८ ॥

सोद्वेगा इव तं दृष्ट्वा इत्यत्र सोद्वेगाः स(अ)कुतूहलाः कन्याः [३] अपाक्रामन्त चित्तं परावृत्य नीतवत्यः ।

तेषामाभरणान्याशु त्वरितानां विमुञ्चताम् ।
आमुञ्चतां च वर्माणि सम्भ्रमः सुमहान् अभूत् ॥ २२ ॥

आमुञ्चतां च वर्माणि इत्यत्र आमुञ्चतां बध्नतां [४] 'न(व)द्धं पिनद्ध-मामुक्तम्' इति हलः ।

---

१. कुं. १०८ अध्यायः; २. कुं. १०९ अध्यायः
३. अपाक्रमकुर्वत सो.मु.पा.; ४. ह.को. ४-७४७

[1] वासितासमये यत्ते यूथपो बलिनां वरः ।
स्त्रीकामस्तिष्ठस्तिष्ठेति भीष्ममाह स पार्थिवः ॥ ३८ ॥

**वासितासमये यत्त** इत्यत्र **वासिता** नाम प्राप्तयौवना क्रीडायोग्या पशुस्त्री वासितायाः समये **वासितासमये** ।

विचित्रवीर्य उवाच –

विचित्रवीर्यो धर्मात्मा नाम्बामैच्छत् कथञ्चन ।
अम्बां अन्यस्य कीर्त्यन्तीं अब्रवीचारुदर्शनाम् ॥ ७० ॥

**अम्वामन्यस्य की(र्त)र्त्यन्तीम्** इत्यत्र अन्यस्य भार्येति की(र्त)र्त्यन्तीम् अम्बाम् अनपेक्षमाण इति योग्यपदाध्याहारेण योजना ।

[2] प्रत्यक्षफल एवैष कामोऽसाधुर्निरर्थकः ।
परतन्त्रोपभोगे मां आर्य नाऽऽयोक्तुमर्हसि ॥ ७१ ॥

**प्रत्यक्षफलः** प्रत्यक्षं **फलं** विपरीतफलं यस्येति कामस्य विशेषणम् ।

अनन्तसेनो भगवान् कुमारो वरदः प्रभुः ।
मानयन् राजपुत्रीं तां ददौ तस्यै शुभां स्रजम् ॥ ९७ ॥

**अनन्तसेनो भगवान्** इत्यत्र **अनन्ता** अपरिमिता **सेना** पिशाचादि-सेना यस्य सः **अनन्तसेनः** । 'कुमारो नीललोहितः' इति वचनात् कुत्सितो मारो येनेति व्युत्पत्त्या च **कुमारः** शिवः ।

---

१. S; BORI पृ. ४३८; **'वासितामनुसम्प्राप्तो'** इति कुं.पाठः ।
२. BORI पृ. ९०४; **'पापस्य फलमेवैष'** इति कुं.पाठः ।

एषा पुष्करिणी दिव्या यथावत् समुपस्थिता ।
अम्बे त्वच्छोकशमनी माला भुवि भविष्यति ॥ ९८ ॥

एषा पुष्करिणि इत्यत्र पुष्करिणी कमलवती ।

॥ इति अष्टचत्वारिंशोऽध्यायः ॥

## ॥ अथ एकोनपञ्चाशोऽध्यायः ॥

[१] यज्ञसेनाभिधावेह पाणिमालम्ब्य चोद्धर ।
तेन मे सर्वधर्माश्च रतिभोगाश्च केवलाः ॥ ७ ॥

यज्ञसेनाभिधाव इत्यत्र अभिधाव अभ्यागच्छ । तेन भीष्मेण ।

किं नु निःक्षत्रियो लोको [२] यत्र नाथोऽवसीदति ।
समागम्य तु राजानो मयोक्ता राजसत्तमाः ॥ ९ ॥

यत्र नाथोऽवसीदति इत्यत्र 'नाथृ याञ्चायाम्' इति धातोः नाथः याचकः ।

त्वत्प्रसादाद्विवाहेऽस्मिन् मा धर्मो मा पराजयेत् ।
प्रसीद यज्ञसेनेह गतिर्मे भव सोमक ॥ ११ ॥

त्वत्प्रसादात् इत्यत्र त्वत्प्रसादात् युष्मत्प्रसादात् मा धर्मो मा पराजय इति मयोक्ता इति पूर्वेणान्वयः ।

न हि शान्तनवस्याहं महास्त्रस्य प्रहारिणः ।
ईश्वरः क्षत्रियाणां हि बलं धर्मोऽनुवर्तते ॥ १४ ॥

---

१ पृ. १९० अध्यायः ।
२ BORI पृ. ९०५; 'यत्रानाथोऽवसीदति' इति कुं.पाठः ।

**क्षत्रियाणां हि बलं धर्मोऽनुवर्तत** इत्यत्र **बलं** स्वबलम् **अनुवर्तते** अनुसृत्य वर्तत इति यत् सः क्षत्रियाणां धर्मः।

**न हि भीष्मादहं धर्मं शक्तो दातुं कथञ्चन।**
**इत्युक्ता स्रजमासज्य द्वारि राज्ञो व्यापाद्रवत्** ॥ १६ ॥

**न हि भीष्मादहं धर्मम्** इत्यत्र **धर्मम्** अभयदानाख्यं धर्मम्।

**उपचाराभितुष्टस्ताम् अब्रवीदृषिसत्तमः।**
**गङ्गाद्वारे विभजनं भविता नचिरादिव** ॥ २४ ॥

**गङ्गाद्वारे विभजनम्** इत्यत्र विभजनं नाम स्वकीयं वस्तु अन्यस्मै दत्वा तस्मात् स्वापेक्षितवस्तुस्वीकारः। प्रकृते तु तव स्त्रीत्वं स्वयमादाय स्वकीयं पुंस्त्वं तुभ्यं दास्यामीत्येतदेव विभजनमिति भावः।

**॥ इति एकोनपञ्चाशोऽध्यायः ॥**

## ॥ अथ एकपञ्चशोऽध्यायः ॥

**[१]अम्बिकाम्बालिके चैव परिणीयाग्निसन्निधौ।**
**[२]पाणौ गृहीतः पुत्रेति कौरव्यो रूपदर्पितः।**
**विचित्रवीर्यो धर्मात्मा कामात्मा समपद्यत** ॥ २ ॥

**पाणौ गृहीतः पुत्रेति** इत्यत्र **पाणौ गृहीतः** धारापूर्वकं गृहीतः; दत्तपुत्रोऽपि पुन्नाम्नो नरकात्त्राता, किमौरस इति वेदे कथितं धर्मं मनसि संस्थाप्येति योजना।

---

१. कुं. १११ अध्यायः। ; २. **'तयोः पाणी गृहीत्वा तु'** इति कुं.पाठः।

[1]कनीयास्तात नैवेह सम्भवो विद्यते द्वयोः ।
अल्पावकाशो भगवान् पूर्वं चाहमिहागतः ॥ १६ ॥

कनीयस्तात नैव इत्यत्र हे कनीयस्तात सूक्ष्मपितः[2] ।

एवमात्थ वचस्तस्मात् तमो दीर्घं प्रवेक्ष्यसि ।
स वै दीर्घतमा नाम शापादृषिरजायत ॥ २२ ॥

तमो दीर्घं प्रवेक्ष्यसि इत्यत्र तमः नयनाभावात् अदर्शनाख्यं तमः प्रवेक्ष्यसीति सम्बन्धः ।

अन्धं वृद्धं च तं मत्वा न सा देवी जगाम ह ।
स्वां तु धात्रेयिकां तस्मै वृद्धाय प्राहिणोत्तदा ॥ ४६ ॥

स्वां तु धात्रेयिकां तस्मै इत्यत्र स्तनदायिनी धात्री, तस्याः पुत्री धात्रेयिका ताम् ।

॥ इति एकपञ्चाशोऽध्यायः ॥

## ॥ अथ त्रिपञ्चाशोऽध्यायः ॥

[3]अथ धर्मविदां श्रेष्ठः परमर्षिः पराशरः ।
आजगाम तरीं धीमान् तरिष्यन्यमुनां नदीम् ॥ २४ ॥

आजगाम तरीम् इत्यत्र तरीं नावम् ।

---

1. S. BORI पृ. ४४१; 'भो स्तात मा गमः कामं द्वयोर्नास्तीह सम्भवः' इति [illegible] ।
2. कनिष्ठपितृव्य सां.मु.पा.
3. पृ. ११४ अध्यायः

**सत्यवादी शमपरस्तपस्वी दग्धकिल्बिषः ।**
**सद्योत्पन्नः सह[१] महान् स तु पित्रायतो गतः ॥ ३७ ॥**

**स तु पित्रायतो गत** इत्यत्र **पित्रायतः** पितरि आयतः पित्रधीन इत्यर्थः ।

**इत्युक्तमात्रे भीष्मस्तु कृताञ्जलिपुटोऽहृषत् ।**
**सर्ववित् सर्वकर्ता च वन्द्य मातुस्तथाऽब्रवीत् ॥**

**कृताञ्जलिपुटोऽहृषत्** इत्यत्र **वन्द्य** मातुः पादौ प्रवन्द्य **अहृषत्** अहृष्यत् ।

**अर्थमर्थानुबन्धं च धर्मं धर्मानुबन्धनम् ।**
**कामं कामानुबन्धं च विपरीतान् पृथक्पृथक् ॥ ४२ ॥**

**अर्थमर्थानुबन्धं च** इत्यत्र **अर्थं** द्रव्यं, **अर्थानुबन्धम्** अर्थकारणीभूतवाणिज्याद्युपायम् ।

**॥ इति त्रिपञ्चाशोऽध्यायः ॥**

## ॥ अथ चतुःपञ्चाशोऽध्यायः ॥

**तस्य कृष्णस्य कपिलां जटां दीप्ते च लोचने ।**
**[२]कद्रूणि चैव श्मश्रूणि दृष्ट्वा देवी न्यमीलयत् ॥ ८ ॥**

---

१. **'सतु महान् सह पित्रा ततो गतः'** इति कुं.पाठः ।

२. $S_1$,$K_{0.2}$,$\tilde{N}_3$; BORI पृ. ४५५; **'बभ्रूणि चैव'** इति कुं.पाठः ।

**कद्रूणि चैव श्मश्रूणि** इत्यत्र [1]'क(द्रूः)द्रुः कनकपिङ्गला' इत्यमरमाला। **कद्रूणि** कनकपिङ्गलानि।

**सम्बभूव तया सार्धं मातुः प्रियचिकीर्षया।**
**भयात्काशिसुता तं तु नाशक्नोत् अभिवीक्षितुम्** ॥ ९ ॥

**सम्बभूव तया** इत्यत्र **सम्बभूव** सङ्गतो बभूव।

**उत्तिष्ठन्नब्रवीदेनां [2]त्वं भुजिष्या भविष्यसि।**
**अयं च ते शुभे गर्भः श्रेयानुदरमागतः।**
**धर्मात्मा भविता लोके सर्वबुद्धिमतां वरः** ॥ ४२ ॥

**त्वं भुजिष्या भविष्यसि** इत्यत्र 'दासी भुजिष्या कथिता स्वामिनः पुत्रजन्मतः। अदासी च भवत्येषा रक्ष्या चैव विशेषतः' इति वचनस्य [illegible] दासी सैव स्वामिनः सकाशात् पुत्रजन्मतः भुजिष्या कथिता, [illegible] पुनः **अदासी** दासी न भवतीत्यदासी विशेषतो रक्ष्या च भवतीति [illegible] तस्य पात्रीभविष्यसीत्यर्थः।

[3]**गन्धवत्या तथैवोक्तो धर्मरूपं सुतं प्रति।**
**नाहमस्मि पुनर्योक्तुं शक्तो मातः सुतं प्रति ॥**

**गन्धवत्या** योजनगन्धिन्या(:) सत्यवत्या(:)।

॥ इति चतुःपञ्चाशोऽध्यायः ॥

---

१ [illegible] पाठः 'पिङ्गपिशङ्गौ कद्रुपिङ्गलौ' इति।
२ N..B..S ; BORI पृ. ४५८; **'-देनामभुजिष्या'** इति कुं.पाठः।
३ BORI १-१००-३०

## ।। अथ पञ्चपञ्चाशोऽध्यायः ।।

**[१] तस्य कालेन महता तस्मिंस्तपसि वर्ततः ।**
**तमाश्रममनुप्राप्ता दस्यवो लोप्त्रहारिणः ।। ५ ।।**

**दस्यवो लोप्त्रहारिण** इत्यत्र लोप्तं चोरैरपहृतं द्रव्यम् । [२] 'चोरैरपहृतं द्रव्यं लोप्त्रमित्यभिधीयते' इति हलः ।

**तं राजा सह [३] तैश्चोरैरवदच्छिद्यतामिति ।**
**[४] स वध्यघातैराज्ञप्तः शूले प्रोतो महातपाः ।। १४ ।।**

**स वध्यघातैः** इत्यत्र **आज्ञप्तः** छिद्यतामिति राज्ञा आज्ञप्तः **वध्यघातैः, वध्यान्** वधयोग्यान् अपराधानुसारिशिरश्छेदादिशिक्षा-योग्यान् **घातयन्ति** शिक्षयन्तीति **वध्यघाताः** चोरशिक्षाधिकारिणो यामिकाः तैः शूले प्रोत इति योजना ।

काचित्पतिव्रता स्वपतिं वेश्यागृहं प्रति शिरसि ऊढ्वा पतिप्रीत्यै नयन्ती स्वपतिपादेन शूलस्थमाण्डव्यस्य स्पर्शे सति तापमकरोत् किल । तेन तापेन दुःखितः स माण्डव्यः सूर्योदये सति तव पतिर्नश्य-त्विति शापमददात् किल । सा च पतिव्रता तादृशः सूर्योदय एव माऽस्त्विति प्रतिशापमकरोत् । तदा कश्चित्कालं सूर्याभावे सति सर्वे ब्राह्मणाः तं माण्डव्यं तां पतिव्रतां च प्रसाद्य शापद्वयमपि मोचया-

---

१. कुं. ११६ अध्यायः
२. ह.को. २-३३९; **'द्रव्यं ह्यपहृतं लोप्त्रं स्तेयं चौर्यमिति स्मृतम्'** इति प्र. पाठः ।
३. S,$G_6$; BORI पृ. ४६०; **'तैश्चोरैरन्वशाद्वध्यतामिति'** इति कुं.पाठः ।
४. BORI पृ. ४६०; **'स रक्षिभिस्तैरज्ञातः'** इति कुं.पाठः ।

भर्त्रुरिति पौराणिकी कथा । [१]तां सूचयितुमाह– **काचित् पतिव्रता** इत्यादिना ।

**[२]तच्छ्रुत्वा रक्षिणस्तत्र तथा बहुतिथेऽहनि ।**
**न्यवेदयंस्तथा राज्ञे यथावृत्तं नराधिप ॥ २ ॥**

**तच्छ्रुत्वा रक्षिण** इत्यत्र **तत्** पतिव्रतामाण्डव्यसम्भाषणं, पक्षि-रूपेणागतऋषिसम्भाषणं च ।

॥ इति पञ्चपञ्चाशोऽध्यायः ॥

॥ अथ षट्पञ्चाशोऽध्यायः ॥

**[३]धृतराष्ट्रस्त्वचक्षुष्ट्वाद्राज्यं न प्रत्यपद्यत ।**
**[४]करणत्वाच्च विदुरो राजा पाण्डुर्बभूव ह ॥ ३० ॥**

**करणत्वाच्च विदुर** इत्यत्र **करणत्वात्** शूद्रयोनिजत्वात् । 'करणः शूद्रयोनिजः' इति वागुरिः ।

॥ इति सम्भावे षट्पञ्चाशोऽध्यायः ॥

॥ अथ सप्तपञ्चाशोऽध्यायः ॥

**[५]गृध्यसंयाय ततः सोऽनपत्याय वीर्यवान् ।**

---

१ [illegible]श्लोकः मुद्रितकोशेषु नोपलभ्यते ।

२ पृ. ११७ अध्यायः; S; BORI पृ. ४६०; 'तं दृष्ट्वा' इति कुं.पाठः ।

३ पृ. ११८ अध्यायः

४ BORI पृ. ४६५ 'पारसवत्वाद्विदुरो' इति कुं.पाठः ।

५ [illegible]याय स तामनपत्याय भारत । अग्रमग्रे प्रतिज्ञाय स्वस्यापत्यं स

अग्रमग्रे प्रतिज्ञाय स्वस्यापत्यस्य वीर्यवान् ॥
अग्रजातां तु तां कन्यां अग्रानुग्रहकाङ्क्षया ।
अददात् कुन्तिभोजाय शूरो गोपतये सुताम् ॥

**पैतृष्वसेयाय ततः सोऽनपत्याय वीर्यवान् । अग्रमग्रे प्रतिज्ञाय स्वस्यापत्यस्य वीर्यवान् ॥ अग्रजातां तु तां कन्यां अग्रानुग्रहकाङ्क्षया । अददात् कुन्तिभोजाय शूरो गोपतये सुताम्** इत्यत्र वीर्यवान् स शूरः अनपत्याय पैतृष्वसेयाय **गोपतये** भूपतये कुन्तिभोजाय स्वस्यापत्यस्य मध्ये **अग्रं** प्रथमोत्पन्नमपत्यं **अग्रे** अपत्योत्पत्तेः पूर्वं **प्रतिज्ञाय** तुभ्यं दास्यामीति प्रतिज्ञाय पुनर्वीर्यवान् स शूरः **अग्रानुग्रहकाङ्क्षया** अग्रे उक्तस्य वाक्यस्य **अनुग्रहः** अनुकूलतया ग्रहणं तस्य काङ्क्षया अग्रजातां तां कन्यां **अददात्** कुन्तिभोजयैव अददादित्यन्वयः । पुत्रदानप्रतिज्ञायाः यथाप्रतिज्ञं दानस्य चान्यैर्दुष्करत्वात् उभयत्रापि वीर्यवानिति विशेषणम् ।

दुर्वासा वत्सरस्यान्ते ददौ मन्त्रमनुत्तमम् ।
यशस्विन्यै पृथायै तदापद्धर्मान्ववेक्षया ।
अभिसाराभिसंयुक्तं[१] अब्रवीच्चैव तां मुनिः ॥ ७ ॥

**अभिसाराभिसंयुक्तम्** इत्यत्र येषु देवेषु स्वस्याः मनः तेषां सर्वेषां 'सृ गतौ' इति धातोः अभितः **सारः** सरणं आगमनं तेनाभिसंयुक्तम् ।

---

**सत्यवाक् ॥२॥ अग्रजामथ तां कन्यां शूरोऽनुग्रहकाङ्क्षिणे । प्रददौ कुन्तिभोजाय सखा सख्ये महात्मने ॥३॥'** इति कुं.पाठः ।(अध्याय १२०)

१. BORI पृ. ४६८; **'अभिचारा'** इति कुं.पाठः ।

तथोक्ता सा तु विप्रेण तस्य[1] कौतूहलात्तदा ।
कन्या सती देवमर्कं आजुहाव यशस्विनी ॥ ९ ॥

**तस्य कौतूहलात्** इत्यत्र **तस्य** मन्त्रस्य **कौतूहलात्** सामर्थ्य(र्थ्यं ज्ञा)-
नाधनात्कण्ठ्यात् । सत्येति पाठे **सत्यं** सामर्थ्यम् ।

पुत्रस्ते निर्मितः सुभ्रु शृणु मादृक्छुभानने ।
आदित्ये कुण्डले बिभ्रत् कवचं चैव मामकम् ॥ १३ ॥

**आदित्ये कुण्डले बिभ्रत्** इत्यत्र **आदित्ये** आदित्यस्य मम योग्ये ।

आमुक्तकवचः श्रीमान् देवगर्भः श्रियान्वितः ।
सहजं कवचं बिभ्रत् कुण्डलोद्योतितताननः ॥ ३० ॥

**आमुक्तकवचः श्रीमान्** इत्यत्र **आमुक्तकवचः** बद्धकवचः ।
'ना(च)द्धं पिनद्धमामुक्तम्'[2] इति हलः ।

मञ्जूषां रत्नसम्पूर्णां[3] कर्णनामाभिसंज्ञिताम् ।
उत्ससर्ज कुमारं तं जले कुन्ती महाबलम् ॥ ३४ ॥

**कर्णनामाभिसंज्ञिताम्** इत्यत्र कर्णनाम्ना कर्णस्येयं मञ्जूषेति
[illegible] लिखितनाम्ना **अभिसञ्ज्ञितां** अङ्किताम् ।

तमुत्सृष्टं जले गर्भं राधाभर्ता महायशाः ।
पुत्रत्वे कल्पयामास सभार्यः सूतनन्दनः ॥ ३५ ॥

---

१ $N_1$, T,G,$M_{3-5}$; BORI पृ. ४६८; 'कुन्ती कौतूहलान्विता' इति कुं.

२ [illegible] ४-७४७

३ BORI पृ. ४६९; 'कृत्वा बालसमाश्रितम्' इति कुं. पाठः ।

**राधाभर्ता महायशा** इत्यत्र **राधाभर्ता** अधिरथः ।

**नामधेयं च चक्राते तस्य बालस्य तावुभौ ।**
**१समाहृतोऽयं वसुना वसुषेणेति नामतः ॥ ३६ ॥**

**समाहृतोऽयम्** इत्यत्र **वसुना** द्रव्येण सह ।

**स वर्धमानो बलवान् सर्वास्त्रेपूद्यतोऽभवत् ।**
**२आपृष्ठतापाच्चादित्यं उपातिष्ठत वीर्यवान् ॥ ३७ ॥**

**आपृष्ठतापा(दा)च्चादित्यम्** इत्यत्र **आपृष्ठतापात्** पृष्ठतापपर्यन्तं पूर्वत उदितस्य सूर्यस्य पूर्वाभिमुखात् स्वस्मात् पृष्ठतस्तापस्तपनं यावता भवति तावत्कालपर्यन्तं अपराह्णकालपर्यन्तमिति यावत् ।

**विप्राः पूज्यास्तु देवानां ३प्रियमस्तीति ब्राह्मणम् ।**
**तं देवदेवं जानन् वै न शक्तोऽस्म्यवमन्त्रणे ॥ ४३ ॥**

**प्रियमस्तीति ब्राह्मणम्** इत्यत्र प्रियं वस्तुनि मम प्रीतिरस्तीति कृत्वेत्यर्थः ।

**उत्कृत्याविमनाः स्वाङ्गात् कवचं रुधिरस्रवम् ।**
**४कर्णपाल्यौ च द्वे छित्त्वा प्रायच्छत् स कृताञ्जलिः ॥ ४७ ॥**

---

१. S; BORI पृ. ४६९; '**वसुना सह जातोऽयं वसुषेणो भवत्विति**' इति कुं. पाठः ।

२. $G_{1,6}$; BORI पृ. ४६९; '**आपृष्ठतापादादित्य-**' इति कुं.पाठः ।

३. $D_4, G_6, M_{6,8}$; BORI पृ. ९०८; '**सततं प्रियमिच्छताम्**' इति कुं.पाठः ।

४. '**कर्णौ पार्श्वे**' इति कुं.पाठः ।

**कर्णपाल्यौ च द्वे छित्त्वा** इत्यत्र कर्णच्छिद्रानन्तरं कुण्डलादि-[illegible]रणाय या कर्णाधोभागे लम्बमाना नाडी सा **कर्णपाली** इत्युच्यते । [illegible]र्णद्वयनाड्यपेक्षया कर्णपाल्याविति द्विवचनम् । ते द्वे अपि च्छित्त्वा [illegible]च्छदिति सम्बन्धः । पुनस्तदैव तयोरभिनवरक्तार्द्रत्वचोर्योगे कर्ण-[illegible] न न्यूनता जातेति ज्ञेयम् ।

॥ इति सप्तपञ्चाशोऽध्यायः ॥

## ॥ अथ अष्टपञ्चाशोऽध्यायः ॥

[1] **[illegible]यात्वा देवव्रतेनापि मद्राणां पुटभेदनम् ।**
**विश्रुता त्रिपु लोकेषु माद्री मद्रपतेः सुता ॥**

**मद्राणां पुटभेदनम्** इत्यत्र **पुटभेदनं** पट्टणम् । 'पट्टणं पुटभेदनम्' [illegible] ।

[2] **[illegible]आगस्कृत् सर्ववीराणां वैरी सर्वकुरुक्षिताम् ।**
**[illegible] मगधराष्ट्रस्य दीर्घो राजगृहे हतः ॥ २७ ॥**

**[illegible] सर्वकुरुक्षिताम्** इत्यत्र **कुरुक्षितां** कुरुभूरक्षितॄणाम् । [illegible]तिवत् कुरुक्षिदित्यपि पदम् । **राजगृहे हत** इत्यत्र राजगृहे [illegible] ।

**[illegible] [illegible]वाच –**

[3] **[illegible]मन्युवशं प्राप्ता बुद्ध्यन्तरगता अपि ।**

---

[illegible] [illegible] [illegible] अध्यायः ; BORI १-१०५-४

[illegible] '[illegible] महीपानां बहूनां बलदर्पितः' इति कुं.पाठः ।

[illegible] [illegible] [illegible] अध्यायः

**वर्जयन्ति नृशंसानि पापेष्वपि रता नराः ॥ १६ ॥**

**बुद्ध्यन्तरगता अपि** इत्यत्र उन्मादादिवशात् अन्यबुद्धिं गता बुद्ध्यन्तरगताः ।

**न विधिं ग्रसते प्रज्ञा प्रज्ञां तु ग्रसते विधिः ।**
**विधिपर्यागतानर्थान् प्रज्ञावान् प्रतिपद्यते ॥ १७ ॥**

**न विधिं ग्रसते प्रज्ञा** इत्यत्र **विधिं** दैवं स्वफाललेखनकर्तारं ब्रह्माणं वा । महता प्रयत्नेनापि परीक्षिता विधेरनतिक्रमात् । प्रज्ञां विधिं **ग्रसते** अत्येति । अस्यापीदमेवोदाहरणम् ।

**अहं हि किन्दमो नाम तपसा भावितो मुनिः ।**
**अपत्रपाभिभूतत्वात्[१] मृग्यां मैथुनमाचरम् ॥ ३५ ॥**

**अपत्रपाभिभूतत्वात्** इत्यत्र **अपत्रपा** लज्जा ।

**॥ इति अष्टपञ्चाशोऽध्यायः ॥**

## ॥ अथ एकोनषष्टितमोऽध्यायः ॥

**मोक्षमेव[२] व्यवस्यामि बन्धो हि व्यसनं महत् ।**
**सद्वृत्तिमनुवर्तिष्ये[३] तामहं पितुरव्ययाम् ॥ ६ ॥**

**सद्वृत्तिमनुवर्तिष्ये तामहं पितुरव्ययाम्** इत्यत्र **पितुः** ज्येष्ठपितु-र्भीष्मस्य उत्पादकपितुर्व्यासस्य वा सद्वृत्तिमनुवर्तिष्य इति योजना ।

---

१. S; BORI पृ. ४८७; **'अपत्रपन्मनुष्याणां'** इति कुं. पाठः ।

२. कुं. १२४ **अध्यायः**

३. $K_3$,S ; BORI पृ. ४८७; **'सुवृत्तिमनुवर्तिष्ये'** इति कुं.पाठः ।

[१] तस्मादेकार्हमेकोऽहमेकैकस्मिन् वनस्पतौ ॥ ७ ॥
[२] चरन् भिक्षां मुनिर्मुण्डश्चरिष्यामि महीमिमाम् ॥ ८ ॥

**तस्मादेकार्हमेकोऽहम्** इत्यत्र **तस्माद्** बन्धस्य व्यसनत्वात् एकः एकाकी अहं **एकार्हं** एकस्य एकाकिनः संन्यासिनः योग्यं कर्म यथा भवति तथा । **मुण्डः** मुण्डितमूर्धजः, 'मुनिर्भूत्वा' इति पाठे स्पष्टोऽर्थः । ब्रह्मचारी सन् भिक्षां चरन् इमां महीं सञ्चरिष्यामि । अथवा **एकः** एकाकी सत्योश्च भार्ययोः तत्सङ्गरहित इत्यर्थः । **मुनिः** वानप्रस्थ-[illegible] सन् अस्मिन्नेव तपोवने चरिष्यामीति योजना ।

असम्भवे वा भैक्षस्य चरन्ननशनान्यपि ।
[३] अल्पमल्पमथो भोज्यं [४] पूर्वलोभान्नजातुचित् ॥ १३ ॥

**अल्पमल्पमथो भोज्यम्** इत्यत्र **पूर्वलोभात्** पूर्वदिने भुक्तपरमान्नादौ [illegible] परदिने जातुचिदपि **न**, तन्नाकाङ्क्षेदित्यर्थः ।

वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षतः ।
नाकल्याणं न कल्याणं चिन्तयन्नुभयोस्तयोः ॥ १९ ॥

**वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षत** इत्यत्र **एकं बाहुं** दक्षबाहुं [illegible], उपलक्षणं चैतत् । चन्दनादिषोडशोपचारैः हरिं सम्पूज्य **नमतः** तक्ष(सार्वविभक्तिकस्तसिः) संसारश्रमाल्पीकरणे पापनिर्भर्त्सने

१ 'तस्मादेकाहमेकाह-' इति कुं.पाठः ।
२ BORI पृ. ४८७; 'चरन् भैक्ष्यं मुनिर्मुण्डश्चरिप्याम्याश्रमानिमान्' इति कुं. पाठः ।
३ N. BORI पृ. ४८८; 'अल्पमल्पं च भुञ्जानः' इति कुं.पाठः ।
४ [illegible] BORI पृ. ४८८; 'पूर्वलाभे न' इति कुं.पाठः ।

वा 'तक्षू तनूकरणनिर्भर्त्सनयोः' इति धातुः । **वास्य** स्थापयित्वा **एकं बाहुं** वामबाहुं **उक्षतः** उक्षणे भूप्रोक्षणलेपनादौ **वास्य** स्थापयित्वा चरिष्यामि । अथवा **एकं बाहुं** दक्षबाहुस्थानीयां ज्येष्ठपत्नीं कुन्तीं चन्दनेन **तक्षतः**, **तक्षणे** चन्दनकाष्ठस्याल्पीकरणे, हरिपूजासाधन-गन्धादिकरण इति यावत् । **वास्य** स्थापयित्वा **एकं बाहुं** वामबाहुस्थानीयां सूक्ष्मपत्नीं माद्रीं **उक्षतः** उक्षणे भूप्रोक्षणलेपननैवेद्यादिकरणे **वास्य** स्थापयित्वा चरिष्यामीति पूर्वेणान्वयः । यत्याश्रमे पूर्वयोजना । वानप्रस्थाश्रमे द्वितीययोजना । 'नह्यैकम्' इति पाठे 'नह बन्धने' इति धातोः **नह्य** बद्ध्वा दृढतया स्थापयित्वेत्यर्थः ।

**[१] याः काश्चिज्जीवता शक्याः कर्तुं नित्याक्षताः क्रियाः ।**
**तास्सर्वास्समतिक्रम्य निमेपादिष्ववस्थितः ।**
**न जिजीविपुवत् किञ्चिन्न मुमूर्षुवदाचरन्** ॥ १७ ॥

**याः काश्चिज्जीवता शक्याः कर्तुं नित्याक्षताः क्रियाः । तास्सर्वाः समतिक्रम्य निमेपादिष्ववस्थितः ॥ न जिजीविपुवत् किञ्चिन्न मुमूर्पुवदाचरन्** इत्यत्र जीवता कर्तुं शक्याः **नित्याक्षताः** नित्यं **अक्षताः** अङ्गवैकल्यादिक्षयरहिताः **क्रियाः** यज्ञभूरक्षणादि क्रियाः समतिक्रम्य **निमेपादिषु** सर्वथा त्यक्तुमशक्यचक्षुरुन्मेषणश्वासधारणकन्दमूलफला-हारादिष्ववस्थितः सन्नित्यर्थः। **जिजीविपुवत्** जीवितुमिच्छुवत् किञ्चि-दङ्गपोषणादिकर्म नाचरन् **मुमूर्पुवत्** अत्यायासे सति मर्तुमिच्छुवत् बलादग्निप्रवेशादिकर्म नाचरन्नित्यर्थः ।

---

१. 'याः काश्चिज्जीवता शक्याः कर्तुमभ्युदयक्रियाः । ताः सर्वाः **समतिक्रम्य निमेपादिष्ववस्थितः**' इति कुं.पाठः ।

तासु चाप्यनवस्थासु त्यक्तसर्वेन्द्रियक्रियः ।
सम्परित्यक्तधर्मार्थः सुनिर्णिक्तात्म[1]किल्बिषः ॥ १८ ॥

सुनिर्णिक्तात्मकिल्बिषः सुष्ठु प्रक्षालितात्मपापः। [2]'निर्णिक्तं शोधितं मृष्टम्' इत्यमरः ।

निर्मुक्तः सर्वपापेभ्यो व्यतीतः सर्ववागुराः ।
न वशे कस्यचित्तिष्ठन्सधर्मा मातरिश्वनः ॥ १९ ॥

सर्ववागुराः समस्तमृगबन्धनजालानि । [3]'वागुरा मृगबन्धिनि' इत्यमरः । व्यतीतः अतिक्रम्य वर्तमानस्सन् मातरिश्वनः सधर्मा वायुवत्सञ्चरणशील इत्यर्थः ।

नाहं [4]श्वाचरिते मार्गे स्ववीर्यक्षयशोचिते ।
स्वधर्मात् सततापेते चरेयं वीर्यवर्जितः ॥ २१ ॥

नाहं श्वाचरिते मार्ग इत्यत्र आचरिते दीनैराचरिते मार्गे याचनामार्गे ।

अन्येऽपि ह्याश्रमाः सन्ति ये शक्या भरतर्षभ ।
भार्याभ्यां सह वस्तुं वै धर्ममाश्रित्य चिन्त्यताम् ।
भार्याभ्यां धर्मपत्नीभ्यां सह तप्तुं तपो महत् ॥ २७ ॥
शरीरस्यापि मोक्षाय धर्मं प्राप्य महाफलम् ।
त्वमेव भविता भर्ता स्वर्गस्यापि न संशयः ॥ २८ ॥

---

१. K, L, F, G, $M_5$ ; BORI पृ. ४८८; 'कल्मषः' इति कुं.पाठः ।
२. अ.को. ३-१-५६ ; ३. अ.को. २-१०-२६
४. BORI पृ. ४८८; 'सुकृपणे' इति कुं.पाठः ।

**प्रणिधेयेन्द्रियग्रामं भर्तृलोकपरायणे ॥ २९ ॥**

**आवाभ्यां धर्मपत्नीभ्याम्** इत्यत्र अस्य तपसः अर्थं फलं त्वमेव स्वर्गे **भविता** 'भू प्राप्तौ' इति धातोः प्राप्ता भविष्यसीत्यर्थः । भर्तृलोकं भर्तुर्लोको यस्मात्तत् **भर्तृलोकं** तप इति सम्बन्धः ।

**एकान्तशीली विमृशन् पक्वापक्वेन वर्तयन् ।**
**पितॄन्देवांश्च वन्येन वाग्भिरद्भिश्च तर्पयन् ॥ ३५ ॥**

**पक्वापक्वेन** पक्वं फलादि, अपक्वं कन्दादि ।

**प्रतस्थे सर्वमुत्सृज्य सभार्यः कुरुनन्दनः ।**
**ततस्तस्यानुयात्राणि[1] सर्वे च परिचारकाः ॥ ४२ ॥**

**अनुयात्राणि** अनु यात्रा येषां तानि यौधादिकटकानि ।

**अथ पारशवीं[2] कन्यां देवकस्य महीपतेः ।**
**रूपयौवनसम्पन्नां स शुश्रावापगासुतः ॥ १ ॥**

**अथ पारशवीं कन्याम्** इत्यत्र **परत्र** कुलस्त्रियोऽन्यत्र **शवसे** सुखाय उत्पन्ना **पारशवी** ताम् ।

**॥ इति एकोनषष्टितमोऽध्यायः ॥**

## ॥ अथ षष्टितमोऽध्यायः ॥

**ऋषिदेवमनुष्याणां ऋणान्मुक्तोऽस्मि धर्मतः ।**
**पितॄणां तु न मुक्तोऽस्मि तच्च तेभ्यो विशिष्यते ॥ १९ ॥**

---

१. S; BORI पृ. ४९०; **'ततस्तस्यानुयातारस्ते चैव'** इति कुं.पाठः ।
२. **'पारसवीं'** इति कुं.पाठः । **कुं. १२६ अध्यायः**

**पितॄणां तु न मुक्तोऽस्मि तच्च तेभ्यो विशिष्यत** इत्यत्र इतरेषां त्रयाणां देवर्षिमनुष्याणां ऋणभूतयज्ञतपोयुक्तस्वाध्यायानृशंस्यानां नाशे आत्मा स्वयमेव यज्ञाकरणात् स्वाध्यायापठनात् नृशंसत्वाच्च नश्यति । देवादयस्तु पुरुषान्तरकृतयज्ञादिना जीवन्त्येव । पितॄणामृणाख्यप्रजा-नाशे, देहनाशे स्वदेहनाशे सति, देहनाशात्पूर्वं स्वस्यैव पिण्डादेर्दातुः अभावात् देहनाश इत्युक्तम् । **पितॄणां** स्वपितृपितामहादीनां पिण्डदातुः [illegible]स्याभावात् अन्येषामेतत्पिण्डदाने अप्रसक्तेश्च पितृनाशः । एवं पितॄणां पिण्डदानाख्यऋणनाशात् सप्रजः स्वयं च नाशमृच्छति । [illegible]पितृवन्नष्टस्य स्वस्य पिण्डदातुरभावादेव स्वनाशः । प्रजायास्तु [illegible]त्त्याख्यमूलनाशादेव नाश इति त्रिविधो नाशो भवति यस्मात् । तस्मात् तत् पितॄणामृणादहं न मुक्तोऽस्मीति सम्बन्धः ।

**अपत्यं धर्मफलदं श्रेष्ठादिच्छन्ति साधवः ।**
**अनुनीय तु ते सम्यक् महाब्राह्मणसंसदि ।**
**ब्राह्मणं गुणवन्तं वै[1] चिन्तयामास धर्मवित्** ॥ २४ ॥

**अनुनीय तु ते सम्यक् महाब्राह्मणसंसदि । ब्राह्मणं गुणवन्तं वै चिन्तयामास धर्मवित्** इत्यत्र **धर्मवित्** पाण्डुः महाब्राह्मणसंसदि ते [illegible] **अनुनीय** श्रेष्ठात् पुत्रोत्पत्तिमनुनीय ब्राह्मणमुखेनापि आपदि [illegible] प्रजोत्पत्तिं धर्मं वाचितवानिति सूचनाय महाब्राह्मणसंसदी-[illegible] । स्वचिकीर्षितस्य ब्राह्मणैरप्यनुकूलितत्वात् **ब्राह्मणं** जात्येक-[illegible] । ब्राह्मणकुलमित्यर्थः । **गुणवन्तं** दयादिगुणोपेतं देवो-[illegible]नन ब्राह्मणं चिन्तयामासेति योजना ।

---

१ [illegible] पृ. ४९.४; 'हि' इति कुं.पाठः ।

[1]षडेव बन्धुदायादाः पुत्राः सद्धर्मचारिणः ।
षडेवाबन्धुदायादा निर्दिष्टा(ष्टां)स्तान् शृणु प्रिये ॥
स्वयञ्जातः क्षेत्रिकश्च परिक्रीतश्च यः सुतः ।
पौनर्भवेयः कानीनः स्वैरिण्यां यश्च जायते ॥
दत्तः क्रीतो गर्हित(क)श्च उपयच्छेत् स्वयं च यः ।
सहोढाजातरेताश्च हीनयोनिधृतश्च यः ॥

**षडेव बन्धुदायादाः पुत्राः सद्धर्मचारिणः । षडेवाबन्धुदायादा निर्दिष्टा(ष्टां)स्तान् शृणु प्रिये ॥ स्वयञ्जातः क्षेत्रिकश्च परिक्रीतश्च यः सुतः । पौनर्भवेयः कानीनः स्वैरिण्यां यश्च जायते ॥ दत्तः क्रीतो गर्हित(क)श्च उपयच्छेत् स्वयं च यः । सहोढाजातरेताश्च हीनयोनिधृतश्च य** इत्यत्र **बन्धुदायादाः** दायमदन्ति बन्धुत्वयोग्याः (च) ये सत्पुत्राः ते बन्धुदायादाः; ते च षट् । दायमदन्ति, बन्धुत्वयोग्या न भवन्ति ये दुष्पुत्राः ते **अबन्धुदायादाः**; ते च षट् । एवं द्वादशदायादान् क्रममनपेक्ष्य सङ्कलय्याह । **स्वयञ्जातः** स्वपितुरेव तद्धर्मपत्न्यां जातः स्वयञ्जातः । **क्षेत्रिकः** स्वपितुः क्षेत्रे धर्मपत्न्यामापदि स्वपतेराज्ञया

---

१. इमे वै बन्धुदायादाः षट्पुत्रा धर्मदर्शने ।
षडेवाबन्धुदायादाः पुत्रास्ताञ्छृणु मे पृथे ॥३०॥ ; T,$G_{2-4}$,$M_3$ ; BORI पृ. ४९५;
स्वयंजातः प्रणीतश्च परिक्रीतश्च यः सुतः ।
पौनर्भवश्च कानीनः स्वैरिण्यां यश्च जायते ॥३१॥ ; $G_6$,$M_3$ ; BORI पृ. ४९५
दत्तः क्रीतः कृत्रिमश्च उपगच्छेत्स्वयं च यः ।
सहोढो ज्ञातिरेताश्च हीनयोनिधृतश्च यः ॥३२॥ – इति कुं.पाठः । ; $M_3$; BORI पृ. ४९५

श्रेष्ठाद्देवाद्वा जातः क्षेत्रिकः । **परिक्रीतः** मातृपितृस्वस्रादीनामभावे तत्परिजनैर्यैः कैश्चित् क्रयं गृहीत्वा दत्तः परिक्रीतः । **दत्तः** विधिपूर्वकं स्वपुत्रतया स्वीकृतो दत्तपुत्रः । **क्रीतः** शुनश्शेपादिवत् स्वपित्रैव क्रयं गृहीत्वा दत्तः क्रीतः । यः स्वयमेव बालः रक्षकस्वजनानामभावादनाथो भूत्वा मां पुत्रीकृत्य त्वमेव रक्षेत्यागतः स एक इति षट् बन्धुदायादाः । पौनर्भवेयः पुनर्भर्तृमरणानन्तरं रण्डायां तत्पत्न्यां यो भवः जन्म तत्सम्बन्धी गोलकः **पौनर्भवेयः** । **कानीनः** कन्यकायां जातः । भर्तरि सत्येव जारिण्यां[1] तत्पत्न्यां यो जायते स **कुण्ड** एकः[2] । **गर्हितः** स्वोदरात् स्वपत्न्यां जातोपि दुष्कर्मणा जातिभ्रष्टः गर्हितः । **सहोढाजातरेताः**, **सहोढासु** शतसङ्ख्यासु कन्यासु तदैव विवाहमण्टपदाहे सति इतस्ततो गतासु सतीषु पुनस्तैस्तैः पतिभिर्व्यत्यासेन गृहीतासु जातं रेतः परयोत्पादकं स एकः । **हीनयोनिधृतः हीनयोनिषु** शूद्रादियोनिषु जातः एक इति षट् अबन्धुदायादा इति विवेकः ।

**[3]पूर्वपूर्वमसम्भावं मत्त्वा लिप्सेत वै सुतम् ।**
**उत्तमाद्देवरात्पुंसः काङ्क्षन्ते पुत्रमापदि ॥ ३३ ॥**

**पूर्वपूर्वमसम्भावम्** इत्यत्र न विद्यते **सम्भावः** सम्भावना यस्य तं असम्भावम् । पूर्वपूर्वं असम्भावं मत्वा **लिप्सेत** अपरं लिप्सेत; मुख्याभावे अमुख्यं वा पुत्रमिच्छेतेत्यर्थः ।

॥ इति षष्टितमोऽध्यायः ॥

---

१. गार्हितकः सो.मु.पा.

२. गार्हितकः सो.मु.पा.

३. N₁ ; BORI पृ. ४९५; 'पूर्वपूर्वतमाभावं' इति कुं.पाठः ।

## ॥ अथ एकषष्टितमोऽध्यायः ॥

**वैशम्पायन उवाच –**

**[१]एवमुक्तस्तया राजा तां देवीं पुनरब्रवीत् ।**
**धर्मविद्धर्मसंयुक्तं इदं वचनमुत्तमम् ॥ १ ॥**

**इदं वचनमुत्तमम्** इत्यत्र वक्तुं योग्यं **वचनम्** ।

**अनावृताः किल पुरा स्त्रिय आसन्वरानने ।**
**कामचारविहारिण्यः स्वतन्त्राश्चारुहासिनि ॥ ४ ॥**

**अनावृताः किल पुरा** इत्यत्र **अनावृताः, आवरणं** निवारणं तद्वर्जिताः यथेष्टचारिण्य इति यावत् ।

**एतत् स्वाभाविकं स्त्रीणां न [२]निमित्तं कृतं शुभे ।**
**अस्मिंस्तु लोके न चिरान्मर्यादेयं शुचिस्मिते ॥ ११ ॥**

**न निमित्तं कृतं शुभ** इत्यत्र **निमित्तं** दोषनिमित्तम् । नास्त्य-नित्यमिति अनित्यं नास्ति, किन्तु नित्यमेवास्तीत्यर्थः ।

**ब्राह्मण उवाच –**

**अपुत्री भार्यया चार्थी वृद्धोऽहं मन्दचाक्षुषः ।**
**पित्र्यादृणादनिर्मुक्तः [३]पूर्वमेव कृतः स्त्रियः ॥ २५ ॥**

**पूर्वमेव कृतः स्त्रिय** इत्यत्र स्त्रिया निमित्तात् पित्र्यादृणादनिर्मुक्तः कृतः । स्त्रीपरिग्रहाभावात् ऋणं न मुक्तमिति भावः ।

---

१. कुं. १२८ अध्यायः ; २. **'निमित्तकृतं'** इति कुं.पाठः ।
३. **'पूर्वमेवाकृतस्त्रियः'** इति कुं.पाठः ।

**स्वव्यापाराक्षमां श्रेष्ठां अचित्तामात्मनि द्विजः ।**
**श्वेतकेतोः किल पुरा समक्षं मातरं पितुः ॥ २८ ॥**

**समक्षं मातरं पितुः** इत्यत्र पितुः उद्दालकस्य समक्षम् ।

**प्राणदानेन[1] ते ब्रह्मन् मातृभूतां विमुञ्च वै ॥ ३४ ॥**

**प्राणदानेन ते ब्रह्मन्** इत्यत्र ते शापाकरणात् प्राणदानेन ।

**यथागावः स्थिताः पुत्र स्वे स्वे वर्णे तथा प्रजाः ।**
**तथैव च कुटुम्बेषु न प्रमाद्यन्ति कर्हिचित् ॥ ४१ ॥**

**स्वे स्वे वर्णे तथा प्रजा** इत्यत्र गावः यथा **स्वे स्वे वर्णे** स्वस्वजातौ अनियमेन स्थिताः महिषादौ न गच्छन्ति । गोषु यथेच्छं सञ्चरन्तीत्यर्थः । कुटुम्बेषु **न प्रापद्यन्त** नियमं न प्रापद्यन्त ।

**तदाप्रभृति मर्यादा स्थितेयमिति नः श्रुतम् ।**
**व्युच्चरन्त्याः पतिं नार्या अद्यप्रभृति पातकम् ॥ ४४ ॥**

**व्युच्चरन्त्याः पतिं नार्याः पतिं प्रति व्युच्चरन्त्याः** विरुद्धतया चरन्त्याः पत्यन्तरपरिग्रहं कुर्वन्त्या इत्यर्थः ।

**भ्रूणहत्यासमं घोरं भविष्यत्यसुखावहम् ।**
**अद्याप्यनुविधीयन्ते कामक्रोधविवर्जिताः ॥ ४५ ॥**

**अद्याप्यनुविधीयन्त** इत्यत्र **अनु** स्वेच्छानुसारेण विधीयन्ते भर्तारः ।

**अधर्मः सुमहानेष स्त्रीणां भरतसत्तम ।**
**यत् प्रसादयते भर्ता प्रसाद्यः क्षत्रियर्षभ ।**

---

१ T₁,G₄ ₆,M₆₋₈; BORI पृ. ९११; '**अप्रमादेन**' इति कुं.पाठः ।

**श्रुणु चेदं महाबाहो मम प्रीतिकरं वचः ॥ ६१ ॥**

**अधर्मः सुमहान्** इत्यत्र **प्रसाद्यः** प्रसादनयोग्यो भर्ता स्त्रियं प्रसादयत इति यत् एष स्त्रीणामधर्मः ।

॥ इति एकषष्टितमोऽध्यायः ॥

## ॥ अथ द्विषष्टितमोऽध्यायः ॥

**ऐन्द्रे[1] चन्द्रमसा युक्ते मुहूर्तेऽभिजितेऽष्टमे ।**
**दिवा मध्यगते सूर्ये तिथौ पूर्णे हि पूजिते ॥ २१ ॥**

**ऐन्द्रे चन्द्रमसा युक्त** इत्यत्र ऐन्द्रे ज्येष्ठानक्षत्रे ।

**ततो जज्ञे मांसपेशी साष्ठीला[2] जनमेजय ।**
**द्विवर्षसम्भृता कुक्षौ तामुत्स्रष्टुं प्रचक्रमे ॥ २८ ॥**

**ततो जज्ञे मांसपेशी साष्ठीला जनमेजय** इत्यत्र **मांसपेशी** चतुरस्राकारमांसपिण्डिका । 'चतुरश्रा स्मृता पेशी वृत्तः पिण्डो घनः स्मृतः' इति निघण्टुः । **अष्ठीलया** जरायुणा सहिता **साष्ठीला** गर्भावरकमांसचीलविशेषो जरायुः ।

॥ इति द्विषष्टितमोऽध्यायः ॥

## ॥ पञ्चषष्टितमोऽध्यायः ॥

**आरिराधयिषुर्देवं[3] त्रिदशानां तमीश्वरम् ।**
**सूर्येण सह धर्मात्मा पर्यतप्यत भारत ॥ ८ ॥**

---

१. कुं. १२९ अध्यायः ; २. 'लोहाष्ठीलेव संहता' इति कुं.पाठः ।
३. कुं. १३२ अध्यायः

**सूर्येण सह धर्मात्मा** इत्यत्र सूर्याभिमुख्येन तपः कुर्वन् सूर्ये प्राचीं दिशं गते स्वयं प्राङ्मुखोऽभवत् । अपरस्यां दिशि परिवर्तमाने सति स्वयमपि पर्यवर्तत । पश्चिमाभिमुखोऽभूदिति भावः ।

**उत्तराभ्यां तु पूर्वाभ्यां फल्गुनीभ्यां ततो दिवा ।**
**जातस्तु फाल्गुने मासि तेनासौ फल्गुनः स्मृतः ॥ १७ ॥**

**उत्तराभ्यां तु पूर्वाभ्यां फल्गुनीभ्यां ततो दिवा । जातस्तु फाल्गुने मासि तेनासौ फल्गुनः स्मृत** इत्यत्र फाल्गुने मासि **उत्तराभ्यां** द्वितारात्मकोत्तरानक्षत्रताराभ्यां **पूर्वाभ्यां** ततः पूर्वं विद्यमानाभ्यां **फल्गुनीभ्यां** फल्गुनीशब्दवाच्यद्वितारात्मकपूर्वानक्षत्रताराभ्यां च योगे सति दिवा अह्नि मध्याह्नपर्यन्तं पूर्वानक्षत्रयोगे अपराह्नप्रारम्भसमये च उत्तरानक्षत्रयोगे सति तदुभयसन्धौ फाल्गुनमासे पौर्णमास्यां फल्गुनो जात इत्यर्थः ।

**[१] महान् पितामहस्त्वेनं वस्त्रेण रजसा तदा ।**
**प्रतिजग्राह नप्तारं राजर्षिपरिवारितः ॥**

**महान् पितामह** इत्यत्र **पितामहः** शन्तनुः । **रजसा** रक्तेन ।

**॥ इति पञ्चषष्टितमोऽध्यायः ॥**

## ॥ अथ षट्षष्टितमोऽध्यायः ॥

**[२] न मेऽस्ति त्वयि सन्तापो विगुणेऽपि परन्तप ।**
**[३] मम जातो वनस्थायाः ह्यवरत्वात् कथञ्चन ॥ २ ॥**

---

१ BORI १-११४-६२ ; २. कुं. १३३ अध्यायः

२ BORI पृ. ५१४; 'नावरत्वे वराहायाः स्थित्वा चानघ नित्यदा' इति कुं.

**मम जातो वनस्थाया** इत्यत्र वनस्थाया मम **अवरत्वात्** दुर्वाससो वररहितत्वात् कथञ्चन विगुणोऽपि सन्तानो मे जातो नास्तीति योजना ।

**यदि त्वपत्यसन्तानं कुन्तिराजसुता मयि ।**
**कुर्यादनुग्रहो मे स्यात् तव चापि हितं भवेत्** ॥ ५ ॥

**यदि त्वपत्यसन्तानम्** इत्यत्र **अपत्यसन्तानं** पुमपत्यसन्तानं, अपत्यस्य सम्यग्विस्तारं वा ।

**सिंहदर्पा महेष्वासाः सिंहविक्रान्तगामिनः ।**
**[१]सिंहक्षीबा मनुष्येन्द्रा ववृधुर्देवविक्रमाः** ॥ ३२ ॥

**सिंहक्षीबा मनुष्येन्द्रा** इत्यत्र सिंहवत् **क्षीबाः** मत्ताः [२]'मत्ते शौण्डोत्कटक्षीबा' इत्यमरः ।

॥ इति षट्षष्टितमोऽध्यायः ॥

## ॥ अथ अष्टषष्टितमोऽध्यायः ॥

**[३]धन्या त्वमसि [४]बाह्लीके मत्सभाग्यतरा भुवि ।**
**दृष्ट्वत्यसि यद्वक्त्रं प्रहृष्टस्य महीपतेः** ॥ ३५ ॥

**धन्या त्वमसि बाह्लीके मत्सभाग्यतरा भुवि** इत्यत्र हे **बाह्लीके**

---

१. $T_1$,$G_{2.3.6}$ ; BORI पृ. ५१७; **'सिंहग्रीवा'** इति कुं.पाठः ।
२. अ.को. ३-१-२३
३. कुं. १३४ अध्यायः
४. S; BORI पृ. ५१९; **'बाह्लीकि मत्तो भाग्यतरा तथा'** इति कुं.पाठः ।

बाह्लीकविषयजाते । मद्रदेशस्य बाह्लीकविषय इत्यपि नाम । **मत्** मत्तः त्वं सभाग्यतरा असीति योजना ।

कुन्त्युवाच –

**हा राजन् कस्य नौ[1] हित्वा गच्छसि त्रिदशालयम् ।**
**हा राजन् मम मन्दायाः कथं माद्रीं समेत्य वै ॥ ४६ ॥**

**हा राजन् कस्य नौ हित्वा** इत्यत्र कस्य हेतोरित्यर्थः ।

**त्वद्विनाशाच्च राजेन्द्र राज्यप्रस्खलनात्तदा ।**
**बान्धवानामजातत्वात्[2] प्राप्ताः स्म व्यसनं महत् ॥ ५७ ॥**

**बान्धवानामजातत्वात्** इत्यत्र जाता न भवन्तीति **अजाताः** तेषां भावात् **अजातत्वात् बान्धवानां** धार्तराष्ट्रादीनां **अजातत्वात्** तेषामप्रियत्वादिति यावत् ।

**किं करिष्यामहे राजन् कर्तव्यं न[3] प्रसीदताम् ॥ ५८ ॥**

**कर्तव्यं न प्रसीदताम्** इत्यत्र प्रकर्षेण **सीदतां** क्लेशमनुभवतां अस्माकं कर्तव्यं **न** न दृश्यते । 'नः कर्तव्यम्' इति पाठे कर्तव्यं प्रति भवान् प्रसीदतामिति वा ।

**भर्तारं चिन्तयन्ती सा भर्तारं निस्तरेच्छुभा ।**
**तारितश्चापि भर्ता स्यादात्मा पुत्रस्तथैव च ॥ ८५ ॥**

---

१. D,₁,S ; BORI पृ. ९१३; **'नो'** इति कुं.पाठः ।
२. D,₁,S ; BORI पृ. ९१४; **'पाण्डवाश्च वयं सर्वे'** इति कुं.पाठः ।
३. **'च'** इति कुं.पाठः ।

**भर्तारं निस्तरेच्छुभा** इत्यत्र **निस्तरेत्** निस्तारयेत् । 'अन्तर्णीतो णिच्' ।

**हस्ते युधिष्ठिरं गृह्य माद्री वाक्यमभाषत ।**
**कुन्ती माता त्वहं[1] धात्री युवाभ्यां[2] च पिता मृतः ॥९५॥**

**कुन्ती माता त्वहं धात्री युवाऽऽभ्यां च पिता मृत** इत्यत्र **युवां** भवतां पिता **आभ्यां** आवाभ्यां निमित्ताभ्यां मृतः । कुन्ती व्यापारान्तरासक्ता, अहं तु सङ्गानुकूला इति हेतोरावाभ्यां मृत इति भावः ।

**[3]पाण्डोरवभृतं कृत्वा देवकल्पा महर्षयः ।**
**[4]ततो मन्त्रमकुर्वन्त ते समेत्य तपस्विनः ॥ १ ॥**

**पाण्डोरवभृतं कृत्वा** इत्यत्र **अवभृतं** पितृमेधानन्तरं माङ्गलिकस्नानम् ।

**ततो मन्त्रमकुर्वन्त ते समेत्य तपस्विन** इत्यत्र 'मन्त्रमकुर्वन्त' इति वचनात् 'तस्मात् कृत्यं परीक्षध्वमिति होवाच धर्मवित्' इति वचनाच्च माद्रीपाण्ड्वोर्देहौ विना पाण्डवानेव गृहीत्वा हस्तिनपुरं प्रत्यस्माभिर्गते सति दुर्योधनादयः [5]'आहुः केचिन्न कस्यैते कस्यैत इति चापरे । यदा चिरं मृतः पाण्डुः कथं तस्येति चापर' इति अनुक्रमणिकाध्याये प्रागुक्तप्रकारेण सर्वथा पाण्डवानपहसिष्यन्ति । अतस्तयोरुभयोरपि शरीरस्थानीये अभिनवास्थिनी सहैव सङ्गृह्य वयं च सर्वे पाण्डवैः सहैव

१. **'अहं'** इति कुं.पाठः । ; २. **'युष्माकं तु'** इति कुं.पाठः ।
३. कुं. १३५ अध्यायः ; BORI पृ. ५२१ **'पाण्डोरुपरमं दृष्ट्वा'** इति कुं. पाठः
४. BORI पृ. ५२१; **'ततो मन्त्रविदः सर्वे मन्त्रयांचक्रिरे मिथः'** इति कुं.पाठः
५. आदि १-१४०

गत्वा अधिसभं ते अस्थिनी सर्वेषां प्रदर्शयिष्याम[१] इत्येको मन्त्रः । तथा यद्यपि शतशृङ्गपर्वते पाण्डोर्माद्र्याश्च शास्त्रोक्तविधिना सङ्क्षेपतः सर्वमप्यौर्ध्व(दे)दैहिकं कर्म कृतम् । तथापि महाराजोचितसर्वसम्भ्रमैः सह दम्पत्योरुभयोरप्यौर्ध्व(दे)दैहिकं कर्म भीष्मधृतराष्ट्रविदुरदुर्योधनादीनां बन्धूनां सकलपौरजनानां च समक्षमपि कारयितव्यम् । अस्थ्यभावे च औदासीन्यं कुर्युः । अतोऽपि द्वयोरस्थिनी सहैव नयाम इति च मन्त्रमकुर्वन्तेति योजना । तस्मात् [२]'पाण्डोर्विदुर सर्वाणि प्रेतकार्याणि कारय' इत्यादिना वक्ष्यमाणा पुनः संस्कारकथा, [३]'शरीरं चैव तापसा' इति [४]'इमे तयोः शरीरे द्वे' इति स्थलद्वयेऽप्युक्तशरीरे च नानुपपन्ने । अस्थ्नामपि शरीरैकदेशत्वेन शरीरत्वात् 'अस्थीनि तीरे गङ्गायां गाङ्गेनाप्युदकेन च । प्लावयित्वा' इत्यादिना उपरि मूल एव बहुशः अस्थ्नां वक्ष्यमाणत्वाच्च उभयत्रापि शरीरपदेन तयोरस्थीन्येवोच्यन्ते ।

**स जातमात्रान्पुत्रांश्च दारांश्च भवतामिह ।**
**प्रादायोपनिधिं राजा पाण्डुः स्वर्गमितो गतः ॥ ३ ॥**

**प्रदायोपनिधिं राजा** इत्यत्र **उपनिधिं** निक्षेपद्रव्यमिव प्रदाय । 'निक्षेपः स्यादुपनिधिः' इति हलः ।

**तस्मात् कृत्यं परीक्षध्वमिति होवाच धर्मवित् ।**
**शुकः परमधर्मज्ञो गिरा समभिभाषत ॥**

---

१ प्रदर्शयामः सो.मु.पा.
२ आदि. १३६-१
३ 'शरीरं ते च तापसाः' इति कुं. पाठः । आदि १३५.७
४ आदि १३५-४४

**शुकः परमधर्मज्ञ** इत्यत्र **शुकः** प्रागुक्तः शर्य्यातेः पुत्रः[१] शुको नाम राजर्षिः ।

**तमकूजमिवाज्ञाय[२] जनौघं सर्वशस्तदा ।**
**पूजयित्वा यथान्यायं पाद्येनार्घ्येण च प्रभो ॥ २० ॥**

**तमकूजमिवाज्ञाय** इत्यत्र **कूजः** कूजनं ध्वनिः तद्रहितं स्तम्भमिव स्थितमित्यर्थः ।

॥ इति अष्टषष्टितमोऽध्यायः ॥

## ॥ अथ एकोनसप्ततितमोऽध्यायः ॥

ऋषीणां सत्यसङ्कल्पत्वात् पाण्डोः पुनरपि प्रेतकर्मादिकं कार्यमिति धृतराष्ट्रस्यैव स्वप्नोऽभूदित्याह– **श्राद्धं दास्यामि पाण्डोस्तु स्वप्ने दर्शितवान् हि माम्** इति ।

**धृतराष्ट्र उवाच –**
**पाण्डोर्विदुर[३] सर्वाणि प्रेतकार्याणि कारय ।**
**राजवद्राजसिंहस्य माद्र्याश्चैव विशेषतः ॥ १ ॥**

**पाण्डोर्विदुर सर्वाणि प्रेतकार्याणि कारय । राजवद्राजसिंहस्य माद्र्याश्चैव विशेषत** इति वचनात्, [४]'आच्छन्नः स तु वासोभिः जीवन्निव नरर्षभः । शुशुभे पुरुषव्याघ्रो महार्हशयनोचित' इति वचनाच्च,

---

१. सुतः सो.मु.पा.
२. BORI पृ. ५२३; **'तमकूजमभिज्ञाय'** इति कुं.पाठः ।
३. कुं. १३७ अध्यायः ; ४. आदि. १२६-३३

पुनर्भीष्मादयः सर्वे नागरिकाः केवलमस्थ्नामेव राजयोग्यविभवायोगात् द्रष्टृनयनकौतुकजननायोगाच्च माद्रीपाण्ड्वोरुभयोः नवरत्नखचिते द्वे सौवर्णप्रतिमे [1] अस्थीनि च शिबिकोपरि संस्थाप्य गन्धपुष्पादिभिरलङ्कृत्य अस्थ्ना सह नीत्वा प्रतिमे विप्राणां दानं दत्त्वा अस्थ्नां पलाशविधिना पुनर्दाहमकुर्वन् इत्यपि कथा कथितप्राया। अतो न कश्चित्क्षुद्रोपद्रवः।

**अयमस्मानपाहाय दुःखे चाधाय शाश्वते।**
**कृत्वा [2] नाथान् परोऽनाथान् क यास्यति नराधिपः ॥ १८ ॥**

**कृत्वा नाथान्परोऽनाथान् क यास्यति नराधिप** इत्यत्र अनाथान् अस्मान् **नाथान्** याचकान् कृत्वा, 'ना(थ्ल)थृ याञ्चायाम्' इति धातुः। क यास्यतीति सम्बन्धः।

**ततस्तस्य शरीरं [3] तत् सर्वगन्धाधिवासितम्।**
**शुचिकालीयकादिग्धं दिव्यचन्दनरूषितम् ॥ १९ ॥**

**ततस्तस्य शरीरं तत्** इत्यत्र **शरीरं** शरीरमिव लुप्तोपमाः **शरीरं** शरीरस्थानीयान्यस्थीनि वा।

**कालागुरुविमिश्रेण तथा तुङ्गरसेन च।**
**अथैनं देशजैः शुक्लैर्वासोभिः समयोजयन् ॥ २१ ॥**

**तथा तुङ्गरसेन च** इत्यत्र **तुङ्गरसो** नाम नानापरिमलैः संस्कृत-तैलविशेषः।

---

१ **अस्थिनी** सो.मु.पा.

२ **'चास्माननाथांश्च'** इति कुं.पाठः।

३ $N_{1,2}$,B,$D_{(except\ D5)}$ ; BORI पृ. ५२६; **'तु'** इति कुं.पाठः।

**ततस्तयोः शरीरे द्वे दृष्ट्वा मोहवशं गता ।**
**हाहा पुत्रेति कौसल्या पपात सहसा भुवि ॥ २७ ॥**

**हा हा पुत्रेति कौसल्या** इत्यत्र **कौसल्या** कोसलविषयजाता काशिराजसुता पाण्डोर्माता अम्बालिका ।

॥ इति एकोनसप्ततितमोऽध्यायः ॥

## ॥ अथ एकसप्ततितमोऽध्यायः ॥

[१] **हर्षाद्ध्येतान् क्रीडमानान् गृह्य काकनिलीयने ।**
**शिरस्तु च निगृह्यैतान् योधयामास पाण्डवः ॥ १७ ॥**

**हर्षाद्ध्येतान् क्रीडमानान् गृह्य काकनिलीयने । शिरस्सु च निगृह्यैतान् योधयामास पाण्डव** इत्यत्र **पाण्डवो** भीमः **काकनिलीयने** शिखायां, 'शिखा काकनिलीयनम्' इति निघण्टुः । **गृह्य** निगृह्य, तत्पाते सति शिरस्सु च निगृह्य क्रीडमानान् एतान् दुर्योधनादीन् योधयामासेत्यर्थः ।

**न ते नियुद्धे न जवे न योग्यासु कदाचन ।**
**कुमारा उत्तरं चक्रुः स्पर्धमाना वृकोदरम् ॥ २४ ॥**

**कुमारा उत्तरं चक्रुः स्पर्धमाना वृकोदरम्** इत्यत्र उत्तरं प्रत्युत्तरमात्रं चक्रुः; न तु प्रतिक्रियामित्यर्थः ।

॥ इति एकसप्ततितमोऽध्यायः ॥

---

१. कुं. १३८ अध्यायः

## ।। अथ द्विसप्ततितमोऽध्यायः ।।

**[१] लतापाशैर्दृढं बद्धं स्थलाज्जलमपातयत् ।**
**सशेषत्वान्न सम्प्राप्तो जले शूलिनि पाण्डवः ।। २४ ।।**

**सशेषत्वान्न सम्प्राप्तो जले शूलानि पाण्डव** इत्यत्र **सशेषत्वात्** शूलप्रोतजलादवशिष्टजलसहितत्वादित्यर्थः ।

**ततोऽस्य दश्यमानस्य तद्विषं कालकूटकम् ।**
**हतं सर्पविषेणैव स्थावरं जङ्गमेन तु ।। २७ ।।**

**ततोऽस्य दश्यमानस्य तद्विषं कालकूटकम् । हतं सर्पविषेणैव स्थावरं जङ्गमेन तु** इत्यत्र जङ्गमेन सर्पविषेण स्थावरं तत् दुर्योधनेन प्राक् भोज्ये दत्तं कालकूटकं विषं हतमिति योजना । कण्टकेनैव कण्टकमितिवत् स्वान्तस्स्थितकालकूटविषं सर्पविषेण सह बहिश्चकार । अतो भीमस्य दु(र्म)र्जरदेहत्वं निर्जराधीश्वरत्वं च किं वर्णनीयमिति भावः ।

**[२] अहन्नरो वै नागेन्द्र ह्यप्सु बद्ध्वा प्रवेशितः ।**
**यथा च नो मतिर्वीर विषपीतो भविष्यति ।। ३१ ।।**

**अहन्नरो वै नागेन्द्र** इत्यत्र अहन् हिंसितवान् ।

**पश्यति स्म महाबाहुं भीमं भीमपराक्रमम् ।**
**[३] आर्यकौतुकदृष्टस्य प्रयातस्त्वार्यकेण तु ।। ३४ ।।**

---

१. कुं. १३८ अध्यायः । ; २. 'अयं नरो' इति कुं.पाठः ।
३. 'आर्यकेण च दृष्टः स पृथाया आर्यकेण च । तदा दौहित्रदौहित्रः परिष्वक्तः [illegible]तम ।' इति कुं. पाठः ।

**ततो दृष्टश्च तेनापि परिष्वक्तश्च पाण्डव ।**
**सुप्रीतश्चाभवत्तस्य वासुकिः स महायशाः ॥ ३५ ॥**

**आर्यकौतुकदृष्टस्य प्रयातस्त्वार्यकेण तु । ततो दृष्टश्च तेनापि परिष्वक्तश्च पाण्डव** इत्यत्र [1]'आर्यकश्चार्द्रकश्चैव नागौ वासालपोतकौ' इति आस्तीके नागनामसु पाठात् **आर्यकेण** आर्यकनाम्ना सर्पेण सह **प्रयातः** आगतः सः वासुकिः आर्यकौतुकदृष्टः आर्येण कौतुकात् कुतूहलेन दृष्ट आसीत् । **ततः** वासुकिमुखदर्शनानन्तरं **तेनापि** आर्येणापि दृष्टः स **पाण्डवो** भीमः परिष्वक्त इति योजना ।

**रसं पिबेत् कुमारोऽयं त्वयि प्रीते महाबलः ।**
**बलं नागसहस्रस्य यस्मिन् कुण्डे प्रतिष्ठितम् ॥ ३८ ॥**

**बलं नागसहस्रस्य** इत्यत्र **नागसहस्रस्य** गजसहस्रस्य **बलं** बलप्रदम् ।

**ततो भीमस्तदा नागैः कृतस्वस्त्ययनः शुचिः ।**
**प्राङ्मुखश्चोपविष्टश्च रसं [2]पिबत पाण्डवः ॥ ४० ॥**

**पिबत पाण्डव** इत्यत्र **पिबत** अपिबत ।

**[3]ओषधीभिः [4]वनघ्नीभिः सुरभीभिर्विशेषतः ।**
**भुक्तवान्परमान्नं च नागैर्दत्तं महाबलः ॥ २७ ॥**

---

१. आदि ३५-७ । प्र.पाठः '**आर्यकश्चोग्रकश्चैव नामः कलदापोतकः**' इति ।
२. '**पिबति**' इति कुं. पाठः ।
३. कुं. १३९ अध्यायः
४. '**विषघ्नीभिः**' इति कुं. पाठः ।

**ओषधीभिर्वनघ्नीभिः** इत्यत्र 'हन हिंसागत्योः'इति धातोः **वनघ्नीभिः** वनस्थाभिरित्यर्थः ।

[१] **युधिष्ठिरस्तु धर्मात्मा चिन्तयन् पापमात्मनि ।**
**स्वेनानुमानेन परं तदाऽस्यानुपपश्यति** ॥ ३ ॥

**युधिष्ठिरस्तु धर्मात्मा चिन्तयन् पापमात्मनि । स्वेनानुमानेन परं तदाऽस्यानुपपश्यति** इत्यत्र **परं** शत्रुं दुर्योधनं प्रति **अस्य** भीमस्य **पापं** अपराधं स्वेन अनुमानेन आत्मनि चिन्तयन् **अनुपपश्यति** नोपपश्यतीत्यर्थः । तस्माद्भीमस्यानपराधित्वात् तं प्रत्यन्योपि नापराध्यतीति मत्वा तूष्णीं स्थित इति भावः ।

[२] **तत्रैनं बहुलं चक्रुः प्रयता मन्त्ररक्षणे ।**
**धर्मात्मा विदुरस्तेषां प्रददौ[३] मतिमान् मतिम्** ॥ ३९ ॥

**तत्रैनं बहुलम्** इत्यत्र **बहुलं** बहुपराक्रमवन्तम् ॥

**॥ इति द्विसप्ततितमोऽध्यायः ॥**

## ॥ अथ त्रिसप्ततितमोऽध्यायः ॥

[४] **ततो जालवतीं नाम देवकन्यां सुरेश्वरः ।**
**प्राहिणोत्तपसो विघ्नं कुरु तस्येति कौरव** ॥ ६ ॥

**ततो जालवतीं नाम देवकन्यां सुरेश्वर** इत्यत्र **जालवतीं**

---

१. BORI पृ. ९१८; **'युधिष्ठिरस्तु धर्मात्मा ह्यविदन्पापमात्मनि । स्वेनानुमानेन परं साधुं समनुपश्यति'** इति कुं. पाठः ।
२. **'[illegible]'** इति कुं.पाठः ।; ३. **बाहु** सां.मु.पा.; ४. कुं. १४० अध्यायः

स्वलावण्याख्यजालेन परवशीकरणसमर्थत्वात् उर्वश्या एव जाल-वतीति नामान्तरम् ।

**सा हि गत्वाऽऽश्रमं तस्य रमणीयं शरद्वतः ।**
**धनुर्बाणधरं [१] दृष्ट्वा लोभयामास गौतमम्** ॥ ७ ॥

**धनुर्वाणधरं दृष्ट्वा लोभयामास गौतमम्** इत्यत्र गौतम इति कुलनाम ।

**इष्वस्त्रज्ञान्पर्यपृच्छदाचार्यान् वीर्यसम्मतान् ।**
**नाल्पधीर्नामहाभागस्तथाऽनानास्त्रकोविदः [२]** ॥ २६॥

**नादेवसत्वो विनयेत्कुरूनस्त्रे महाबलान् ।**
**इति सञ्चिन्त्य गाङ्गेयस्तदा भरतसत्तमः** ॥ २७ ॥

**तथाऽनानास्त्रकोविद** इत्यत्र नानास्त्रकोविदो न भवतीति **अनानास्त्रकोविदः** । **विनयेत्** शिक्षयेत् ।

**सोऽभिषेक्तुं गतो गङ्गां पूर्वमेवागतां सतीम् ।**
**[३] महर्षिस्तु भरद्वाजो हविर्धानेऽभवत् पुरा** ॥ ३५ ॥

**महर्षिस्तु भरद्वाजो हविर्धानेऽभवत्पुरा** इत्यत्र **हविर्धाने** हवि-र्धानाख्ये आश्रमे नगरे वा ।

---

१. S; BORI पृ. ५३५; **'वाला'** इति कुं. पाठः ।
२. **'तथा नानास्त्रकोविदः'** इति कुं. पाठः ।
३. $G_{2,3(S)}$; BORI पृ. ५३७; **'महर्षिभिर्भरद्वाजो हविर्धाने चरन्पुरा'** इति कुं. पाठः ।

**तत्र संसक्तमनसो भरद्वाजस्य धीमतः ।**
**हृष्टस्य रेतश्चस्कन्द तद्दपिर्द्रोण आदधत्**[१] **॥ ३८ ॥**

**तद्दपिर्द्रोण आदधत्** इत्यत्र **द्रोणे** द्रोणपरिमाणे कलशे ।

**अग्निवेश्यं महाभागं भरद्वाजः प्रतापवान् ।**
**प्रत्यपादयदाग्नेयम् अस्त्रमस्त्रविदां वरः ॥ ४१ ॥**

**अग्निवेश्यम्** अग्निवेश्यनामकं स्वभ्रातृपुत्रम् ।

**कथं समभवद्द्रौणः कथं चास्त्राप्यवाप्तवान् ।**
[२]**वाऽस्ति कुत्र ननु ब्रह्मन् कस्य पुत्रः प्रतापवान् ॥ ३२ ॥**

[३]**वाऽस्ति कुत्र ननु ब्रह्मन् कस्य पुत्रः प्रतापवान्** इत्यत्र कुत्र वा [४]अस्तीति सम्बन्धः ॥

**तच्छ्रुत्वान्तर्हितं भूतम् अन्तरिक्षस्थमब्रवीत् ।**
**अश्वस्येवास्य यत्थाम**[५] **नदतः प्रदिशो गतम् ॥ ५० ॥**

**अश्वस्येवास्य यत्थाम नदतः प्रदिशो गतम्** इत्यत्र 'थमु शब्द' इति धातोः **थाम** ध्वनिः हेषेति यावत् ।

॥ इति त्रिसप्ततितमोऽध्यायः ॥

---

१. **'आदधे'** इति कुं. पाठः ।

२. **'कथं चागात् कुरून् ब्रह्मन् कस्य पुत्रः स वीर्यवान्'** इति कुं. पाठः ।

३. **वाऽसि** सो.मु.पा.

४. **अस्मीति** सो.मु.पा.

५. $S_1$,$K_{(except\ K3)}$, $D_{4,5}$, $M_{3,5}$; BORI पृ. ५३९; **'यत्स्थाम'** इति [illegible] पाठः ।

## ॥ अथ चतुस्सप्ततितमोऽध्यायः ॥

[१] **न दरिद्रो वसुमतो नाविद्वान्विदुषः सखा ।**
**न शूरस्य सखा क्लीबः सखिपूर्वं किमिष्यते ॥ ९ ॥**

**सखिपूर्वं किमिष्यत** इत्यत्र सख्युर्यत्पूर्वं स्नेहादिकं तत् **सखिपूर्वं** पूर्वसख्यमिति यावत् । सम्बन्धादिकं **किं** किंप्रयोजनाय इष्यत इत्यर्थः । **सङ्गतं** सम्बन्धः ।

**जगाम कुरुमुख्यानां नगरं नागसाह्वयम् ।**
**तां प्रतिज्ञां प्रतिज्ञाय यां कर्ता नचिरादिव ॥ १४ ॥**

**यां कर्ता** इत्यत्र यां बद्ध्वा नयामीति प्रतिज्ञाम् ।

**क्रीडन्तो वीडया[२] तत्र वीराः पर्यचरन्मुदा ।**
**तेषां सङ्क्रीडमानानामुदपानेऽङ्गुलीयकम् ॥ १८ ॥**

**क्रीडन्तो वीडया तत्र वीराः पर्यचरन् मुदा** इत्यत्र [३]वीडा विशेषेण क्षणे क्षणे सत्त्वेन च डलयोरभेदात् **इडा** इला प्राप्या यया सा **वीडा** कन्दुक इत्यर्थः ॥

**संस्मरन् सङ्गमं चैव वचनं चैव तस्य तत् ।**
**ततो द्रुपदमागम्य सखिपूर्वमहं प्रभो ॥ ६३ ॥**

**सखिपूर्वमहं प्रभो** इत्यत्र पूर्वं सखा **सखिपूर्वः** तम् ।

---

१. कुं. १४१ अध्यायः
२. **'वीटया'** इति कुं. पाठः ।
३. **वीडया वि विशेषेण** सो.मु.पा.

**स मां निराकारमिव प्रहसन्निदमब्रवीत् ।**
**अकृतेयं तव प्रज्ञा ब्रह्मन्नातिसमञ्जसा ॥ ६५ ॥**

**स मां निराकारम्** इत्यत्र निराकुर्वद्वचनं **निराकारं**, आकारपुष्टि-[illegible]हितं मामिति वा ।

**अभ्यागच्छं कुरून् भीष्म शिष्यैरर्थी गुणान्वितैः ।**
**ततोऽहं भवतः कामं संवर्धयितुमागतः ॥ ७६ ॥**

**अभ्यागच्छं कुरून् भीष्म शिष्यैरर्थी गुणान्वितैः** इत्यत्र गुणा-[illegible]न्वितैः शिष्यैः **अर्थी** अर्थवान् प्रयोजनवानित्यर्थः ।

॥ इति चतुस्सप्ततितमोऽध्यायः ॥

## ॥ अथ पञ्चसप्ततितमोऽध्यायः ॥

**[1] भुक्तवानेव कौन्तेयो न चास्मात्स न्यवर्तत ।**
**हस्ततेजस्विनो नित्यम् अभ्यासकृतिकारणात् ॥ ३३ ॥**

**भुक्तवानेव कौन्तेयो न चास्मात्स न्यवर्तत । हस्ततेजस्विनो [illegible]नित्यम अभ्यासकृतिकारणात्** इत्यत्र अभ्यासकृत्याख्यकारणात् **[illegible]तेजस्विनः** ज्याघातेन हस्तमात्रे तेजोवतस्तस्यार्जुनस्य **सः** हस्तः **[illegible]मात्** भाजनात् **न न्यवर्तत** स्वहस्ततेजसैव तमो निरस्य पात्रादन्नं [illegible]र्क्षिपदित्यर्थः । अतो भुक्तवानेव कौन्तेय इति योजना । इदं च [illegible]म् अन्धकारत्वादेव जातम्, आलोकान्तरे सति तत्तेज एवेति

---

[1] [illegible] १५२ अध्यायः । 'भुक्त एव तु कौन्तेयो नास्यादन्यत्र वर्तते । [illegible]तेजस्विनस्तस्य अनुग्रहणकारणात् ॥३३॥' इति कुं. पाठः । (भुक्त-[illegible] S, अन्यत् सर्वं- M3, BORI पृ. ५४९) ।

भ्रान्त्या नात्र दृष्टिः प्रसरेदिति भावः । ईदृशाभ्यासकौशलस्य गोप्य-त्वेनान्याज्ञेयत्वात् प्रागन्धकारेऽन्नदाननिषेध इति ज्ञेयम् । 'प्रयोगो बलवत्तर' इति पाठे बलवत्तरः प्रयोगः अस्त्रशस्त्रप्रयोगकौशलं मत्कृपया भविष्यति ।

**वैशम्पायन उवाच –**

**स तु द्रोणस्य शिरसा पादौ गृह्य परन्तपः ।**
**अरण्यमनुसम्प्राप्य कृत्वा द्रोणं महीमयम्** ॥ ४३ ॥

**कृत्वा द्रोणं महीमयम्** इत्यत्र **महीमयं** मृण्मयम् ।

**तदा तस्याथ भपतः शुनः सप्त शरान्मुखे ।**
**लाघवं[1] दर्शयान्नस्त्रे शब्दवेध्यमदर्शयन्** ॥ ५० ॥

**शब्दवेध्यमदर्शयन्** इत्यत्र शब्दो यत्र तत्र वेधनयोग्यो यथा भवति तथा अदर्शयन् स्वयं श्वानमपश्यन् ।

॥ इति पञ्चसप्ततितमोऽध्यायः ॥

## ॥ षट्सप्ततितमोऽध्यायः ॥

**कृत्रिमं भासमारोप्य वृक्षाग्रे शिल्पिभिः कृतम् ।**
**अविज्ञातं कुमाराणां लक्ष्यभूतमुपादिशत्** ॥ ७८ ॥

**कृत्रिमं भासमारोप्य** इत्यत्र 'शकुन्तो भास उच्यते'[2] इत्यभिधानात् शाकुनसूचकः शकुन्ताख्यः पक्षी **भासः** ।

---

१. $T_2$,$G_{2,4,5}$; BORI पृ. ५५८; **'मुमोच युगपद्यथा'** इति कुं.पाठः ।
२. अ.को. ३-३-४८; प्र.पाठः **'शकुन्तौ भासपक्षिणौ'** इति ।

**तमुवाचापसर्पेति द्रोणोऽप्रीतमना इव ।**
**नैतच्छक्यं त्वया वेद्धुं लक्ष्यमित्येव कुत्सयन्** ॥ ८७ ॥

**नैतच्छक्यं त्वया वेद्धुम्** इत्यत्र सर्वत्र दृष्टिपातेन लक्ष्ये एकाग्र-त्वाभावात् कुत्सनमिति भावः ।

॥ इति षट्सप्ततितमोऽध्यायः ॥

॥ अथ सप्तसप्ततितमोऽध्यायः ॥

[१] **ततो बद्धाङ्गुलित्राणा बद्धकक्ष्या महाबलाः[२] ।**
**बद्धतूणाः सधनुषो विविशुर्भरतर्षभाः** ॥ २६ ॥

**बद्धकक्ष्या महाबला** इत्यत्र बद्धा **कक्ष्या** वसनबन्धनपट्टतन्त्वादि-येषां ते । 'कक्ष्या वसनबन्धिनी' इति निघण्टुः ।

**तत्कुमारबलं तत्र गृहीतशरकार्मुकम् ।**
**गन्धर्वनगराकारं प्रेक्ष्य ते विस्मिताभवन्** ॥ ३८ ॥

**गन्धर्वनगराकारम्** इत्यत्र इच्छामात्रेण निर्मितत्वात् गन्धर्वनगरा-कारमित्युक्तम् ।

॥ इति सप्तसप्ततितमोऽध्यायः ॥

॥ अथ अष्टसप्ततितमोऽध्यायः ॥

[१] **ततः सर्वस्य रङ्गस्य समुत्पिञ्जलिकोऽभवत् ।**
**प्रावाद्यन्त च वाद्यानि सशङ्खानि समन्ततः** ॥ ११ ॥

१ कुं. १४४ अध्यायः ; २. BORI पृ. ५५९.; 'महारथाः' इति कुं. पाठः ।
१ कुं. १४५ अध्यायः

**समुत्पिञ्जलिकोऽभवत्** इत्यत्र **समुत्पिञ्जलिको** जनकोलाहलः । 'जनकोलाहलः प्रोक्तः समुत्पिञ्जलिको बुधैः' इति निघण्टुः ।

**पञ्चभिर्भ्रातृभिः पार्थैर्द्रोणः परिवृतो बभौ ।**
**पञ्चतारेण संयुक्तः सावित्रेणेव चन्द्रमाः** ॥ ३१ ॥

**सावित्रेणेव चन्द्रमा** इत्यत्र पञ्चतारेण संयुक्तः **सावित्रेण** सवितृदत्तकलाप्रकाशेन सहितः **चन्द्रमाः** द्वितीयचन्द्रमा इव बभौ ।

॥ इति अष्टसप्ततितमोऽध्यायः ॥

## ॥ अथ एकोनाशीतितमोऽध्यायः ॥

**अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।**[१]
**तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति** ॥ ३७ ॥

**यद्ययं फाल्गुनो युद्धे नाराज्ञा योद्धुमिच्छति ।**
**तस्मादेषोऽङ्गविषये मया राज्येऽभिषिच्यते** ॥ ३८ ॥

**अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् । तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति** इत्यत्र **अद्भ्यः** ब्रह्माण्डोदरे गर्भोदकरूपाद्भ्यः अग्निरुत्थितः । 'तस्मिन्वाय्वम्बुसङ्घर्षे दीप्ततेजा महाबलः ।[२] प्रादुर्बभूवोर्ध्वशिखः कृत्वा वितिमिरं नभ' इति मोक्षधर्मे नव(मा)मेऽध्याये उक्तवायुना इतस्ततः सङ्कृष्यमाणगर्भोदकादग्निसृष्टेर्वक्ष्यमाणत्वादद्भ्योऽग्निरित्युक्तम् । अण्डाद्बहिश्चतुर्विंशातितत्वसृष्टौ तु अग्नेराप इति श्रुत्युक्तक्रमेण सृष्टिरिति विवेकः । तेषामग्न्यादीनां सर्वत्रगं तेजः

---

१. कुं. १४६ अध्यायः ; २. मोक्षधर्म ९-१४ (कुं. १८७-१४)

स्वासु **योनिषु** जलादिषु **शाम्यति** अकिञ्चित्करं भवति । एवं क्षत्राग्रे क्षत्रान्न्यूनसूतादिजातेः सामर्थ्यं नास्तीति कृपोक्तं वाक्यं[1] सत्यम् । मयाऽपि कर्णस्याङ्गराज्यं दीयते । तदा क्षत्रियसाम्यं भविष्यतीति भावेनाह– **यद्ययम्** इति ।

**उवाच [2]वचनं राजा कौरवं स वृषस्तदा ।**
**अस्य राज्यप्रदानस्य सदृशं किं ददानि ते ॥ ४४ ॥**

**उवाच वचनं राजा** इत्यत्र **राजा** राजपट्टं प्राप्तः **वृषः** कर्णः ।

॥ इति एकोनाशीतितमोऽध्यायः ॥

## ॥अथ अशीतितमोऽध्यायः ॥

**[3]न त्वमर्हसि पार्थेन सूतपुत्र रणे वधम् ।**
**कुलस्य सदृशस्तूर्णं [4]प्रतोदोऽयं प्रगृह्यताम् ॥ ६ ॥**

**प्रतोदोऽयं प्रगृह्यताम्** इत्यत्र **प्रतोदः** रथवाजिताडनाय कृततोत्रविशेषः ।

**[5]क्षत्रियासु च ये जाता ब्राह्मणास्ते च ते श्रुताः ।**
**विश्वामित्रप्रभृतयः प्राप्ता ब्रह्मत्वमव्ययम् ॥ १४ ॥**

---

१. भवतीति सो.मु.पा.

२. $D_4$, $\tilde{N}_{1,2}$, $D_a$, $D_5$, $T_1$; BORI पृ. ५६७; **'कौरवं राजन् वचनं'** इति कुं. पाठः ।

३. कुं. १४७ अध्यायः

४. S; BORI पृ. ५६८; **'प्रतोदो गृह्यतां त्वया'** इति कुं. पाठः ।

५. $D_5$, $T_1$, $G_{3,6}$, M; BORI पृ. ५६९; **'क्षत्रियेभ्यश्च'** इति कुं. पाठः ।

**क्षत्रियासु च ये जाता ब्राह्मणा** इत्यत्र **क्षत्रियासु जाताः** विश्वमित्र-सुकन्यापुत्राद्या ऋषयः ।

**भवतां च यथा जन्म तदप्यागमितं मया ।**
**सकुण्डलं सकवचं सर्वलक्षणलक्षितम् ।**
**कथमादित्यसदृशं मृगी व्याघ्रं प्रसूयते[१]** ॥ १६ ॥

**मृगी व्याघ्रं प्रसूयत** इत्यत्र व्याघ्रं व्याघ्र्येव प्रसूयते, न तु मृगी । एवमेतादृशलक्षणभरितकर्णस्य माता क्षत्रियैव भवेदिति भावः ।

**यस्य वा मनुजस्येदं न क्षान्तं मद्विचेष्टितम् ।**
**रथमारुह्य पद्भ्यां स विनामयतु कार्मुकम्** ॥ १८ ॥

**यस्य वा मनुजस्येदं न क्षान्तम्** इत्यत्र यच्छब्दः किंशब्दार्थे । इदं मद्विचेष्टितं पट्टाभिषेककरणादिकं **क्षान्तं** कर्णे क्षमां कर्तुं योग्यं न । मदङ्गीकारेण कर्णः सर्वैरपि सोढव्य इति भावः ।

**॥ इति अशीतितमोऽध्यायः ॥**

## ॥ अथ एकाशीतितमोऽध्यायः ॥

**नानानृपसुतान् वीरान् सैन्यानि विविधानि च ।**
**अलातचक्रवत् सर्वान्[२] चरन् बाणैरतर्पयत्** ॥ २४ ॥

**अलातचक्रवत् सर्वान्** इत्यत्र **अलातम्** उल्मुकम् । 'अङ्गारोऽलात-मुल्मुकम्' इत्यमरः'। सर्वतोप्युल्मुकमुद्रिरचक्रबाणवदित्यर्थः ।

---

१. S; BORI पृ. ५६९; **'जनिष्यति'** इति कुं. पाठः ।
२. **'सर्वं'** इति कुं. पाठः ।

**सबालवृद्धाः काम्पिल्याः कौरवानभ्ययुस्तदा ।**
**श्रुत्वा सुतुमुलं युद्धं कौरवानेव भारत ॥ २६ ॥**

**सबालवृद्धाः काम्पिल्या** इत्यत्र **काम्पिल्याः** कम्पिलनगरस्थाः । कम्पिलमिति द्रुपदनगरस्य नाम ।

**तत उत्सृज्य तच्चापं आददानः शरावरम् ।**
**खड्गमुद्धृत्य कौन्तेयः सिंहनादमथाकरोत् ॥ ६१ ॥**

**आददानः शरावरम्** इत्यत्र शरान् आ समन्ताद्धारयतीति **शरावरं** चर्म ।

[१]**असन्दीमथ गङ्गायास्तीरे जनपदायुताम् ।**
**सोऽध्यावसद्दीनमनाः काम्पिल्यं च पुरोत्तमम् ॥ ७८ ॥**

**आसन्दीम्** इत्यत्र **आसन्दीम्** आसन्दीसञ्ज्ञां सीमाम् ।

॥ इति एकाशीतितमोऽध्यायः ॥

## ॥ अथ द्व्यशीतितमोऽध्यायः ॥

[२]**कर्तुं प्रयतमानो वै न शशाक पराजयम् ।**
**अभितः सोऽथ कल्माषीं गङ्गातीरे परिभ्रमन् ॥ ६ ॥**

**अभितः सोऽथ कल्माषीम्** इत्यत्र **कल्माषीम्** ऋष्याहारोचित-[illegible]ताटवीम् । कल्माषीति आश्रमस्यैव नामेति केचित् ।

---

१ [illegible] M₁; BORI पृ. ५७२; **'माकन्दीमथ'** इति कुं.पाठः ।
२ [illegible] १४९ अध्यायः

**स उपामन्त्रयामास सर्वकामैरतन्द्रितः ।**
**बुद्ध्वा तयोर्बलं बुद्धिं कनीयांसमुपह्वरे ॥ १० ॥**

**बुद्ध्वा तयोर्बलं बुद्धिं कनीयांसमुपह्वर** इत्यत्र **तयोः** याजोपयाजयोर्मध्ये **बलं** तपोबलं बुद्धिं च बुद्ध्वा **कनीयांसं** उपयाजं **उपह्वरे** रहसि ।

**अपरिज्ञातशौचायां भूमौ निपतितं फलम् ।**
**तदपश्यमहं भ्रातुरसाम्प्रतमनुव्रजन् ॥ १९ ॥**
**विमर्शं[1] सङ्करादाने नायं कुर्यात् कथञ्चन ।**

**तदपश्यमहं भ्रातुरसाम्प्रतमनुव्रजन् । विमर्शं सङ्करादाने नायं कुर्यात् कथञ्चन** इत्यत्र **असाम्प्रतम्** इति पदस्य अयुक्तं कर्मेत्यर्थः । **सङ्करादान** इति पदस्य सङ्करे अशुद्धवस्तुसम्मिश्रणे सत्यपि आदाने स्वाभीष्टफलादेः सङ्ग्रहे इत्यर्थः ।

**यो नापश्यत् फलं दृष्ट्वा दोषांस्तस्यानुबन्धिकान् ॥ २० ॥**
**विविनक्ति न शौचार्थी सोऽन्यत्रापि कथं भवेत् ॥ २१ ॥**

**यो नापश्यत् फलं दृष्ट्वा दोषांस्तस्यानुबन्धिकान् । विविनक्ति न शौचार्थी सोऽन्यत्रापि कथं भवेत्** इत्यत्र फलं दृष्ट्वा तस्यानुबन्धिकान् दोषान् यो नापश्यत् **न विविनक्ति** च क्षालनादिना विवेकं न करोति च सोऽन्यत्रापि शौचार्थी कथं भवेदिति योजना ।

**भैक्षमुञ्छेन सहितं भुञ्जानस्तु तदा तदा ।**
**कीर्तयत्येव राजर्षे भोजनस्य रसं पुनः ॥ २२ ॥**

१. **'विमर्शं हि फलादाने'** इति कुं. पाठः ।

**भैक्षमुञ्छेन सहितम्** इत्यत्र **उञ्छेन** सस्यखण्डनानन्तरं भूमौ पतित-व्रीह्यादिधान्येन ।

**कीर्तयन् गुणमन्नानाम् अघृणी[१] यो मुहुर्मुहुः ।**
**एवं फलार्थिनस्तस्मान्मन्येऽहं तर्कचक्षुषा ॥ २४ ॥**

**अघृणी यो मुहुर्मुहुः** इत्यत्र **अघृणी** जुगुप्सारहितः । [२]'गर्हा निन्दा [illegible] जुगुप्सा च' इति हलायुधः ।

**द्रोणवैरान्तरे तप्तं विषण्णं शरणागतम् ।**
**ब्रह्मबन्धुप्रणिहितं न क्षत्रं क्षत्रियो जयेत् ॥ २८ ॥**

**ब्रह्मबन्धुप्रणिहितं न क्षत्रं क्षत्रियो जयेत्** इत्यत्र ब्रह्मबन्धौ प्रकर्षेण [illegible]तं **क्षत्रम्** अस्त्रशस्त्रकौशलाख्यक्षत्रबलं क्षत्रियो न जयेत् ।

**षडरत्नि धनुश्चास्य खड्गमप्रतिमं तथा ।**
**स हि ब्राह्मणवेषेण क्षात्रं वेगमसंशयम् ॥ ३३ ॥**

**[illegible]त्नि धनुश्चास्य** इत्यत्र मुष्टीकृताङ्गुलिरेको हस्तः **रत्निः** इत्युच्यते । [illegible]लिस्तु हस्तः अरत्निरित्युच्यते, सम्पूर्ण एको हस्त इति यावत् । [illegible] क्रियमाणे षट् अरत्नयो यस्य तत्तथोक्तम् । सम्पूर्णषड्हस्त-[illegible]मिति यावत् । [३]'बद्धमुष्टिः स्मृतो रत्निररत्निः प्रसृताङ्गुलिः' इति [illegible]ः ।

---

[illegible] '[illegible] **प्रीतो मुहुर्मुहुः**' इति कुं. पाठः ।

[illegible] [illegible]. १-१४८; प्र.पाठः '**गर्हा निन्दा जुगुप्सा च**' इति ।

[illegible] [illegible]. २-५३६; प्र.पाठः '**बद्धमुष्टिकरो रत्निररत्निः सकनिष्ठिकः**' इति ।

**वैशम्पायन उवाच –**

**तथेत्युक्त्वा तु तं याजो याज्यार्थं[1] वाक्यमब्रवीत्।**
**गुर्वर्थ इति चाकामं उपयाजमचोदयत् ॥ ४२ ॥**

**तथेत्युक्त्वा तु तं याज** इत्यत्र **याज्यस्य** याजयितुं योग्यस्य द्रुपदस्य **अर्थः** प्रयोजनं यस्मात्तद्वाक्यमिति योजना।

**[2]गुर्वर्थं याजयन् कर्म याजस्यापि समीपतः।**
**ततस्तस्य नरेन्द्रस्य उपयाजो महातपाः ॥ ४६ ॥**

**[3]गुर्वर्थं याजयन् कर्म** इत्यत्र **गुर्वर्थं, गुरोः** अग्रजस्य प्रीत्यर्थम्।

**आचख्यौ कर्म वैतानं तथा पुत्रफलाय वै।**
**इह पुत्रो महावीर्यो महातेजा महाबलः।**
**इष्यते यद्विधो राजन् भविता स तथाविधः ॥ ४७ ॥**

**आचख्यौ कर्म वैतानम्** इत्यत्र **वैतानं** यज्ञसम्बन्धि। 'वितानं यज्ञ उच्यते' इति वागुरिः।

**ब्राह्मणो द्विपदां श्रेष्ठो जुहाव च यथाविधि।**
**[4]कोकिलानामतां तस्य चक्रे वै पुत्रगृद्धिन ॥ ४९ ॥**

**कोकिलानामतां तस्य चक्रे वै पुत्रगृद्धिन** इत्यत्र 'कुक आदाने'इति धातोः लोकेऽपि परैः काकैः पुष्टसुतानामादात्री हि **कोकिला** इत्युच्यते। पुत्रगृद्धिनः **तस्य** द्रुपदस्य कोकिलानामतां कोकिला इति नाम

---

१. BORI पृ. ९२५; **'यज्ञार्थमुपकल्पयन्'** इति कुं.पाठः।
२. BORI पृ. ९२५; **'गुर्वर्थेऽयोजयत्कर्म'** इति कुं. पाठः।
३. **गुर्वर्थऽयाजयत्कर्मेत्यत्र गुरोरग्रजस्य प्रीत्यर्थे** सो.मु.पा.
४. **'कौसवी नाम तस्यासीद्या वै तां पुत्रगृद्धिनः'** इति कुं. पाठः।

यस्यासौ **कोकिलानामा** तस्य भावः कोकिलानामता तां चक्रे । अग्निदत्तपुत्रस्य त्वमेवादाता, न तु तव पत्नी इत्यागामिकार्यसूचनाय पत्नीसहायं विना त्वत्कर्मवीर्यात्त्वयैवाग्नौ प्रसूतं अग्निनैव पुष्टत्वात् परपुष्टं सुस्वरकण्ठत्वात् कलकण्ठशिशूपमं तन्मिथुनं तवैव स्यान्न तु तव पत्न्याः । अतः मातृस्थानीयोऽपि त्वमेवेति सूचनाय च प्रागेव कोकिलानामतां चक्र इति भावः । अनेन होतुर्याजस्य आगामिसर्वज्ञता सूचिता ।

**सौत्रामणिं तां[1] तु पत्नीं ततः कालेऽभ्यधात्तदा[2] ।**
**याजस्तु सवनस्यान्ते देवीमाह्वापयत्तदा ॥ ५० ॥**

**सौत्रामणिं तां तु पत्नीं ततः कालेऽभ्यधात्तदा । याजस्तु सवनस्यान्ते देवीमाह्वापयत्तदा** इत्यत्र **तदा** तस्मिन् समये याजः सवनस्यान्ते देवीमाह्वापयत् । **ततः** आह्वापनानन्तरं **काले** यागावसानकाले **सौत्रामणिं** सूत्रसम्बन्धिनः **सौत्राः** कण्ठादावा समन्ताद्भ्रममाना **मणयः** हारमङ्गलसूत्रमण्यादिरूपाः, सौत्राः आमणयः यस्याः सा तां **सौत्रामणिं** सर्वालङ्कारभरितामित्यर्थः । उपरि क्रियमाणाहङ्कारसूचनाय हेतुगर्भमिदं विशेषणम् । मद्यपानोपेतसौत्रामण्याख्ययागसूचकपदमहिम्ना मधुपानमत्तेति च ध्वनयितुमप्रसिद्धपदोपादानम् । तां पत्नीं **तदा** तदैव अभ्यधादिति योजना ।

पत्न्युवाच –

**नालिप्तं वै मम मुखं पुण्यान् गन्धान् बिभर्मि च ।**
**न पत्नी तेऽस्ति[3] सूत्यर्थं तिष्ठ याज मम प्रिये ॥ ५२ ॥**

---

१. 'तथा' इति कुं. पाठः । ; २. 'कालेऽभ्ययात्तदा' इति कुं. पाठः ।
३. 'तेऽस्मि सूत्यर्थे' इति कुं. पाठः ।

**नालिप्तं वै मम मुखं पुण्यान् गन्धान् बिभर्मि च । न पत्नी तेऽस्ति सूत्यर्थं तिष्ठ याज मम प्रिये** इत्यत्र मम मुखं **आलिप्तं** कुङ्कुमरसाद्यालेपैरलङ्कृतं न । **पुण्यान् गन्धान्** कस्तुरीतिलकादिभिः कृतान् गन्धान् न बिभर्मीति नञावृत्त्या योजना । मुखादिकमलङ्कृत्य तिष्ठेति भर्ता नोक्तवानिति कोपादिदं वचनम् । अतः मुखालङ्कारानन्तरमायास्यामि, नेदानीमिति भावः । **ते** तपस्सामर्थ्यवतस्तव पत्नी **नास्ति** लौकिकवदपेक्षिता नास्ति । पत्नीं विनाऽपि त्वं पुत्रं जनयितुं समर्थोऽसीति भावः । यद्वा अहं ते तव पत्नी न, किन्तु सूत्यर्थं ते पत्नी पृथगेवास्तीति । मम प्रिये भर्तरि आह्वानकर्तरि सति हे याज त्वं **तिष्ठ** तूष्णीं तिष्ठ । 'आलिप्तं वै मम मुखम्' इति पाठे मुखमालिप्तम् । पुण्यान् गन्धान् बिभर्मि च । एतादृशालङ्कारभरितायाश्च मम आह्वानं कर्तुं मम प्रिये भर्तरि विद्यमाने सति हे याज **तिष्ठ** त्वं तूष्णीं तिष्ठ । सूत्यर्थं ते पत्नी **नास्ति** अपेक्षिता नास्ति । भर्त्राऽपि प्रागेव नाहूता, होत्रा त्वयाऽपि नाहूतेति कोपादिदं वचनम् ।

**ततः प्रणेदुः पाञ्चालाः प्रहृष्टाः साधुसाध्विति ।**
**द्वितीयायां च होत्रायां हुते हविषि मन्त्रिते** ॥ ५९ ॥

**द्वितीयायां च होत्रायाम्** इत्यत्र जुहोत्यनयेति **होत्रा** आहुतिः तस्याम् ।

**तच्छ्रुत्वा सर्वपाञ्चालाः प्रणेदुः सिंहसङ्घवत् ।**
**न चैनान् हर्षसम्पूर्णान्[१]इयं सेहे वसुन्धरा** ॥ ६७ ॥

---

१. BORI पृ. ९२६; **'हर्षसम्पन्नानियं'** इति कुं. पाठः ।

**न चैनान् हर्षसम्पूर्णान्** इत्यत्र यथा भूमेर्भारो भवति तावान् जन-सम्मर्दो जात इति भावः ।

**तयोस्तु नामनी चक्रुर्द्विजाः सम्पूर्णमानसाः ।**
**[1]धृष्टत्वादतिधृष्णुत्वात् धर्मान् द्युत्सम्भवादपि ॥ ७१ ॥**

**धृष्टत्वादतिधृष्णुत्वात्** इत्यत्र **धृष्टत्वात्** स्वयं धैर्यवत्त्वात् **अति-धृष्णुत्वात्** शत्रूणामतिशयेन धर्षणशीलत्वाच्च **धृष्टः**। **धर्मात्** यज्ञजनित-पुण्यवशात्, **द्युत्सम्भवात्** कान्त्याख्यद्रविणसम्भवात्, नामैकदेशे[2] नामग्रहणमिति न्यायात् द्युत्पदेनैव सर्वालङ्काराख्यद्रव्यत्वाद्वा[3] द्युम्नः । 'द्युम्नं द्रव्यं द्रविणम्' इति हलः ॥

॥ इति द्व्यशीतितमोऽध्यायः ॥

## ॥ अथ त्र्यशीतितमोऽध्यायः ॥

**वैशम्पायन उवाच –**

**[4]राजा बभूव पाञ्चालः पुत्रार्थी पुत्रकारणात् ।**
**वनं गतो महाराजस्तपस्तेपे सुदारुणम् ॥ ३ ॥**

राजा बभूव पाञ्चाल इत्यत्र **पाञ्चालः** पृष(द)तनामको द्रुपदपिता ।

**कालस्तु सुमहान् [5]राजन् व्यत्ययात् सुतकारणात् ।**
**स तु राजा महातेजास्तपस्तीव्रं समाददे ॥ ५ ॥**

१. 'धृष्टत्वादप्रधृष्यत्वात् द्युम्ना द्युत्सम्भवादपि' इति कुं. पाठः ।
२. द्रव्यवत्त्वलाभाद्वा सो.मु.पा. ; ३. ह.को. १-८०
४. भां. १५० अध्यायः; ५. 'राजन्नत्ययात्' इति कुं. पाठः ।

**व्यत्ययात् सुतकारणात्** इत्यत्र **व्यत्ययात्**, विशेषण **अत्ययात्** गतोऽभूत् ।

**सम्प्राप्ता ह्यप्सरा राजन्मेनकेत्यभिविश्रुता ।**
**तस्यां च विलपन्त्यां वै राज्ञो दर्शनमागमत्** [1] ॥ १० ॥

**तस्यां च विलपन्त्यां वै** इत्यत्र विशेषेण **लपन्त्यां**, पुनः पुनः क्रीडन्त्यां च सत्याम् ।

**ततः स राजा राजेन्द्र लज्जया नृपतिः स्वयम् ।**
**पद्भ्यामाक्रमतायुष्मं तस्मात्तु द्रुपदोऽभवत्** ॥ १२ ॥

**तस्मात्तु द्रुपद** इत्यत्र **तस्मात्** पदा द्रुतत्वात् ।

॥ इति त्र्यशीतितमोऽध्यायः ॥

## ॥ अथ चतुरशीतितमोऽध्यायः ॥

[2] **ततोऽदीर्घेण कालेन कुन्तीपुत्रो युधिष्ठिरः ।**
[3] **पित्र्यामन्तर्दधे कीर्तिं शीलवृत्तसमाधिभिः** ॥ ४ ॥

**पित्र्यामन्तर्दधे कीर्तिम्** इत्यत्र **अन्तर्दधे** अन्तर्हितामकरोत् । 'पुत्रादिच्छेत् पराभवम्' इति वचनात् स्वकीर्तेरधिकत्वेन सा कीर्तिस्तिरोहिताऽभूदिति भावः । यद्वा, **अन्तः** स्वहृदये **दधे** पाण्डोः कीर्तिं दधारेत्यर्थः ।

---

१. **'पुष्पद्रुमान् सज्जमाना'** इति कुं. पाठः ।
२. कुं. १५१ **अध्यायः**
३. $T_2$,G,$M_5$; BORI पृ. ९२७; **'पितुरन्तर्दधे'** इति कुं. पाठः ।

[१] **लक्षवेद्ये च मोक्षे च तोमरग्रहणेऽपि च ।**
**क्षुरनाराचमल्लानां विपाठानां च तत्त्ववित्** ॥ ७ ॥

**लक्षवेद्ये च मोक्षे च** इत्यत्र लक्षस्य **वेद्ये** वेदनयोग्ये कौशले, छायां दृष्ट्वा लक्षदर्शनादिचमत्कार इत्यर्थः । क्षुरनाराचविपाटाद्याः शरजातिविशेषाः ।

[२] **तीर्थात्तीर्थगतं अस्त्रं मया सङ्क्रामितं त्वयि ।**
**तपसा यन्मया प्राप्तममोघमशनिप्रभम्** ॥ ११ ॥

**तीर्थात्तीर्थगतम्** इत्यत्र [३]'निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ' इत्यभिधानात् **तीर्थात्** प्रागेकस्माद्गुरोः **तीर्थगतं** पुनर्गुर्वन्तरे प्रापितं अस्त्रं मया त्वयि सङ्क्रामितम् ।

[४] **सर्वां तामखिलां नीतिं पातालाधिपतेस्तथा ।**
**अस्त्रे शस्त्रे च शास्त्रे च रथनागाश्वकर्मणि ।**
**अवाप्य सहदेवोऽपि भ्रातॄणां ववृते वशे** ॥ ४२ ॥

**सर्वां तामखिलां नीतिं पातालाधिपतेस्तथा** इत्यत्र **पातालाधिपतिः** शेषः तद्रूपाद्बलरामादित्यर्थः ।

**तं दृष्ट्वा कर्मभिः पार्थान् सर्वानागतलक्षणान् ।**
**बलाद्बहुगुणांस्तेभ्यो** [५]**बिभियुर्दुष्टबुद्धयः** ॥ ५३ ॥

---

१ D$_{1}$,(Marg.sec.M.)$_{5}$S(except)T$_{1}$,G$_{1,3}$; BORI पृ. ९२७; 'धनुष्यदृढमुष्टित्वं लाघवे वेधने तथा' इति कुं. पाठः ।

२ 'तीर्थात्तीर्थं गमयितुमहमेतत्समुद्यतः' इति कुं. पाठः; ३. अ.को. ३-३-८६

४ 'नीतिमान् सकलां नीतिं त्रिबुधाधिपतेस्तदा' इति कुं.पाठः ।

५ 'बिभियुर्दोषबुद्धयः' इति कुं. पाठः ।

**बिभियुर्दुष्टबुद्धय** इत्यत्र **बिभियुः** बिभ्युरित्यर्थः ।

॥ इति चतुरशीतितमोऽध्यायः ॥

## ॥ अथ पञ्चाशीतितमोऽध्यायः ॥

**वैशम्पायन उवाच –**

**दुर्योधनोऽथ शकुनिः कर्णदुःशासनावपि ।**[1]
**कणिकं ह्युपसंगृह्य मन्त्रिणं सौबलस्य च** ॥ ४ ॥

**मन्त्रिणं सौबलस्य च** इत्यत्र **मन्त्रिणं** दुर्मन्त्रदातारं कलिङ्गमित्यर्थः ।

**अनूनं सर्वपक्षाणां यद्भवेत् क्षेमकारकम् ।**
**भारद्वाज तदाचक्ष्व करिष्यामः कथं वयम्** ॥ ६ ॥

**भारद्वाज तदाचक्ष्व** इत्यत्र **भारद्वाज** (भा)भरद्वाजकुलोत्पन्न इति कलिङ्गस्य सम्बुद्धिः ।

**नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः ।**
**अच्छिद्रश्छिद्रदर्शी स्यात् परेषां विवरानुगः** ॥ ९ ॥

**अच्छिद्रः** आच्छादितस्वदोषः ।

**नास्य च्छिद्रं परः पश्येच्छिद्रेण परमन्वियात् ।**
**गूहेत् कूर्म इवाङ्गानि रक्षेद्विवृतमात्मनः**[2] ॥ ११ ॥

**रक्षेद्विवृतमात्मन** इत्यत्र **विवृतं** विचारम् ।

---

१. कुं. १५३ अध्यायः ; २. 'रक्षेद्विवरमात्मनः' इति कुं. पाठः ।

**हन्यादमित्रं दानेन तथा पूर्वापकारिणम् ।**
**हन्यात् त्रीन्पञ्च सप्तेति परपक्षस्य सर्वशः ॥ २५ ॥**

**हन्यात्त्रीन् पञ्च सप्तेति परपक्षस्य सर्वश** इत्यत्र परपक्षस्य इति नीतिशास्त्रोक्तप्रकारेण **त्रीन्** उत्साहशक्तिमन्त्रशक्तिप्रभुशक्त्याख्यान् त्रीन्, इति नीतिशास्त्रोक्तप्रकारेण **पञ्च** सामदानभेददण्डसेनासन्नाख्यान् पञ्च । यद्वा, 'सहायः साधनोपायो विभागो देशकालयोः । विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमित्यपि' इति वचनात् सहायाद्यङ्गपञ्चकं (वा) । इति नीतिशास्त्रोक्तप्रकारेण **सप्त** स्वाम्यमात्यजनपददण्डदुर्गकोशमित्राख्यान् सप्त च हन्यादिति सम्बन्धः ।

**मूलमेवादितश्छिन्द्यात् परपक्षस्य नित्यशः ।**
**[1]ततोऽन्यानन्तरान् पक्षान् छिन्द्यात् सर्वानशेषतः ॥ २६ ॥**

**ततोऽन्यानन्तरान्** इत्यत्र अन्ते समीपे रमन्त इत्यन्तराः तान् सहायभूतानित्यर्थः ।

**[2]आपदामथ कालेषु कुर्यान्नात्र विचारणा ।**
**नावज्ञेयो रिपुस्तात दुर्बलोऽपि कथञ्चन ॥ २१ ॥**

**आपदामथ कालेषु** इत्यत्र सुविस्सतीर्णं सुविक्रान्तं सुयुद्धकुशलमपलायिनमपि पुरुषम् **आपदां कालेषु** तस्यापदां कालेषु, अथ तस्मिन्नेव क्षणे हन्यादिति योजना ।

१. S; BORI पृ. ९३०; **'ततः सहायांस्तत्पक्षान् सर्वांश्च तदनन्तरम्'** इति कुं. पाठः ।

२. T₁,G; BORI पृ. ९३०; **'आपद्यापदि काले च कुर्वीत न विचारयेत्'** इति कुं. पाठः ।

[१] कुणात्तृणमयं चाशु शयीत मृतशायिकाम् ।
सान्त्वादिभिरुपायैस्तु हन्याच्छत्रुं वशे स्थितम् ॥ २३ ॥

**कुणात्तृणमयं चाशु** इत्यत्र कुणादिति ल्यब्लोपनिमित्ता पञ्चमी । **कुणं** कृमिविशेषं दृष्टान्तीकृत्य **तृणमयं** स्वाच्छादकतृणप्रधानो यथा भवति तथा **मृतशायिकां** मृतस्य शायिकां शयनप्रकारं आश्रित्य शयीत; नानोपायैः स्वमरणं परिहरेदित्यर्थः ।

[२] एकाग्राच्चापि वसतः नित्यं विवरदर्शकः ।
राजन्नित्यं सपत्नेषु नित्योद्विग्नः समाचरेत् ॥ २८ ॥

**एकाग्राच्चापि वसत** इत्यत्र **एकाग्रात्** एकाग्रभावात् वसतः पुरुषस्य आत्मनि च्छिद्रं यथा न भवति तथा विचार्य तिष्ठतोऽपि पुरुषस्येत्यर्थः।

अग्न्याधानेन यज्ञेन काषायेण जटाजिनैः ।
[३] लोकं प्रस्तावयित्वैवं ततो लुम्पेद्यथा वृकः ॥ २९ ॥

**लोकं प्रस्तावयित्वैवम्** इत्यत्र एवं छद्मकृतपूर्वोक्तजटाजिनाग्निहोत्रादिभिः लोकं **प्रस्तावयित्वा** विश्वासयित्वा ततः स्वावसरे सति **लुप्येत्** नाशयेत् ।

अङ्कुशं शौचमित्याहुरर्थानामुपधारणे ॥ ३० ॥

**अङ्कुशं शौचमित्याहुः** इत्यत्र **शौचं** छद्मना कृतशौचं **अङ्कुशं** परवशीकरणहेतुत्वात् अङ्कुशमित्याहुः ।

---

१. **'कुर्यात्तृणमयं चापं शयीत मृगशायिकाम्'** इति कुं. पाठः ।
२. **'एकाग्रः स्यादविवृतो'** इति कुं. पाठः ।
३. **'लोकान्विश्वासयित्वैव'** इति कुं. पाठः । ; ४. **स्ववशे** सो.मु.पा.

**अनाम्य फलितां शाखां पक्वं पक्वं प्रशातयेत्** ॥ ३० ॥

**पक्वं पक्वं प्रशातयत्** इत्यत्र शातयेत् छिन्द्यात् ।

**जम्बुक उवाच –**

**शृणु मे त्वं महाबाहो यद्वाक्यं मूषिकोऽब्रवीत् ।**
**धिग्बलं मृगराजस्य मयाद्यायं मृगो हतः** ॥ ४६ ॥

**धिग्बलं मृगराजस्य** इत्यत्र **मृगराजस्य** व्याघ्रस्य । **मृगो हत** इत्यत्र **मृगः** सिंहः ।

**मृगमांसं न खादेयं परमेतन्न रोचते ।**
**मूषिकं भक्षयिष्यामि तद्भवाननुमन्यताम्** ॥ ५१ ॥

**मृगमांसं न खादेयम्** इत्यत्र खादितुं योग्यं **खादेयं**, अस्म-द्विधस्य **परम्** उत्तममपि तन्मृगमांसं खादेयं न ।

**पुत्रः सखा वा भ्राता वा पिता वा यदि वा गुरुः ।**
**[१]अर्थे पर्यवतिष्ठेरन् कर्तव्या भूतिवर्धनाः** ॥ ६२ ॥

**अर्थे पर्यवतिष्ठेरन्** इत्यत्र यथा अर्थे पर्यवतिष्ठेरन् तथा कर्तव्या इति योजना ।

**आश्वासयेच्चापि परं सान्त्वधर्मार्थवृत्तिभिः ।**
**अथ तं प्रहरेत् काले [२]यदा विचलितः पथि** ॥ ६७ ॥

---

१ S(except T1); BORI पृ. ९३२; **'रिपुस्थानेषु वर्तंतो हन्तव्या भूतिमिच्छता'** इति कुं.पाठः ।

२ BORI पृ. ९३२; **'तथा विचलितं पथि'** इति कुं. पाठः ।

**यदा विचलितः पथि** इत्यत्र विगतं **चलितं** चलनं यस्य स तथोक्तः पथि चलनासमर्थो यदा तदा पहरेदित्यर्थः ।

**त्रिवर्गे त्रिविधा पीडा ह्यनुबन्धास्तथैव च ।**
**अनुबन्धाः शुभा ज्ञेयाः पीडास्तु परिवर्जयेत् ॥ ७९ ॥**
**धर्मोऽतिचरितः[१] पीडां सह द्वाभ्यां प्रयच्छति ।**
**अर्थं चाप्यर्थलुब्धस्य कामं चातिप्रवर्तिनः ॥ ८० ॥**

**त्रिवर्गे त्रिविधा पीडा** इत्यत्र **त्रिवर्गे** धर्मार्थकामे त्रिविधा पीडा अस्ति । यद्वक्ष्यति– 'धर्मोऽतिचरितः पीडाम्' इत्युत्तरश्लोके । त्रिवर्गे **अनुबन्धाः** सहकारिणाश्च सन्ति । धर्मे स्नानशौचाद्याः । अर्थे कृषि-वाणिज्याद्याः । कामे पुत्रमित्रकलत्राद्याः । धर्मः **अतिचरितः** अत्यन्त-माचरितः सूर्योदयमारभ्यास्तमयपर्यन्तमाचरित इत्यर्थः । **द्वाभ्यां** अर्थकामपीडाभ्यां सह **पीडां** शरीरपीडां प्रयच्छति । शरीरं कृशं स्यात्, अर्थोपि न सिध्येत्, कामोपि न सिध्येदित्यर्थः ।

**दैवेनोपहतं शत्रुं अनुगृह्णाति यो नरः ।**
**स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ १०० ॥**

**गर्भमश्वतरी यथा** इत्यत्र अश्वतर्याः गर्भ एव नास्ति । यदृच्छया **गर्भे** मरणमेव भवतीति भावः ।

**अग्निस्तोकमिवात्मानं सन्धुक्षयति यो नरः ।**
**स वर्धमानो ग्रसते महान्तमपि सञ्चयम् ॥ १०४ ॥**

---

१. 'धर्मं विचरतः पीडा सापि द्वाभ्यां नियच्छति' इति कुं.पाठः ।
कच्चिदर्थेन वा धर्मं धर्मेणार्थमथापि वा ।
उभौ वा प्रीतिसारेण न कामेन प्रबाधसे ॥ ४-२२ सभा. (कुं.)

**अग्निस्तोकमिवात्मानम्** इत्यत्र **आत्मानं** क्रमेण व्यापनशीलं अग्निस्तोकमिव शत्रुस्तोकमपि पण्डितः **सन्धुक्षयति** नाशयति ।

**॥ इति पञ्चाशीतितमोऽध्यायः ॥**

## ॥ अथ षडशीतितमोऽध्यायः ॥

**[१]न संशयमनारुह्य नरो भद्राणि पश्यति ।**
**[२]संशयं तु अनारुह्य गदी जीवति पश्यति ॥ ८३ ॥**

**न संशयमनारुह्य नरो भद्राणि पश्यति । संशयं तु अनाारुह्य गदी जीवति पश्यति** इत्यत्र बहुतरनदीप्रवाहे बहुतरवैरिकटके चागते सति तर्तुं शक्यते  न वा, जेतुं शक्यते न वेति संशयमनारुह्य तरणजयाद्यु-पायमनालोच्य च औद्धत्यादेव गच्छन् नरो भद्राणि न पश्यति । **गदी** व्याधिग्रस्तः **संशयं** अजीत्यादिसंशयं **आरुह्य** तत्परिहर्तुमगदं च स्वीकुर्वन् जीवति, भद्राणि पश्यति च । सर्वकार्येष्वपि विचारपरो भवेदिति भावः ।

**यस्य बुद्धिः परिभवेत् तमतीतेन सान्त्वयेत् ।**
**अनागतेन दुर्बुद्धिं प्रत्युत्पन्नेन पण्डितम् ॥ ८४ ॥**

**यस्य बुद्धिः परिभवेत्तमतीतेन सान्त्वयेत् । अनागतेन दुर्बुद्धिं प्रत्युत्पन्नेन पण्डितम्** इत्यत्र **यस्य** अज्ञस्य बुद्धिः उपरितनकार्यात् **परिभवेत्** निवृत्ता भवेत् कृतेऽपि फलं भविष्यति न वेति भीत्या प्रागेव

---

१. कुं. पाठानुसारेणात्र पूर्वाध्याय एवानुसरति ।

२. $K_{1}$,$N_{1,2}$,$D_{n}$,$D_{1,2,3}$; BORI पृ. ९३३; **'संशयं पुनरारुह्य यदि जीवति पश्यति ॥'** इति कुं. पाठः ।

कुण्ठिता स्यात् तं **अतीतेन** अतीतकृतकर्मफलेन सान्त्वयेत् । **दुर्बुद्धिं** पूर्वकृतकर्मणां क्वचित्फलादर्शनात् निष्फलमेवेदमिति दुर्बुद्धिमन्तं कुतर्किणं अनागतेन फलेन सान्त्वयेत् यथा पुत्रेष्टिकृतः एकपुत्रनाशेऽपि पुनर्जीवत्पुत्रान्तरं जायते तथा तत्रापि अनुकूलकालाद्यभावेन सकृत्फलाभावेऽपि कालान्तरे फलं भविष्यतीति सान्त्वयेत् । स्वानिष्टं स्वकृतपापफलमिति जानन्तं पण्डितं तु **प्रत्युत्पन्नेन** तात्कालिकफलेनैव सान्त्वयेदित्यर्थः ।

**क्षुरो भूत्वा हरेत्प्राणान्निशितः कालसाधनः ।**
**प्रच्छन्नो[१] मूलवापी स्यात् द्विषतां परिकर्तनः ॥ १०७ ॥**

**प्रच्छन्नो मूलवापी** इत्यत्र **मूलवापी** मूलस्यैव वपनकर्ता छेत्तेत्यर्थः ।

**॥ इति षडशीतितमोऽध्यायः ॥**

## ॥ अथ सप्ताशीतितमोऽध्यायः ॥

**[२]क्षत्ताऽऽर्तबन्धुस्त्वस्माकं प्रच्छन्नस्तु यतः परे ।**
**न चैकः स समर्थोऽस्मान् पाण्डवार्थेऽधिबाधितुम् ॥ ३८ ॥**

**क्षत्ताऽऽर्तबन्धुस्त्वस्माकं प्रच्छन्नस्तु यतः पर** इत्यत्र **आर्तबन्धुः** अस्माकम् **आर्तः** हृदयेन क्लेशसहितो बन्धुः, **परे** युधिष्ठिरे **प्रच्छन्नः** प्रकर्षेण **च्छन्नः** मानसस्नेहो यस्य स तथोक्तः बन्धुरिति योजना ।

**॥ इति सप्ताशीतितमोऽध्यायः ॥**

---

१. 'प्रातिच्छन्नो लोमहारी' इति कुं. पाठः ।
२. कुं. १५५ अध्यायः; 'क्षत्ताऽर्थबद्धस्त्वस्माकं प्रच्छन्नं संयतः परैः ।' इति कुं. पाठः ।

## ॥ अथ अष्टाशीतितमोऽध्यायः ॥

**ते ताता यदि मन्यध्वं उत्सवं वारणावते ।**
**सगणाः सान्वयाश्चैव विहरध्वं यथाऽमराः ॥ १० ॥**

**ते ताता यदि मन्यध्वम्** इत्यत्र ते यूयमिति योग्यपदाध्याहारेण योजना ।

**वैशम्पायन उवाच –**

**एवमुक्तास्तु ते सर्वे पाण्डुपुत्रेण कौरवाः ।**
**प्रसन्नवदना भूत्वा [१]तेऽभ्यवर्धन्त पाण्डवान् ॥ २० ॥**

**तेऽभ्यवर्धन्त पाण्डवान्** इत्यत्र **अभ्यवर्धन्त** अभ्यवर्धयन्त । पाण्डवानामभिवृद्धिः स्वशक्त्यैवेति सूचनाय अणिजन्तप्रयोगः ।

॥ इत्यष्टाशीतितमोऽध्यायः ॥

## ॥ अथ एकोननवतितमोऽध्यायः ॥

**[२]न हि मे कश्चिदन्योऽस्ति [३]वैश्वासिकतरस्त्वया ।**
**सहायो येन सन्धाय मन्त्रयेयं यथा त्वया ॥ ५ ॥**

**वैश्वासिकतरस्त्वया** इत्यत्र अतिशयेन विश्वासयोग्यो वैश्वासिकतरः ।

**संरक्ष तात मन्त्रं च सपत्नांश्च ममोद्धर ।**
**निपुणेनाभ्युपायेन यद्ब्रवीमि तथा कुरु ॥ ६ ॥**

---

१. BORI पृ. ५८१; 'तेऽन्ववर्तन्त' इति कुं. पाठः ।
२. पृ. १५६ अध्यायः ; ३. 'विश्वासिकतरस्त्वया' इति कुं.पाठः ।

**सपत्नांश्च ममोद्धर** इत्यत्र उत् उत्कर्षेण **हर** संहरेत्यर्थः ।

**शणसर्जरसादीनि यानि द्रव्याणि कानिचित् ।**
**आग्नेयान्यत्र**[१] **कुड्येषु तानि तत्र प्रदापय ॥ १० ॥**

**आग्नेयान्यत्र कुड्येषु** इत्यत्र **आग्नेयानि** अग्निसम्बन्धे सति शीघ्रं दाहयोग्यानि वस्तूनि ।

**बल्बजेन च संमिश्रं मधूच्छिष्टेन चैव हि ।**
**सर्पिस्तैलवसमाभिश्च लाक्षया चाप्यनल्पया ।**
**मृत्तिकां मिश्रयित्वा त्वं लेपं कुड्येषु दापय ॥ ११ ॥**

**बल्बजेन च संमिश्रम्** इत्यत्र [२]'उलपा बल्बजाः प्रोक्ता इषीका काश उच्यते' इत्यभिधानात् **बल्बजं** इषीकातृणम् ।

**यथा च तन्न शङ्केरन्**[३] **परीक्षन्तोऽपि पाण्डवाः ।**
**आग्नेयमिति तत् कार्यमपि चान्येऽपि मानवाः ॥ १४ ॥**

**यथा च तन्न शङ्केरन्** इत्यत्र **तत्** गृहं परीक्षन्तोपि पाण्डवाः आग्नेयमिति यथा न शङ्केरन्, अन्येऽपि मानवाः यथा न शङ्केरन् तथा तद्गृहं कार्यमिति योजना ।

॥ इति एकोननवतितमोऽध्यायः ॥

* * *

---

१. $\tilde{N}_1$,T,G; BORI पृ. ५८२; **'आग्नेयान्युत सन्तीह'** इति कुं. पाठः ।
२. ह.को. २-१९१
३. BORI पृ. ५८२; **'पश्येरन्'** इति कुं. पाठः ।

## ।। अथ नवतितमोऽध्यायः ।।

[1]स तस्मिन् [2]पुरुषव्याघ्रेऽदृष्टभावं गते सति ।
राजपुत्रानिमान् बालान् धृतराष्ट्रो न मृष्यति ।। १९ ।।

स तस्मिन् पुरुषव्याघ्रेऽदृष्टभावम् इत्यत्र **अदृष्टभावं** मरणम् ।

[3]प्राज्ञः प्राज्ञप्रलापज्ञ प्रलापज्ञमिदं वचः ।
यो जानाति परप्रज्ञां नीतिशास्त्रानुसारिणीम् ।
विज्ञायेह तथा कुर्यादापदं निस्तरेद्यथा ।। २० ।।

अलोहं निशितं शस्त्रं शरीरपरिकर्तनम् ।
यो वेत्ति न तु तं घ्नन्ति प्रतिघातविदं द्विषः ।। २१ ।।

[4]कक्षघ्नं शिशिरघ्नं च महाकुक्षेः बलोजसम् ।
न सहेतेति चात्मानं यो रक्षति स जीवति ।। २२ ।।

नाचक्षुर्वेत्ति पन्थानं नाचक्षुर्विन्दते दिशः ।
नाधृतिर्भूतिमाप्नोति बुद्ध्यस्वैवं प्रबोधितः ।। २३ ।।

अनाप्तैर्दत्तमादत्ते नरः शस्त्रमलोहजम् ।
श्वाविच्छरणमासाद्य प्रमुच्येत हुताशनात् ।। २४ ।।

---

१. कुं. १९७ अध्यायः
२. 'तस्मिन्पुरुषव्याघ्रे देवभावं' इति कुं. पाठः ।
३. 'प्राज्ञः प्राज्ञं प्रलापज्ञः' इति कुं. पाठः ।
४. S: BORI पृ. ५८५; 'कक्षघ्नः शिशिरघ्नश्च महाकक्षे बलौकसः । न सहेतेति-' इति कुं. पाठः ।

**चरन् मार्गान् विजानाति नक्षत्रैर्विन्दते दिशः ।**
**आत्मना चात्मनः पञ्च पीडयन्नानुपीड्यते ॥ २५ ॥**

**प्राज्ञः प्राज्ञप्रलापज्ञ** इत्यादिविदुरनिगूढोक्तिरूपषट्पद्यानामयं भावः – **प्राज्ञः** स्वयं कुशलः **प्राज्ञप्रलापज्ञः** प्राज्ञस्य सञ्ज्ञया वदतः कुशलस्य प्रलापं यो जानाति स तथोक्तः । **इदं** उपरि वक्ष्यमाणं सञ्ज्ञा-वचनं विज्ञाय **आपदं** स्वपीडारूपसङ्कटं यथा निस्तरेत्तथा कुर्यात् इति नीतिकथनव्याजेन धर्मराजं प्रत्येव बुद्धिकथनम् । ये पुरुषाः **अलोहं** लोहव्यतिरिक्तं **निशितं** शरीरपरिकृन्तनं **शस्त्रं** कपटगृहादिरूप-शस्त्रम् । शरीरं परितः कृन्ततीत्युक्त्या स्वोक्तशस्त्रस्य सर्वाङ्गव्रणका-रित्वं सूचयति । तान् प्रतिघातविदः स्ववैरिनाशककपटतन्त्रवेत्तॄन् तथा स्वचिकीर्षितप्रकारेण न घ्नन्ति । 'यो वेत्ति न च तं घ्नन्ति प्रति-घातमिमं द्विष' इति पाठे इमं प्रतिघातं यो वेत्ति तं द्विषः न घ्नन्तीति योजना । **कक्षघ्नं** वननाशकं, **शिशिरघ्नं** हिमनाशकं, महाकुक्षेः[१] बलं ओजश्च यस्मात्तत्तथोक्तम् । वननाशकत्वतुहिनौषधत्वभुक्तान्नपाच-कत्वरूपलिङ्गेन तच्छस्त्रं अग्निरूपमिति सूचयति । ईदृग्रूपं शस्त्रं मानुषदेहो न सहेतेति मत्वा आत्मानं स्वदेहं यो रक्षति स जीवति । अचक्षुः अन्धः **पन्थानं** मार्गं न वेत्ति । अचक्षुर्दिशोपि न वेत्ति । **अधृतिः** अधैर्यवान् **भूतिं** ऐश्वर्यं नाप्नोति । एतत्प्रमेयं मया बोधितस्त्वं बुध्यस्वेति भीमं प्रति क्षत्ता[२]ऽऽह । अनेन चक्षुष्मता त्वया दाहकगृहान्नि-र्गमनमार्गः गन्तव्या दिक् च बोद्धुं शक्यत इति, तमोनिबिड-गुहान्तर्गमने धीरेण च भवितव्यमिति च सूचितम् । धीरः अनाप्तैर्दत्तं अलोहजं शस्त्रं विषदूषितभक्ष्यादिरूपशस्त्रं नादत्ते । अनेन भवद्वैरिणः

१. **महतः कुक्षेः** सो.मु.पा. ; २. **कटाक्षः** सो.मु.पा.

विषान्नादिकं दास्यन्ति, तन्न भोक्तव्यमिति सूचितम् । **श्वाविट्** शल्यकः। [1] 'शललः शल्यकः श्वाविट्' इति हलः । **शरणं** [2] रक्षकम् । [3] 'शरणं गृहरक्षित्रोः' इत्यमरः । स्वपक्षद्वयमासाद्य **हुताशनात्** वनानलात् प्रमुच्येतेत्युक्त्या स्वबाहुबलेनाग्निं निस्तरेति सूचितम् । धीर इत्युक्त्या इदं सर्वं भीमेनैव कर्तव्यमिति सूचयति । चरन्मार्गान्विजानातीत्यनेन अन्धकारेऽपि अग्रे अग्रे चरणं सञ्चारयित्वा गुहामार्गो ज्ञेय इति सूचयति । नक्षत्रैर्विन्दते दिश इत्यनेन गुहानिर्गमनानन्तरं नक्षत्रवीथीं ज्ञात्वा हास्तिनपट्टणव्यतिरिक्तमार्गेणैव गन्तव्यमिति सूचयति । **आत्मना** बुद्ध्या **पञ्च आत्मनः** स्वप्रतिनिधिभूतान् पञ्चजीवान् पुरोचनस्य स्वस्त्रीयान् पीडयन् सः मदुक्तकारी न पीड्यते । अपि च **आत्मना** चित्तेन **आत्मनः** स्वस्य पञ्च पञ्चेत्यावृत्त्या योजनीयम् । ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च **पीडयन्** जयन् सः सदुक्तकारी **न पीड्यते** शत्रुभिर्न पीड्यते । शत्रून् जित्वा वसुधां प्राप्स्यतीति भावः । [4] 'जितेन्द्रियश्च वसुधां प्राप्स्यसीति वचोऽब्रवीत्' इति वक्ष्यमाण-वाक्यद्वयमपि योजना आवश्यकी ।

॥ इति नवतितमोऽध्यायः ॥

## ॥ अथ एकनवतितमोऽध्यायः ॥

[5] **यदि तच्छक्यमस्माभिः श्रोतुं न च न दोषवत् ।**
**श्रोतुमिच्छामि तत्सर्वं संवादं तव तस्य च ॥ ३० ॥**

---

१. ह.को. २-२३३ प्र.पाठः 'शललः शालूकः श्वाविट्' इति ।
२. रक्षितारं सो.मु.पा. ; ३. अ.को. ३-३-५३ ; ४. आदि १५७-३२
५. कु. १५८ अध्यायः ; BORI पृ. ५८६; 'यदीदं शक्यमस्माभिर्ज्ञातुं नैव च दोषवत्' इति कुं. पाठः ।

**यदि तच्छक्यमस्माभिः श्रोतुं न च न दोषवत्** इत्यत्र अस्माभिः श्रोतुं शक्यं नेति न। दोषवच्च नेति योजना।

**शिल्पिभिः स्वहितैराप्तैः[1] विनीतैर्वेश्मकर्मणि।**
**विश्वस्तं मामयं पापो दग्धुकामाः पुरोचनः ॥ १७ ॥**

**स्वहितैराप्तैः** इत्यत्र **स्वस्य** पुरोचनस्य हितैरित्यर्थः ।

**आपदं तेन मां पार्थ स सम्बोधितवान् तदा[2]।**
**ते वयं बोधितास्तेन नित्यमस्मद्धितैषिणा ॥ १९ ॥**

**आपदं तेन मां पार्थ** इत्यत्र **तेन** कपटकृतत्वकारणेन दुर्योधनेन कृतामापदं वा मां विदुरः **तदा** आगमनकाले बोधितवानिति योजना।

**युधिष्ठिर उवाच –**

**[3]इह यत्तैर्निराकारैर्वस्तव्यमिति रोचते।**
**तुष्टैरिव विचिन्वद्भिर्गतिमन्यां ध्रुवामितः ॥ ३८ ॥**

**इह यत्तैर्निराकारैर्वस्तव्यमिति रोचते । तुष्टैरिव विचिन्वद्भिर्गतिमन्यां ध्रुवामित** इत्यत्र **यत्तैः** सन्नद्धैः **निराकारैः** निर्गतकुपिताकारैः **तुष्टैरिव** सन्तुष्टैरिव विद्यमानैः इतः अन्यां ध्रुवां **गतिं** निस्सरणमार्गं **विचिन्वद्भिः** विचारयद्भिरस्माभिः **इह** इहैव वस्तव्यमिति रोचत इति योजना।

---

१. '**सुकृतं ह्याप्तैः**' इति कुं. पाठः।
२. $D_5$; BORI पृ. ५८८; '**पुरा**' इति कुं.पाठः।
३. '**इह यत्तैर्निराकारैर्वस्तव्यमिति रोचये । अप्रमत्तैर्विचिन्वद्भिर्गतिमिष्टां ध्रुवामितः ॥**' इति कुं. पाठः।

**उपपन्नं तु दग्धेषु कुलवंशानुकीर्तिताः ।**
**कुप्येरन् यदि धर्मज्ञास्तथान्ये कुरुपुङ्गवाः ॥ ४३ ॥**

**उपपन्नं तु दग्धेषु कुलवंशानुकीर्तिताः । कुप्येरन् यदि धर्मज्ञा-स्तथाऽन्ये कुरुपुङ्गवा** इत्यत्र **कुले** सत्कुले **वंशे** क्षत्रवंशे च **अनुकीर्तिताः** प्रसिद्धाः **अन्ये कुरुपुङ्गवाश्च दग्धेषु** वंशप्रवर्तकेष्व-स्मासु दग्धेषु सत्सु यदि कुप्येरन् तर्हि **उपपन्नं तु** उपपन्नमेवेति योजना ।

॥ इति एकनवतितमोऽध्यायः ॥

## ॥ अथ द्विनवतितमोऽध्यायः ॥

**यथा तस्य तथा नस्त्वं निर्विशेषा वयं त्वयि ।**[१]
**भवितास्मो यथा तस्य पालयास्मान् यथा कविः ॥ ८ ॥**[२]

**भवितास्मो यथा तस्य** इत्यत्र **तस्य** विदुरस्य वयं यथा भवितास्मः भविष्यामः । **कविः** स विदुरः यथा अस्मान् पालयति तथा अस्मान् त्वं पालयेति योजना ।

**वैशम्पायन उवाच –**

**स तथेति प्रतिश्रुत्य खनको यत्नमास्थितः ।**
**परिखामुत्किरन्नाम चकार च महाबिलम् ॥ १९ ॥**

**परिखामुत्किरन्नाम** इत्यत्र **नाम** लोकप्रसिद्ध्या परिखाम् **उत्किरन्** [illegible] ।

---

१. ९९. अध्यायः; २. 'भवतश्च' इति कुं. पाठः ।

चक्रे च वेश्मनस्तस्य मध्ये [1]नातिमहन्मुखम् ।
कपाटयुक्तमज्ञातं समं भूम्याश्च भारत ॥ १६ ॥

मध्ये नातिमहन्मुखम् इत्यत्र नातिमहत् सूक्ष्मं मुखं गुहामुखं चक्रे ।

॥ इति द्विनवतितमोऽध्यायः ॥

## ॥ अथ त्रिनवतितमोऽध्यायः ॥

[2]आयुधागारमादीप्य दग्ध्वा चैव पुरोचनम् ।
षट्प्राणिनो निधायेह द्रवामोऽनभिलक्षिताः ॥ ६ ॥

षट् प्राणिनो निधायेह इत्यत्र एकां पुरोचनस्वसारं पञ्च तस्याः पुत्रान् इह दीप्यमानगेहे ।

॥ इति त्रिनवतितमोऽध्यायः ॥

## ॥ अथ पञ्चनवतितमोऽध्यायः ॥

[3]तरसा वेगितात्मानौ निर्भेत्तुमपि मन्दरम् ।
परासुत्वं न पश्यामि पृथायाः सह पाण्डवैः ॥ ३२ ॥

परासुत्वं न पश्यामि इत्यत्र परासुत्वं मृतत्वम् ।

सर्वथा विकृतं तत्तु यदि ते निधनं गताः ।
धर्मराजः स निर्दिष्टो ननु विप्रैर्युधिष्ठिरः ॥ ३३ ॥

---

१. BORI पृ. ५९२; 'नातिमहद्बिलम्' इति कुं. पाठः ।
२. कुं. १६० अध्यायः
३. कुं. १६२ अध्यायः

**सर्वथा विकृतं तत्तु** यदि ते निधनं गता इत्यत्र **तत्** मृतत्वं **विकृतं** विरुद्धतया कृतं विरुद्धमित्यर्थः ।

**कथं त्वत्प्रमुखाः सर्वे प्रमुक्ता महतो भयात् ।**
**जननी गरुडेनेव कुरवस्ते समुद्धृताः ॥ ६१ ॥**

**कथं त्वत्प्रमुखाः सर्वे** इत्यत्र त्वं प्रमुखं प्रधानपुरुषो येषां ते त्वत्प्रमुखाः ।

**ततः खनकमाहूय सुरङ्गं वै बिलं तदा ।**
**सुगूढं कारयित्वा ते कुन्त्या पाण्डुसुतास्तदा ॥ ६६ ॥**

**सुरङ्गं वै बिलं तदा** इत्यत्र **सुरङ्गम्** इति भूम्यन्तःक्रियमाणबहु-जनगमनयोग्यबिलस्य नाम ।

॥ इति पञ्चनवतितमोऽध्यायः ॥

## ॥ अथ सप्तनवतितमोऽध्यायः ॥

**असकृच्चापि सन्तीर्य परं पारं भुजप्लवाः ।**[१]
**पथि प्रच्छन्नमासेदुर्धार्तराष्ट्रभयात्तदा ॥ ६ ॥**

**परं पारं भुजप्लवा** इत्यत्र नौकादण्डग्राहिभिर्भुजैर्नावं प्लावयन्तीति भुजप्लवाः । **दूरपारं भुजप्लवैः** इत्यत्र दूरे **पारम्** अपरतीरं यस्य तादृशं [illegible] जलप्रवाहं **भुजप्लवैः** भीमसेनस्य भुजाख्यप्लवैः ।

**[illegible] समभवत् सन्ध्या दारुणा मृगपक्षिणः ।**
**[illegible]प्रकाशा दिशः सर्वा वातैरासन्ननार्तवैः ॥ ९ ॥**

---

[१] [illegible] १६३ अध्यायः ।

**वातैरासन्ननार्तवैः** इत्यत्र वातयोग्यऋतुसम्बन्धिनो न भवन्तीति **अनार्तवाः** तैः **वातैः** अकालिकवातैरित्यर्थः ।

**शीर्णपर्णफलै राजन् बहुगुल्मक्षपद्रुमैः**[1] ।
**भग्नावभुग्नभूयिष्ठैर्नानाद्रुमसमाकुलैः** ॥ १० ॥

**बहुगुल्मक्षपद्रुमैः** इत्यत्र बहुगुल्मानि **क्षपा** निबिडान्धकारश्च येषु तैर्द्रुमैरित्यर्थः ।

**नातिदूरेण नगरं वनादस्माद्धि लक्षये ।**
**जागर्तव्ये स्वपन्तीमे हन्त जागर्म्यहं स्वयम्** ॥ ५३ ॥

**जागर्तव्ये स्वपन्तीम** इत्यत्र **जागर्तव्ये** जागरणयोग्ये महाकानने ।

**प्राश्यन्तीमे जलं पश्चात् प्रतिबुद्धा जितक्लमाः ।**
**इति भीमो व्यवस्यैव जजागार स्वयं तदा** ॥ ५४ ॥

**जजागार स्वयं तदा** इत्यत्र **जजागार** जागरं कृतवान् । लिटो रूपमिदम् ।

**॥ इति सप्तनवतितमोऽध्यायः ॥**

## ॥ अथ अष्टनवतितमोऽध्यायः ॥

**ऊर्ध्वाङ्गुलिः सकण्डूयः**[2] **धुन्वन् रूक्षान् शिरोरुहान् ।**
**जृम्भमाणो महावक्त्रः पुनः पुनरवेक्ष्य च** ॥ ६ ॥

**ऊर्ध्वाङ्गुलिः सकण्डूय** इत्यत्र **सकण्डूयः** कण्डूयनेन सहितः ।

---

१. कुं. १६४ **अध्यायः ; '-क्षुपद्रुमैः'** इति कुं. पाठः ।
२. **'स कण्डूयन्'** इति कुं. पाठः ।

अष्टौ दंष्ट्राः सुतीक्ष्णाग्राश्चिरस्यापातदुःसहाः ।
देहेषु मज्जयिष्यन्ति[१] स्निग्धेषु पिशितेषु च ॥ ९ ॥

मज्जयिष्यन्ति इत्यत्र मज्जयिष्यन्ति मज्जिष्यन्ति । स्वार्थिको णिच् ॥

त्रास्येऽहं[२] त्वां महाराजा राक्षसात् पुरुषादकात् ।
वत्स्यावो गिरिदुर्गेषु भर्ता तव ममानघ ॥ ३९ ॥

त्रास्येऽहं त्वां महाराजा इत्यत्र त्रास्ये रक्षिष्ये । 'त्रैङ् परिपालने' इति धातुः ।

भीमसेन उवाच –

एष ज्येष्ठो मम भ्राता मान्यः परमको गुरुः ।
अनिविष्टश्च[३] तन्नाहं परिवेत्ता[४] कथञ्चन ॥ ४२ ॥

अनिविष्टश्च तन्नाहम् इत्यत्र निवेशनं विवाहः अनिविष्टः अकृतोद्वाहः । परिवेत्ता 'विद्ऌ लाभे' इति धातोः स्त्रीपरिग्रहकर्ता ।

॥ इति अष्टनवतितमोऽध्यायः ॥

॥ अथ एकोनशततमोऽध्यायः ॥

हिडिम्बोवाच –

नावमन्ये[५] नरव्याघ्र त्वामहं देवरूपिणम् ।
दृष्टप्रदानस्तु[६] मया मानुषेष्विह राक्षसः ॥ १३ ॥

---

१ G₁,M; BORI पृ. ६०२; 'मज्जयिष्यामि' इति कुं. पाठः ।
२ BORI पृ. ६०५; 'त्रास्यामि त्वां महाबाहो' इति कुं. पाठः ।
३ BORI पृ. ६०५; 'अनिविष्टो हि' इति कुं. पाठः ।
४ $G_{1,2,4,5}$; 'परिविद्यां' इति कुं. पाठः । ; ५. कुं. १६५ अध्यायः
६ BORI पृ. ६०७; 'दृष्टप्रभावस्तु मया मानुषेष्वेव' इति कुं. पाठः ।

**दृष्टाप्रदानास्तु मया** इत्यत्र **इह** लोके राक्षसाः मानुषेषु मया **दृष्टाप्रदानाः** दृष्टमप्रदानं येषां ते तथोक्ताः । राक्षसानां मानुषेषु प्रदानं कुत्रापि न दृष्टम् । किन्त्वप्रदानमेव दृष्टमित्यर्थः । **राक्षसो** हिडिम्बः मानुषे त्वयि मां न दास्यतीति शङ्कया भीताऽस्मीति भावः ।

**॥ इति एकोनशततमोऽध्यायः ॥**

## ॥ अथ शततमोऽध्यायः ॥

**[१] मय्येव प्रहरैहि त्वं न स्त्रियं हन्तुमर्हसि ।**
**विशेषतो नापकृते परेणापकृते सति ॥ २७ ॥**

**न हीयं स्ववशा बाला कामयत्यद्य मामिह ।**
**चोदितैषा ह्यनङ्गेन शरीरान्तरचारिणा ॥ २८ ॥**

**विशेषतो नापकृत** इत्यत्र **परेण** कामेन **अपकृते** अपकारे कृते सति इयं विशेषतः तव **अपकृते** अपकारे **न** कर्त्री न । एतदेव विशदयति– **न हीयं स्ववशा** इत्यादिना ।

**बलिनं मन्यसे यच्चाप्यात्मानं सपराक्रमम् ।**
**ज्ञास्यस्यद्य समागम्य मयाऽऽत्मानं बलाधिकम् ॥ ३८ ॥**

**मयाऽऽत्मानं बलाधिकम्** इत्यत्र **आत्मानं** माम् । 'बलहीनं तथा भुवि' इति पाठे स्पष्टोऽर्थः ।

**॥ इति शततमोऽध्यायः ॥**

---

१. अत्र कुं.पाठानुसारेण पूर्वाध्याय एवानुसरति ।

## ॥ अथ एकाधिकशततमोऽध्यायः ॥

[१]ततो वृतो मया भर्ता तव पुत्रो महाबलः ।
अपनेतुं [२]व्यवसितो न चैव शकितो मया ॥ ९ ॥

**अपनेतुं व्यवसित** इत्यत्र **अपनेतुं** त्यक्तुं **व्यवसितः** तदुपरि मया न कथितश्च ।

**त्वरस्व भीम मा क्रीड जहि रक्षो विभीषणम् ।
पुरा विकुरुते मायां भुजयोः सारमर्पय ॥ २६ ॥**

**पुरा मायां विकुरुत** इत्यत्र **पुरा** उपरि बाहुयुद्धायासामर्थ्ये सति **मायां** मायायुद्धं **विकुरुते** विविधतया करिष्यति । अतः शीघ्रं जहीति भावः ।

॥ इति एकाधिकशततमोऽध्यायः ॥

## ॥ अथ द्व्यधिकशततमोऽध्यायः ॥

[१]**अहं ते दर्शनादेव मन्मथस्य वशं गता ।
क्रूरं भ्रातृवचो हित्वा सा त्वामेवानिरुन्धती ॥ ३ ॥**

**सा त्वामेवानिरुन्धति** इत्यत्र निरोधं प्रतिकूलं कुर्वाणा न भवतीति **अनिरुन्धती**, सेवमानेति यावत् ।

**राक्षसे रौद्रसङ्काशे तवापश्यं विचेष्टितम् ।
अहं शुश्रूषुरिच्छेयं तव गात्रं निषेवितुम् ॥ ४ ॥**

१ कुं. १६६ अध्यायः ; २. S; BORI पृ. ६१२; 'च यतितो' इति कुं. पाठः
१ कुं. १६७ अध्यायः

**अहं शुश्रूषुरिच्छेयम्** इत्यत्र **शुश्रूषुः** परिचर्यां कुर्वती अहं तव गात्रं **निषेवितुमिच्छामि**, अङ्गसङ्गमिच्छामीति यावत् ।

**पृष्ठेन वो वहिष्यामि विमानं सुकृतानिव ।**
**यूयं प्रसादं कुरुत भीमसेनो भजेत माम् ॥ २० ॥**

**पृष्ठेन वो वहिष्यामि विमानं सुकृतानिव** इत्यत्र सु शोभनं कृतं कर्म येषां ते **सुकृताः** पुण्यात्मानः तान् विमानमिव ।

**न यातुधान्यहं त्वार्ये न चास्मि रजनीचरी ।**
**ईशा रक्षास्सुता याऽस्मि राज्ञि सालकटङ्कटी ॥ १७ ॥**

**पुत्रेण तव संयुक्ता युवतिर्देववर्णिनी ।**
**सर्वान् वोऽहमुपस्थास्ये पुरस्कृत्य वृकोदरम् ॥ १८ ॥**

**न यातुधान्यहं त्वार्ये न चास्मि रजनीचरी । ईशा रक्षस्सुता याऽस्मि राज्ञि सालकटङ्कटी ॥ पुत्रेण तव संयुक्ता युवतिर्देववर्णिनि** इत्यत्र **हे राज्ञि** कुन्ति **ईशा** सर्वेश्वरेण, ईट्शब्दस्य तृतीयान्तं रूपमिदम् । ईश्वराज्ञयेत्यर्थः । या अहं **सालकटङ्कटी** सालवनेषु सञ्चरणे सति अयस्सारोपमस्वाङ्गशिलासङ्घट्टनेन कटङ्कटध्वानो येभ्यस्ते **सालकटङ्कटाः**, वनसञ्चारिणो राक्षसा इति यावत्, तेषां सम्बन्धिनी **सालकटङ्कटी** । यद्वा **सालेन** सालवृक्षेण **कटस्य** वन्यकरिकुम्भस्थलस्य कटं सङ्कटं येभ्यस्ते राक्षसाः सालकटङ्कटाः तेषां सम्बन्धिनी **सालकटङ्कटी, रक्षस्सुता** हिडिम्बमातुरुदराज्जाता अस्मि । हे आर्ये सा अहं **यातुधानी यातूनि** यातनास्तीव्रवेदनाः धीयन्तेऽस्यामिति यातुधानी

१. $M_3$; BORI पृ. ६१७; **'रक्षस्स्वसा ह्यस्मि'** इति कुं. पाठः ।

अन्धन्तमोयोग्या जातिराक्षसी नास्मि । **रजनीचरी** रजनीचरस्येयं रजनीचरी राक्षसपत्न्यपि इतः पूर्वं नास्मि । किन्तु **देववर्णिनी** देववर्ण-[1] वर्ती युवतिः, देवनारीत्यर्थः । अस्मि । अतस्तव पुत्रेण संयुक्ता भवामीति योजना । ईश्वराज्ञया शापवशाद्राक्षसयोनौ जाताऽप्यहं स्वभावाद्देवाङ्गनैव । अतो भीमस्य सङ्गं योग्यैवेति भावः ॥

**एवं ब्रुवन्ती ह तथा प्रत्याख्याता क्रियां प्रति ।**
**भूम्यां दुष्कृतिनो लोकान् गमिष्येऽहं न संशयः ॥ २१ ॥**

**एवं ब्रुवन्ती ह तथा प्रत्याख्याता क्रियां प्रति । भूम्यां दुष्कृतिनो लोकान् गमिष्येऽहं न संशय** इत्यत्र **एवं** उक्तविधया भवत्सङ्गयोग्या भवामीति ब्रुवन्ती अहं **तथा** तथापि मया यथोक्तं तथा **क्रियां** भवत्सेवादिक्रियां प्रति **प्रत्याख्याता** निराकृता सती भूम्यां **दुष्कृतिनः** आत्महत्याख्यपापकारिणः लोकान् गमिष्यामि; संशयो न । भवद्भिरनङ्गीकारे देहमेव त्यजामीति भावः । विवाहावसरत्वात् ग्लानिनैवात्महननं सूचितं; न तु स्पष्टमुक्तम् ।

**व्यसनं ह्येव धर्मस्य धर्मिणामापदुच्यते ।**
**पुण्यात् प्राणान्धारयति पुण्यं वै प्राणधारणम् ॥ २४ ॥**

ननु कामादापदस्तु, अस्माकं का साऽऽपदित्यत आह– **व्यसनं ह्येव धर्मस्य धर्मिणामापदुच्यते । पुण्यात् प्राणान् धारयति पुण्यं वै प्राणधारणम्** इति । अयमर्थः – **धर्मिणां** भवादृशानां धार्मिकानां **धर्मस्य** मम पाणिग्रहणेन मयि स्थितकामाख्यापत्परिहार-

१ देववर्णवती सो.मु.पा.

रूपधर्मस्य **व्यसनं** विशेषेण निरसनमेव आपत् । यद्यपि भवतामन्या आपन्नास्ति । मदभीष्टप्रदानाख्यपरोपकाररूपभवद्योग्यधर्मत्याग एव भवतामापदिति भावः । अपि न भवादृगुत्तमाधिकार्यपि पुण्यादेव प्राणान् धारयति । भवत्प्राणधारणकारणत्वेन मयोच्यमानं तच्च पुण्यं अस्मदादिवत् प्राचीनपुण्यमात्रं न । प्राचीनपुण्यमात्रेण उदरभरणस्य खरसूकरादिहीनयोनिसदृशत्वेन उत्तमत्वासम्पादकत्वात् । किन्तु कृपणानामस्मदादीनामभीष्टफलदानेन अस्मत् प्राणस्य यत् **धारणं** परिपालनं तदेवाधिकारिकपुरुषाणां युष्माकं पुण्यम् । तत्तज्जीवकृत[1]-कर्मफलदानेन तांस्तान् जीवाननुगृह्णीध्वमिति भवतां या हरेराज्ञा तत्करणरूपतया हरेः परमानुग्रहहेतुत्वेन महापुण्यरूपत्वात् अस्मिन् पुण्ये सत्येव यत्प्राणधारणं तदेव भवतां प्राणधारणमित्युच्यते । नो चेद्भगवदाज्ञोल्लङ्घयितृत्वेन जीवन्मृतत्वमेव स्यादिति भावः । तस्माद्-भवदुचितधर्माभावाख्यभवदापत्परिहराय भवदुचितपुण्यसम्पादनाय च मम परिग्रहः कार्य इति हिडिम्बीहृदयम् ॥

**धर्मार्थकाममोक्षेषु दयां कुर्वन्ति साधवः ।**
**तत्तु धर्ममिति प्राहुर्मुनयो धर्मवत्सलाः ॥ २६ ॥**

**धर्मार्थकाममोक्षेषु दयां कुर्वन्ति साधव** इत्यत्र धर्मार्थकाममोक्षेषु स्वाधीनतया सत्स्वपि साधवो हीनेषु[2] दयामेव कुर्वन्तीति योजना ॥

॥ इति द्व्यधिकशततमोऽध्यायः ॥

---

१. कृतपुण्यकर्म सो.मु.पा.
२. दीनेषु सो.मु.पा.

## ।। अथ त्र्यधिकशततमोऽध्यायः ।।

**गताऽहनि[१] निवेशेषु भोज्यं राजार्हमानयत् ।**
**सा कदाचिद्विहारार्थं हिडिम्बा कामरूपिणी ।। १९ ।।**

**गताऽहनि निवेशेषु भोज्यं राजार्हमानयत्** इत्यत्र **निवेशेषु** गृहेषु **गता** इतस्ततो गता राजार्हं भोज्यं अहनि आनयदिति योजना ।

**समाप्ते[२] चैव मे सर्वे यूयं[३] चैव न संशयः ।**
**स्वराष्ट्रे विहरिष्यन्तो भविष्यथ सबान्धवाः[४] ।। ३७ ।।**

**समाप्ते चैव मे सर्वे यूयं चैव न संशय** इति क्वचित्कपाठे यूयं सर्वे **मे** मम **समाप्ते** 'नपुंसके भावे क्त' इति वचनात् सम्यगाप्तौ विद्यमानाः न संशयः । सर्वे मम भक्ता इति भावः ।

**दीनतो बालतश्चैव स्नेहं कुर्वन्ति बान्धवाः ।**
**तस्मादभ्यधिकः स्नेहो युष्मासु मम सम्प्रति ।। ३८ ।।**

**दीनतो बालतश्चैव** इत्यत्र दीनतो बालतश्चेति भावप्रधानो निर्देशः । दीनत्वाच्च बान्धवाः स्वपुत्रादिषु स्नेहं कुर्वन्ति । तस्माद् भवतां **[?]शत्रुत्वेन** बालत्वात् दुर्योधनकृतोपद्रवेण दीनत्वाच्च **सम्प्रति** इदानीं मम युष्मास्वभ्यधिकः स्नेहोऽस्तीति सूचितम् ।

**स्नेहपूर्वं चिकीर्षामि हितं यत्तन्निबोधत ।**
**वसतेह प्रतिच्छन्ना ममागमनकाङ्क्षिणः ।। ३९ ।।**

---

१. [?]. १६८ अध्यायः; २. BORI पृ. ६२२; **'दुष्कृते चैव'** इति कुं. पाठः । ३. BORI पृ. ६२२; 'ते वै' इति कुं. पाठः । ; ४. **क्वचित्पाठे** सों.मु.पा.

**वसतेह प्रतिच्छन्ना ममागमनकाङ्क्षिण** इत्यत्र मम **अगमनकाङ्क्षिणो** गमनकाङ्क्षिणो न भवन्तीत्यगमनकाङ्क्षिणोऽपि इहैव वसतेति सम्बन्धः । इतो मद्गमनमसहमानैर्मया सह नागन्तव्यमिति भावः । यथाश्रुतार्थे तु अस्मिन् वने पुनर्व्यासस्यागमनाभावाद्विरोधः स्यात् ।

**तेन पुत्रेण कृच्छ्रेषु भविष्यथ च तारिताः ।**
**इह मासं प्रतीक्षध्वमागमिष्याम्यहं पुनः ॥ ५० ॥**

**इह मासं प्रतीक्षध्वमागमिष्याम्यहं पुनः** इत्यत्र इह वने प्रागुक्तषण्मासादुपरि पुनः **मासं** एकं मासं च प्रतीक्षध्वमित्यर्थः । अतः, 'कार्यार्थिनस्तु षण्मासानिति' वाक्यस्य 'एवं भ्रातॄन् सप्तमासानिति' वाक्यस्य च न विरोधः । **आ** आशब्दवाच्यः अहं गमिष्यामि । 'अ आ अं अः पुराणर्षिः व्यासः शाखासहस्रकृत्' इति व्यासनामसु पाठात् । अन्यथा अस्मिन्वने पुनरागमनाभावेन प्रतिज्ञाविरोधः स्यादिति ज्ञेयम् ।

॥ इति त्र्यधिकशततमोऽध्यायः ॥

## ॥ अथ चतुरुत्तरशततमोऽध्यायः ॥

**प्रणम्य विकचः पादावगृह्णात् स पितुस्तदा ।**[१]
**मातुश्च परमेष्वासस्तौ च नामास्य चक्रतुः ॥ १२ ॥**

**प्रणम्य विकचः पादावगृह्णात्स पितुस्तदा** इत्यत्र **तदा** तदाऽपि पादप्रणामसमये **विकचः** अनुत्पन्नकेशपाशः ।

**घटोऽहमुत्कचोऽस्मीति मातरं सोऽभ्यभाषत ।**[२]
**अभवत्तेन नामास्य घटोत्कच इति स्म ह ॥ १३ ॥**

१. कुं. १६९ अध्यायः; २.'घटोहास्योत्कच इति माता तं प्रत्यभाषत' इति कुं.

**घटोऽहमुत्कचोऽस्मीति मातरं सोऽभ्यभाषत** इत्यत्र दर्पणे विकचं ...कघटोपमं स्वशिरः प्राक् पश्यन् तत्क्षण एव तत्र ऊर्ध्वीभूत-...शोत्पत्तिं च पश्यन् स बालः बाल्यादेव स्वशिरः रक्तघटं मन्वानः ...व कचोत्पत्तिं च मन्वानः अहं उत्कचः घटोऽस्मीति मातरमभ्य-...षत। अस्य बालस्य घटः उत्कच इति मातुर्वचनादुक्तश्च। तेनास्य ...त्कच इति नामाभवदित्युत्तरेणान्वयः॥

**॥ इति चतुरुत्तरशततमोऽध्यायः॥**

## ॥ अथ पञ्चोत्तरशततमोऽध्यायः॥

**...डिम्बोवाच –**

**यदा मां संस्मरेः कान्त रिरंसू रहसि प्रभो।**
**तदा तव वशं भूय आगन्तास्म्याशु भारत ॥ २२॥**

**तदा तव वशं भूय आगन्तास्मि** इत्यत्र आगन्तास्मीति लुटो ...पादम्।

**भीमोऽपि क्रीडयित्वाथ मिथो ब्राह्मणबन्धुषु।**
**...म्भकारेण सम्बन्धं लेभे पात्रं महत्तरम् ॥ १८॥**

**...म्भकारेण** सम्बन्धं कृत्वा इत्यत्र **सम्बन्धं** हस्तेनोद्धृत्य दह्यमान-...रक्षणाख्यसम्बन्धम्।

---

... पाठानुसारेण पूर्वाध्याय एवानुसरति। ; ३. कुं. १७१ अध्यायः

... BORI पृ. ६२५; 'सम्बन्धाल्लेभे प्राप्तं महत्तरम्' इति कुं.पाठः।

... 'सम्बन्धादित्यत्र सम्बन्धात् हस्तेनोद्धृत्य दह्यमानगृहरक्षणाख्यसम्बन्धात्।'
...

एकात्मना[१] हि धर्मार्थौ कामं चैव निषेवते ।
एतैश्च विप्रयोगोऽपि दुःखं परमनन्तकम् ॥ ३७ ॥

**एकात्मना हि धर्मार्थौ कामं चैव निषेवत** इत्यत्र **एकात्मना** नियमन ।

तदिदं जीवितं प्राप्य कल्पकालं[२] महाभयम् ।
त्यागो हि न मया प्राप्तो भार्यया सहितेन च ॥ ४१ ॥

**तदिदं जीवितं प्राप्य कल्पकालम्** इत्यत्र एतावानिति कल्पितः कालः **कल्पकालः** तम् । **त्यागः** जीवितत्यागः ।

स्वर्गतोऽपि पिता वृद्धस्तथा माता चिरं तव ।
बान्धवा भूतपूर्वाश्च तत्र वासो तु कारतिः ॥ ४५ ॥

**तत्र वासो तु कारतिः** इत्यत्र **तत्र** तथापि **वासः** अन्यत्र वासः ।

न भोजनं विरुद्धं स्यान्न स्त्रीदेशो निबन्धनः ।
सुदूरमपि तं देशं व्रजेद्गरुडहंसवत् ॥ ४६ ॥

**न भोजनं विरुद्धं स्यात्** इत्यत्र यत्र गते सति भोजनं विरुद्धं न स्यात् यः देशः नितरां बध्नातीति **निबन्धनः,** स्त्रीदेशोपि न, **सुदूरमपि तं देशं** भोजनानुकूलदेशं गरुडहंसवत् व्रजेदिति योजना ।

सहधर्मचरीं दान्तां नित्यं मातृसमां मम ।
सखायं विहितां देवैर्नित्यं परमिकां गतिम् ॥ ४९ ॥

---

१. T,G; BORI पृ. ६२७; **'आत्मा ह्येको'** इति कुं. पाठः ।
२. **'अल्पकालं'** इति कुं. पाठः ।

**नित्यं मातृसमां मम** इत्यत्र **मातृसमां** मातृवत्पोषणकर्त्रीम् ।

**बालामप्राप्तवयसं अजातव्यञ्जनाकृतिम् ।**
**भर्तुरर्थाय निक्षिप्तां न्यासं धात्रा महात्मना ॥ ५३ ॥**

**न्यासं धात्रा महात्मना** इत्यत्र **न्यासं** स्वगृहे निक्षिप्तपरधन-[illegible]थानीयाम् ।

**॥ इति पञ्चोत्तरशततमोऽध्यायः ॥**

## ॥ अथ षडुत्तरशततमोऽध्यायः ॥

[1]**अहं कृतावलेपैश्च प्रार्थ्यमानामिमां सुताम् ।**
**अयुक्तैस्तव सम्बन्धे कथं शक्ष्यामि रक्षितुम् ॥ ११ ॥**

**अहं कृतावलेपैश्च** इत्यत्र **कृतावलेपैः** कृतगर्वैः तव सम्बन्धे **अयुक्तैः** [illegible]ः ।

**सम्प्रेक्षमाणा पुत्रीं ते नानुरूपमिवात्मनः ।**
**अनर्हवशमापन्नां इमां चापि सुतां तव ॥ २१ ॥**

**नानुरूपमिवात्मन** इत्यत्र अनुरूपं यथा न भवतीति क्रिया-[illegible]णम् ।

**[illegible]निष्टमिह पुत्राणां विषये परिवर्तितुम् ।**
**[illegible]द्राञ्जनपुष्पादिसौमङ्गल्ययुता सती ॥ २६ ॥**

**[illegible]निष्टमिह पुत्राणां विषये परिवर्तितुम्** इत्यत्र इह लोके [illegible]नन्तरं पुत्राणां विषये पोषणादौ परिवर्तितुं अनिष्टम् ।

---

[1] [illegible] अध्यायः

**अवध्याः स्त्रिय इत्याहुर्धर्मज्ञा धर्मनिश्चये ।**
**धर्मज्ञान् राक्षसानाहुर्न हन्यात् स च मामपि ॥ ४१ ॥**

**धर्मज्ञान् राक्षसानाहुर्न हन्यात्स च मामपि** इत्यत्र राक्षसान् धर्मज्ञानप्याहुः । स च बकः तेष्वेकश्चेत् मां न हन्यादिति योजना ।

**भुक्तं प्रियाण्यवाप्तानि धर्मतश्चरितो मया ।**
**त्वच्छुश्रूषणसम्भूता कीर्तिश्चाप्यतुला मम ।**
**त्वत्प्रसूतिः प्रिया प्राप्ता न मां तप्स्यत्यजीवितम् ॥ ४३ ॥**

**धर्मतश्चरितो मया** इत्यत्र 'सार्वविभक्तिकस्तसिः' इति वचनात् **धर्मतो** धर्मः ।

**विशेषतस्त्रियं रक्षेत् पुरुषेणोपसर्पिणा[१] ।**
**त्यक्त्वा तु पुरुषो जीवेन्न हातव्यानिमान् सदा ।**
**न वेत्ति कामं धर्मं च अर्थं मोक्षं च तत्त्वतः ॥ ५० ॥**

**पुरुषेणोपसर्पिणा** इत्यत्र **पुरुषेण** मया **उपसर्पिणा** परसमीपं गच्छता कारणेन स्त्रियं रक्षेदिति योजना ।

**॥ इति षडुत्तरशततमोऽध्यायः ॥**

## ॥ अथ अष्टोत्तरशततमोऽध्यायः ॥

**वैशम्पायन उवाच –**
**[२]तयोर्दुःखितमाकर्ण्य अतिमात्रं निशम्य तु ।**

---

१. **'पुरुषो बुद्धिमानिह'** इति कुं. पाठः ।
२. कुं. १७३ **अध्यायः** । **'तयोर्दुःखितयोर्वाक्यमतिमात्रं'** इति कुं. पाठः ।

**ततो दुःखपरीताङ्गी कन्यां तावभ्यभाषत ॥ १ ॥**

**तयोर्दुःखितमाकर्ण्य** इत्यत्र **तयोः** मातापित्रोः[१] ॥

**इत्यर्थमिष्यतेऽपत्यं तारयिष्यति मामिति ।**
**तस्मिन्नुपस्थिते काले हरतं व्यसनं मया ॥ ४ ॥**

**हरतं व्यसनं मया** इत्यत्र इदं व्यसनं मया युवां हरतम्। हृञिति[२] ...तोर्लोटि मध्यमपुरुषद्विवचनमिदम् ॥

[३]**शृतान् शृतान् पानकुम्भान् स्थूलमांसं शृताशृतम् ।**
**वनमाहिषवाराहभालूकं च शृताशृतम् ॥ १५ ॥**

**शृतान् शृतान् पानकुम्भान्** इत्यत्र **शृतान् शृतान्** 'शृ पाके' इति ...ताः पक्वान् पक्वानित्यर्थः ।

**ब्राह्मणाः कस्य वक्तव्याः कस्य नाच्छन्दचारिणः[४] ।**
**गुणैरेते हि वत्स्यन्ति कामगाः पक्षिणो यथा ॥ २४ ॥**

**कस्य नाच्छन्दचारिण** इत्यत्र ब्रह्मणाः कस्य **अच्छन्दचारिणः** ...धीनसञ्चाररहिताः न । सर्वस्यापि स्वेच्छाधीनसञ्चाररहिता ... । सर्वोऽपि जनः दुर्बलत्वाद्ब्रह्मणं स्ववशं करोत्येवेति भावः ।

॥ इत्यष्टोत्तरशततमोऽध्यायः ॥

---

१ ...तापुत्रयोः सो.मु.पा.

२ ...त्र धातोः सो.मु.पा.

३ कुं. १७४ अध्यायः । 'शृताशृतान्' इति कुं. पाठः ।

४ '...ा च्छन्द' इति कुं. पाठः ।

## ।। अथ नवोत्तरशततमोऽध्यायः ।।

[१] न त्विदं केषुचिद्ब्रह्मन् व्याहर्तव्यं कथञ्चन ।
विद्यार्थिनो हि मे पुत्रान् विप्रकुर्युः कुतूहलात् ।। १७ ।।

गुरुणाचाननुज्ञातो ग्राहयेद्यः सुतो मम ।
न स कुर्यात्तथा कार्यं विद्ययेति सतां मतम् ।। १८ ।।

**न त्विदं केषुचिद्ब्रह्मन् व्याहर्तव्यं कथञ्चन । विद्यार्थिनो हि मे पुत्रान् विप्रकुर्युः कुतूहलात् ।। गुरुणा चाननुज्ञातो ग्राहयेद्यः सुतो मम । न स कुर्यात्तथा कार्यं विद्ययेति सतां मतम्** इत्यत्र हे ब्रह्मन् **इदं** मत्पुत्रेण करिष्यमाणं महत्कार्यं केषुचिन्न व्याहर्तव्यम् । व्याहृतं चेत् विद्यार्थिनो मे पुत्रान् **कुतूहलात्** एतद्बलं द्रष्टव्यमिति कौतुकात् सर्वेऽपि क्षणे क्षणे **विप्रकुर्युः** महाकार्योपदेशादिना विद्याभ्यासप्रतिबन्धाख्य-मपकारं कुर्युः । यः मम सुतः गुरुणा अननुज्ञातः किञ्चित्कार्यं **ग्राहयेत्** ग्राहयितुं शक्यः सः **विद्यया** गुरोर्ज्ञानेन गुरुणा ज्ञाते सतीत्यर्थः । तथा [२] अननुज्ञादशायां यथा तथा कार्यं न कुर्यात् । इति प्रमेयं **सतां मतं** सम्मतं च । अत इदं केषुचिन्न व्याहर्तव्यमिति पूर्वेणान्वयः ।।

**।। इति नवोत्तरशततमोऽध्यायः ।।**

## ।। अथ दशाधिकशततमोऽध्यायः ।।

[३] यस्य दुर्योधनो वीर्यं चिन्तयन्नमितौजसः ।
न शेते [४] वसतीः सर्वा दुःखाच्छकुनिना सह ।। ११ ।।

---

१. कुं. १७५ अध्यायः ; २. अज्ञानदशायां सो.मु.पा.; ३. कुं.१७६ अध्यायः
४. $N_{1,2}, V_1, BD_{(except\ D5)}$; BORI पृ. ६४१; **'रजनीः'** इति कुं. पाठः ।

न शेते वसतीः सर्वा इत्यत्र वसति यस्यां सत्यां गृह इति वसतयो रात्रयः । 'वसती रात्रिवेश्मनोः' इत्यमरः ॥

॥ इति दशाधिकशततमोऽध्यायः ॥

## ॥ अथ एकादशाधिकशततमोऽध्यायः ॥

**अद्यप्रभृति स्वप्स्यन्ति वेत्रकीयनिवासिनः ।**
**निरुद्विग्नाः पुरस्यास्य कण्टके सूद्धृते मया ॥ ४८ ॥**

**वेत्रकीयनिवासिन** इत्यत्र वेत्रकीयमिति एकचक्रानगरस्यैव नामान्तरम् ।

॥ इत्येकादशाधिकशततमोऽध्यायः ॥

## ॥ अथ द्वादशाधिकशततमोऽध्यायः ॥

**तेन शब्देन वित्रस्तो जनस्तस्याथ रक्षसः ।**
**निष्पपात गृहाद्राजन् सहैव परिचारिभिः ॥ २ ॥**

**जनस्तस्याथ रक्षस** इत्यत्र **रक्षसो जनः** सेवकजनः ।

**न चै न सम्भवेत् सर्वं ब्राह्मणेषु महात्मसु ।**
**इति सत्कृत्य तं पौराः परिवव्रुः समन्ततः ॥ २६ ॥**

**न चै न सम्भवेत् सर्वम्** इत्यत्र **महात्मसु** ब्राह्मणेषु सर्वं कार्यं न सम्भवतीति न, सर्वमपि सम्भवेदेवेति योजना ।

---

१ वसती गत्रिः । सो.मु.पा. ; २. कुं. १७७ अध्यायः

३ कुं. १७८ अध्यायः

**पशुमद्दधिमच्चास्य वारं भक्तमुपाहरन् ।**
**तस्मिन् हते ते पुरुषा भीताः समनुबोधनाः ॥ २८ ॥**

**भीतास्समनुबोधाना** इत्यत्र **सं** सम्यक् **अनु** वरदातृवचनादनन्तरं बोधनं अनेन बहुभोजिना ब्राह्मणेन इदं कृतमिति बोधनं येषां ते तथोक्ताः । **पशुमद्दधिमत्** इत्यत्र **पशुमत्** भक्षणयोग्यमृगादि पशुमांसवत् ।

**ततः सम्प्राद्रवन् पार्थाः सह मात्रा परन्तपाः ।**
**आगच्छन्नेकचक्रां ते पाण्डवाः संशितव्रताः ॥ २९ ॥**

**अगच्छन्नेकचक्रां त** इत्यत्र **ते** बहिस्स्थिताः पाण्डवाः एकचक्रा[१]नगरीमगच्छन् ॥

॥ इति द्वादशाधिकशततमोऽध्यायः ॥

## ॥ अथ पञ्चदशाधिकशततमोऽध्यायः ॥

[२] **ततः कतिपयाहस्य ब्राह्मणः संशितव्रतः ।**
[३] **प्रतिश्रयार्थं तद्वेश्म ब्राह्मणस्याजगाम ह ॥ ३ ॥**

**प्रतिश्रयार्थं तद्वेश्म** इत्यत्र **प्रतिश्रयार्थम्** आवासार्थम् । **ब्राह्मणस्य** पाण्डवानुकूलब्राह्मणस्य ।

**कथं द्रोणान्महेष्वासात् सर्वाण्यस्त्राण्यशिक्षत ।**
**धृष्टद्युम्नो महेष्वासः कथं द्रोणस्य मृत्युतः[४] ।**
**कथं विप्र सखायौ तौ भिन्नौ कस्य कृतेन वा ॥ ११ ॥**

---

१. एकचक्रांनाम नगरी सो.मु.पा. ; २. कुं. १७९ अध्यायः
३. BORI पृ. ६५०; 'प्रतिश्रयार्थी' इति कुं.पाठः । ; ४. 'मृत्युदः' इति कुं.

**धृष्टद्युम्नो महेश्वासः कथं द्रोणस्य मृत्युत** इत्यत्र यो धृष्टद्युम्नः, द्रोणस्य मृत्युता तस्य कथमिति य(त)च्छब्दाध्याहारेण योजना ।

[1]**पार्षतो द्रुपदो नाम** [2]**वेत्रवत्यां नरेश्वरः ।**
**तस्मादाकृष्य तद्राज्यं मम शीघ्रम्प्रदीयताम्** ॥ २१ ॥

**द्रुपदो नाम वेत्रवत्यां नरेश्वर** इत्यत्र वेत्राणि परितो वर्तन्ते यस्यां सा **वेत्रवती** नगरी तस्याम् ।

**द्रोणः शिष्यांस्ततः पार्थानिदं वचनमब्रवीत् ।**
**समानीय** [3]**ततः शिष्यान् द्रुपदस्यासुखाय वै** ॥ १८ ॥

**समानीय ततः शिष्यान् द्रुपदस्यासुखाय वै** इत्यत्र तत्र पाञ्चाल-नां शिष्यान् । **समानीयं** सम्यङ्नीत्वा द्रुपदस्यासुखायाब्रवीदिति पूर्वेणान्वयः ।

[4]**महेन्द्रमिव दुर्धर्षं महेन्द्र इव दानवम् ।**
**महेन्द्रपुत्रः पाञ्चालं जितवानर्जुनस्तदा** ॥ २५ ॥

**महेन्द्रमिव दुर्धर्षम्** इत्यत्र महेन्द्रमिव दुर्धर्षं पाञ्चालमिति सम्बन्धः ।

[5]**अतः प्रयतितं राज्ये यज्ञसेन त्वया सह ।**
**राजाऽसि दक्षिणे कूले भागीरथ्याहमुत्तरे** ॥ २८ ॥

---

१ पू. १८० अध्यायः
२ G; BORI पृ. ६५३; 'छत्रवत्यां' इति कुं. पाठः ।
३ P.G; BORI पृ. ६५३; 'तु' इति कुं.पाठः ।
४ 'महेन्द्र इव' इति कुं. पाठः ।
५ पू. १८१ अध्यायः

**अतः प्रयतितं राज्य** इत्यत्र **राज्ये** तादर्थ्ये सप्तमी । राज्यार्थं **प्रयतितं** प्रयत्नः कृतः ।

**प्रभावं विनयं [१]शिष्यान् द्रोणस्य चरितानि च ।**
**क्षात्रेण च बलेनास्य [२]पराजेतुं हि नाशकत् ॥ ४ ॥**

**प्रभावं विनयं शिष्यान् द्रोणस्य चरितानि च । क्षात्रेण च बलेनास्य पराजेतुं हि नाशकत्** इत्यत्र **स** द्रुपदः द्रोणस्य प्रभावं विनयं शिष्यान् चरितानि च **क्षात्रेण** क्षत्रसम्बन्धिना **बलेन** स्वबलेन **अस्य** निरस्य **पराजेतुं** पराभावयितुं नाशकदिति योजना ।

**स तावामन्त्रयामास सर्वकामैरतन्द्रितः ।**
**[३]स बुद्ध्वा बलबुद्धिं तु कनीयांसमुपह्वरे ॥ ९ ॥**

**स बुद्ध्वा बलबुद्धिं तु** इत्यत्र **बलबुद्धिं** तपोबलबुद्धिमन्तं **कनीयांसं** कनिष्ठं उपयाजं **उप** समीपे **ह्वरे** नम्रीभूय तिष्ठामि । 'ह्वर अङ्गकौटिल्ये' इति धातुः । इति बुद्ध्वा निश्चित्येति योजना ।

**ब्रह्मक्षत्रे च विहिते ब्राह्मं तेजो विशिष्यते ।**
**सोऽहं क्षात्राद्बलाद्धीनो ब्राह्मं तेजः प्रपेदिवान् ॥ ३० ॥**

**सोऽहं क्षात्राद्बलाद्धीन** इत्यत्र **क्षात्रात्** केवलं क्षात्रात् ब्रह्मतेजः तव ब्रह्मतेजः प्रपेदिवानिति सम्बन्धः ।

**गुर्वर्थ इति चाकाममुपयाजमचोदयत् ।**
**याजो द्रोणविनाशाय प्रतिजज्ञे तथा च सः ॥ ३३ ॥**

---

१. **'शिक्षां'** इति कुं. पाठः । ; २. **'चिन्तयन्नाध्यगच्छत'** इति कुं. पाठः ।
३. **'बुद्ध्वा बलं तयोस्तत्र'** इति कुं. पाठः ।

**गुर्वर्थ इति चाकामम्** इत्यत्र **गुरोः** ज्येष्ठस्य याजस्य **अर्थः** प्रयोजनमिति मत्वा ।

**॥ इति पञ्चदशाधिकशततमोऽध्यायः ॥**

## ॥ अथ षोडशोत्तरशततमोऽध्यायः ॥

[१]**भारद्वाजस्य हन्तारं देवीं चाप्यर्जुनस्य वै ।**
**लोकस्तद्वेद यच्चापि तथा याजेन मे श्रुतम्** ॥ १६ ॥

**तथा याजेन मे श्रुतम्** इत्यत्र **श्रुतं** प्रतिश्रुतम् ।

**तव पुत्रा महात्मानो दर्शनीया विशेषतः ।**
**यदृच्छया सा पाञ्चाली गच्छेद्वाऽन्यतमं पतिम्** ॥

**गच्छेद्वाऽऽन्यतमं पतिम्** इत्यत्र **अन्यतमं** तव पुत्रेष्वन्यतमम् ।

**॥ इति षोडशोत्तरशततमोऽध्यायः ॥**

## ॥ अथ सप्तदशोत्तरशततमोऽध्यायः ॥

[२]**बृहस्पतिमतेनाथ पौलोम्या च पुरा श्रुतम् ।**
**नष्ट इन्द्रो बिसग्रन्थ्यां उपश्रुत्या ह दर्शितः** ॥ २२ ॥

**उपश्रुतिर्महाराज पाण्डवार्थे मया श्रुता ।**
**यत्रकुत्रापि जीवन्ति पाण्डवास्ते न संशयः** ॥ २३ ॥

**बृहस्पतिमतेनाथ पौलोम्या च पुरा श्रुतम् । नष्ट इन्द्रो बिसग्रन्थ्यां उपश्रुत्या ह दर्शितः ॥ उपश्रुतिर्महाराज पाण्डवार्थे मया**

---

१. कुं. १८२ अध्यायः ; २. कुं.पाठानुसारेण अत्र पूर्वाध्याय एवानुसरति ।

**श्रुता** इत्यत्र वृत्रवधानन्तरं ब्रह्महत्याभयात् **बिसग्रन्थ्यां** कमलनाले **नष्टः** 'नश् अदर्शने' इति धातोः अदर्शनं प्राप्तः,अत एवेन्द्रो नास्तीति लोके अपवादे च जाते **उपश्रुत्या** इन्द्रः कश्चिदस्तीत्यशरीरवाण्या दर्शितो ह । इदमुपश्रुतिवचनं बृहस्पतिमतेन पौलोम्या च पुरा श्रुतम् । एवं हे महाराज **पाण्डवार्थे** जतुगृहे नष्टपाण्डवार्थे **उपश्रुतिः** मया श्रुतेति सार्धश्लोकस्य योजना ।

**ब्राह्मणा ऊचुः –**

**[१] एते सार्धं प्रयाताः स्मो वयमप्यत्र गामिनः ।**
**[२] तत्राप्युत्सवसङ्काश उत्सवो भविता महान् ॥ ६ ॥**

**तत्राप्युत्सवसङ्काश** इत्यत्र **उत्सवः** अस्मन्मनसामुत्सवः तस्य **सङ्काशः** सदृशः **उत्सवो** विवाहोत्सवः ।

**ते तत्र [३] विविधादाना विजयार्थं नरर्षभाः ।**
**प्रदास्यन्ति धनं गाश्च भक्ष्यभोज्यानि सर्वशः ॥ १५ ॥**

**ते तत्र विविधादाना विजयार्थं नरर्षभा** इत्यत्र विजयार्थं विविधानि **आ** समन्तात् दानानि येषां त इति विग्रहः ।

॥ इति सप्तदशोत्तरशततमोऽध्यायः ॥

## ॥ अथ अष्टादशाधिकशततमोऽध्यायः ॥

**[४] अहोरात्रेणाभ्यगच्छन् पाञ्चालनगरं प्रति ।**
**अभ्याजग्मुः लोकनदीं गङ्गां भागीरथीं प्रति ॥ २ ॥**

---

१. कुं. १८५ अध्यायः ; २. 'तत्राप्यद्भुतसङ्काश' इति कुं. पाठः ।
३. 'विविधं दानं' इति कुं.पाठः । ; ४. कुं. १८६ अध्यायः

**लोकनदीं गङ्गाम्** इत्यत्र **लोकनदीं** लोकपावननदीम् ।

**चन्द्रास्तमयवेलायां अर्धरात्रसमागमे ।**
**वारि चैवानुमज्जन्तस्तीर्थं सोमाश्रयायणम् ।**
**आसेदुः पुरुषव्याघ्रा गङ्गायां पाण्डुनन्दनाः ॥ ३ ॥**

**तीर्थं सोमाश्रयायणम्** इत्यत्र **सोमाश्रयो** रुद्रः स एवं **अयनं** शिरसि धर्ता यस्य तत्तथोक्तम् ।

**सन्ध्या संरज्यते घोरा पूर्वरात्रागमेषु या ।**
**[१]अशीतित्रुटिभिर्हीनान् त्रीन्मुहूर्तान् प्रवक्षत ॥ ८ ॥**

**सन्ध्या संरज्यते घोरा पर्वरात्रागमेषु या । अशीतित्रुटिभिर्हीनान् त्रीन्मुहूर्तान् प्रवक्षत** इत्यत्र **पर्वरात्रागमेषु** अमाष्टम्यादिपर्वरात्रागमेषु **घोरा** क्रूरा **सन्ध्या** पूर्वार्धरात्रोत्तरार्धरात्रसन्धौ विद्यमाना या वेला **संरज्यते** सम्बद्धा भवति । **तस्यां** निशीथरूपसन्ध्यायां ये त्रिमुहूर्ताः षड्घटिकारूपाः तान् अशीतित्रुटिभिः, **त्रुटि**पदेन पाणिवादाः कथ्यन्ते । विंशतित्रुटिभिर्मध्यस्था एका घटिका तस्याः पूर्वं दश त्रुटयः पश्चाच्च दश त्रुटयः, एवमशीतिसङ्ख्याकत्रुटिकालैः करणैः **हीनान्** अत्यन्तहीनान् तान् मुहूर्तान् प्रवक्षते । घटिकाषट्कमध्ये आदौ घटिकाद्वयं विंशतित्रुटयः, अन्तेऽपि घटिकाद्वयं विंशतित्रुटयश्च घोरा एव । तत्रापि मध्ये उर्वरिता या अशीतित्रुटिपरिमिता वेला सा त्वत्यन्तं घोरेति भावः । यदा अशीतित्रुटिभिर्हीनान् न्यूनान् **त्रीन्मुहूर्तान्** पादत्रयाधिक-घटिकाचतुष्टयात्मकान् ।**

---

१ G₁,₃,₆; BORI पृ. ६६५; 'अशीतिभिर्लवैर्हीनं तन्मुहूर्तं प्रचक्षते' इति कुं. पाठः ।

**न कौणपाः शृङ्गिणो वा न देवा न च मानुषाः ।**
**कुबेरस्य यथोष्णीपं किं मां समुपसर्पथ ॥ १५ ॥**

**न कौणपाः शृङ्गिणो वा** इत्यत्र **कौणपाः** राक्षसाः । [1]'नक्तश्चरा नैर्ऋकाः कौणपकाः कैकसेयाः स्युः' इति हलः ।

**अर्जुन उवाच –**

**समुद्रे हिमवत्पार्श्वे नद्यामस्यां च दुर्मते ।**
**रात्रावहनि सन्ध्यायां कस्य क्लृप्तः परिग्रहः ॥१६॥**

**कस्य क्लृप्तः परिग्रह** इत्यत्र परिग्रहः कस्य क्लृप्तः अस्यैवेति नियमितः न कस्यापि । किन्तु सदा सर्वेऽपि सञ्चरन्तीत्यर्थः ।

**[2]अनाश्चर्यमसम्बाधं तव वाचा कथं वयम् ।**
**न स्पृशेम यथाकामं पुण्यं भागीरथीजलम् ॥२४॥**

**अनाश्चर्यमसम्बाधम्** इत्यत्र न विद्यते आश्चर्यं यस्मात् तत् **अनाश्चर्यम्** । **असम्बाधं** केनापि नेति सम्बाधयितुमशक्यम् ।

**गन्धर्व उवाच –**

**जितोऽहं पूर्वकं नाम मुञ्चाम्यङ्गार[3]वर्णताम् ।**
**यशोहीनं न च श्लाघ्यं स्वनाम्ना जनसंसदि ॥ ३८ ॥**

---

१. ह.को. १-७३; प्र.पाठः **'नक्तश्चरनैर्ऋतकौणपास्तथा नैकपेयाः स्युः'** इति ।
२. $G_{1..3}$,M; BORI पृ. ६६७; **'अनिवार्यमसम्बाधं'** इति कुं. पाठः ।
३. $T_2$,$G_{(except\ G2)}$$M_3$; BORI पृ. ६६८; **'पर्णताम्'** इति कुं.पाठः ।
४. **'स्वं नाम'** इति कुं. पाठः ।

[1] साधिदं लब्धवाल्लाभं [2] यो मे दिव्यास्त्रधारिणम् ।
गान्धर्व्या [3] मायया योद्धुं दिशाम्यस्त्रं परावरम् ॥ ३९ ॥

**जितोऽहं पूर्वकं नाम मुञ्चाम्यङ्गारवर्णताम् । यशोहीनं न च श्लाघ्यं स्वनाम्ना जनसंसदि ॥ साधिदं लब्धवान् लाभं यो मे दिव्यास्त्रधारिणम् । गान्धर्व्या मायया योद्धुं दिशाम्यस्त्रं परावरम्** इत्यत्र त्वया जितः अहं जनसंसदि न श्लाघ्यं यशोहीनं च चित्ररथ इति पूर्वकं नाम मुञ्चामि । त्वदस्त्रेण दग्धरथस्य मम चित्ररथत्वं हास्यमिति भावः । स्वनाम्ना **अङ्गारवर्णतां** अङ्गारवतां न मुञ्चामीत्यर्थानुसारा(न्नञ)न्ना-ध्याहारेण क्रियावृत्तिः । **साधिदं** आधिना सहितं सुखं **साधि** तत्प्रदमित्यर्थः । लाभं लब्धवानस्मि । तमेव लाभं विशिनष्टि । दिव्यास्त्रधारिणं गन्धर्वादिकं गान्धर्व्या मायया योद्धुं **परावरं** पराण्यस्त्राण्य० ाराणि यस्मात्तत्परावरं तादृशमस्त्रं तुभ्यं दिशामीति यो मे लाभः तं लाभं लब्धवानस्मीति पूर्वेणान्वयः । 'इच्छामि' इति पाठे अस्त्रं दातुमि-च्छामीति यो लाभ इति योजना ।

यच्चक्षुषा द्रष्टुमि[4]च्छेत्त्रिपु लोकेपु किञ्चन ।
तत्पश्येद्यादृशं रूपं तादृशं द्रष्टुमर्हति ॥ ४५ ॥

**तत्पश्येद्यादृशं रूपं तादृशं द्रष्टुमर्हति** इत्यत्र तत् त्रिषु लोकेषु द्रष्टुमभीप्सितं वस्तु । पश्येदित्युक्तं दर्शनं मर्त्यादीनां घटादिदर्शनमिव न सामान्यतः; किन्तु पलपरिमाणादिना यादृशं रूपं तत्तद्वस्तुस्वरूपं तादृशं द्रष्टुमर्हतीति योजना ।

१. **'साध्विमं'** इति कुं.पाठः । ; २. **'योऽहं'** इति कुं. पाठः ।
३. **'माययेच्छामि संयोजयितुमर्जनम्'** इति कुं. पाठः ।
४. **'चेच्छेत्तादृशं'** इति कुं. पाठः ।

समानपादः[1] षण्मासान् स्थितो विद्यां लभेदिमाम् ।
अनुनेष्याम्यहं विद्यां स्वयं तुभ्यं व्रते कृते ॥ ४६ ॥

**समानपादः षण्मासान्** इत्यत्र समानौ पादौ यस्य स तथोक्तः तादृशः सन् **स्थितः** तपसि स्थितः ।

देवगन्धर्ववाहास्ते दिव्यवर्णा मनोजवाः ।
क्षीणे क्षीणे[2] भवन्त्यन्य[3] न हीयन्ते च रंहसः ॥ ४९ ॥

**क्षीणे क्षीणे भवन्त्यन्य** इत्यत्र अन्ये वाहाः एतेषामग्रे क्षीणे क्षीणे वेगे भवन्ति । एते तु रंहसः न हीयन्ते ।

ततो भागीकृतो देवैर्वज्रभाग उपास्यते ।
लोके यत्साधनं[4] किञ्चित् सैव वज्रतनुः स्मृता ॥ ५१ ॥

**लोके यत्साधनं किञ्चित्** इत्यत्र **साधनं** श्रेयस्साधनम् ।

वज्रपाणिर्ब्राह्मणः स्यात् सत्रं वज्ररथं स्मृतम् ।
वैश्यवज्रं तु वै सीरं कर्मवज्रा यवीयसः ॥ ५२ ॥

**वैश्यवज्रं तु वै सीरम्** इत्यत्र **सीरं** लाङ्गलम् ।

॥ इति अष्टादशाधिकशततमोध्यायः ॥

---

१. **'एकापादेन'** इति कुं. पाठः ।
२. $G_{2.5}$; BORI पृ. ६६९; **'क्षीणाक्षीणा'** इति कुं. पाठः ।
३. S; **'भवन्त्येते'** इति कुं. पाठः ।
४. $N_{2.3}, V_1, B_6, D_N$; BORI पृ. ६६९; **'यशोधनं'** इति कुं. पाठः ।
५. S; BORI पृ. ६६९; **'वैश्या वै दानवज्राश्च'** इति कुं.पाठः ।

## ।। अथ एकोनविंशत्यधिकशततमोऽध्यायः ।।

[१] **स्त्रीसकाशे च कौरव्य न पुमान् क्षन्तुमर्हति ।**
**धर्षणामात्मनः पश्यन् बाहुद्रविणमात्मनः[२]** ।। ७२ ।।

**स्त्रीसकाशे च कौरव्य न पुमान् क्षन्तुमर्हति । धर्षणामात्मनः पश्यन् बाहुद्रविणमात्मन** इत्यत्र आत्मनः **धर्षणां** धिक्कारं **आत्मनः** स्वस्य **बाहुद्रविणं** बाहुपराक्रमं च पश्यन् न क्षन्तुमर्हतीति पूर्वेणा -न्वयः ।

**सोऽहं त्वयेह विजितः सखे[३] तापत्यनन्दने ।**
**येन तेनेह विधिना कीर्त्यमानं निबोध मे** ।। ७४ ।।

**सोऽहं त्वयेह विजितः सखे तापत्यनन्दन** इत्यत्र **तपती** नाम सूर्यतनया संवरणपत्नी, तस्याः पुत्रः कुरुः **तापत्यः**, तस्य नन्दन **तापत्यनन्दन** कुरुनन्दनेत्यर्थः ।

**तस्मात्तापत्य यत्किञ्चिन्नृणां श्रेय इहेप्सितम् ।**
**तस्मिन् कर्मणि योक्तव्या दान्तात्मानः पुरोहिताः** ।। ७८ ।।

**तस्मात्तापत्य यत्किञ्चित्** इत्यत्र तापत्यकुलोत्पन्नत्वात्तापत्येत्य- र्जुनस्य सम्बुद्धिः ।

**।। इति एकोनविंशत्यधिकशततमोऽध्यायः ।।**

---

१ कुं.पाठानुसारेण पूर्वाध्याय एवानुसरति ।
२ $B_{..}, G_1, S_1, K_{(except\ K4)}$;BORI पृ. ६७१; **‘-माश्रितः’** इति कुं. पाठः
३ $S, K_{0-3}$; BORI पृ. ६७१; **‘सङ्ख्ये तापत्यवर्धने’** इति कुं. पाठः ।

## ।। अथ विंशत्यधिकशततमोऽध्यायः ।।

**स[१] सोममतिकान्तत्वादादित्यमति तेजसा ।**
**बभूव नृपतिः श्रीमान् सुहृदां दुर्हृदामपि ।। १९ ।।**

**स सोममतिकान्तत्वात्** इत्यत्र **कान्तत्वात्** कान्त्याख्यगुण-वत्त्वात् सोमम् **अति** अतिक्रम्य वर्तते ।

**स कदाचिदथो राजा श्रीमानुरुयशा[२] भुजः ।**
**चचार मृगयां पार्थ पर्वतोपवने किल ।। २१ ।।**

**श्रीमानुरुयशा भुज** इत्यत्र 'अर्श आदिभ्योऽच्' इति वचनात् **भुजः** प्रशस्तभुजवान् ।

**तस्या रूपेण स गिरिर्वेपेण च विशेषतः ।**
**ससवृक्षलतागुल्महिरण्मय[३] इवाभवत् ।। २८ ।।**

**ससवृक्षलतागुल्महिरण्मय इवाभवत्** इत्यत्र सवृक्षलतागुल्मैः सह **हिरण्मये** गिरिप्रस्थे स्थितेवाभवदिति योजना । सुवर्णोपमतदङ्गकान्त्या वृक्षलतादिकमपि सुवर्णोपममासीदिति भावः ।

**न देवीं नासुरीं चैव न यक्षीं न च राक्षसीम् ।**
**न च भोगवतीं मन्ये न गन्धर्वीं न मानुषीम् ।। ३८ ।।**

**न च भोगवतीं मन्य** इत्यत्र **भोगवतीं** देवैः सह भोगवतीम् अप्सरस्त्रियम् ।।

**।। इति विंशत्यधिकशततमोऽध्यायः ।।**

---

१. कुं. १८७ अध्यायः ; २. BORI पृ. ६७४; **'श्रीमानमितविक्रमः'** इति कुं
३. S; BORI पृ. ६७५; **'ससवृक्षक्षुपलतो हिरण्मय'** इति कुं. पाठः ।

## ॥ अथ एकविंशत्यधिकशततमोऽध्यायः ॥

[१]यथा हि ते मया प्राणाः सम्भृताश्च नरेश्वर ।
दर्शनादेव भूयस्त्वं तथा प्राणान् ममाहरः ॥ २१ ॥

**यथा हि ते मया प्राणाः सम्भृताश्च नरेश्वर । दर्शनादेव भूयस्त्वं तथा प्राणान् ममाहर** इत्यत्र यथा दर्शनात् (एव) ते प्राणा मया सम्भृताः तथा मम प्राणान् त्वमपि **आहर** रक्ष । त्वद्धत्कामो-[illegible]ण मरणाभावेऽपि पितुराज्ञोल्लङ्घने सति ममापि मरणं स्यात् । अतः पितृराज्ञां सम्पादयेति भावः ।

॥ इति एकविंशत्यधिकशततमोऽध्यायः ॥

## ॥ अथ त्रयोविंशत्यधिकशततमोऽध्यायः ॥

[२]नक्तन्दिनमथैकस्थे स्थिते तस्मिञ्जनाधिपे ।
अथाजगाम विप्रर्षिस्तदा द्वादशमेऽहनि ॥ १५ ॥

**नक्तं दिनमथैकस्थ** इत्यत्र **एकस्थे** एकस्मिन् तपतीलाभ एव स्थित [illegible]स्थः तस्मिन् । **स्थिते** सूर्यप्रार्थनां कृत्वा गिरिशृङ्गे स्थिते सती-भावः ।

योजनानां तु नियुतं क्षणाद्गत्वा तपोधनः ।
सहस्रांशुं ततो विप्रः कृताञ्जलिरुपस्थितः ।
वसिष्ठोऽहमिति प्रीत्या स चात्मानं न्यवेदयत् ॥ १९ ॥

---

१ पृ. १८८ अध्यायः

२ पृ. १८९ अध्यायः ; BORI पृ.६७९; 'नक्तन्दिनमथैकत्र' इति कुं.पाठः ।

**योजनानां तु नियुतम्** इत्यत्र **नियुतं** लक्षम् ।

।। इति द्वाविंशत्यधिकशततमोऽध्यायः ।।

## ।। अथ त्रयोविंशत्यधिकशततमोऽध्यायः ।।

**[१]सहि राजा बृहत्कीर्ति धर्मार्थविदुदारधीः ।**
**युक्तः संवरणो भर्ता दुहितुस्ते विहङ्गम** ।। २९ ।।

**दुहितुस्ते विहङ्गभ** इत्यत्र विहायसि गच्छतीति **विहङ्गमः** सूर्यः ।

**वरः संवरणो राज्ञां त्वमृषीणां वरो मुने ।**
**तपती योषितां श्रेष्ठा किमन्यत्रापसर्जनात्** ।। ३१ ।।

**किमन्यत्रापसर्जनात्** इत्यत्र **अपसर्जनात्** दानात् ।

**कृच्छ्राद्द्वादशरात्रे तु तस्य राज्ञः समाहिते ।**
**आजगाम विशुद्धात्मा वसिष्ठो भगवानृषिः** ।। ३७ ।।

**कृच्छ्राद्द्वादशरात्रेषु तस्य राज्ञः समाहित** इत्यत्र द्वादशरात्रेषु गतेषु सत्सु तस्य राज्ञः **समाहिते** समाधानाय । तादर्थ्ये सप्तमी ।

**तत् क्षुधार्तैर्निरानन्दैः शवभूतैस्तथा नरैः ।**
**अभवत् प्रेतराजस्य पुरं प्रेतैरिवावृतम्** ।। ४९ ।।

**तत्क्षुधार्तैर्निरानन्दैः** इत्यत्र **तत्** पुरमित्यर्थः ।

**तं च पार्थिवशार्दूलमानयामास तत्पुरम् ।**

---

१. कुं.पाठानुसारेण अत्र पूर्वाध्याय एवानुसरति ।

२. BORI पृ. ६७९; **'किमन्यत्रापवर्जनात्'** इति कुं. पाठः ।

तपत्या सहितं राजन् वर्षे द्वादशमे गते ।
ततः [1] प्रहृष्टस्तत्रासीद्यथाकालं सुरारिहा ॥ ५१ ॥

**ततः पहृष्टस्तत्रासीद्यथाकालं सुरारिहा** इत्यत्र **ततः** राज्ञः पुरप्रवेशात् प्रहृष्टः **सुरारिहा** इन्द्रः **तत्र** राष्ट्रे । **यथाकालं** कालमनतिक्रम्य आसीत् । यस्मिन् काले वृष्टिर्देया तस्मिन्नेव काले ददाविति भावः ।

[2] ततस्तु राष्ट्रं मुमुदे तत्पुरं परया मुदा ।
तेन पार्थिवमुख्येन भावितं भावितात्मना ॥ ५३ ॥

**ततस्तु राष्ट्रं मुमुद** इत्यत्र **ततः** तस्माद्राज्ञ इत्यर्थः ।

॥ इति त्रयोविंशत्यधिकशततमोऽध्यायः ॥

॥ तापत्योपाख्यानं समाप्तम् ॥

## ॥ अथ चतुर्विंशत्यधिकशततमोऽध्यायः ॥

[3] ब्रह्मणो मानसः पुत्रो वसिष्ठोऽरुन्धतीपतिः ।
अजितावेतौ नरव्याघ्र अजेयावमरैरपि ॥ ५ ॥

**अजितावेतौ नरव्याघ्र** इत्यत्र यैः एतावजितौ तेषां ते पूर्वोक्ताः [illegible]तयः सर्वे अजिता एव ।

॥ इति चतुर्विंशत्यधिकशततमोऽध्यायः ॥

---

१ [illegible]S; BORI पृ. ६८२; **‘प्रवृष्टस्तत्रासीद्यथापूर्वं’** इति कुं. पाठः ।
२ **‘[illegible]तः सराष्ट्रं’** इति कुं. पाठः ।
३ [illegible] १९० अध्यायः

## ।। अथ पञ्चविंशत्यदिकशाततोऽध्यायः ।।

[१] बाष्पाढ्यस्योदनस्यैव राशयः पर्वतोपमाः ।। १० ।।

**बाष्पाढ्यस्य** इत्यत्र **बाष्पाढ्यस्य** उष्णेन सहितस्य । [२] 'ऊष्मा बाष्पः स्फुलिङ्गः' इति हलायुधः । ओदनस्येति सम्बन्धः ।

**निष्ठानानि च सूपांश्च दधिकुल्यास्तथैव च ।। १० ।।**

**निष्ठानानि च सूपांश्च** इत्यत्र नितरां **स्थानानि** पात्राणि येषां तानि **निष्ठानानि** । बहुपात्रेषु बहुधा रचितानि व्यञ्जनानीति यावत् । **सूपान्** केवलं मुद्गादिभिरेव कृतशाकान् ।

**कूपांश्च घृतसम्पूर्णान् [३] गौड्यान्नानि सहस्रशः ।**
**इक्षून्मधूनि लाजांश्च मैरेयांश्च वरासवान् ।। ११ ।।**

**गौड्यान्नानि सहस्रश** इत्यत्र **गौड्यान्नानि** गुडमिश्रपरमान्नादीनि ।

**सामात्यः सबलश्चैव तुतोष स भृशं तदा ।**
**[४] षडुन्नतां सुपार्श्वोरुं त्रिपृथुं पञ्चसंवृताम् ।। १५ ।।**
**मण्डूकनेत्रां स्वाकारां पीनोधसमनिन्दिताम् ।।**
**सुबालधिं शङ्कुकर्णीं चारुशृङ्गां मनोरमाम् ।**

---

१. कुं. १९१ अध्यायः
२. ह.को. १-६७
३. **'गौह्यान्नानि'** इति कुं. पाठः ।
४. $\tilde{N}_2, V_1, D_n, D_{1.2.4}$, T, G; BORI पृ. ६८५; **'षडुन्नतां सुपार्श्वोरुं पृथुपञ्चसमावृताम्'** इति कुं. पाठः ।

**अष्टायतशिरोग्रीवां विस्मितः सोऽभिवीक्ष्य ताम् ।**
**अभिनन्द्य स तां राजा नन्दिनीं गाधिनन्दनः ॥ १७ ॥**

**षडुन्नतां सुपार्श्वोरुं त्रिपृथुं पञ्चसंवृताम् । मण्डूकनेत्रां स्वाकारां पीनोधसमनिन्दिताम् ॥ सुबालधिं शङ्कुकर्णीं चारुशृङ्गां मनोरमाम् । अष्टायतशिरोग्रीवां विस्मितः सोऽभिवीक्ष्य ताम्** इत्यत्र **षडुन्नताः** 'पृष्ठं ललाटं च ककुच्छ्रेण्यथ नासिका । गवां षडुन्नतानि स्युः' इति वचनात् ऊर्वादिषडवयवैरुन्नताम् । **त्रिपृथुं** 'ललाटपृष्ठनेत्राणि विस्तीर्णानि वै गवाम्' इति वचनात् ललाटपृष्ठनेत्राख्यावयवत्रये विस्तीर्णाम् । 'जिह्वादशननासाश्च योनिस्तद्वत् खुराणि च । संवृतानीह पञ्चानि पञ्चस्थानानि वै गवाम्' इति वचनात् नातिविवृतजिह्वादशन-नासायोनिखुराख्यस्थानपञ्चकाम् । **मण्डूकनेत्रां** मण्डूकनेत्रवत् उत्तुङ्ग-नेत्राम् । 'घोणा सास्ना मुखं पुच्छं शस्तानि चरणानि च । गुह्यं ध्वनि-रहङ्कार आयतान्यष्ट वै गवाम्' इति वचनात् अष्टायताङ्ग-वतीशिरोग्रीवावतीम् । उत्तमगोलक्षणपूर्णामित्यर्थः ।

**गन्धर्व उवाच –**

**कशाग्रदण्डाभिहतां क्रोशन्तीं मामनाथवत् ।**
**विश्वामित्रतपोद्विग्नां भगवान् किमुपेक्षसे ॥ २९ ॥**

**विश्वामित्रतपोद्विग्नां** इत्यत्र विश्वामित्रेण क्रियमाणः **तपः** सन्तपः तेन उद्विग्ना ।

॥ इति पञ्चविंशत्यधिकशततमोऽध्यायः ॥

---

* 'विश्वामित्रबलैर्घोरै' इति कुं. पाठः ।

## ।। अथ षड्विंशत्यधिकशततमोऽध्यायः ।।

**[१]ततो याज्यनिमित्तं तु विश्वामित्रवसिष्ठयोः** ।। २१ ।।

**ततो याज्यनिमित्तं तु** इत्यत्र याजयितुं योग्यो **याज्यो** यजमानः त्रिशङ्कुः ।

**वैरमासीत्तदा तं तु विश्वामित्रोऽन्वविन्दत[२]** ।। २१ ।।

**तं तु विश्वामित्रोऽन्वविन्दत** इत्यत्र **तं** शक्तिना शप्तं कल्माषपादम् ।

**ददर्शाथ द्विजः कश्चिद्राजानं [३]पुनरागतम् ।**
**अयाचत् [४]क्षुधितश्चैनं समांसं भोजनं तदा** ।। ३० ।।

**ददर्श स द्विजः कश्चिद्राजानं पुनरागतम् । अयाचत् क्षुधितश्चैनं समांसं भोजनं तदा** इत्यत्र आगतं तमेव राजानं सः तेनैव मार्गेणागतः पुनः कश्चिद्द्विजः ददर्श । **समांसं** मांसेन सहितं भोजनं अयाचत् ।

**तथेत्युक्त्वा ततः सूदः संस्थानं वध्यघातिनः[५] ।**
**गत्वाऽऽजहार त्वरितो नरमांसमपेतभीः** ।। ३९ ।।

**तथेत्युक्त्वा ततः सूदः संस्थानं वध्यघातिनः । गत्वाऽऽजहार त्वरितो नरमांसमपेतभीः** इत्यत्र वधयोग्यानां चोरादीनां घातिनः पुरुषस्य यत् **संस्थानं** चोरशिक्षाभूमिः, तद्गत्वेति योजना ।

---

१. कुं. १९२ अध्यायः ; २. S; BORI पृ. ६९१; '-पद्यत' इति कुं. पाठः ।
३. 'प्रस्थितं वनम्' इति कुं. पाठः ।
४. $\bar{N}_2$,$V_1$,B,D; BORI पृ. ६९२; 'अयाचत क्षुधापन्नः' इति कुं. पाठः ।
५. 'वध्यघातिनाम्' इति कुं. पाठः ।

**यस्मादभोज्यमन्नं मे ददाति स नराधिपः ।**
**तस्मात्तस्यैव मूढस्य भविष्यत्यत्र लोलुपः ॥ ३१ ॥**

**भविष्यत्यत्र लोलुप** इत्यत्र अत्र नरमांसे **लोलुपः** स्वभावो [illegible]र्तीति योजना ।

॥ इति षड्विंशत्यधिकशततमोऽध्यायः ॥

## ॥ अथ एकोनत्रिंशदधिकशततमोऽध्यायः ॥

**[1] [illegible]त्रि कस्यैष साङ्गस्य वेदस्याध्ययनस्वनः ।**
**पु[2]रुः साङ्गस्य वेदस्य शक्तेरिव मया श्रुतः ॥ १६ ॥**

**पुरुः कस्यैष साङ्गस्य** इत्यत्र **पुरुः** सम्पूर्णः । [3]'पुरुहूः पुरु भूयिष्ठं [illegible] भूयश्च भूरि च' इत्यमरः ।

**पाहि मां भगवन् पापादस्मात् दारुणदर्शनात् ।**
**[4] [illegible]क्षसाद्भक्षितुं यावत् यत्रमेतच्चिकीर्षति ॥ २४ ॥**

**[illegible]क्षसाद्भक्षितुं यावद्यत्रमेतच्चिकीर्षति** इत्यत्र एतत् शब्दस्य रक्ष[illegible] ग्राह्यः ।

[illegible] उवाच –

**[illegible]भैः पुत्रि न भेतव्यं राक्षसात्तु कथञ्चन ।**
**[5] [illegible]द्रक्षो भयं यस्मात् पश्यसि त्वमुपस्थितम् ॥ २५ ॥**

---

[1] [illegible] १५३ अध्यायः ; २. 'पुरा' इति कुं.पाठः ।
[3] [illegible] ३-१ । प्र.पाठः 'पुरूहं पुरो भूयिष्ठं स्फीरं भूयश्च भूरि च' इति ।
[4] '[illegible]ऽयमिहात्तुं वै नूनमात्रां समीहते' इति कुं.पाठः ।
[5] '[illegible]द्रक्षो' इति कुं. पाठः ।

**एतद्रक्षो भयं यस्मात् पश्यसि त्वमुपस्थितम्** इत्यत्र यस्माद्भयमुपस्थितं, एतद्रक्षो न पश्यसीति सम्बन्धः।

**ऋतावथ महर्षिस्तु सम्बभूव तया सह।**
**देव्या दिव्येन विधिना वसिष्ठः श्रेष्ठभागृषिः ॥ ४६ ॥**

**ऋतावथ महर्षिस्तु सम्बभूव तया सह** इत्यत्र **सम्बभूव** सङ्गतो बभूव।

**परासुत्वमयन्[१] येन वसिष्ठस्थापितो मुनिः।**
**गर्भस्थेन ततो लोके पराशर इति स्मृतः ॥ ३ ॥**

**परासुत्वमयन् येन वसिष्ठस्थापितो मुनिः। गर्भस्थेन ततो लोके पराशर इति स्मृत** इत्यत्र येन कारणेन **परासुत्वं** मृतत्वं **अयन्** कल्माषपादभयेन प्राप्नुवन् स गर्भः **वसिष्ठस्थापितः** वसिष्ठेन स्थापितः, तेन कारणेन तत आरभ्य पराशर इति स्मृतः। **परेण** उत्तमेन वसिष्ठेन, 'शृ हिंसायाम्' इति धातोः **अशारः** अहिंसा रक्षणं यस्य। परासुः सन् रक्षित इति वा पराशरः। निरुक्तत्वात् सकारस्य शकारः उकारलोपश्च।

**मा ताततातताततेति ब्रूह्येनं पितरं पितुः।**
**रक्षसा भक्षितस्तात तव तातो वनान्तरे ॥ ७ ॥**

**मा ताततातताततेति** इत्यत्र हे **तात** पुत्र पितामहेऽस्मिन् तात तातेति शब्दो मा माऽस्तु इति योजना।

॥ इति एकोनत्रिंशदधिकशततमोऽध्यायः ॥

१. कुं. १९४ अध्यायः ; '**परासुः स यतस्तेन**' इति कुं. पाठः।

## ॥ अथ त्रिंशदधिकशततमोऽध्यायः ॥

**स चक्रे तात लोकानां विनाशाय मतिं तदा ।**
**सर्वेषामेव कार्त्स्न्येन मने[1] प्रवणमात्मनः ॥ १० ॥**

**मनप्रवणमात्मन** इत्यत्र **आत्मनः** परमात्मनः **मने** मनने **प्रवणं** नम्रं [illegible] इति पूर्वेणान्वयः । 'मनु अवबोधने' इति धातोः पचाद्यचि कृते [illegible]व मननम् ।

**नानीशैर्हि तदा तात भृगुभिर्भावितात्मभिः ।**
**वधोह्युपेक्षितः सर्वैः क्षत्रियाणां विहिंसताम् ॥ १५ ॥**

**नानीशैर्हि तदा तात** इत्यत्र **अनीशाः** असमर्थाः न भवन्तीति [illegible]नीशाः तैः अतिसमर्थैरित्यर्थः ।

**आयुषा[2] हि प्रकृष्टेन यदा नः खेद आविशत् ।**
**तदाऽस्माभिर्वधो[3] घोरः क्षत्रियैरीप्सितः स्वयम् ॥ १६ ॥**

**आयुषा हि प्रकृष्टेन यदा नः खेद आविशत् । तदाऽस्माभिर्वधो [illegible]: क्षत्रियैरीप्सितः स्वयम्** इत्यत्र यदा प्रकृष्टेन मृत्युना प्रकर्षादा-[illegible] आयुषा कारणेन **नः** अस्मान् **खेदः** धनाभावनिमित्तकदुःखं [illegible]शत् । आयुःक्षयकाले निराशानामप्यस्माकं धनाभावनिमित्तक-[illegible]प्याशा जातेति भावः । तस्मादस्माभिर्निमित्तैः अस्मदर्थमिति [illegible] । क्षत्रियैः **स्वयं** स्वकरेणैव अत एव घोरः वधः ईप्सितः । सधना-[illegible] हत्वा अस्मद्धनमाहराम इति बुद्धिर्जातेति भावः ।

---

१. '[illegible]:' इति कुं. पाठः ।; २. BORI पृ. ७०३; **'विप्रकृष्टेन'** इति कुं. पाठः
३. '[illegible]तात' इति कुं. पाठः ।

**निखातं यच्च वै वित्तं केनचिद्भृगुवेश्मनि ।**
**[1]चिरायैव तदा न्यस्तं क्षत्रियान् कोपयिष्णुभिः ॥ १७ ॥**

**निखातं यच्च वै वित्तम्** इत्यत्र निखातं सत् चिराय न्यस्तमिति सम्बन्धः ।

**[2]यदा हि मृत्युरायाति न शक्नोति च सर्वशः ॥ १९ ॥**

**यदा हि मृत्युरायाति न शक्नोति च सर्वश** इत्यत्र यदा मृत्युरायाति तदा **सर्वशः** सर्वो जनः **न शक्नोति** मृत्युदत्तां बुद्धिमत्येतुं न शक्नोतीत्यर्थः ।

**तदाऽस्माभिरयं दृष्ट उपायस्तात [3]धर्मतः ॥ १९ ॥**

**उपायस्तात धर्मत** इत्यत्र **धर्मतः** मृत्युरुपयमात् तत्प्रेरणयेत्यर्थः । **अयमुपायः** धननिक्षेपाख्योपायः दृष्टः । अन्यथा [4]'आत्महा तु पुनस्तात न लोकान् लभते शुभान्' इत्युत्तरार्धविरोधः ।

**ततोऽस्माभिः [5]समीक्ष्यैवं आत्मनाऽऽत्मा विनाशितः ।**
**न चैतन्नः प्रियं तात यदिदं कर्तुमिच्छसि ।**
**नियच्छेदं मनः पापात् सर्वलोकपराभवत् ॥ २१ ॥**

**ततोऽस्माभिः समीक्ष्यैवमात्मनाऽऽत्मा विनाशित** इत्यत्र ततः

---

१. **'वैरायैव'** इति कुं.पाठः ।
२. **'यदा तु मृत्युरादातुं न नः शक्नोति सर्वशः'** इति कुं. पाठः ।
३. $T_2$,$G_{4-6}$; BORI पृ. ७०४; **'सम्मतः'** इति कुं. पाठः ।
४. **आदि १९५-२०**
५. **'समीक्ष्यैवं नात्मनात्मा निपातितः'** इति कुं. पाठः ।

कारणात् अस्माभिरेव **आत्मना** स्वप्रयत्नेन **आत्मा** देहो विनाशितः । एवं इत्थं समीक्ष्य पापान्मनो नियच्छेत्युत्तरेणान्वयः ।

**[१] न हि निःक्षत्रियास्तात न लोकान् सप्त पुत्रक ।**
**[२] दूषयन्ति च नस्तेज क्रोधमुत्पतितं जहि ॥ २२ ॥**

**न हि निःक्षत्रिया** इत्यत्र **निःक्षत्रियाः** राजरूपक्षत्रियरहिता इत्यर्थः । **दूषयन्ति च नस्तेज** इत्यत्र क्षत्रियाभावे चोरराक्षसादिभिराक्रम्यमाणा लोकाः नः **तेजः** तपस्सामर्थ्यं धिगिति दूषयन्तीति भावः ।

**॥ इति त्रिंशदधिकशततमोऽध्यायः ॥**

## ॥ अथ एकत्रिंशदधिकशततमोऽध्यायः ॥

**[३] राजभिश्चेतरैश्चैव यदि वै पितरो मम ।**
**शक्तैर्न शङ्किताखातुमिष्टमद्येह[४] जीवितम् ॥ १२ ॥**

**राजभिश्चेतरैश्चैव यदि वै पितरो मम । शक्तैर्न शङ्किताखातुमिष्टमद्येह जीवितम्** इत्यत्र मे पितरः **शक्तै** राजभिरितरैर्वा त्रातुं यदि **न शङ्किताः** शङ्काविषया न भवन्ति, किन्तु निश्शङ्कं रक्षिता एव भवन्ति तर्हि इह लोके मम जीवितमिष्टम्; अन्यथा नेष्टमिति भावः ।

**एवं प्रतिज्ञा सत्येयं तवानघ भविष्यति ।**
**न चैवं सामरा लोका भविष्यन्ति पराभवम् ॥ २० ॥**

---

१. **'मावधीः क्षत्रियांस्तात'** इति कुं.पाठः ।
२. **'दूषयन्तं तपस्तेजः'** इति कुं. पाठः । ; ३. कुं. १९६ अध्यायः
४. BORI पृ. ७०५; **'-ष्टं मत्वेह'** इति कुं. पाठः ।
५. $D_1, T_1, G_{2.6}$; BORI पृ. ७०६; **'गमिष्यन्ति'** इति कुं. पाठः ।

**न चैव सामरा लोका भविष्यन्ति पराभवम्** इत्यत्र 'भू प्राप्तौ' इति धातोः पराभवं **न भविष्यन्ति** न प्राप्स्यन्तीत्यर्थः ।

॥ इति एकत्रिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ द्वात्रिंशदधिकशततमोऽध्यायः ॥

[१] **न हि तं वारयामास वसिष्ठो रक्षसां वधात् ।**
**द्वितीयामस्य मा [२] जघ्ने प्रतिज्ञामिति निश्चयात्** ॥ ४ ॥

**द्वितीयामस्य मा जघ्न** इत्यत्र **अस्य** पराशरस्य **द्वितीयां** लोकसंहार कालीनप्रतिज्ञोत्तरकालीनां स्वपितृद्रोहिराक्षससंहारप्रतिज्ञां **मा जघ्ने** न हन्मि । कर्तरि लिट् आत्मनेपदे उत्तमपुरुषस्य रूपमिदम् ।

[३] **शक्तिनं चापि धर्मज्ञं नातिक्रान्तुमिहार्हसि ।**
**प्रजायाश्च ममोच्छेदं न चैवं कर्तुमर्हसि** ॥ १४ ॥

**शक्तिनं चापि धर्मज्ञम्** इत्यत्र शक्तेः शक्तीत्यपि नामास्तीति ज्ञेयम्।

**शापाद्धि शक्तेर्वासिष्ठ तदा तदुपपादितम् ।**
**आत्मजेन स दोषेण शक्तिर्नीत इतो दिवम्** ॥ १५ ॥

**शापाद्धि शक्तेर्वासिष्ठ** इत्यत्र **तदा** स्वस्य मार्गाप्रदानसमये कल्माषपादं प्रति पुरुषादो भवेति शापे शक्तेरपि पुरुषत्वान्नृपतिस्तमेव भक्षितवान् । हे धीमन् पराशर त्वयैव केचिद्राक्षसाः स[४]त्रेण निहताः ।

---

१. कुं. १९७ अध्यायः

२. $T_2$,$G_{1.5}$,M; BORI पृ. ७०७; **'भाङ्क्ष्'** इति कुं. पाठः ।

३. BORI पृ. ७०८; **'शक्तिं चापि हि धर्मज्ञं'** इति कुं. पाठः ।

४. **सत्रे** सो.मु.पा.

अतस्तव पितरस्ते ऋषयः अशक्ता न हि। तस्मात् स्वतपसा[1] तव पितरि शापं स्वभक्षणसमये त्वमेव नष्टो भवेति[2] शापं न कुर्वति सति तदा तद्रक्षः यान् मुनीन् भक्षयते ते मुनयः वागस्त्रात् नरवारणा हि नरान् वारयन्तीति **नरवारणाः**। पुरुषादो भवेति प्राक् शक्तिना कल्माषपादस्य शापे दत्तेऽपि न तेन पुरुषा भक्षिताः। किन्तु विश्वामित्रप्रेषितरक्षसैव भक्षिताः। अतस्तत्र स्वस्य हिंसादोषाभावात् कशाताडनदुःखमूर्च्छितस्तं शापं दैववशाद्दत्तवान्। इह तु त्वं मे नष्टो भवेति शापे साक्षात् स्वस्यैव हिंसादोषप्राप्तेः शक्तिरपि न शशाप। तदनुजाश्च वसिष्ठपुत्रा न शेपुरिति हृदयम्।

**क्षमावन्तं दहेद्देहं[3] देहमन्यद्भवत्विति।**
**आत्मनैवात्मनस्तेन दृष्टो मृत्युस्तदाऽभवत् ॥ १७ ॥**

**क्षमावन्तम्** इत्यत्र मुनिः देहं क्षमावन्तं कृत्वा अहं मन्युं अहङ्कारजनितं कोपमेव ध्रुवं दहेदिति मत्वा शक्तौ शापं न कुर्वति सति ततः अनन्तरम् **आत्मनैव** स्वहन्तरि क्षमाकरणाख्यात्मापराधेनैव **आत्मनः** तेन राक्षसेन[4] तदा **मृत्युः** मरणमभवदित्यन्वयः।

**सर्वमेतद्वसिष्ठस्य विदितं वै महामुने।**
**रक्षसां च समुच्छेद एष तात तपस्विनाम् ॥ २० ॥**

**रक्षसां च समुच्छेद** इत्यत्र **एष** यागः तपस्विनां रक्षसां च समुच्छेदः। राक्षसाह्वाने राक्षसयोनौ जातानां सञ्जीवानामपि आगमनेन नाशः स्यादिति भावः। ॥ इति द्वात्रिंशदधिकशततमोऽध्यायः ॥

---

१. भवत्पितरि सो.मु.पा. ; २. वाकृछस्त्रात् सो.मु.पा.
३. 'भवहन् देहं' इति कुं.पाठः। ;
४. राक्षसेनैव न तदा मृत्युर्मरणमभवदित्यन्वयः सो.मु.पा.

## ॥ अथ पञ्चत्रिंशदधिकशततमोऽध्यायः ॥

**स[१] चापि विप्रस्तान् मेने स्वभावाभ्यधिकान् भुवि ।**
**तेन धर्मविदा पार्था योज्या सर्वविदा वृताः ॥ १४ ॥**

**पार्था योज्या** इत्यत्र **योज्या** नियोज्याः शिष्याः वृताः शिष्यत्वेन वृता इत्यर्थः । तेनैव सहिताश्च पाण्डवा राज्यं प्राप्तं मेनिर इति योजना ।

**नटा वैतालिकास्तत्र नर्तकाः सूतमागधाः ।**
**नियोधकाश्च देशेभ्यः समेष्यन्ति महाबलाः ॥ १६ ॥**

**नटा वैतालिकास्तत्र** इत्यत्र **वैतालिकाः** वेतालवद्विनोदं कुर्वन्तो जना वैतालिकाः ।

॥ इति पञ्चत्रिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ षट्त्रिंशदधिकशततमोऽध्यायः ॥

**तस्मै[२] यथावत् सत्कारं कृत्वा तेन च सत्कृताः ।**
**कथान्ते चाभ्यनुज्ञाताः प्रययुर्द्रुपदक्षयम् ॥ ३ ॥**

द्रुपदक्षयं 'निवेशः शरणं क्षय' इत्यभिधानात् क्षयं गृहम् ।

**ते तु दृष्ट्वा पुरं तच्च स्कन्धावारं च पाण्डवाः ।**
**कुम्भकारस्य शालायां निवासं चक्रिरे तदा ॥ ६ ॥**

---

१. कुं. १९९ अध्यायः
२. कुं. २०१ अध्यायः

**स्कन्धावारं च पाण्डवा** इत्यत्र **स्कन्धावारं** चित्रकम्बलपट-कुड्यादिभिर्विरचितं राज्ञां [1] सेनासन्नाहम् ॥

**सोऽन्वेषमाणः कौन्तेयान् पाञ्चालो जनमेजय ।**
**दृढं धनुरनायम्यं[2] कारयामास भारत ॥ १२ ॥**

**अनायम्यम्** आ सम्यक् ईषदपि वा **यमयितुं** नम्रीकर्तुमशक्यं अनायम्यम् ।

**यन्त्रं वैहायसं चापि कारयामास कृत्रिमम् ।**
**तेन यन्त्रेण सहितं राजँल्लक्ष्यं च काञ्चनम् ॥ १७ ॥**

**वैहायसं** आकाशे रचितं **काञ्चनं** 'अञ्चु गतिपूजनयोः' इति धातोः के जले **अञ्चति** गच्छतीति **काञ्चनं** मत्स्यम् । गत्यर्थानां च ज्ञानार्थत्वात् के उदके **अञ्चनम्** अवगतिर्यस्येति काञ्चनमित्यर्थः ।

**प्रागुत्तरेण नगराद्भूमिभागे समे शुभे ।**
**समाजवाटः शुशुभे भवनैः सर्वतो वृतः ॥ २५ ॥**
**प्राकारपरिखोपेतो द्वारतोरणमण्डितः ।**
**वितानेन विचित्रेण सर्वतः समलङ्कृतः ॥ २६ ॥**

**समाजवाटः शुशुभ** इत्यत्र **समाजस्य** स्वयंवरद्रष्टृराजसमुदायस्य **वाटः** स्थानम् । [3]'अस्त्री वितानमुल्लोचः' इत्यभिधानात् **वितानेन** उल्लोचेन उपरिकृतपटालङ्कारेणेत्यर्थः ।

---

१ **सेनासंस्थानम्** सो.मु.पा.

२ BORI पृ. ७१६; **'धनुरथानम्यं'** इति कुं.पाठः ।

३ अ.को. २-६-१२०

[१]अग्राम्यसमवच्छन्नैरगुरूत्तमवासितैः ।
हंसांशुवर्णैर्बहुभिरायोजन सुगन्धिभिः ॥ ३० ॥

**अग्राम्यसमवच्छन्नैः** इत्यत्र **ग्राम्याः** स्त्रीलम्पटाः ते न भवन्ति इति **अग्राम्याः** तैः **सम्यगवच्छन्नैः** आच्छादितैः पूर्णैरित्यर्थः ।

[२]ससम्बाधपथद्वारैः शयनासनशोभितैः ।
बहुधातुपिनाद्धाङ्गैर्हिमवच्छिखरैरिव ॥ ३१ ॥

**ससम्बाधपथद्वारैः** इत्यत्र गन्त्रागन्तृगजतुरगादिभिः सम्बाधसहिता मार्गा द्वाराणि च येषां ते तथोक्ताः ।

वीरकांस्यमुपादाय काञ्चनं समलङ्कृतम् ।
आगतां ददृशुः सर्वे रङ्गभूमिमलङ्कृताम् ।
अवतीर्णा ततो रङ्गं द्रौपदी भरतर्षभ ॥ ५४ ॥

**वीरकांस्यमुपादाय** इत्यत्र **काञ्चनं** सुवर्णमयं **वीरकांस्यं**, **वीरा** एव वीरकाः अध्यवसितान्तगामिनः, स्वयंवरकृतलक्षवेधिन इति यावत् । तेषामंसस्य योग्यं माल्यं वीरकांस्यं **उपादाय** कराभ्यां गृहीत्वा ।

इदं धनुर्लक्ष्यमिमे च बाणाः
शृण्वन्तु मे भूपतयः समेताः ।
[३]यन्त्राच्छिद्रेणाभ्यतिक्रम्य लक्ष्यं
समर्पयध्वं खगमैर्दशार्धैः ॥ ६० ॥

---

१. $N_2,V_1,B_1,T_1$; BORI पृ. ७१८; **'स्रग्दाम-'** इति कुं. पाठः ।

२. **'असम्बाधशतद्वारैः'** इति कुं. पाठः ।

३. BORI पृ. ७१९; **'छिद्रेण यन्त्रस्य समर्पयध्वं शरैः शतैर्व्योमचरैर्दशाद्यैः'** इति कुं.पाठः ।

**खगमैः** इत्यत्र **खं** आकाशं गच्छन्तीति **खगमाः** शराः तैः **दशार्धैः** पञ्चभिः ।

**एतत् कृत्वा कर्म सुदुष्करं यः**
**कुलेन रूपेण बलेन युक्तः ।**
**तस्याद्य भार्या भगिनी ममेयं**
**कृष्णा भवित्री न मृषा ब्रवीमि ॥ ६१ ॥**

**कर्म सुदुष्करं य** इत्यत्र सुखेन कर्तुमशक्यं **सुदुष्कृत्** कर्म अत्र राज्ञां मध्ये यः कर्तेति सम्बन्धः ।

॥ इति षट्त्रिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ अष्टत्रिंशदधिकशततमोऽध्यायः ॥

**परस्परं स्पर्धया प्रेक्षमाणाः सङ्कल्पजेनाभिपारिप्लुताङ्गाः ।**
**कृष्णा ममैवेत्यभिभाषमाणा नृपाः समुत्पेतुरथासनेभ्यः ॥ ३ ॥**

**सङ्कल्पजेन** इत्यत्र **सङ्कल्पजेन** कामेन ।

**अन्ये तु वीरा नृपपुत्रपौत्राः कृष्णागतैर्नेत्रमनः स्वभावैः ।**
**व्यायच्छमाना ददृशुर्न तान् वै सन्दष्टदन्तच्छदताम्रनेत्राः ॥ ११ ॥**

**व्यायच्छमाना** इत्यत्र **व्यायच्छमानाः** विशेषेण **आ** समन्तात् [illegible]तारः ।

॥ इति अष्टत्रिंशदधिकशततमोऽध्यायः ॥

---

* पृ. २०२ अध्यायः

## ।। अथ एकोनचत्वारिंशदधिकशततमोऽध्यायः ।।

**उदक्रोशन् विप्रमुख्या विधुन्वन्तोऽजिनानि च।[१]**
**दृष्ट्वा सम्प्रस्थितं पार्थ इन्द्रकेतुमिव प्रभुम् ।। २ ।।**

**इन्द्रकेतुम्** इत्यत्र **इन्द्रकेतुं** इन्द्रध्वजम् ।

**नावहास्या भविष्यामो न च लाघवमास्थिताः।**
**न च विद्विष्टतां लोके गमिष्यामो महीक्षिताम् ।। ८ ।।**

**विद्विषताम्** इत्यत्र लोके विद्विषतां महीक्षितां मध्ये न गमिष्यामः। गन्तुं च न शक्नुम इति योजना।

[३] **हीनलोकमिव द्विजा** इत्यत्र सूर्यचन्द्राभ्यां हीनं लोकं **द्विजाः** नक्षत्राणीव।

**विद्धं तु लक्ष्यं प्रसमीक्ष्य कृष्णा**
**पार्थं च शक्रप्रतिमं निरीक्ष्य।**
**[४] स्वभावरूपाऽपि न चेव नित्या**
**विनाऽपहासं हसतीव कान्त्या ।। ३२ ।।**

**स्वभावरूपाऽपि न** चेव नित्या विनाऽपहासं हसतीव कान्त्या इत्यत्र स्वभावरूपाऽपि नित्या तेन रूपेण नित्या **नैव** न भवतीव तिष्ठति। स्वलावण्यमाच्छाद्य स्थितेत्यर्थः।

---

१. कुं. २०३ अध्यायः
२. $K_2$,$G_6$; BORI पृ. ७२६; 'इन्द्रकेतुसमप्रभम्' इति कुं.पाठः।
३. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते।
४. 'स्वभ्यस्तरूपाणि नवेव नित्यं विनापि हासं हसतीव कन्या' इति कुं पाठः।

मदादृतेऽपि स्खलतीव भावै-
वाचा विना व्याहरतीव दृष्ट्या ।
आदाय शुक्लं वरमाल्यदाम
जगाम कुन्तीसुतमुत्स्मयन्ती ॥ ३२ ॥

**वरमाल्यदाम** इत्यत्र **वरमाल्यदाम** श्रेष्ठमाल्यस्य तन्तुम् ।

[1]**क्षत्रमहीयत** इत्यत्र **अहीयत** हीनं बभूव ।

॥ इति एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ चत्वारिंशदधिकशततमोऽध्यायः ॥

[2]अथवा यदि कन्येयं [3]नेह किञ्चिद्बुभूषति ।
अग्नावेनां परिक्षिप्य यमराष्ट्राणि पार्थिवाः ॥ ९ ॥

**नेह किञ्चित्** इत्यत्र किञ्चिदुद्दिश्येति शेषः । **यमराष्ट्राणि** इत्यत्र [illegible] इति योग्यपदाध्याहारः ।

ब्राह्मणो यदि चापल्याल्लोभाद्वा कृतवानिदम् ।
विप्रियं पार्थिवेन्द्राणां नैष [4]वध्र्यः कथञ्चन ॥ १० ॥

**नैष वध्र्यः कथञ्चन** इत्यत्र **एष** ब्राह्मणः कथञ्चन **वध्र्यो न** वर्द्धयितुं [illegible] न । किन्तु घातनीय इत्यर्थः ।

---

[1] [illegible]प्रतीकघटितः श्लोकः मुद्रितकोशेषु नोपलभ्यते ।

[2] कु. १०५ अध्यायः

[3] $K_{1}, D_{a1}, D_{2.5}, G_{4.6}$; BORI पृ. ७३०; **'न च कश्चि-'** इति कुं. पाठः

[4] '[illegible]ध्यः' इति कुं. पाठः ।

**न चैव सामरा लोका भविष्यन्ति पराभवम्** इत्यत्र 'भू प्राप्तौ' इति धातोः पराभवं **न भविष्यन्ति** न प्राप्स्यन्तीत्यर्थः ।

॥ इति एकत्रिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ द्वात्रिंशदधिकशततमोऽध्यायः ॥

**[१]न हि तं वारयामास वसिष्ठो रक्षसां वधात् ।**
**द्वितीयामस्य मा [२]जघ्ने प्रतिज्ञामिति निश्चयात् ॥ ४ ॥**

**द्वितीयामस्य मा जघ्न** इत्यत्र **अस्य** पराशरस्य **द्वितीयां** लोकसंहार कालीनप्रतिज्ञोत्तरकालीनां स्वपितृद्रोहिराक्षससंहारप्रतिज्ञां **मा जघ्ने** न हन्मि । कर्तरि लिट् आत्मनेपदे उत्तमपुरुषस्य रूपमिदम् ।

**[३]शक्तिनं चापि धर्मज्ञं नातिक्रान्तुमिहार्हसि ।**
**प्रजायाश्च ममोच्छेदं न चैवं कर्तुमर्हसि ॥ १४ ॥**

**शक्तिनं चापि धर्मज्ञम्** इत्यत्र शक्तेः शक्तीत्यपि नामास्तीति ज्ञेयम्।

**शापाद्धि शक्तेर्वासिष्ठ तदा तदुपपादितम् ।**
**आत्मजेन स दोषेण शक्तिर्नीत इतो दिवम् ॥ १५ ॥**

**शापाद्धि शक्तेर्वासिष्ठ** इत्यत्र **तदा** स्वस्य मार्गाप्रदानसमये कल्माषपादं प्रति पुरुषादो भवेति शापे शक्तेरपि पुरुषत्वान्नृपतिस्तमेव भक्षितवान् । हे धीमन् पराशर त्वयैव केचिद्राक्षसाः स[४]त्रेण निहताः ।

---

१. कुं. १९७ अध्यायः
२. $T_2$,$G_{1.5}$,M; BORI पृ. ७०७; **'भाङ्क्तं'** इति कुं. पाठः ।
३. BORI पृ. ७०८; **'शक्तिं चापि हि धर्मज्ञं'** इति कुं. पाठः ।
४. **सत्रे** सो.मु.पा.

अतस्तव पितरस्ते ऋषयः अशक्ता न हि। तस्मात् स्वतपसा तव[1] पितरि शापं स्वभक्षणसमये त्वमेव नष्टो भवेति शापं न कुर्वति सति तदा तद्रक्षः यान् मुनीन् भक्षयते ते मुनयः वागस्त्रात्[2] नरवारणा हि नरान् वारयन्तीति **नरवारणाः**। पुरुषादो भवेति प्राक् शक्तिना कल्माषपादस्य शापे दत्तेऽपि न तेन पुरुषा भक्षिताः। किन्तु विश्वामित्रप्रेषितरक्षसैव भक्षिताः। अतस्तत्र स्वस्य हिंसादोषाभावात् कशाताडनदुःखमूर्छितस्तं शापं दैववशाद्दत्तवान्। इह तु त्वं मे नष्टो भवेति शापे साक्षात् स्वस्यैव हिंसादोषप्राप्तेः शक्तिरपि न शशाप। तदनुजाश्च वसिष्ठपुत्रा न शेपुरिति हृदयम्।

**क्षमावन्तं दहे[3]देहं देहमन्यद्भवत्विति।**
**आत्मनैवात्मनस्तेन दृष्टो मृत्युस्तदाऽभवत् ॥ १७ ॥**

**क्षमावन्तम्** इत्यत्र मुनिः देहं क्षमावन्तं कृत्वा अहं मन्युं अहङ्कारजनितं कोपमेव ध्रुवं दहेदिति मत्वा शक्तौ शापं न कुर्वति सति **ततः** अनन्तरम् **आत्मनैव** स्वहन्तरि क्षमाकरणाख्यात्मापराधेनैव **आत्मनः** तेन राक्षसेन[4] तदा **मृत्युः** मरणमभवदित्यन्वयः।

**सर्वमेतद्वसिष्ठस्य विदितं वै महामुने।**
**रक्षसां च समुच्छेद एष तात तपस्विनाम् ॥ २० ॥**

**रक्षसां च समुच्छेद** इत्यत्र **एष** यागः तपस्विनां रक्षसां च समुच्छेदः। राक्षसाह्वाने राक्षसयोनौ जातानां सज्जीवानामपि आगमनेन नाशः स्यादिति भावः। ॥ इति द्वात्रिंशदधिकशततमोऽध्यायः ॥

---

१ स्वपितरि सो.मु.पा. ; २. वाकृछस्त्रात् सो.मु.पा.
३ 'अदहन् देहं' इति कुं.पाठः। ;
४ राक्षसेनैव न तदा मृत्युर्मरणमभवदित्यन्वयः सो.मु.पा.

**तमब्रवीत्तोयदनिर्मलाभ** इत्यत्र **तोयदः** प्राग्दत्तोदकः शुभ्रो मेघः ।

॥ इति चत्वारिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ एकचत्वारिंशदधिकशततमोऽध्यायः ॥

**वैशम्पायन उवाच –**

**अजिनानि विधुन्वन्तः [1]करकांश्च द्विजर्षभाः ।**
**ऊचुस्ते भीर्न कर्तव्या वयं योत्स्यामहे परान् ॥ १ ॥**

**करकान्** मृण्मयकमण्डलून् । [2]'कमण्डलौ च करकः' इत्यमरः ।

**इति तद्धनुरानम्य [3]शुक्लावाप्तमहारथः ।**
**भ्रात्रा भीमेन सहितस्तस्थौ गिरिरिवाचलः ॥ ४ ॥**

**शुल्कावाप्तमहारथ** इत्यत्र **शुल्केन** वीर्यशुल्केन **अवाप्तः** आनीय दत्तो महारथो यस्य स तथोक्तः । यद्वा लक्षवेधस्य समये कृतवीर्यशुल्केन **अवाप्ताः** प्रतिभटत्वेनागताः **महारथाः** राजानो यस्य स तथा ।

**युद्धार्थी वासिताहेतोर्गजः प्रतिगजं यथा ।**
**भीमसेनं ययौ शल्यो मद्राणामीश्वरो बली ॥ ८ ॥**

**वासिताहेतोः** इत्यत्र प्रथमर्तुमती करिणी **वासिता** ।

**कृते प्रतिकृतं पश्य पश्य बाहुबलं च मे ।**
**इति शूरार्थवचनैरभाषेतां परस्परम् ॥ १३ ॥**

---

१. BORI पृ. ७३३; **'करकाश्च'** इति कुं.पाठः ।
२. अ.को. ३-३-६ ; ३. **'शुल्कावाप्तं महाबलः'** इति कुं.पाठः ।

**कृते प्रतिकृतं पश्य** इत्यत्र **कृते** त्वया कृते कर्मणि मया तत्प्रतिकृतं कर्म पश्येत्यर्थः ।

**अर्जुनेन प्रयुक्तांस्तान् बाणान् वेगवतस्तदा ।**
**प्रतिहत्य ननादोच्चैः सैन्यास्तमभिपूजयन्** ॥ १५ ॥

**सैन्यास्तमभिपूजयन्** इत्यत्र सेनायां समवेताः **सैन्याः** ।

[२]**त्वं धनुर्वेदः किं साक्षात् रामो वा विप्रसत्तमः ।**
**अथ साक्षाद्धरिहयः साक्षाद्वा विष्णुरच्युतः** ॥ १७ ॥

**त्वं धनुर्वेदः किं** धनुर्वेद एव मूर्तिमानेवागत इत्यर्थः ।

**तत्कर्म भीमस्य समीक्ष्य कृष्णः**
**कुन्तीसुतौ तौ परिशङ्कमानः ।**
**निवारयामास महीपतींस्तान्**
**धर्मेण लब्धेत्यनुनीय सर्वान्** ॥ ६० ॥

**कुन्तीसुतौ तौ परिशङ्कमान** इत्यत्र परितः शङ्का येषां ते **परिशङ्काः** तान् परिशङ्कान् राजानः तान् **मानः** मानयन्, प्रियोक्त्या रञ्जयन्नित्यर्थः ।

**वृत्तो ब्रह्मोत्तरो रङ्गः पाञ्चाली ब्राह्मणैर्हृता[३] ।**
**इति ब्रुवन्तः प्रययुः ये तत्रासन् समागताः** ॥ ६२ ॥
**ब्राह्मणैस्तु प्रतिच्छन्नौ रौरवाजिनवासिभिः ।**

---

१ BORI पृ. ७३४; 'सैन्यानि तदपूजयन्' इति कुं.पाठः ।
२ 'किं त्वं साक्षाद्धनुर्वेदो' इति कुं. पाठः ।
३ K.(K₁...),M; BORI पृ. ७३७; 'वृता' इति कुं.पाठः ।

[१]अग्राम्यसमवच्छन्नैरगुरूत्तमवासितैः ।
हंसांशुवर्णैर्बहुभिरायोजन सुगन्धिभिः ॥ ३० ॥

**अग्राम्यसमवच्छन्नैः** इत्यत्र **ग्राम्याः** स्त्रीलम्पटाः ते न भवन्ति इति **अग्राम्याः** तैः **सम्यगवच्छन्नैः** आच्छादितैः पूर्णैरित्यर्थः ।

[२]ससम्बाधपथद्वारैः शयनासनशोभितैः ।
बहुधातुपिनाद्धाङ्गैर्हिमवच्छिखरैरिव ॥ ३१ ॥

**ससम्बाधपथद्वारैः** इत्यत्र गन्त्रागन्तृगजतुरगादिभिः सम्बाधसहिता मार्गा द्वाराणि च येषां ते तथोक्ताः ।

वीरकांस्यमुपादाय काञ्चनं समलङ्कृतम् ।
आगतां ददृशुः सर्वे रङ्गभूमिमलङ्कृताम् ।
अवतीर्णा ततो रङ्गं द्रौपदी भरतर्षभ ॥ ५४ ॥

**वीरकांस्यमुपादाय** इत्यत्र **काञ्चनं** सुवर्णमयं **वीरकांस्यं, वीरा** एव वीरकाः अध्यवसितान्तगामिनः, स्वयंवरकृतलक्षवेधिन इति यावत् । तेषामंसस्य योग्यं माल्यं वीरकांस्यं **उपादाय** कराभ्यां गृहीत्वा ।

इदं धनुर्लक्ष्यमिमे च बाणाः
शृण्वन्तु मे भूपतयः समेताः ।
[३]यन्त्राच्छिद्रेणाभ्यतिक्रम्य लक्ष्यं
समर्पयध्वं खगमैर्दशार्धैः ॥ ६० ॥

---

१. $N_2$,$V_1$,$B_1$,$T_1$; BORI पृ. ७१८; **'स्रग्दाम-'** इति कुं. पाठः ।

२. **'असम्बाधशतद्वारैः'** इति कुं. पाठः ।

३. BORI पृ. ७१९; **'छिद्रेण यन्त्रस्य समर्पयध्वं शरैः शतैर्व्योमचरैर्दशार्धैः'** इति कुं.पाठः ।

**खगमैः** इत्यत्र खं आकाशं गच्छन्तीति **खगमाः** शराः तैः **दशार्धैः** पञ्चभिः ।

**एतत् कृत्वा कर्म सुदुष्करं यः**
**कुलेन रूपेण बलेन युक्तः ।**
**तस्याद्य भार्या भगिनी ममेयं**
**कृष्णा भवित्री न मृषा ब्रवीमि ॥ ६१ ॥**

**कर्म सुदुष्करं य** इत्यत्र सुखेन कर्तुमशक्यं **सुदुष्कृत्** कर्म अत्र राज्ञां मध्ये यः कर्तेति सम्बन्धः ।

॥ इति षट्त्रिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ अष्टत्रिंशदधिकशततमोऽध्यायः ॥

**परस्परं स्पर्धया प्रेक्षमाणाः सङ्कल्पजेनाभिपारिप्लुताङ्गाः ।**
**कृष्णा ममैवेत्यभिभाषमाणा नृपाः समुत्पेतुरथासनेभ्यः ॥ ३ ॥**

**सङ्कल्पजेन** इत्यत्र **सङ्कल्पजेन** कामेन ।

**अन्ये तु वीरा नृपपुत्रपौत्राः कृष्णागतैर्नेत्रमनःस्वभावैः ।**
**व्यायच्छमाना ददृशुर्न तान् वै सन्दष्टदन्तच्छदताम्रनेत्राः ॥११॥**

**व्यायच्छमाना** इत्यत्र **व्यायच्छमानाः** विशेषेण **आ** समन्तात् प्रसादातारः ।

॥ इति अष्टत्रिंशदधिकशततमोऽध्यायः ॥

---

* भा. २०२ अध्यायः

**भद्रं वोऽस्तु निहितं यद्गुहायां विवर्ध ज्वलने वैधमानाः ।**
**मां वो विद्युः पार्थिवा केचिदेव यस्यावहे शिबिरायैव तावत् ।**
**सोऽनुज्ञातः पाण्डवेनाव्यश्री प्रायाच्छ्रीघ्रं बलदेवेन सार्धम् ।।**
**।। २९ ।।**

**निहितं यद्गुहायाम्** इत्यत्र **गुहायां** हृदयगुहायां निहितं यद्वस्तु नारायणाख्यं तस्माद्भद्रं वः अस्त्वित्यर्थः ।

**ततस्तु कुन्ती द्रुपदात्मजां तां**
**उवाच काले वचनं वदान्या ।**
**[1]अतोऽग्य्रमादाय कुरुष्व भद्रे**
**बलिं च विप्राय च देहि भिक्षाम् ।। ४ ।।**

**अतोऽग्य्रमादाय** इत्यत्र **अतः** भिक्षान्नात् **अग्य्रम्** अग्य्रभागं आदाय **बलिं** श्वचण्डालपतितभूतवायसादीनां बलिं कुरुष्व । विप्राय भिक्षां च देहीति योजना ।

**ये चान्नमिच्छन्ति ददस्व तेभ्यः**
**परिश्रिता ये परितो मनुष्याः ।**
**ततस्तु [2]शेषं प्रविभज्य शीघ्र-**
**मर्धं चतुर्णां मम चात्मनश्च ।। ५ ।।**

**ततस्तु शेषम्** इत्यत्र **शेषमन्नं अर्धं** समस्तान्नादर्धं **चतुर्णां** चतुर्धा;

---

१. $\tilde{N}, V_1, T_1, G_{4.6}$; BORI पृ. ७४२; **'ततोऽग्र'** इति कुं.पाठः ।
२. $S_1, K_{(except\ K2)}, D_5, T_1, G_{1.6}$; BORI पृ. ७४२; **'ततश्च'** इति कुं. पाठः ।

**मम**, आत्मनस्तव च द्वेधा; एवं षोढा विभागं कृत्वा षण्णां ददीहि। उर्वरितमर्धं एकस्मै भीमाय ददीहि[१] ॥

॥ इति चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥

**अगस्त्यकान्तामभितो दिशं तु**
**शिरांसि तेषां कुरुसत्तमानाम् ।**
**कुन्ती पुरस्तात्तु बभूव तेषां**
**पादान्तरे चाथ बभूव कृष्णा** ॥ ९ ॥

**अशेत भूमौ सह पाण्डुपुत्रैः**
**पादोपधानेव कृता कुशेषु ।**
**न तत्र दुःखं[२] च समाससाद**
**न चावमेने कुरुपुङ्गवांस्तान्** ॥ १० ॥

**अगस्त्यकान्तां अभितो दिशं तु** इत्यत्र **दिशं** दक्षिणां दिशमित्यर्थः। कुन्ती निद्रार्थिनी बभूव। सा पाण्डुपुत्रैः सह **पुरस्तात्** तेषां दक्षभागे **अशेत** शयनं कृतवती। तत्रैव या कृष्णा बभूव साऽपि **पादोपधानेव** येषां पादा एव उपधानमुपबर्हणं यस्याः सा। पादोपर्येव शिरो न कृतवती। किन्तु तत्समीप इति सूचनाय इवशब्दः। कुशेषु **कृता** कृतास्पदा सती अशेत। गार्हस्थ्यधर्मशिक्षणार्थमिदमुक्तमिति ज्ञेयम्। **न तत्र दुःखं च समाससाद** इत्यत्र स्वगृहे राजान्नभोजनपर्यङ्कशयनादिना हृष्टाऽपि

---

१ ददाहि सो.मु.पा.

२ T1,G1-5,M; BORI पृ. ७४३; **'मनसापि तस्या'** इति कुं. पाठः।

**विज्ञातुमिच्छत्यवनीश्वरो वः पाञ्चालराजो वरदो वरार्हाः ।**
**लक्ष्यस्य वेद्धारमिमं हि दृष्ट्वा हर्षस्य नान्तं परिवस्यते[१] ह ॥१७॥**

**हर्षस्य नान्तं परिवस्यते ह** इत्यत्र हर्षस्यान्तं **न परिवस्यते** न पर्यवस्यते, न निश्चिनोतीत्यर्थः । 'वष्टि वागुरिरल्लोपमवाप्योरुपसर्गयोः' इति वचनात् अत्राप्यकारलोपः ।

**पाण्डुर्हि राजा द्रुपदस्य राज्ञः प्रियः सखा चात्मसमो बभूव ।**
**तस्यैष कामो दुहिता ममेयं स्नुषा यदि स्यादिह कौरवस्य ॥१९॥**

**तस्यैप कामो दुहिता ममेयम्** इत्यत्र इयं दुहिता यदि **तस्य** कौरवस्य स्नुषा स्यात्तर्हि इयं दुहितेव, एष मम कामः । सङ्कल्पोऽपि काम एव । अन्यथा उभयमपि व्यर्थमिति भावः ।

**वैशम्पायन उवाच –**

**[२]भीमस्तथा च कृतवान्नरेन्द्र**
**तां चैव पूजां [३]प्रतिसङ्गृहाण ।**
**सुखोपविष्टं तु पुरोहितं तदा**
**युधिष्ठिरो ब्राह्मणमित्युवाच ॥ २३ ॥**

**भीमस्तथा च कृतवान्** इत्यत्र हे ब्राह्मण त्वं पूजां **गृहाण** गृह्णीष्व इत्युक्त्वा तां पूजां **तथा** ज्येष्ठोक्तप्रकारेण कृतवांश्चेति योजना ।

---

१. **'प्रतिपद्यते सः'** इति कुं. पाठः ।

२. **'भीमस्ततस्तत्कृतवान्नरेन्द्र'** इति कुं. पाठः ।

३. $K_4$,$\bar{N}_1$,$V_1$,$B_{1.3}$,$G_{5.6}$,$M_{6.8}$; BORI पृ. ७४७; **'प्रतिगृह्य हर्षात्'** इति कुं.पाठः ।

**पाञ्चालराजेन सुता निसृष्टा स्वधर्मदृष्टेन यथानुकामम्[१] ॥ २४ ॥**

**पाञ्चालराजेन** इत्यत्र **स्वधर्मदृष्टेन** स्वधर्मतया पूर्वजैर्दृष्टेन स्वयंवरेण **यथानुकामं** यथेच्छं **सुता** द्रौपदी **निसृष्टा** लक्षवेधिना पुरुषेण नेतव्येत्याज्ञप्तेत्यर्थः ।

**प्रदिष्टशुल्का द्रुपदेन राज्ञा सा तेन वीरेण तथाऽनुवृत्ता ॥ २४ ॥**

**प्रदिष्टशुल्का** इत्यत्र **प्रदिष्टं** दत्तं **शुल्कं** द्रुपदोक्तलक्षवेधात्मकं द्रव्यं यस्याः सा । 'निर्दिष्टं वस्तु शुल्कं स्यात्'[२] इति हलः । **तेन वीरेण** लक्षवेधिना वीरेण **तथा** यथोक्तं राज्ञा तथा कृत्वा **अनुवृत्ता** स्वात्मानमनुसृत्य वर्तमाना कृता ।

**न तत्र वर्णेषु कृता विवक्षा**
**न[३] जीवशिल्पे न कुले न गोत्रे ।**
**कृतेन सज्येन हि कार्मुकेण**
**विद्धेन लक्ष्येण हि सा विसृष्टा ॥ २५ ॥**

**तत्र**[४] स्वयंवरनिरूपणसमये **वर्णेषु** ब्राह्मणादिवर्णेषु **विवक्षा** क्षत्रिय एव भवेदिति वक्तुमिच्छा न कृता । **जीवशिल्पे** लक्षवेधिना जीवेन कर्तव्ये कार्यान्तरे विवक्षा न कृता । कुले च न कृता । गोत्रे च न कृता इति सम्बन्धः ।

---

१ BORI पृ. ७४७; **'यथा न कामात्'** इति कुं. पाठः ।
२ ह.को. ५-८२८; प्र.पाठः **'स्त्रीधने च शुल्कं स्यात्'** इति ।
३ BORI पृ. ७४८; **'न चापि शीले'** इति कुं.पाठः ।
४ ततः सो.मु.पा.

**यत्र कृष्णा प्रतिष्ठिता** इत्यत्र **यत्र** येषु कृष्णा प्रतिष्ठिता ते वयमिमे इत्यर्थः ।

**युधिष्ठिर उवाच –**

**सूक्ष्मो धर्मो महाराज नास्य विद्मो वयं गतिम् ।**
**[१]सर्वेषामानुपूर्व्येण यातं [२]तैरनुयामहे ॥ २९ ॥**

**सर्वेषामानुपूर्व्येण यातं तैरनुयामह** इत्यत्र **सर्वेषां** पूर्वेषां **आनुपूर्व्येण** आनुकूल्येन **तैः** पूर्वैः **यातं** प्रवर्तितं मार्गं अनुयामहे इत्यन्वयः ।

**॥ इति अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥**

## ॥ अथ एकोनपञ्चाशदधिकशततमोऽध्यायः ॥

**न चाप्याचरितः पूर्वैरयं धर्मो महात्मभिः ।**
**[३]न च धर्मोऽह्यनेकस्थश्चरितव्यः सनातनः ॥ ८ ॥**

**न च धर्मो ह्यनेकस्थ** इत्यत्र **चरितव्यः** सर्वैराचरितव्यः सनातनो धर्मः **अनेकस्थः** अनेकधा स्थितो न हि । किन्तु एकप्रकारेणैव स्थित इत्यर्थः ।

**॥ इति एकोनपञ्चाशदधिकशततमोऽध्यायः ॥**

## ॥ अथ पञ्चाशदधिकशततमोऽध्यायः ॥

**कर्तुमस्मद्विधैर्ब्रह्मन् ततोऽयं न व्यवस्यते ।**
**पञ्चानां महिषी कृष्णा भवत्विति कथञ्चन ॥ १२ ॥**

---

१. $S_1$, $K_{(exceptK1)}$, $M_{2,3}$; BORI पृ. ७५५; **'पूर्वेषा-'** इति कुं पाठः ।
२. $M_{3,5}$; BORI पृ. ७५५; **'वर्त्माऽनु-'** इति कुं पाठः ।
३. **'न चाप्यधर्मो विद्वद्भिश्चरितव्यः कथञ्चन'** इति कुं. पाठः ।

**महिषी** षण्महिषी ।

**त्वगस्थिभूतं कटुकं लोलमीर्ष्युं सुकोपनम् ।**
**सुगन्धेतरगन्धाढ्यं वलीपलितमूर्धजम् ॥ ५ ॥**

ईर्ष्युम् ईर्ष्याशीलम् ।

**[1]स्वधामृतसमाहारः सुरलोके चचार ह ।**
**पूज्यमानस्तथा शच्या शक्रस्य भवनेष्वपि ॥ १६ ॥**

**स्वधामृतसमाहार** इत्यत्र **स्वधायाः** पित्रन्नस्य, **अमृतस्य** देवान्नस्य समः आहारो यस्य ।

**महेन्द्रसेनया सार्धं पर्यधावद्रिरंसया ।**
**सूर्यस्य च रथं दिव्यमारुह्य भगवान् प्रभुः ॥ १७ ॥**
**पर्युपेत्य पुनर्मेरुं मेरौ वासमरोचयत् ।**
**आकाशगङ्गामाप्लुत्य तया सह तपोधनः ॥ १८ ॥**

**महेन्द्रसेनया** इत्यत्र **महेन्द्रसेनया** महेन्द्रस्य चम्वा; **तया** नालायन्या सह ।

**अरुन्धतीव सीतेव बभूवातिपतिव्रता ।**
**दमयन्त्याश्च मातुः सा विशेषमधिकं ययौ ॥ २५ ॥**

[2]**दमयन्त्याश्च मातुः** इत्यत्र मातुः दमयन्त्याः ।

**राजंस्तवात्मजा कृष्णा वेद्यां तेजस्विनी शुभा ।**
**तस्मिंस्तस्या मनः सक्तं न [3]शशाक कदाचन ॥ २७ ॥**

---

१. 'चचार सोऽमृताहारः' इति कुं पाठः ।; २. **मातुर्दमयन्त्या** सो.मु.पा.
३. BORI १-८९-५५; **'चचाल'** इति कुं.पाठः ।

**तथा प्रणिहितो ह्यात्मा तस्यास्तस्मिन् द्विजोत्तमे ॥ २८ ॥**

**तस्मिंस्तस्या मनः सक्तम्** इत्यत्र पुरा **तस्याः** नालायन्याः मनः **तस्मिन्** कुष्ठव्याधियुक्ते मुद्गले **सक्तं** कामेनासक्तं **न** नाभूत् । किन्तु **तया** पतिसेवया निमित्तेन प्रणिहितस्तस्या **आत्मा** देहः **तस्मिन्** द्विजोत्तमे **शशाक** पतिरिति कृत्वा तस्य दुरवस्थां सोढ्वा पतिं सिषेवे । एवञ्च जुगुप्सितदेहेऽपि पत्यौ स्वव्रतमत्यजन्ती अत्र सुतरां पातिव्रत्यं न त्यजति । किन्तु पञ्चद्रौपदीत्वमात्मनि सन्निधाप्य स्वस्वपतिनैव स्वयं रंस्यत इति भावः ।

**हन्त ते कथयिष्यामि कृष्णायाः पौर्वदेहिकम् ।**
**इन्द्रसेनेति विख्याता पुरा नालायनी शुभा ॥ ३ ॥**

**इन्द्रसेनेति विख्याता** इत्यत्र **पुरा** पूर्वजन्मनि पूर्वोक्तप्रकारेण नालायनीति विश्रुता । पश्चात् सैव इन्द्रसेनेति विख्याता जाता । पूर्वजन्मनि नालायनीति विश्रुता, नलपुत्रीत्वात् सैव नालायनी नलनन्दिनीति च विश्रुता । तस्याः मुद्गलः पतिः । द्वितीये जन्मनीन्द्रसेना । तस्याः मौद्गल्यः मुद्गलपुत्रः पतिः ।

**निराशीर्मारुताहारा निराहारा तथैव च ।**
**अनुवर्तमानात्वादित्यं तथा पञ्चतपाऽभवत् ॥ १२ ॥**

**अनुवर्तमानात्वादित्यम्** इत्यत्र आदित्यं **अनु** अनुसृत्य वर्तमाना, आदित्याभिमुखतया तपस्तपन्तीति यावत् ।

**भविष्यति परं जन्म भविष्यसि वराङ्गना ।**
**भविष्यन्ति परं भद्रे पतयः पञ्च विश्रुताः ॥ १४ ॥**

**जन्मन्** जन्मनि ।

स्त्र्युवाच –

**धर्म एकः पतिः स्त्रीणां पूर्वमेव प्रकल्पितः ।**
**[१]बहुपत्नीकृतः पुंसो धर्मश्च बहुभिः कृतः ॥ १८ ॥**

**बहुपत्नीकृतः पुंस** इत्यत्र बहुपत्नीः करोतीति **बहुपत्नीकृत्** तस्य पुंस इति सम्बन्धः ।

**स्त्रीधर्मः पूर्वमेवायं निर्मितो मुनिभिः सदा ।**
**सहधर्मभृतां [२]भर्तुरेका एकस्य चोच्यते ॥ १९ ॥**

**धर्मभृतां भर्तुः** इत्यत्र धर्मभृतां मध्ये ।

**गच्छेत [३]या तृतीयं तु तस्या निष्कृतिरुच्यते ।**
**चतुर्थे पतिता नारी पञ्चमे वर्धकी भवेत् ॥ २१ ॥**

**गच्छेत या तृतीयम्** इत्यत्र तस्याः **निष्कृतिः** प्रायश्चित्त(इति) ...र्थं । **बन्धकी** पुंश्चली । [४]'पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरी' इत्यमरः ।

...श्वर उवाच –

**अनावृताः पुरा नार्यो ह्यासञ्शुध्यन्ति चार्तवे ।**
**सकृदुक्तं त्वया नैतन्नाधर्मस्ते भविष्यति ॥ २३ ॥**

---

१ 'बहुपत्नीकता' इति कुं पाठः ।
२ '.....धर्मचरी' इति कुं पाठः ।
३ 'न' इति कुं पाठः । ; ४. अ.को. २-६-१०

**सकृदुक्तं त्वया नैतत्** इत्यत्र **एतत्** पतिं देहीति वाक्यं सकृदुक्तं न। किन्तु पञ्चधोक्तम्। अतस्ते अधर्मो न भविष्यति। त्वमेकाकिनी चेत् एकमेव प्रार्थनमलम्। बहुधा प्रार्थनं तु त्वय्यपि बहुनारीसद्भाव सूचकम्। अत एकस्मिन् देहेऽपि स्वस्वपतिना तत्तत्पत्न्या रमणे सति पञ्चपतित्वेऽपि नाधर्म इति भावः। अन्यथा पञ्चवारं जारप्रार्थनेऽपि दोषाभावप्रसङ्गात् गूढाभिसन्धेः शिवस्य इदमेव हृदयम्।

**स्त्र्युवाच –**

**यदि मे पतयः पञ्च वरानिच्छामि[1] तैर्मिथः।**
**कौमारं च भवेत् सर्वैः सङ्गमे सङ्गमे च मे ॥ २४ ॥**

**वरानिच्छामि** इत्यत्र **तैः** पतिभिः सह, परस्परं स्त्रियाः पतीनां चेत्यर्थः। वरान् त्वत्तः इच्छामि।

**रुद्र उवाच –**

**रतिश्च भद्रे सिद्धिश्च न भजेते परस्परम्।**
**भोगानाप्स्यसि सिद्धिं च योगेन च महत्त्वताम् ॥ २६ ॥**

**रतिश्च भद्रे सिद्धिश्च** इत्यत्र हे भद्रे **रतिः** सदारमणं **सिद्धिः** पुण्य-सिद्धिः यौवनसिद्धिश्च परस्परं **न भजेते** न घटेते। दुर्भगा एक-पतित्वाख्यपुण्यहीना क्रमेण ह्रसितयौवना च **सिद्धिं** स्वमनोभीष्ट-सम्भोगसिद्धिं लप्स्यते; न तु पुण्यसिद्धिम्। योगेन सदारमणं विहाय एकपतित्वादिरूपतपसा, यौवनसौन्दर्यादीनां रक्षणोपायेन च **महत्त्वतां** महत्त्वस्वभावं, पुण्येन महत्त्वं सौन्दर्यादिगुणेन महत्त्वं च लप्स्यते।

---

१. **'रतिमिच्छामि'** इति कुं पाठः।

[illegible]पतित्वे [1]रतावेवाशया (च) पुण्यसौन्दर्यादावाशा न कर्तव्येति [illegible]कधर्मसंरक्षणार्थं शिवेनोक्तम् ॥

**अन्यदेहान्तरे [2]च त्वं रूपभाग्यगुणान्विता ।**
**पञ्चभिः प्राप्य कौमारं महाभागा भविष्यसि ॥ २७ ॥**

द्रौपद्यास्तु सदारमणं, सौन्दर्यादिगुणं, पञ्चपतीनां करणेऽपि [illegible]भावं घटयन्नाह – **अन्यदेहान्तरे त्वं च रूपभाग्यगुणान्विता । पञ्चभिः प्राप्य कौमारं महाभागा भविष्यसि** इत्यत्र **अन्यदेहान्तरे** [illegible] तव विद्यमानदेहादन्यो यो देहो द्रौपदीदेहः तस्य **अन्तरे** [illegible]न्तरे अन्तर्हृदीति यावत् । **पञ्चभिः** त्वया सह पञ्चभिर्देवीभिः [illegible]ता **कौमारं** कुमारीभावं कन्यात्वमिति यावत् । **प्राप्य** रूपभाग्य-[illegible]न्विता सती महाभागा भविष्यसि । देहान्तः पञ्चानां कन्यात्वप्रापणं [illegible]पदीनामेव शोभते । न तु बाह्यभर्तृपञ्चकस्य । अतो न कुचोद्या-[illegible]ः । **महाभागा** महान् भागो यस्याः सा । भाग्यस्य रूपभाग्य-[illegible]न्विता इत्यनेनैवोक्तत्वात् अत्र भागः अंश एव । देहस्थ इतर-[illegible]ऽपि महांशवती भविष्यसि । एकस्मिन्नेव देहे एकया त्वयैव [illegible]र्तृभिः सह रमणे क्रियमाणे पातिव्रत्याख्यगुणः, महत्त्वरूपं [illegible], अतिविषयासक्त्या रूपं लावण्यं च गमिष्यति । त्वया धर्मादीनां [illegible] 'कृष्णारूपा पार्वत्यनिन्दिता' इति वचनात् पार्वत्या च सह [illegible]भिः एकदेहान्तःप्रवेशे कृते एकैकस्मिन् दिने एकैकेन सह [illegible] भाग इति भागे च कृते त्वया सह वायोः, श्यामलया धर्मस्य, [illegible] इन्द्रस्य, उषया अश्विनोश्च नियमेन [3]भागे तत्साक्षितया

---

[illegible]वाशायां च- सो.मु.पा. ; २. BORI पृ. ९५०; 'चैव' इति कुं पाठः
[illegible] श्री.सो.मु.पा. ।

पार्वत्याश्च सत्त्वात्, पञ्चपाण्डवानां स्वस्वपत्नीभिः पूर्णत्वेन पार्वत्यनपेक्षत्वाच्च नैकस्या अपि पातिव्रत्याख्यगुणहानिः । नापि महत्त्वाख्यभाग्यहानिः । एकस्या एव पञ्चभिः सह सदाभोगाभावेन अतिविषयासक्तेरभावाद्रूपयौवनयोश्च न हानिः । इतरासां दिनेऽपि तव ईषत् सन्निधानसत्त्वेन तत्तद्भर्त्रन्तर्गतवायुना सह परकीयदेहेनैव भोग्यस्य च सत्त्वेन तव सदारमणं, तस्मिन् तस्मिन् दिने कृताभिमानया देव्या नवीकृत्य रक्षिते देहे सौन्दर्य अहानिः, तद्भागादपि उक्तविधया तवैवाधिकभागवत्त्वेन महाभागवत्त्वं चेति सर्वमवदातमिति भावः । एवं अव्याख्याने पूर्वश्लोकोक्तपातिव्रत्याख्यगुणहानेरपरिहारेण अत्रोच्यमानं रूपभाग्यगुणान्वितत्वं च विरुद्धं स्यादित्यपि ज्ञेयम् । एवञ्च वक्ष्यमाणमिन्द्रसेनारोदनं वस्तुस्थित्या दोषाभावेऽपि अज्ञलोकापवादभयादेव; न तु शोकात् । शोकजत्वे उष्णस्य तस्य अश्रुणः शोषकत्वेन वक्ष्यमाणजगद्विस्मापनजनकपद्मोदयहेतुत्वविरोधात् । अत एव साऽपि कथा प्रस्तावितेति ज्ञेयम् ॥

**॥ इति पञ्चाशदधिकशततमोऽध्यायः ॥**

## ॥ अथ एकपञ्चाशदधिकशततमोऽध्यायः ॥

**व्यास उवाच –**

**पुरा वै नैमिशारण्ये देवाः सत्रमुपासते ।**
**तत्र वैवस्वतो राजन् शामित्रमकरोत्तदा ॥**

**शामित्रमकरोत्तदा** इत्यत्र **शमितुः** शान्तस्य भावः शामित्रं शान्तत्वमित्यर्थः ।

श्रीभगवानुवाच –
वैवस्वतो व्यापृतः सत्रहेतोस्तेन त्विमे न म्रियन्ते मनुष्याः।
तस्मिन्नेकाग्रे कृतसर्वकार्ये तत एषां भवितैवान्तकालः ॥ ७ ॥

**व्यापृतः** व्यापारवान् कृतः।

वैवस्वतस्यैव तनुर्विभूत्वा[१] वीर्येण युष्माकमुत प्रवृद्धा।
सैषामन्तो भविता ह्यन्तकाले न तत्र वीर्यं भविता नरेषु ॥ ८ ॥

**वैवस्वतस्यैव तनुर्विभूत्वा** इत्यत्र **विभूत्वा** विशेषेण भूत्वा सामर्थ्यवती भूत्वेत्यर्थः। **अन्तः** अन्तकः।

व्यास उवाच –
ततस्तु ते पूर्वजदेववाक्यं श्रुत्वा जग्मुर्यत्र देवा यजन्ते।
समासीनास्ते समेता महाबला भागीरथ्यां ददृशुः पुण्डरीकम् ९

**पूर्वजदेववाक्यम्** इत्यत्र **पूर्वजदेवो** ब्रह्मा।

यदा तु पर्याप्तमिहास्य क्रीडया तदा देवीं रुदतीं तामुवाच।
आनीयतामेष यतोऽक्षं[२] मारान्नैनं दर्पः पुनरप्याविशेत ॥१७॥

**आनीयतामेष यत** इत्यत्र **एष** इन्द्रः **यतः** यत्र प्रदेशो तिष्ठति ततः अक्षम् अक्षक्रीडाम् **आरात्** समीपे **आनीयतां** त्वया हस्तं गृहीत्वा आनीयताम्।

---

१. '**-भक्ता**' इति कुं पाठः।
२. प्रचलितपुस्तकेषु 'अहं' इति पाठः। वादि पाठे तु 'अक्षं' इति। एतदेव समीचीनम्। 'अहं' इत्यस्य अन्यथाभावात्।

[१] विवर्तयैनं च महाद्रिराजं
बलं च वीर्यं च तवाप्रमेयम् ।
छिद्रस्य चैवाविश मध्यमस्य
यत्रासते त्वद्विधाः सूर्यभासः ॥ १९ ॥

**विवर्तयैनं च महाद्रिराजम्** इत्यत्र **विवर्तय** शृ(स)ङ्गमुत्क्षिप्य विवृतद्वारं कुरु । **अस्य** गिरेः ।

उक्तस्त्वेवं विभुना देवराजः
प्रावेपताऽर्तो भृशमेवाभिषङ्गात् ।
स्रस्तैरङ्गैरप्यऽनलेन [२] नुन्न-
मश्वत्थपत्रं गिरिराजमूर्ध्नि ॥ २२ ॥

**अनिलेन नुन्नम्** इत्यत्र गिरिराजमूर्ध्नि अनिलेन नुन्नं **अश्वत्थपत्रं** अश्वत्थपत्रमिव **अभिषङ्गाद्** भयात् स्रस्तैरङ्गैः दरीं प्रवेशमानः ।

स [३] प्राञ्जलिर्विनतेनाननेन
प्रवेपमानः सहसैवमुक्तः ।
उवाच देवं बहुरूपमुग्र-
[४] दृष्ट्वा शेषं भगवंस्त्वम्भवाद्य ॥ २३ ॥

---

१. BORI पृ. ७५९; **'निवर्तयैनं'** इति कुं.पाठः ।
२. **'-निलेनेव'** इति कुं. पाठः ।
३. BORI पृ. ७५९; **'प्राञ्जलिर्वैवृषवाहनेन'** इति कुं.पाठः ।
४. $B_6$,$S_{(except\ M5)}$; BORI पृ. ७६०; **'-मद्याशेषस्य भुवनस्यत्वं भवाद्यः'** इति कुं.पाठः ।

**प्राञ्जलिः सन् विनतेन** इत्यत्र **विनतेन** विनम्रेण आनतेन प्रवेपमानः **अभिषङ्गाद्** भयात् प्रवेपमानश्च **सहसैव मुक्तः** प्रवेशान्मुक्तः बहुरूपं उग्रं **शेषं** शेषरूपिणं देवं दृष्ट्वा हे भगवन् त्वं अद्य नः भवेत्युवाचेति योजना ।

**तमब्रवीदुग्रवर्चाः प्रहस्य**
**नैवंशीलाः शेषमिहाप्नुवन्ति ।**
**एतेऽप्येवं भवितारः पुरस्तात्**
**तस्मादेतां दरीमाविश्य शेध्व** ॥ २४ ॥

एवंविधाः कृतकिल्बिषाः **शेषं** शेषरूपिणं मां नाप्नुवन्ति[1] । मोक्षमार्गभूतः शेषोऽहं निर्दोषाणामेव लभ्य इति भावः । विष्णो-[illegible]प्रियशेषपदवीयोग्यं मां माऽवमंस्था इति सूचनाय शेषरूपं दर्शितवानिति ज्ञेयम् । अनेन रुद्रस्यैव शेषपदवी भविष्यतीति [illegible]निनोक्तं त्वं स्पष्टीकृतमिति ज्ञेयम् । **पुरस्तात्** पूर्वं यस्मात् एते भवितारः **एवं** त्वद्वत् इन्द्रपदवीप्राप्त्या अहङ्कारिणः, तस्मात् एतां दरीं [illegible] । अतः परं भवन्तः सर्वे **भवितारः** भूलोके भवितारः । श्वो वा परश्वो वा अवतरिष्यन्ति ।

**एषा भार्या भविता वो न संशयो**
**योनिं सर्वे मानुषीमाविशध्वम् ।**
**तत्र यूयं कर्म कृत्वाऽविषह्यं**
**बहूनन्यान्निधनं प्रापयित्वा** ॥ २५ ॥

---
१ [illegible]न्ति – सो.मु.पा. ।

**एषा** देवी च वः **भविता** भार्या भविष्यति । अतः यूयं मानुषीं योनिं आविशध्वमिति योजना ।

**पूर्वेन्द्रा ऊचुः –**

**गमिष्यामो मानुषं देवलोकात्**
**दुरावरो[1] विहितो यत्र मोक्षः ।**
**देवास्त्वस्मानादधीरञ्जनन्यां**
**धर्मो वायुर्मघवानश्विनौ च ॥ २७ ॥**

**दुरावरो विहितो यत्र मोक्ष** इत्यत्र आ सम्यग्वरयितुमशक्यः **दुरावरः** मोक्षः **यत्र** भूलोके श्रवणमननादिना साध्यतया विहितः ।

**तेषां कामं भगवानुग्रधन्वा**
**प्रादादिष्टं सन्निसर्गाद्यथोक्तम् ।**
**तां चाप्येषां योषितां लोककान्तां**
**श्रियं भार्यां व्यदधान्मानुषेषु ॥ ३० ॥**

**श्रियं** देवलोकस्य श्रीरूपां **भार्यां** भर्तुं योग्यां व्यदधा इति इन्द्ररूप अर्जुनेनैव प्राक् लब्धत्वात् इन्द्रं प्रत्येव वचनम् ।

**तैरेव सार्धं तु ततः स देवो**
**जगाम नारायणमप्रमेयम् ।**
**अनन्तमव्यक्तमजं पुराणं**
**सनातनं विश्वमनन्तरूपम् ॥ ३१ ॥**

**स** हरिः ।

---

१. $M_{3.6}$; BORI पृ. ७६०; **‘दुराधरो’** इति कुं पाठः ।

एवमेते पाण्डवाः सम्बभूवु-
ये ते राजन् पूर्वमिन्द्रा बभूवुः ।
लक्ष्मीश्चैषां पूर्वमेवोपदिष्टा
भार्या यैषा द्रौपदी दिव्यरूपा ॥ ३५ ॥

**लक्ष्मीः** सल्लक्षणवती ।

॥ इति एकपञ्चाशदधिकशततमोऽध्यायः ॥

## ॥ अथ द्विपञ्चाशदधिकशततमोऽध्यायः ॥

**व्यास उवाच –**

इदं चापि पुरावृत्तं मन्निबोध[१] च भूमिप ।
कीर्त्यमानं नृपर्षीणां पूर्वेषां दारकर्मणि ॥ ४४ ॥

**मन्निबोध च भूमिप** इत्यत्र **मत्** मत्तः ।

॥ इति द्विपञ्चाशदधिकशततमोऽध्यायः ॥

## ॥ अथ त्रिपञ्चाशदधिकशततमोऽध्यायः ॥

द्रुपदैषा[२] ततो जज्ञे सुता ते देवरूपिणी ।
पञ्चानां सहिता कृष्णारूपा पार्वत्यनिन्दिता ॥ ६३ ॥

**द्रुपदेषा ततो जज्ञे सुता ते देवरूपिणी । पञ्चानां सहिता कृष्णारूपा पार्वत्यनिन्दिता** इत्यत्र तसेः सार्वविभक्तिकत्वात् **ततः** तदर्थम् ।

---

१. 'तान्निबोध' इति कुं.पाठः ।
२. 'द्रुपदेषा हि सा जज्ञे सुता वै देवरूपिणी । पञ्चानां विहिता पत्नी कृष्णा पार्वत्यनिन्दिता ' इति कुं पाठः ।

अपरिहार्यप्राप्तपञ्चपतिसम्बन्धेऽपि स्वपातिव्रत्याप्रच्युत्यर्थमित्यर्थः । **पञ्चानां** पञ्चभिः आत्मना सह पञ्चभिर्देवीभिः सहिता सती, सहयोगे तृतीयाया आवश्यकत्वात् तृतीयार्थे षष्ठी । **पार्वती** गङ्गासम्बन्धेन गङ्गाशब्दवाच्यतीरवत् पार्वतीसम्बन्धेन पार्वतीशब्दवाच्या, देवी-चतुष्टयस्य प्रसिद्धत्वात् [१]पञ्चमदेवी स्फोरणायेदमुक्तम् । **अनिन्दिता** पञ्चदेवीसाहित्येन जननात् पञ्चपतित्वप्राप्तनिन्दारहिता **कृष्णारूपा** द्रौपदीरूपा देवरूपिणी एष ते सुता यज्ञवेद्यां जज्ञे । जननसमये पञ्च-साहित्यं देवीपञ्चकसाहित्यादेव घटते। न तु स्वभर्तृभूतपाण्डवसाहित्येन । तथा सति देव्यास्तत्सहोदरीत्वप्रसङ्गेन भार्यात्वायोगात् तेषां पृथगे-वोत्पत्तेः श्रुतत्वाच्च । सर्वथा सहिता जज्ञ इत्युक्त्या अन्यैः सह जनन-मावश्यकम् । ततश्च साकाङ्क्षसहितपदार्थपूरणायोक्तपञ्चपदार्थस्यापि सह जननमपरिहार्यमेव । अतः स्वसहोदरीत्वयोग्यदेवीपञ्चकमेव पञ्चपद-वाच्यं, नान्यत् । पञ्चभिः प्राप्य कौमारमिति प्रागुक्तसमाख्यया सहित-पदार्थघटनाय च अत्रापि पञ्चपदे तृतीयाया आवश्यकत्वान्न कुचोद्याव-काशः । लौकिकविभक्त्युल्लङ्घनं तु अस्यार्थस्यालौकिकत्वस्फोरणार्थ-मिति सर्वमवदातम् ।

**॥ इति त्रिपञ्चशदधिकशततमोऽध्यायः ॥**

## ॥ अथ चतुःपञ्चाशदधिकशततमोऽध्यायः ॥

**द्रुपद उवाच –**

**अश्रुत्वैवं वचनं ते महर्षे मया पूर्वं यतितं संविधातुम् ।**
**न वै शक्यं विहितस्यापयानं तदेवेदमुपपन्नं विधानम् ॥ १ ॥**

---
१. पञ्च सो.मु.पा.।

**मया पूर्वम्** इत्यत्र इदं कार्यं नेति वर्जयित्वा **यतितं** प्रयतितम् ।

**दिष्टस्य ग्रन्थिरनिवर्तनीयः**
**स्वकर्मणा विहितं तेन किञ्चित् ।**
**कृतं [1]निमित्तं हि वरैकहेतो-**
**स्तदेवेदमुपपन्नं विधानम्** ॥ ३ ॥

**दिष्टस्य ग्रन्थिः** इत्यत्र **ग्रन्थिः** तत्कृतकार्यघटना । **वरैकहेतोः** एको वरः मुख्यवरः तद्धेतोः तत्प्राप्त्यर्थं विहितेष्वेव स्वयंवरोपायेषु मयाऽपि स्वकर्मणा किञ्चिन्निमित्तं कृतम् । तच्चार्जुनेन कृतम् । तत्तस्मात्कारणात् बहूनां पाणिग्रहणमुपपन्नम् । एतत् कृष्णवाक्यं **वरं** श्रेष्ठं इत्यब्रवीत् ।

**यदि चैवं विहितः शङ्करेण**
**धर्मोऽधर्मो वा नात्र ममापराधः ।**
**गृह्णन्त्विमे विधिवत् पाणिमस्या**
**[2]यथाजोषं विहितैषां हि कृष्णा** ॥ ४ ॥

अत्र लोके **यथाजोषं** यथेच्छम्, अस्याः पाणिं गृह्णन्तु ।

**वैशम्पायन उवाच –**

**ततो राजा यज्ञसेनः सपुत्रो जन्यार्थमुक्तं [3]बहुरत्नमग्र्यम् ।**
**समर्थयामास महानुभावो हृष्टः सपुत्रः सहबन्धुवर्गः ।**
**समानयामास सुतां च कृष्णामाप्लाव्य रत्नैर्बहुभिर्विभूष्य** ११

१ BORI पृ. ७८४; **'निमित्तमिहनैकहेतो-'** इति कुं.पाठः ।
२ S; BORI पृ. ७६५; **'यथोपजोषं'** इति कुं.पाठः ।
३ D; BORI पृ. ७६५; **'बहु तत्तदग्र्यम्'** इति कुं पाठः ।

**जन्यर्थमुक्तं बहुरत्नमग्र्यम्** इत्यत्र **जनी** बहुपरिजनवान् धर्मराजः तदर्थमुक्तं **अग्र्यं** श्रेष्ठं **बहुरत्नं** रत्नपदोपलक्षितनानापारिबर्हद्रव्यं समर्पयामासेत्यन्वयः ।

**[१]इदं च तत्राद्भुतमुत्तमं तदा**
**दधाति कृष्णा वपुषाऽतिमानुषम् ।**
**महानुभावा किल साधुमध्यमा**
**बभूव कन्यैव गते गतेऽहनि** ॥ २४ ॥

**इदं च तत्राद्भुतमुत्तमं तदा दधाति कृष्णा वपुषाऽतिमानुषम् । महानुभावा किल साधुमध्यमा बभूव कन्यैव गते गतेऽहनि** इत्यत्र अन्यस्य भर्तुरहनि गते गते सति, उपलक्षणं चैतत् । स्वभर्तृरहनि आगते च सति पूर्वपूर्वपत्न्या त्यक्ताभिमाने तस्मिन्नेव देहे उत्तरोत्तरपत्न्या अभिनवाभिमानोत्पत्त्या तदा तदा जातत्वात् स्वस्वदिने सा सा कन्यैव, तदा तया तया सह भर्तुर्मानसो विवाहश्च भवतीति सूचितम् । अस्य चरित्रस्य मानुषेष्वघटितत्वात् अद्भुतमित्युक्तम् । अतो न दोषलेशोऽपि पञ्चद्रौपदीनां पञ्चपाण्डवानां चेति भावः ।

**कृते विवाहे द्रुपदो धनं ददौ**
**महारथेभ्यो बहुरूपमुत्तमम् ।**
**शतं रथानां वरहेममालिनां**
**चतुर्युजां हेमखलीनमालिनाम्** ॥ २६ ॥

**चतुर्युजां** चतुस्तुरगयुजामिति रथानां विशेषणम् ।

---

१. **'इदं च तत्राद्भुतरूपमुत्तमं जगाद देवर्षिरतीतमानुषम् । महानुभावा किल सा सुमध्यमा बभूव कन्यैव गते गतेऽहनि॥'** इति कुं पाठः ।

शतं गजानामभिपद्मकानां[1] शतं गिरीणामिव हेमशृङ्गिणाम् ।
तथैव दासीशतमग्र्ययौवनं महार्हवेषाभरणाम्बरस्रजम् ॥२७॥

**गजानामभिपद्मकानाम्** इत्यत्र **पद्मकानां** पद्मशोभिमस्तकानाम् । 'अभिपद्मजानां'इति पाठे अभितः पद्माख्यलक्षणेन सह जातानामित्यर्थः । [2]इभः स्तम्बेरमः पद्मी' इत्यमरः । 'अभिपद्मकानाम्' इति पाठे ''अन्तर्मदसमायुक्तो बहिर्मदविवर्जितः । अभिपद्मः स विज्ञेयो गजो गजविशारदैः'' इत्यभिधानात् स्पष्टोऽर्थः ।

॥ इति चतुःपञ्चाशदधिकशततमोऽध्यायः ॥

## ॥ अथ पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥

कुन्तीमासाद्य ता नार्यो द्रुपदस्य महात्मनः ।
नाम सङ्कीर्तयन्त्योऽस्या जग्मुः पादौ स्वमूर्धभिः ॥ २ ॥

**नाम** स्वं स्वं नाम **कीर्तयन्** अकीर्तयन् ।

यथा च त्वाऽभिनन्दामि वध्वद्य क्षौमसंवृताम् ।
तथा भूयोऽभिनन्दिष्ये जातपुत्रां गुणान्विताम् ॥ १२ ॥

**वध्वद्य** इत्यत्र हे वधु इति सम्बुद्धिः ।

कोटिशश्च सुवर्णं च तथैव कृतकं बहु
भीर्थीकृतममेयात्मा प्राहिणोन्मधुसूदनः ॥ १८ ॥

---

[1] M., BORI पृ. ७६६; 'गजानामपि पद्मिनां तथा' इति कुं पाठः ।
[2] अ. को. २-८-३५

**तथैव कृतकं बहु** इत्यत्र **कृतकं** केवलं द्रवीकृतसुवर्णेनैव रचितमाभरणादिकं कृतकम् । विचित्ररत्नखचितं सौवर्णमाभरणं कृताकृतमित्युच्यते ।

**॥ इति पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥**

## ॥ अथ षट्पञ्चाशदधिकशततमोऽध्यायः ॥

**ततो राज्ञां चरैराप्तैः चारः समुपनीयत ।**
**पाण्डवैरुपसम्पन्ना द्रौपदीपतिभिः शुभा ॥ १ ॥**

**चारः समुपनीयत** इत्यत्र **चारः** द्रुपदनगरे जातो विचारः **उपनीयत** उपानीयत ।

**योऽसावत्यक्रमीद्युध्यन्युद्धे दुर्योधनं तथा ।**
**स राजा पण्डवश्रेष्ठः पुण्यभाग्बुद्धिवर्धनः ॥ ९ ॥**

**योसावत्यक्रमीद्युध्यन्** इत्यादिना धर्मराजनकुलसहदेवानामपि युद्धकथनात् प्रागपि किञ्चिद्युद्धं कृत्वैव कुम्भकारशालां प्रति गता इति सूच्यते ।

**एवं पराजिताः सर्वे यदि यूयं गमिष्यथ ।**
**स[१]कृत्वा संविदं [२]काञ्चिदत्रायास्यत्यसंशयम् ॥ १४ ॥**

**स कृत्वा संविदं काञ्चिदत्रायास्यत्यसंशयम्** इत्यत्र **सः** धर्मराजः । **अत्र** हस्तिनापट्टणे ।

---

१. **'अकृत्वा'** इति कुं.पाठः ।
२. **'काञ्चिन्मनस्तप्स्यत्यसंशयम्'** इति कुं पाठः ।

**अयं देशश्च कालश्च [1]पाण्डवोद्धरणाय नः।**
**न चेदेवं करिष्यध्वं लोके हास्या भविष्यथ ॥ १९ ॥**

**पाण्डवोद्धरणाय न** इत्यत्र पाण्डवानां उत् उत्कर्षेण **हरणं** संहारः तस्मै।

**[2]हन्त धृत् प्रगृहीतानि बलानि बलिनां वराः।**
**यावन्नः कुरुसेनायां पतन्ति पतगा इव ॥ २२ ॥**

**हन्त धृ(कृ)त् प्रगृहीतानि** इत्यत्र पाण्डवान् धारयतीति धृ(कृ)त् द्रुपदः तेन प्रगृहीतानि बलानि, बलिनः स्वयं पाण्डवाश्च **सर्वाभिहारेण** सर्वेषामस्मदीयानां अभिहारेण द्रुपदपुरं प्रत्यभितः। प्रहारेण एतत् यत्र पाण्डवाः सन्ति एतत्पुरं विनाश्यतामिति सम्बन्धः।

**प्रकृतीः सप्त वै ज्ञात्वा आत्मनश्च परस्य च।**
**तथादेशं च कालं च षड्विधान् स [3]नयेद्गणान् ॥ २५ ॥**

**गणान्** सन्धिविग्रहादीन्। **परं** शत्रूम्।

**न तु केवलदैवेन प्रजा भावेन भेजिरे।**
**यद्बभूव मनः कान्तं कर्मणा स चकार तत् ॥ २९ ॥**

**यद्बभूव मंनः कान्तम्** इत्यत्र **यत् मनःकान्तं** सर्वेषां मनःप्रियं [illegible], सः कर्मणा तच्चकारेति सम्बन्धः।

**ततोऽहं पाण्डवान् मन्ये मित्रकोशसमन्वितान्।**
**बलस्थान् विक्रमस्थांश्च स्वकृतैः प्रकृतिप्रियान् ॥ २७ ॥**

---

१. BORI पृ. ९५१; **'पाण्डवाहरणाय'** इति कुं पाठः।
२. 'हनध्वं' इति कुं पाठः। ३. **'नयेद्गुणान्'** इति कुं पाठः।

**प्रकृतिप्रियाम्** इत्यत्र **स्वकृतैः** स्वकर्मभिः।

**न ह्ययुक्तं न चासक्तं नानृतं न च विप्रियम्।**
**भाषितं चारुभाषस्य जज्ञे पार्थस्य भारती ॥ ३० ॥**

**असत्यं** सत्यरहितम्। **अनृतं** कपटोपेतम्।

**संविदं पाण्डवैः सर्वैः कृत्वा याम यथागतम्।**
**गोपुराट्टालकैरुच्चैः उपकल्पशतैरपि[1] ॥ ३७ ॥**

**उपकल्पशतैरपि** इत्यत्र **उप** उपपन्नतया **कल्पः** कल्पना येषां ते उपकल्पाः तेषां शतैः गुप्तमिति सम्बन्धः।

**गलकर्षकवाटैश्च[2] द्रव्यागारसुवेदिकैः।**
**भीमोच्छ्रितमहाचक्रं बृहदट्टालसंवृतम् ॥ ३९ ॥**

**गलकर्षकवाटैश्च** इत्यत्र **कर्षः** रिपुभटानां कण्ठाकर्षणाय कृतो रज्जुविशेषः।

**दृढप्राकरनिर्यूहं शतघ्नीशतसङ्कुलम्।**
**ऐष्टको दारवो वप्रमानुषश्चेति यः स्मृतः ॥ ४० ॥**

**ऐष्टकः** इष्टकाकारी। **दारुकः** दारुकर्मकर्ता कारुः। **वप्रमानुषः** भित्तिकर्ता।

**प्राकारकर्तुभिर्धीरैः[3] नृगर्भस्तत्र पूजितः।**
**तदेतन्नरगर्भेण पाण्डरेण विराजते ॥ ४१ ॥**

---

१. '**उपतल्प-**' इति कुं पाठः। २. '**युक्तं बहुकवाटैश्च**' इति कुं पाठः।
३. '**-वीरैः**' इति कुं पाठः।

**नृगर्भस्तत्र पूजित** इत्यत्र **धीरैः** प्राकारकर्तृभिः सहितः नृगर्भः नॄन् गर्भीकरोतीति **नृगर्भः** सेनानायक इत्यर्थः । सोऽपि **पूजितः** धन-कनकादिना सत्कृतः तत्रास्ते ।

॥ इति षट्पञ्चाशदधिकशततमोऽध्यायः ॥

## ॥ अथ सप्तपञ्चाशदधिकशततमोऽध्यायः ॥

**सम्प्रयाणासनाभ्यां तु कर्शनेन तथैव च ।**
**नैतच्छक्यं पुरं हर्तुमाक्रन्दश्चाप्यशोभनः** ॥ ४ ॥

**सम्प्रयाणासनाभ्याम्** इत्यत्र **आसनं** परपुरं स्वसेनया आवृत्य प्राप्तिपर्यन्तमवस्थानम् । **आक्रन्दः** बहिष्ठधनधान्यनिरोधेन पुरान्तःस्थितानां आक्रोशकरणम् ।

**वैकर्तनपुरोवातः सैन्धवोर्मिमहास्वनः ।**
**[१]दुःशासनसरिन्मध्ये दुर्योधनमहाग्रहः** ॥ १५ ॥

**दुश्शासनसरिन्मध्ये** अन्यैः शास्तुमशक्यसेनासरिन्मध्ये ।

**तदनीकमनाधृष्यं शस्त्राग्निव्यालदीपितम् ।**
**समुत्कम्पितमाज्ञाय चुक्रुशुर्द्रुपदात्मजाः** ॥ १७ ॥

'क्रुश आह्वाने' इति सम्बन्धः । **धन्विनः** बहुधनुस्सङ्ग्रहवन्तः । [illegible] वा ।

**आविशत् परमो हर्षः प्रमोदश्च [२]बलं प्रति ।**
**मुहूर्तं व्यतिकरः सैन्यानामभवद्भृशम्** ॥ २९ ॥

---

१. 'दुःशासनमहामत्स्यो' इति कुं.पाठः । २. 'जयं प्रति' इति कुं. पाठः ।

**प्रमोदश्च बलं प्रति** इत्यत्र **बलं** परबलं प्रति गन्तुं प्रमोदः। **व्यतिकरः** मिश्रणम्।

**तस्मिन् दशरथे[1] युद्धे प्रवृत्ते शरवृष्टिभिः।**
**रथध्वजपताकाश्च सर्वमन्तरधीयत ॥ ४६ ॥**

**तस्मिन् दशरथे युद्धे प्रवृत्ते[2]** इत्यत्र पाण्डवचतुष्टयं द्रुपदपुत्रो धृष्टद्युम्नश्चेति पञ्च द्रुपदसेनायां, कर्णजयद्रथसोमदत्तशकुनिदुर्योधनाश्चेति पञ्च कौरवसेनायां, एवं दश महारथानां रथा यस्मिन् तत्तथोक्तम्।

**स तेनाभिहतः पार्थो वासविर्वज्रसन्निभान्।**
**त्रीन् शरान् सन्दधे क्रुद्धो वधात् कर्णस्य[3] पाण्डवः ॥४९॥**

**वधात् कर्णस्य पाण्डव** इत्यत्र **वधात्** इति ल्यब्लोपनिमित्ता पञ्चमी। वधमुद्दिश्येत्यर्थः।

**[4]सुवृत्तं चक्रिरे सर्वे सुवृतामब्रुवन् वधूम्।**
**कृतार्थं द्रुपदं चोचुर्धृष्टद्युम्नं च पार्षतम् ॥ ६३ ॥**

**सुवृत्तं चक्रिरे सर्व** इत्यत्र सम्यग्युद्धकरणेन शोभनं वृत्तं चरित्रं यस्य तत् **सुवृत्तं** भीमार्जुनादिरिपुकटकं चक्रिरे।

**प्रागेव पूर्निरोधात्तु पाण्डवैरश्वसादिनः।**
**प्रेषिता गच्छतारिष्टान् अस्मानाख्यात शौरये ॥ ६६ ॥**

---

१. **'महारथे'** इति कुं. पाठः। ; २. **प्रवृद्धे** सो.मु.पा.।
३. BORI पृ. ९५३; **'क्रुद्धस्य'** इति कुं पाठः।
४. BORI पृ. ९५३; **'सुव्रतं'** इति कुं पाठः।

**प्रेषिता गच्छतारिष्टान् अस्मानाख्यात शौरय** इत्यत्र **अरिष्टान्** अनष्टान् **आख्यात** ब्रूत ।

**कुशलं पाण्डवाः सर्वानाहुः स्मान्धकवृष्णयः ।**
**आत्मनश्चाहतानाहुः विमुक्तान् जातुषाद्गृहात् ॥ ६८ ॥**

हे अन्धकवृष्णयः पाण्डवाः सर्वान् वः कुशलमाहुः। **आत्मनः** स्वान्। अत्र सभायामिति सम्बन्धः ।

**तच्छ्रुत्वा वचनं कृष्णः तानुवाचोत्तरं वचः ।**
**सर्वमेतदहं जाने वधात्तस्य तु रक्षसः ॥ ७० ॥**

**वधात्तस्य तु रक्षस** इत्यत्र **रक्षसः** हिडिम्बस्य बकस्य चेत्यर्थः ।

**॥ इति सप्तपञ्चाशदधिकशततमोऽध्यायः ॥**

## ॥ अथ एकोनषष्ट्यधिकशततमोऽध्यायः ॥

**यद्यसौ ब्राह्मणो न स्याद्विन्देन द्रौपदीं न सः ।**
**न हि तं तत्त्वतो राजन्वेद कश्चिद्धनञ्जयम् ॥ ४ ॥**

**ब्राह्मणः** ब्राह्मणवेषधारी **असौ** अर्जुनः यदि न स्यादिति सम्बन्धः ।

**ततः प्रीतमनाः क्षत्ता धृतराष्ट्रं विशाम्पते ।**
**उवाच दिष्ट्या कुरवो वर्धन्त इति विस्मितः ॥ १९ ॥**

**उवाच कुरव** इत्यत्र कुरव इति सामान्यवचनात् स्वपुत्रविवाह इति धृतराष्ट्रस्य भ्रम इति भावः ।

**यथैव पाण्डोः पुत्रास्ते ततोऽप्यभ्यधिका मम ।**
**सेयमभ्यधिकान्येभ्यो वृत्तिर्विदुर मे मता ॥ २७ ॥**

**वृत्तिर्विदुर मे मता** इत्यत्र वृत्तिः द्रौपद्याः वरणम् ।

**को हि द्रुपदमासाद्य मित्रं क्षत्तः सबान्धवम् ।**
**न बुभूषेद्भवेनार्थी गतश्रीरपि पार्थिवः ॥ ३२ ॥**

**को हि द्रुपदमासाद्य** इत्यत्र हे क्षत्तः सबान्धवं मित्रं द्रुपदमासाद्य कः न बुभूषेत् । कथं तत्कथमिव । **गतश्रीः** पूर्वं गतश्रीः **अर्थी** पुनर्लब्धबह्वर्थवान् पार्थिव इति उक्तेऽर्थे दृष्टान्तः ।

**सन्निधौ विदुरस्य त्वां दोषं वक्तुं न शक्नुवः ।**
**विविक्तमिव वक्ष्यावः किं तवेदं चिकीर्षितम् ॥ ३५ ॥**
**[१]सपत्नवृद्धिं यत्तात मन्यसे वृद्धिमात्मनः ।**
**अभिष्टौपि च यत्क्षत्तुः समीपे द्विपदावर ॥ ३६ ॥**

विविक्तं यथा भवति तथा, एकान्ते इत्यर्थः । इति वक्ष्यमाणप्रकारेण। **अभिष्टौषि** अभितः स्तौषि ।

**[२]परित्यजेयू राजानं कुन्तीपुत्रं युधिष्ठिरम् ।**
**अथ तत्रैव वा तेषां निवासं रोचयन्तु ते ॥ ७ ॥**
**इहैषां दोषवद्वासं [३]कर्णयन्तु पृथक् पृथक् ।**
**ते भिद्यमानास्तत्रैव मनः कुर्वन्तु पाण्डवाः ॥ ८ ॥**

१. कुं. २१९ अध्यायः ।
२. $G_{1.2m}$; BORI पृ. ७७४; **'परित्यजेद्यथा राजा'** इति कुं.पाठः ।
३. **'वर्णयन्तु'** इति कुं.पाठः ।

**परित्यजेयू राजानम्** इत्यत्र अस्मद्रहस्यं श्रुत्वा निराशास्ते कुन्तीपुत्रं परित्यजेयुः । अतस्ते वञ्चनीय इति पूर्वेण सम्बन्धः । दोषवत् यथा भवति तथा अस्मदीयैः कीर्त्यमानं **कर्णयन्तु** आकर्णयन्तु ।

**व्युत्थापयन्तु तां[1] कृष्णां बहुत्वात् सङ्करं[2] हि तत् ।**
**अथवा पाण्डवांस्तस्यां भेदयन्तु ततश्च ताम् ॥ १० ॥**

**व्युत्थापयन्तु तां कृष्णाम्** इत्यत्र **बहुत्वात्** पतीनां बहुत्वात् **तत्** तैः सह रमणं **सङ्करं** जातिसङ्करमाहुरित्युक्त्वा तां कृष्णां **व्युत्थापयन्तु** विरुद्धतया तेभ्य उत्थापयन्तु ।

**दर्पं वा वदतां तेषां केचिदत्र मनस्विनः ।**
**द्रुपदस्यात्मजा राजन् भिद्यन्ते च ततः परैः ॥ १७ ॥**

**दर्पं वावदताम्** इत्यत्र **तेषां** पाण्डवानां **दर्पं** स्वदर्पं **वावदतां** अतिशयेन वदतां सताम् अत्र केचिन्मनस्विनः ते द्रुपदात्मजाश्च **ततः** दर्पकथनान्निमित्तात् **परैः** शत्रुभिः पाण्डवैः **भिद्यन्ते** भेदं प्राप्नुवन्तीति योजना ।

**प्रेष्यतां चैव राजेन्द्रः[3] तेषामागमनाय वै ।**
**ते[4] लोप्त्रहारैः सन्धाय वध्यन्तामाप्तकारिभिः ॥ १९ ॥**

राजेन्द्र इति स्वपुत्रं प्रति सम्बुद्धिः । **लोप्त्रहारैः** इत्यत्र **लोप्त्रहारैः**

---

१. S(except M6 8); BORI पृ. ७७४; **'वा'** इति कुं.पाठः ।
२. **'सुकरं'** इति कुं.पाठः । ; ३. S; BORI पृ. ७७५; **'राधेय'** इति कुं.पाठः ।
४. BORI पृ. ७७५; **'तैस्तैः प्रकारैः सन्तीय पात्यन्तामाप्तकारिभिः'** इति कुं.पाठः ।

वञ्चनेनापहृतद्रव्यनेतृभिः चोरैः, [१]'द्रव्यं त्वपहृतं लोप्त्रं स्तेयं चौर्यमिति स्मृतम्' इति हलः। तैः पथि सन्धाय वध्यन्तामित्यन्वयः।

**एतेषामप्युपायानां यस्ते निर्दोषवान्मतः।**
**तस्य प्रयोगमातिष्ठ पुरा कालोऽतिवर्तते ॥ २० ॥**

**पुरा कालोऽतिवर्तत** इत्यत्र **पुरा** कार्यान्तरारम्भात्पूर्वम्।

यदा एकस्यां पत्न्यां न भिद्यन्ते तदेति सम्बन्धः।

**॥ इत्येकोनषष्ट्यधिकशततमोऽध्यायः ॥**

## ॥ अथ षष्ट्यधिकशततमोऽध्यायः ॥

**कर्ण उवाच –**

**दुर्योधन तव प्रज्ञा न सम्यगिति मे मतिः।**
**न ह्युपायेन [२]शक्यास्ते पाण्डवाः कुरुवर्धन ॥ १ ॥**

**न ह्युपायेन शक्यास्त** इत्यत्र **शक्याः** जेतुं शक्याः।

**न चापि कृष्णा शक्येत तेभ्यो भेदयितुं परैः।**
**[३]परिन्यूनान्वृतवति किमुताद्य [४]प्रजावृतः ॥ ७ ॥**

**परिन्यूनान्वृतवति** इत्यत्र **परिन्यूनान्** परिजनैर्न्यूनान् भिक्षुकानित्यर्थः। **प्रजावृतः** सेवकजनवृतः।

**॥ इति षष्ट्यधिकशततमोऽध्यायः ॥**

---

१. ह.को. २-३२९

२. S; BORI पृ. ७७५; **'ते शक्याः'** इति कुं पाठः।

३. **'परिद्यूनान्वृतवती'** इति कुं.पाठः। ; ४. **'मृजाव्रजः'** इति कुं पाठः।

## ।। अथ एकषष्ट्यधिकशततमोऽध्यायः ।।

**अतोऽन्यथा चेत् क्रियते न हितं नो भविष्यति ।**
**तवाप्यकीर्तिः सकला भविष्यति न संशयः ।। ९ ।।**

**तवाप्यकीर्तिः सकला भविष्यति** इत्यत्र भूधातोः प्राप्त्यर्थकत्वात् **भविष्यति** प्राप्स्यति ।

**दिष्ट्या [१]धरन्ति पार्था दिष्ट्या जीवति सा पृथा ।**
**दिष्ट्या पुरोचनः पापो न सकामोऽत्ययं गतः ।। १३ ।।**

**दिष्ट्या धरन्ति ते वीरा** इत्यत्र **धरन्ति** प्राणान् धारयन्ति । **न सकामोत्ययं गत** इत्यत्र अत्ययं गतः स पुरोचनः दिष्ट्या **सकामः** कामसंसिद्धिमान् **न** नाभूत् ।

**न चापि दोषेण तथा लोको मन्येत्पुरोचनम् ।**
**यथा त्वां पुरुषव्याघ्र लोको दोषेण गच्छति ।। १५ ।।**

**न चापि दोषेण** इत्यत्र दोषेण युक्तमिति योग्यपदाध्याहारः । इदानीं राज्यार्धे त्वया दत्ते सति तत्र स्नेहं दृष्ट्वा एवं स्नेहवान् दुर्योधनः तदाऽपि गृहदाहार्थं न प्रेरितवान् । किन्तु मनुष्यस्यैव दोष इति लोको वदेत् ।

**तदिदं जीवितं तेषां तव किल्बिषनाशनम् ।**
**संमन्तव्यं महाराज पाण्डवानां च दर्शनम् ।। १६ ।।**

अतस्तज्जीवनमेव तवापि हितमभूदित्याह—**तदिदम्** इति ।

**।। इति एकषष्ट्यधिकशततमोऽध्यायः ।।**

---

१ $K_{0,2,4}$, N,$V_1$,B,D; BORI पृ. ७७९; **'ध्रियन्ते'** इति कुं पाठः ।

## ।। अथ द्विषष्ट्यधिकशततमोऽध्यायः ।।

**मिथः कृत्यं च तस्मै स आदाय वसुगच्छतु ।**
**वृद्धिं च परमां ब्रूयात्तत्सुयोगोद्भवां तदा[1] ।। ४ ।।**

**मिथः कृत्यं च तस्मै स** इत्यत्र मिथः कृत्यं तैरस्माकं कर्तव्यं, अस्माभिस्तेषां कर्तव्यं च बहुप्रमेयं **तस्मै** धर्मराजाय वक्तुं आदाय स्वमनसा सङ्गृह्य गच्छत्विति सम्बन्धः । **तत्सुयोगोद्भवां तदा** इत्यत्र तस्य धर्मराजस्य अस्मासु सुयोगमुद्भावयतीति **तत्सुयोगोद्भवा** ताम् ।

**एतत्तव महाराज तेषु पुत्रेषु चैव हि ।**
**वृत्तमौपयिकं मन्ये भीष्मेण सह भारत ।। १२ ।।**

**भीष्मेण सह भारत** इत्यत्र भीष्मेण सह अहं मन्य इति योजना ।

**कर्ण उवाच –**

**योजितावर्थमानाभ्यां सर्वकार्येष्वनन्तरौ ।**
**न मन्त्रयेतां त्वच्छ्रेयः किमद्भुततरं ततः ।। १३ ।।**

**सर्वकार्येष्वनन्तरौ** इत्यत्र **अनन्तरौ** व्यवधानरहितौ अन्तरङ्गा-वित्यर्थः ।

**दुष्टेन मनसा यो वै प्रच्छन्नेनान्तरात्मना ।**
**ब्रूयान्निःश्रेयसं नाम कथं कुर्यात्सतां मतम् ।। १४ ।।**

**ब्रूयान्निःश्रेयसं नाम** इत्यत्र प्रच्छन्नेनान्तरात्मना इत्युक्तत्वात् अश्रेय एव निःश्रेयसं नाम ब्रूयादिति योग्यपदाध्याहारेण योजना ।

---

१. $\tilde{N}_1, B_{5.6}, D_{n1n2}, D_{1.5}, G_{2.5.6}$;BORI पृ. ७८०; **'तथा'** इति कुं पाठः

**न मित्राण्यर्थकृच्छ्रेषु श्रेयसे चेतराय वा ।**
**विधिपूर्वं हि सर्वस्य दुःखं वा यदि वा सुखम् ॥ १५ ॥**

**न मित्राण्यर्थकृच्छ्रेषु** इत्यत्र **मित्राणि न** दुर्योधनस्य मित्राणि न सन्ति **सर्वस्य** जनस्य दुःखं व्रा यदि सुखं वा **विधिपूर्वं हि** विधिः शिरसि लेखको विधाता तत्पूर्वं तन्निमित्तं हि ।

**कृतप्रज्ञोऽकृतप्रज्ञो बालो वृद्धश्च मानवः ।**
**ससहायोऽसहायश्च सर्वः [1]सर्वत्र विन्दति ॥ १६ ॥**

**सर्वः सर्वत्र विन्दति** इत्यत्र सर्वो जनः सर्वत्र **विन्दति** विधिविहितं प्रागुक्तं सुखं वा दुःखं वा विन्दति ।

**तस्यामात्यो महाकर्णिर्बभूवैकेश्वरस्तदा ।**
**सलब्धबलमात्मानं मन्यमानोऽवमन्यते ॥ १९ ॥**

**मन्यमानोऽवमन्यत** इत्यत्र **अवमन्यते** राजानमवमन्यते ।

**हीनस्य करणैः सर्वैरुच्छ्वासपरमस्य च ।**
**[2]यतमानो न शक्नोति राज्यं हर्तुमिति श्रुतिः ॥ २२ ॥**

**यतमानो न शक्नोति** इत्यत्र यतमानो राजा विनन्दः ।

**[3]किमन्यविहिता नूनं तस्य सा पुरुषेन्द्रता ।**
**यदि ते विहितं राज्यं भविष्यति विशाम्पते ॥ २३ ॥**

---

१. BORI पृ. ७८१; **'सर्वं'** इति कुं पाठः ।
२. S; BORI पृ. ७८१; **'यतमानोऽपि तद्राज्यं न शशाकेति नः श्रुतं'** इति कुं पाठः ; ३. **'किमन्यद्विहिता'** इति कुं पाठः ।

**किमन्यविहिता नूनं तस्य सा पुरुषेन्द्रता** इत्यत्र **तस्य** मन्त्रिणः **सा पुरुषेन्द्रता** पुरुषस्वामिता राज्यस्वामितेति यावत् । नूनं **अन्यविहिता** विधेरन्येन केनचिद्विहिता किम् । नैवेत्यर्थः ।

**मिषतः सर्वलोकस्य स्थास्यते त्वयि तद् ध्रुवम् ।**
**अतोऽन्यथा चेद्विहितं यतमानो न लप्स्यसे ॥ २४ ॥**

**अतोऽन्यथा चेत्** इत्यत्र **विहितं** विधिविहितं, अतः तव राज्यलाभात् अन्यथा चेत् यतमानः न **लप्स्यसे** राज्यं न लप्स्यसे ।

**द्रोण उवाच –**

**विद्म ते भावदोषेण यदर्थमिदमुच्यते ।**
**दुष्ट पाण्डवहेतोस्त्वं दोषं[1] ख्यापयसे त्मनः ॥ २६ ॥**

**दुष्टः पाण्डवहेतोस्त्वम्** इत्यत्र पाण्डवहेतोः दुष्टः दुर्वचनाख्यदोषे[2]-वांस्त्वं, **त्मनः** आत्मनः **दोषं** हीनकुलजत्वदोषं ख्यापयसे । अकुलीन एव कुलीननिन्दक इति भावः ।

**अतोऽन्यथा चेत्क्रियते यद्ब्रवीमि परं हितम् ।**
**कुरवो वै विनङ्क्ष्यन्ति नचिरेणैव मे मतिः ॥ २८ ॥**

**अतोऽन्यथा चेत्क्रियत** इत्यत्र **अतः** अस्मदुक्तसन्धिकार्यात् ।

॥ इति द्विषष्ट्यधिकशततमोऽध्यायः ॥

* * *

---

१. $G_{5,6}$,M; BORI पृ. ७८२; **'दोषमाख्यापयस्युत'** इति कुं.पाठः ।
२. **दोषवांस्तु** सो.मु.पा.।

## ॥ अथ त्रिषष्ट्यधिकशततमोऽध्यायः ॥

**एतदर्थमिमौ राजन्महात्मानौ महाद्युती ।**
**नोचतुर्विवृतं किञ्चिन्न ह्येष तव निश्चयः ॥ १४ ॥**

**नोचतुर्विवृतं किञ्चित्** इत्यत्र **विवृतं** स्पष्टं **नोचतुः** तव पुत्रदोषं नोचतुः ।

**इदं निर्दग्धमयशः[1] पुरोचनकृतं महत् ।**
**तेषामनुग्रहेणाद्य राजन् प्रक्षालयात्मनः ॥ २५ ॥**

**इदं निर्दग्धमयश** इत्यत्र नितरां दग्धाः पाण्डवा इति वार्ता यस्मिन्नयशसि । तत् **निर्दग्धम्** ।

**श्रुत्वा च जीवतः पार्थान् पौरजानपदा जनाः ।**
**बलवद्दर्शने वृद्धस्तेषां[2] राजन् प्रियं कुरु ॥ ३० ॥**

**वृद्धस्तेषां राजन् कुरु प्रियम्** इत्यत्र **वृद्धः** कुलवृद्धस्त्वं तेषां प्रियं कुर्विति सम्बन्धः ।

॥ इति त्रिषष्ट्यधिकशततमोऽध्यायः ॥

## ॥ अथ चतुःषष्ट्यधिकशततमोऽध्यायः ॥

**कृष्णामपि च पञ्चाली सर्वाः कुरुवरस्त्रियः ।**
**द्रष्टुकामाः प्रतीक्षन्ते पुरं च विषयं च नः ॥ २५ ॥**

---

१. $G_{1,5,6}$,$M_{6-3}$; BORI पृ. ७८२; **‘निर्दिष्टमयशः’** इति कुं.पाठः ।
२. **‘हृष्टास्तेषां राजन्प्रियं कुरु’** इति कुं.पाठः ।

**पुरं च विषयं च न** इत्यत्र एते पाण्डवाश्च नः पुरं च विषयं च द्रष्टुकामा इति पूर्वपदावृत्त्या योजना ।

**स भवान् पाण्डुपुत्राणां आज्ञापयतु मा चिरम् ।**
**गमनं सहदाराणां [१]एतदागमनं मम** ॥ २६ ॥

**एतदागमनं मम** इत्यत्र मम **एतदागमनं** एतेषां पाण्डवानामागमनमेव उद्देश्यं यस्य तत्तथोक्तमित्यावृत्त्या योजना ।

॥ इति चतुःषष्ट्यधिकशततमोऽध्यायः ॥

## ॥ अथ पञ्चषष्ट्यधिकशततमोऽध्यायः ॥

**गमनं चापि युक्तं [२]स्याद्गृहमेषां महात्मनाम् ।**
**न तु तावन्मया युक्तमेतद्वक्तुं स्वयं गिरा** ॥ २ ॥

**गृहं** गृहं प्रति । **तावत्** गमनकालपर्यन्तम् ।

**परवन्तो वयं राजंस्त्वयि सर्वे सहानुगाः ।**
**यथावक्ष्यसि नः प्रीत्या तत्करिष्यामहे वयम्** ॥ ५ ॥

**परवन्त** इत्यत्र **परवन्तः** नाथवन्तः। 'परवान्नाथवानपि' इत्यमरः ।

**न तद्ध्यायाति कौन्तेयः पाण्डुपुत्रो युधिष्ठिरः ।**
**यथैषां पुरुषव्याघ्रः श्रेयो ध्यायति केशवः** ॥ ९ ॥

**न तद्ध्यायति** इत्यत्र यद्यस्मात्कारणात् **एषां** पाण्डवानां केशवः श्रेयो धास्यति, **तत्** तस्माद्धर्मपुत्रः न ध्यायतीति योजना ।

१. BORI पृ. ७८७; **'एतदत्र मतं मम'** इति कुं.पाठः ।
२. BORI पृ. ७८७; **'स्याद्दृढमेषां'** इति कुं.पाठः ।

**चिन्तया वर्धिताः पुत्रा यथा कुशलिनस्तथा ।**
**तव पुत्रास्तु जीवन्ति त्वद्भक्त्या भरतर्षभ ॥ १३ ॥**

**त्वद्भक्त्या भरतर्षभ** इत्यत्र त्वद्भक्त्या त्वदङ्गीकारेण ।

**यथा परभृतः पुत्रान् अरिष्टा वर्धयेत्सदा ।**
**तथैव पुत्रास्तु मम त्वया तात सुरक्षिताः ॥ १४ ॥**

**अरिष्टा** इत्यत्र **अरिष्टः** काकः । [1]'अरिष्टः करटः काक' इति हलः ।

**[2]दुःखास्तु बहवः प्राप्तस्तथा प्राणान्तिका मया ।**
**अतः परं न जानामि कर्तव्यं ज्ञातुमर्हसि ॥ १५ ॥**

**दुःखास्तु बहवः प्राप्ता** इत्यत्र **दुः** दुःखितानि **खानि** इन्द्रियाणि याभ्यस्ता इति व्युत्पत्त्या **दुःखाः** विपदः ।

**सविहारं सुखं जग्मुर्नगरं नागसाह्वयम् ।**
**सुवर्णकक्ष्याग्रैवेयान् सुवर्णाङ्कुशभूषितान् ॥ १९ ॥**

**सविहारं सुखं जग्मुः** इत्यत्र सविहारं विहारेण सहिता यथा भवन्ति तथा । **सुवर्णकक्ष्याग्रैवेयान्** इत्यत्र कक्षयोः पार्श्वयोः सम्बन्धिनी अलङ्कृतिः **कक्ष्या** । [3]'बाहुमूले उभे कक्षौ पार्श्वमस्त्री तयोरध' इत्यमरः । ग्रैवेयं कण्ठभूषा । सुवर्णकक्ष्याश्च ग्रैवेयाणि च येषां ते तथोक्तास्तान् ।

**चतुर्युजां भानुमच्च पञ्चानां प्रददौ तदा ।**
**[4]पुनः सुवर्णबर्हाणां वरचामरमालिनाम् ॥ २२ ॥**

---

१. ह.को. २-२४५ ; २. BORI पृ. ९५४; 'क्लेशास्तु' इति कुं.पाठः ।
३. अ.को. २-६-७९; ४. 'सुवर्णपरिबर्हाणां' इति कुं.पाठः ।

**पुनः सुवर्णबर्हाणाम्** इत्यत्र **सुवर्णबर्हाणां** सुष्ठुवर्णोपितबर्हालङ्कृतानां, आदौ सुवर्णखचितबर्होपितानां वा ।

**एवमेतानि पाञ्चालो जन्यर्थे प्रददौ धनम्** ॥ २८ ॥

**जन्यर्थे प्रददौ धनम्** इत्यत्र **जनी** परिजनवान् धर्मराजः, तत्प्रीत्यर्थम् । 'व्रीह्यादिभ्यश्च' इति सूत्रात् स्वस्माज्जनिरस्या वर्तत इति जनी जननवान् स्त्रीदायादः, तत्प्रीत्यर्थम् । 'जनी प्रादुर्भावे' इति धातोः कर्त्रर्थे औणादिके डि प्रत्यये कृते जनिरेव वा पुत्री ।

**हरणं चापि पाञ्चाल्या ज्ञातिदेयं च सोमकः** ॥ २९ ॥

**हरणम्** इत्यत्र हरणं हरति परिहरति येन कन्या स्वमनोव्यथां तद्धरणं पारिबर्हधनम् ।

**तैस्तैः परिवृताः शूरैः शोभमाना महारथाः ।**
**नगरं हास्तिनपुरं शनैः प्रविविशुस्तदा** ॥ ३० ॥

**तैस्तैः परिवृता** इत्यत्र तैः सहागतस्वसैन्यैः, तैः अभ्यागतकौरवसैन्यैश्च ।

**॥ इति पञ्चषष्ट्यधिकशततमोऽध्यायः ॥**

## ॥ अथ षट्षष्ट्यधिकशततमोऽध्यायः ॥

**सञ्चिन्त्य विदुरं प्राह युक्तितः सुबलात्मजा ।**
**कुन्तीं राजसुतां क्षत्तः सवधूः[१] सपरिच्छदाम्** ॥ ५ ॥

१. 'सवधूं' इति कुं पाठः ।

**सवधूः सपरिच्छद** इत्यत्र **सवधूः** सस्नुषा । 'वधूर्जाया स्नुषा स्त्री तु' इति रत्नमाला ।

**पूजयामासुरत्यर्थं बान्धवाः पाण्डवांस्तदा ।**
**[१]श्रेणिमुख्याश्च सर्वशः पूजयन्ति स्म पाण्डवान् ॥ ८ ॥**

**श्रेणिमुख्याश्च सर्वश** इत्यत्र **श्रेणिषु** सेनासमूहेषु **मुख्याः** श्रेष्ठाः सेनानायका इत्यर्थः ।

**औपवाह्योपरिगतं दिव्यचामरवीजितम् ।**
**सुवर्णमणिचित्रेण श्वेतच्छत्रेण शोभितम् ॥ २६ ॥**

**औपवाह्योपरिगतम्** इत्यत्र [२]'औपवाह्यो राजवाह' इत्यनुशासनात् राजवाहनोपरिगतम् ।

**प्रतिक्रिया कृतमिदं भविष्यन्ति न संशयः ।**
**भीष्मो द्रोणः कृपः क्षत्ता [३]साधु साध्वित्यभाषताम् ॥ २९ ॥**

**प्रतिक्रियाकृतम्** इत्यत्र **प्रतिक्रियाकृतं** प्रतिक्रियार्थं कृतम् । अभाषतां द्वौ द्वौ परस्परमभाषतामिति लङः परस्मैपदे द्विवचनम् ।

**कृपो द्रोणश्च भीष्मश्च धौम्यश्च व्यासकेशवौ ।**
**बाह्लीकः सोमदत्तश्च [४]चातुर्वेद्या पुरस्कृताः ॥ ३४ ॥**

---

१. **'नागराः श्रोणिमुख्याश्च'** इति कुं पाठः ।
२. ह.को. २-२२४
३. BORI पृ. ९५५; **'साधुसाध्वित्यथा ब्रुवन्'** इति कुं.पाठः ।
४. **'चतुर्वेद्यपुरस्कृताः'** इति कुं पाठः ।

**चातुर्वेद्या पुरस्कृता** इत्यत्र **चातुर्वेद्या** चतुर्वेदसम्बन्धिन्या मन्त्रर्चा-पुरस्कृताः।

**विनाशितं मुनिगणैः लोभाद्बुधसुतस्य वै।**
**तस्मात्त्वं खाण्डवप्रस्थं पुरं राष्ट्रं च वर्धय ॥ ४६ ॥**

**विनाशितं मुनिगणैः** इत्यत्र **बुधसुतस्य** पुरूरवसः **लोभात्** स्त्रीलोभात् **विनाशितं** शापं दत्त्वा विनाशितम्।

**ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च कृतलक्षणाः।**
**त्वद्भक्त्या जन्तवश्चान्ये भजन्त्येव पुरं शुभम् ॥ ४७ ॥**

**शूद्राश्च कृतलक्षणा** इत्यत्र इह खाण्डवप्रस्थे **कृतलक्षणाः** कृतशङ्ख-चक्रलाञ्छनाः **जन्तवः** पश्वादिप्राणिनः।

**[1]नगरं मापयामासुः द्वैपायनपुरोगमाः।**
**ततः स विश्वकर्मा तु चकार पुरमुत्तमम् ॥ ५९ ॥**

**नगरं मापयामासुः** इत्यत्र **मापयामासुः** मानदण्डेण आयानुसारात् प्रमाणीचक्रुः।

**द्विपक्षगरुडप्रख्यैः द्वारैः सौधैश्च शोभितम्।**
**गुप्तमभ्रचयप्रख्यैः गोपुरैर्मन्दरोपमैः ॥ ६२ ॥**

**द्विपक्षगरुडप्रख्यैः** इत्यत्र गरुडस्य पक्षद्वयसदृशकवाटोपेतैः द्वारैरिति सम्बन्धः।

**मनोहरैश्चित्रगृहैः तथा जगति पर्वतैः।**
**वापीभिर्विविधाभिश्च पूर्णाभिः परमात्मना ॥ ७६ ॥**

---

१. BORI पृ. ७९०; 'तत्पुरं' इति कुं पाठः।

**तथा जगतिपर्वतैः** इत्यत्र **जगती** मणिकुट्टिमा भूमिः तया, **पर्वतैः** क्रीडापर्वतैश्च ।

**मेघवृन्दमिवाकाशे [1]विद्युत्सौदामिनीवृतम् ।**
**तत्र रम्ये शिवे देशे कौरव्यस्य निवेशनम् ॥ ६७ ॥**

**विद्युत्सौदा(म)मिनीवृतम्** इत्यत्र विशेषेण द्योतमाना सौदा(म)-मिनी तटित् तया वृतम् ।

**जयेति [2]ब्राह्मणा वाचः श्रूयन्ते च सहस्रशः ।**
**संस्तूयमानो मुनिभिः सूतमागधबन्दिभिः ॥ ८७ ॥**

**जयेति ब्राह्मणा वाच** इत्यत्र **ब्राह्मणाः** ब्रह्मसम्बन्धिन्यः वाचः श्रूयन्ते ।

**तेषां पुण्यजनोपेतं [3]राष्ट्रमावसतां महत् ।**
**पाण्डवानां महाराज शश्वत्प्रीतिरवर्धत ॥ ९२ ॥**

[4]**येषां** पाण्डवानां आवसतां सतां राष्ट्रमवर्धत तेषु जनानां शश्वत्प्रीति-रवर्धत ।

**सौबलेन च कर्णेन धार्तराष्ट्रैः कृपेण च ।**
**तथा भीष्मेण राज्ञा च [5]धर्मप्रणयिनस्तदा ॥ ९३ ॥**

---

१ S; BORI पृ. ७९१; **'विद्युत्समावृतम्'** इति कुं पाठः ।
२ **'ब्राह्मणगिरः'** इति कुं पाठः ।
३ BORI पृ. ७९२; **'राष्ट्रमाविशतां'** इति कुं पाठः ।
४ **तेषां** शां.मु.पा.।
५ G, ,M; BORI पृ. ७९२; **'धर्मप्रणयिनः सदा'** इति कुं पाठः ।

**धर्मप्रणयिनस्तदा** इत्यत्र पाण्डवाः सौबलादिभिर्निमित्तैः खाण्डवप्रस्थवासिनः सन्तः धर्मप्रणयिनः समपद्यन्त दुर्जनसंसर्गाभावात् केवलं धर्मरता अभवन्निति भावः ।

**[१]प्रसादादेव ते वीर राज्यं प्राप्तं मयाऽनघ ।**
**प्रसादादेव ते वीर शून्यं राष्ट्रं सुदुर्गमम् ॥ ९७ ॥**

**प्रसादादेव ते वीर** इत्यत्र हे वीर तव प्रसादादेव प्राक् शून्यं राज्यं इदानीं विश्वकर्मनिर्मितप्राकारपरिखादिना अतिमहता चतुरङ्गसैन्येन च परैः सुदुर्गममासीत् । सुष्ठु दुः दुःखस्य गमो [२]गमनं यस्मात्तत्सुदुर्गमं आसीदिति वा ॥

श्रीवासुदेव उवाच –

**[३]त्वत्प्रसादान्महाराज राज्यं प्राप्तं स्वधर्मत ।**
**पितृपैतामहं राज्यं कथं न स्यात्तव प्रभो ॥ १०० ॥**

**त्वत्प्रसादान्महाराज राज्यं प्राप्तं स्वधर्मत** इत्यत्र '[४]प्रसादस्तु प्रसन्नता' इत्यभिधानात् **त्वत्प्रसादात्** अजतशात्रो[५]स्तवप्रसन्नतालक्षणलौकिकदिव्यगुणात् **स्वधर्मतः** स्वकृतधर्माख्यालौकिकगुणाच्च राज्यं प्राप्तमित्यन्वयः ॥

**[६]धर्मोपदेशं सङ्क्षेपाद्ब्राह्मणान्भर पौरव ।**
**अद्यैव नारदः श्रीमानागमिष्यति सत्वरः ॥१०२॥**

---

१. BORI पृ.७९२; 'तत्र प्रसादाद्वार्ष्णेय' इति कुं पाठः। २. मोचनं सो.मु.पा.
३. 'त्वत्प्रभावान्महाराज्यं सम्प्राप्तं हि स्वधर्मतः' इति कुं पाठः ।
४. अ.को. १.३.१६ ; ५. स्तत्प्रसन्नता सो.मु.पा.।
६. 'पुनः पुनश्च संहर्षाद्ब्राह्म-' इति कुं पाठः ।

**धर्मोपदेशं सङ्क्षेपात्** इत्यत्र **सं** सम्यक् 'क्षिपु निरसने' इति धातोः **क्षेपं** धर्मविरोध्यधर्मनिरसनं सम्पाद्य, इयमपि ल्यब्लोपनिमित्ता पञ्चमी । **धर्मोपदेशं** धर्मशास्त्रं ब्राह्मणांश्च भर इति योजना ।

**कुन्त्युवाच–**

**जातुषं गृहमासाद्य मया प्राप्तं यदानघ ॥ १०४ ॥**

**आर्येण सम्यगाज्ञातं[१] त्वया वैयादुपुङ्गव ।**

**त्वया नाथेन गोविन्द दुःखं तीर्णं महत्तरम् ॥ १०५ ॥**

**मया प्राप्तम्** इत्यत्र मया प्राप्तं युद्धहागमनादिकं तत् तव **आज्ञातं** सर्वज्ञत्वात् सम्यक् ज्ञातम् । अत एव अज्ञानादिदोषराहित्यसूचनाय अनघेति सम्बुद्धिः । **आर्येण** मम ज्येष्ठेन वसुदेवेन कुन्तिभोजेन वा आज्ञातं च न । चशब्देन वैपरीत्येनैव ज्ञातमिति योजना । हे गोविन्द त्वत्सनाथानां विशेषतः दरिद्राणामस्माकं त्वया नाथेन सुखं प्राप्तमिति किं पुनः किं वक्तव्यम् ।

**प्रसादमिति[२] चामन्त्र्य अभिवाद्य पितृष्वसाम् ।**

**गमनाय मतिं चक्रे वासुदेवः सहानुगः ॥ १०८ ॥**

**प्रसादमिति च** इत्यत्र चशब्देन कुर्विति योग्यक्रियाभियोगं समुच्चिनोति । साक्षादनुक्तिः स्वस्य परप्रसादनिरपेक्षत्वात्, प्रसादं करोमीति ... भिसन्धेर्घटनाय चेति ज्ञेयम् ।

॥ इति षट्षष्ट्यधिकशततमोऽध्यायः ॥

---

१ 'सम्भिज्ञातं' इति कुं.पाठः ।

२ '...ष्यामीति' इति कुं.पाठः ।

## ।। अथ सप्तषष्ट्यधिकशततमोऽध्यायः ।।

**नभस्स्थलेन दिव्येन दुर्लभेनातपस्विनाम् ।**
**भूतार्चितो भूतधरां राष्ट्रमन्दिरभूषिताम्** ।। ११ ।।

**भूतधरां** भूतधात्रीं भूमिम् ।

**परेण तपसा युक्तो ब्राह्मेण तपसा व्रतः[१] ।**
**नये नीतौ च निरतो विश्रुतश्च महामुनिः** ।। १३ ।।

**ब्राह्मेण तपसा व्रत** इत्यत्र **ब्राह्मेण** ब्रह्मसम्बन्धिना तपसा 'तप आलोचने' इति धातोः **तपसा** आलोचनेन ।

**परात्परतरं प्राप्तो धर्मान् समभिजग्मिवान् ।**
**[२]अयोनिजश्च गदितः शान्तामृदुर्ऋजुर्द्विजः** ।। १४ ।।

**अयोनिजश्च गदित** इत्यत्र ब्रह्मणोऽङ्कजातत्वात् अयोनिज इति श्रुतिभिर्गदितः । **परात्** उत्तमाद्ब्रह्मादिजीवसमूहात् **परतरं** अतिशयेनोत्तमं नारायणं **प्राप्तः** प्रकर्षेण जानन्नित्यर्थः ।

**धर्मेणाधिगतः सर्वैर्देवदानवमानुषैः** ।। १५ ।।

**धर्मेणाधिगतः सर्वैः** इत्यत्र इत्थम्भूतलक्षणे तृतीया । धर्मेण [३]संहितं सत् देवदानवमानवैः **अधिगतः** प्राप्तः ।।

**क्षीणकर्मसु पापेषु भक्ष्येषु विविधेषु च** ।। १५ ।।

---

१. **'वृतः'** इति कुं पाठः । ; २. **'भावितात्मा गतरजाः'** इति कुं.पाठः ।
३. **सहितः सन्** सो.मु.पा.।

**भक्ष्येषु विविधेषु च** इत्यत्र पापेषु कर्मसु क्षीणः, विविधेषु पापेषु भक्ष्येषु च क्षीण इति योजना।

**ऋक्सामयजुषां वेत्ता न्यायदृग्धर्मकोविदः।**
**ऋजुरारोहवान् शल्कः[1] भूयिष्ठपथिकोऽनघः ॥ १७ ॥**

**ऋजुरारोहवान्** इत्यत्र **ऋजुः** ऋजुगण इव **आरोहवान्** मोक्षमार्गारोहणवान्। 'शल्को मधुरभाषण' इत्यभिधानात् **शल्को** मधुरवचनः। **भूयिष्ठपथिकः** बहुतरशास्त्रमार्गपान्थः।

**महेन्द्रदत्ते महती बिभ्रत्परमवाससी।**
**जाम्बूनदमये दिव्ये गण्डूपदमुखे नवे ॥ १९ ॥**

**गण्डूपदमुखे** इत्यत्र [2]'गण्डूपदः किञ्चुलको निहाका गोधिका समे' इत्यभिधानात् **गण्डूपदवत्** मकराकारगोधिकावत् मुखं ययोस्ते कुण्डले बिभ्रदिति योजना।

**अग्न्यर्कसदृशो दिव्ये धारयन्कुण्डले शुभे।**
**चित्रं राजतमुच्छ्रित्य चित्रं परमवर्चसम्[1] ॥ २० ॥**
**भवनं भूमिपालस्य बृहस्पतिरिवाप्लुतः ॥ २१ ॥**

**चित्रं राजतमुच्छ्रित्य** इत्यत्र **चित्रं** विचित्रं **परमवर्चसं** स्वाङ्गकान्तिं राजतं राजतमयं **छत्रं** छत्रमिव **उच्छ्रित्य** उच्छ्रितं कृत्वा अन्येन दुष्प्रापं भवनांगं च प्राप्य भूमिपालस्य भवने बृहस्पतिरिव **आप्लुतः** अवप्लुतः प्राप इत्यर्थः।

---

१ 'श्लक्ष्णो' इति कुं पाठः। ; २. अ.को. १-१०-२२

१ 'राजतच्छत्रमुच्छ्रित्य चित्रं परमवर्चसम्' इति कुं.पाठः।

**संहितायां च सर्वेषां स्थितस्योपस्थितस्य च ।**
**द्विपदस्य च सर्वस्य[१] क्रमधर्मस्य पारगः ॥ २२ ॥**

**संहितायां च सर्वेषाम्** इत्यत्र **सर्वेषां** वेदानां संहितायां स्थितस्य **द्विपदस्य** 'अग्निमीळे, यज्ञस्य देवं' इत्यादिरूपेण असमस्तपदद्वयाश्रितस्य **सर्वस्य क्रमधर्मस्य,** उपस्थितस्य समस्तपदात्मकत्वात् सदा अन्योन्यपदसमीप एव स्थितस्य 'पुरोहितं, रत्नधातमं' इत्याद्याकारकद्विखण्डसञ्ज्ञकस्य सर्वस्य क्रमधर्मस्य च पारगः ।

**[२]गाथाः समनुसञ्जज्ञे साम्नां परमवल्गुना ।**
**आत्मना सर्वमोक्षिभ्यः कृतिमान्कृत्यवित्सदा ॥ २३ ॥**

**साम्नां परमवल्गुना** इत्यत्र परमवल्गुना **आत्मना** स्वस्वभावेन[३] **सर्वमोक्षिभ्यः** सर्वमोक्षयोग्यजीवेभ्यः तदुद्धारायेति यावत् । **कृतिमान** प्रयत्नवान् **कृत्यवित्** कार्यवित् साम्नां गाथाः समनुसञ्जज्ञे **सं** सम्यक् **अनु** तत्तल्लक्षणमनुसृत्य **सञ्जज्ञे** अन्तर्णीतो णिच्, सम्यक् जनयामास श्रावयामासेत्यर्थः ।

**यजुर्धर्मैर्बहुविधैः मतो मतिमतां वरः ।**
**विदितार्थः समश्चैव च्छेत्ता निगमसंशयान् ॥ २४ ॥**

**च्छेत्ता निगमसंशयान्** इत्यनेन कर्ममीमांसायां देवमीमांसायां ब्रह्ममीमांसायां निपुण इतिं सूचितम् । मीमांसानैपुण्यं विना संशयच्छेदायोगात् ।

---

१. $D_4$,$G_{5.6}$,$M_{6-8}$; BORI पृ. ९५७; **'धर्मस्य'** इति कुं.पाठः ।
२. **'गाथा सामानुसामज्ञः'** इति कुं.पाठः ।
३. **स्वरसभावेन** सो.मु.पा.।

**अर्थनिर्वचने नित्यं संशयच्छिदसंशयः ॥ २५ ॥**

**अर्थनिर्वचने नित्यं संशयच्छिदसंशय** इत्यत्र **अर्थानां** पृथिव्यादीनां **निर्वचने** 'गन्धवती पृथिवी, सांसिद्धिकद्रवत्ववत्य आपः, शुक्लभास्वरं तेज' इत्यादिनिर्वचने नित्यं **असंशयः** संशयरहितः परेषां संशयच्छिच्चेत्यर्थः । अनेन ब्रह्मतर्कोक्तलक्षणशास्त्रे च निपुण इति सूचितम् ।

**प्रकृत्या धर्मकुशलो नाना[१] धर्मविशारदः ॥ २५ ॥**

**प्रकृत्या धर्मकुशल** इत्यत्र **प्रकृत्याः** जडप्रकृतेः **धर्माः** विकाराः चतुर्विंशतितत्त्वानि तेषु कुशलः । अनेन पुराणप्रक्रियायां च निपुण इति सूचितम् । नानाधर्मविशारदः **नानाधर्माः** चतुराश्रमधर्माः चतुर्वर्णधर्माश्च तेषु कुशलः **विशारदः** । अनेन तत्तदाचारकाण्डेष्वपि निपुण इति सूचितम् ।

**लोपेनागमधर्मेण संयमेन[२] च वृत्तिषु ।**
**एकशब्दांश्च नानार्थानेकार्थांश्च पृथक् श्रुतान् ॥ २६ ॥**

**पृथगर्थाभिधानांश्च प्रयोगानन्ववेक्षिता ।**
**प्रमाणभूतो लोकेषु सर्वाधिकरणेषु च ॥ २७ ॥**

**लोपेनागमधर्मेण संयमेन च वृत्तिषु** इत्यत्र **वृत्तिषु** सुप्तङादिभेदेन [illegible] शब्दानार्थेष्विति **वृत्तयो** व्याकरणशास्त्राणि । **लोपेन** [illegible] लकारोकारटकारादीनां इत्सञ्ज्ञया लोपेन पुनः 'युवोर-

---

१ BORI पृ. ९८७; **'दाता'** इति कुं पाठः ।

२ '[illegible]' इति कुं पाठः ।

नाकौ' इति उर्वरित यकारादेः अनाद्यादेशाख्यलोपेन, **आगमधर्मेण** तुगादीनामागमधर्मेण, **संयमेन** 'क्ङिति च' इत्यादिना गुणवृद्ध्यादीनां निषेधेन च प्रयोगान् 'प्रमाणं, देवच्छत्रं, कृतं' इत्यादिशब्दप्रयोगान् **अन्ववेक्षिता** द्रष्टा । **एकशब्दान्** एकाकारगोहर्यादिशब्दान् **नानार्थान्** स्वर्गार्कादिबह्वर्थवाचकान्, **एकार्थान्** घटद्येकार्थवाचकान् पृथक् श्रुतान् घटः करीरः कलश इत्याद्याकारेण **पृथक्** पृथगेव **श्रुतान्** पर्यायशब्दान्, पृथगर्थाभिधानान् पृथक् पृथक् घटपटाद्यर्थानामभिधानं येषु तान् घटपटादिभिन्नभिन्नशब्दांश्च **अन्ववेक्षिता** द्रष्टा । **प्रमाणभूतो लोकेषु** इत्यत्र **प्रमाणानि** प्रत्यक्षानुमानागमाख्यप्रमाणानि **भूतानि** लक्षणनिरूपणादिना आविर्भूतानि यस्मात् स तथोक्तः । **सर्वाधिकरणेषु** ब्रह्ममीमांसादौ स्थितेष्वानन्दमयाद्यधिकरणेषु, **सर्ववर्णविकारेषु** सर्वेषां वर्णानां विकारेषु 'अचः स्वराः, कादयो मावसानाः स्पर्शाः, यरलवा अन्तस्स्थाः', असाङ्कर्येण सकलाधिकरणानां विभजने वर्णानां जाति-विभजने च समर्थ इति भावः ।

**सर्ववर्णविकारेषु नित्यं कुशलपूजितः ।**
**स्वरेऽस्वरे च विविधे वृत्तेषु त्रिविधेषु[1] च** ॥ २८ ॥
**समस्थानेषु सर्वेषु समाम्नातेषु धातुषु ।**
**उद्देशानां समाख्याता सर्वमाख्यातमुद्दिशन्** ॥ २९ ॥
**अभिसन्धिषु तत्वज्ञः पदान्यङ्गान्यनुस्मरन् ।**
**कालधर्मेण निर्दिष्टं यथार्थं चाविचारयन्** ॥ ३० ॥

**स्वरे स्वरे च विविध** इत्यत्र **विविधे** उदात्तानुदात्तस्वरितप्रचयादि

१. **'त्रिविधेषु'** इति कुं पाठः ।

भेदेन नानाप्रकारे वेदाक्षरस्थस्वरे **स्वरे, त्रिविधेषु वृत्तेषु** समविषमार्धसमभेदेन त्रिविधेषु वृत्तेषु शार्दूलविक्रीडितादिवृत्तेषु , **समस्थानेषु** 'अकुहविसर्जनीयानां कण्ठः, इचुयशानां तालु, ऋटुरषाणां मूर्धा, विवृत्तमूष्मणां स्वराणां च' इत्यादिना समस्थानप्रयत्नेषु वर्णेषु, **समाम्नातेषु** सम्यक् पाणिन्यादिना 'भू सत्तायाम्' इत्यादिना अर्थवत्तया प्रदर्शितेषु धातुषु **सर्वमाख्यातं** तिङाद्यादेशसमूहं **उद्दिशन्** स्वयमुच्चारयन् **उद्देशानां** उच्चारणप्रकारणां **समाख्याता** सम्यक् परेषां व्याख्याता च । **अभिसन्धिषु** पदानामभितः **सन्धिषु** दध्यत्र शम्यत्रेत्यादिसन्धिषु तत्वं जानातीति स तथोक्तः । **पदानि** सुप्तिङन्तपदानि, **अङ्गानि** 'यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' इत्यनेन विहितान्यङ्गसञ्ज्ञकप्रातिपदिकादिशब्दस्वरूपाणि अनुस्मरन् । **कालधर्मेण** भूतभवद्भविष्यदाख्यकालधर्मेण **निर्दिष्टं** 'भूते लिट् वर्तमाने लट् भवि लृट्' इति निर्दिष्टं **यथार्थं** अर्थमनतिक्रम्य वर्तमानं अभूत् भवति भविष्यतीत्यादिपदसमूहं **अविचारयन्** इदमदो वेति **विचारो** विकल्पाचारः संशयः तमकुर्वन् । इदमित्थमेवेति निश्चित्य जानन्निति यावत् ।

**चिकीर्षितं च यो वेत्ता चर्करीतेन संयुतम्[१] ।**
**विभाषितं च समयं भाषितं हृदयङ्गमम् ॥ ३१ ॥**
**आत्मने च परस्मै च स्वरसंस्कारयोगवित् ।**
**एषां स्वराणां ज्ञाता च बोद्धा प्रवचनः स्वराट् ॥ ३२ ॥**
**विज्ञाता चोक्तवाक्यानामेकतां बहुतां तथा ॥ ३३ ॥**

---

१ 'यथा लोकेन संवृतम्' इति कुं.पाठः ।

**चिकीर्षितं च यो वेत्ता** इत्यत्र **चिकीर्षितं** प्रत्यययोगेन कर्तुमभीप्सितं शब्दप्रवृत्तिस्वरूपं वेत्ता । **चर्करीतेन** यङ्लुगन्तप्रयोगेन **संयुतं** सम्बद्धं बोभवीति नानदीति अचीकरत् अनददित्यादिशब्दरूपं, यङ्लुगन्तपदस्य चर्करीतमिति पूर्वाचार्याणां सञ्ज्ञा । **युतं** मिश्रितं अद्यतनकालसम्बद्धमिति यावत् । **समयं** पूर्वदिनरूपकालं उत्तरदिनरूपकालं वा अपेक्ष्य अकार्षीत् अकरोदित्यादिरूपेण वा कर्तेत्यादिरूपेण वा भाषितं हृदयरूपं वेति । **आत्मने** आत्मनेपदे **परस्मै** परस्मैपदे च **स्वरसंस्कारयोगवित्, स्वरसंस्कारस्य** अनुदात्तस्वरितादिस्वरसंस्कारस्य **योगवित्** अनुदात्तङितः स्वरितञितश्च योगे आत्मनेपदं, शेषं[1] कर्तरि परस्मैपदामित्येवमादिना तदतिरिक्तस्वरयोगे परस्मैपदमिति प्रयोगवैचित्र्यं जानन्नित्यर्थः । **एषां स्वराणाम्** अकारादिस्वराणां अकारोकारयोगे ओकार इत्यादि सन्ध्यक्षरप्रकारं स्वयं ज्ञाता । इमानेव स्वरान् शिष्यान् प्रति **बोद्धा** बोधयिता च । **प्रचवनः** प्रकृष्टं वचनं यस्य स तथोक्तः, **ज्ञात्वा** वाक्प्रयोगं कुर्वन्नित्यर्थः । उक्तवाक्यानां श्रुतौ तत्र तत्रोक्तशब्दानाम् **एकताम्** एकवचनान्ततां **बहुतां** बहुवचनान्ततां, तथाशब्देन द्विवचनान्ततां च विज्ञाता ।

**बोद्धा हि विविधानर्थान्[2] विविधांश्च व्यतिक्रमात् ॥ ३३ ॥**
**अभेदतश्च विधिना बहुशश्चापि भेदतः ।**
**वक्ता विविधवाक्यानां नानादेशसमीक्षिता ॥ ३४ ॥**

**बोद्धा हि विविधानर्थान्** इत्यत्र **विविधान्** मुख्यलाक्षणिकोपचारभेदेन नानार्थान्, **विविधान्** व्यतिक्रमान् 'सुप्तिङुपग्रहलिङ्गनराणां

---

१. **शेषात्** सो.मु.पा. ; २. **'परमार्थांश्च'** इति कुं. पाठः ।

कालहलस्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन' इत्युक्तव्यत्ययान् बोद्धा । **बहुशः** 'अस्तेर्भूः' इत्यादिबहुस्थलेषु **विधिना** वैयाकरणविधिना आदेशानां **अभेदतः** अभेदं एकत्वं एकस्मिन् स्थानिनि आदेशानामप्येकत्वं समीक्षिता । **बहुशः** 'लटः शतृशानचौ' इत्यादिबहुस्थलेषु आदेशानां **भेदतः** भेदं एकस्मिन् स्थानिनि बहुत्वं च समीक्षितेत्यर्थः । **विधिना** वैयाकरण-विधिनैव **वञ्चनानां** गूढक्रियया वञ्चयन्ति जनाति(नि?)ति वञ्चनपदेन 'दैवैरपि दुराधर्षां पुरीं रावणपालिताम् । लक्ष्मणेन सह भ्रात्रा कथं त्वं रघुनन्दनैः' इत्यादिगूढक्रियाः श्लोकाः कथ्यन्ते । अत्र हि हे रघुनन्दन देव कथमैरिति क्रिया निगूढा । एतादृशवञ्चनानां वञ्चकश्लोकानामपि **समीक्षिता** सम्यगीक्षिता ।

**पञ्चागमांश्च विविधानादेशांश्च समीक्षिता ।**
**नानार्थकुशलस्तत्र तद्धितेषु च कृत्सु[1] च** ॥ ३५ ॥

**परिभूषयिता वाचां वर्णतः स्वरतोऽर्थतः ।**
**प्रत्ययानां समाख्याता नियतं प्रतिधातुकम्** ॥ ३६ ॥

**नानार्थकुशलस्तत्र तद्धितेषु च कृत्सु च** इत्यत्र **तत्र** वैयाकरणशास्त्रे **तद्धितेषु** 'तद्धिताः' इत्यधिकृत्य विहितेषु प्रत्ययेषु, **कृत्सु** कृत्सञ्ज्ञक-प्रत्ययेषु च **नानार्थकुशलः** नानार्थकथनकौशल्यवान् । वर्णतः स्वरतः अर्थतः वाचां **परिभूषयिता** अलङ्कर्ता । नियतं **प्रतिधातुकं** धातून् धातून् प्रति **प्रत्ययानां** तव्यादिप्रत्ययानां **समाख्याता** सम्यग्योगं कृत्वा, अनेन करणीयं कार्यमित्यादिरूपेण व्यवहर्ता ।

---

१ 'कृत्स्नशः' इति कुं पाठः ।

**पञ्च चाक्षरजातानि स्वरसञ्ज्ञानि यानि च ।**
**नारदस्त्वथ देवर्षिराजगाम यदृच्छया ।**
**तमागतमृषिं दृष्ट्वा प्रत्युद्गम्याभिवाद्य च ॥ ३७ ॥**

**पञ्च चाक्षरजातीनि स्वरसञ्ज्ञानि यानि च** इत्यत्र **अक्षर जातीनि** केवलहलन्ताक्षराणां जातयो येषु तानि **पञ्च** कु चु टु तु पु इति पञ्चनामानि, **स्वरसञ्ज्ञानि** स्वरैः सम्यक् ज्ञायन्त इति स्वरसञ्ज्ञानि क ख ग घ ङ इत्यादिरूपाणि च सम्यगाख्यता देवर्षिर्नारदः यदृच्छया आजगामेति योजना । पदवाक्यप्रमाणाख्यसकलशास्त्रेष्वपि निपुण इति भावः ।

॥ इति सप्तषष्ट्यधिकशततमोऽध्यायः ॥

## ॥ अथ अष्टषष्ट्यधिकशततमोध्यायः ॥

**ततो देवा भवन् भीता उग्रं दृष्ट्वा तयोस्तपः ।**
**तपोविघातार्थमथो देवा विघ्नानि चक्रिरे ॥ ११ ॥**

देवा **भवन्** अभवन् ।

**ब्रह्मोवाच –**

**ऋतेऽमरत्वं युवयोः सर्वमुक्तं भविष्यति ।**
**अन्यद्[१]वृणीतां मृत्योश्च विधानममरैः समम् ॥ २१ ॥**

**अन्यद्वृणीताम्** इत्यत्र भवन्तौ अमरत्वादन्यत् अमरैः सह मृत्योर्विधानं **वृणीतां** वृणुताम् । यद्यस्मात्कारणात् महत्तपः अभ्युदितं युवाभ्यां कृतं तस्मात्कारणादिदं अमरत्वादन्यद्भवतामभीष्टं इति भवदुक्तप्रकारेण करिष्यामीति योजना ।

१. BORI पृ. ७९७; '-वृणीतं' इति कुं पाठः ।

सुन्दोपसुन्दावूचतुः –

त्रिषु लोकेषु यद्भूतं किञ्चित्स्थावरजङ्गमम् ।
सर्वस्मान्नौ भयं न स्यादृतेऽन्योन्तं पितामह ॥ २४ ॥

**सर्वस्मान्नौ भयं न स्यात्** इत्यत्र **नौ** आवयोरित्यर्थः ।

पितामह उवाच –

यत्प्रार्थितं यथोक्तं च काममेतद्ददानि वाम् ।
मृत्योर्विधानमेतच्च च यथावद्वा भविष्यति ॥ २५ ॥

**मृत्योर्विधानामेतच्च** अमरैः सह मृत्युविधानं **यथावत्** उक्तप्रकारेण **वां** युवयोः भविष्यतीति योजना ।

ततस्तौ तु जटा भित्त्वा मौलिनौ सम्बभूवतुः ।
महार्हाभरणोपेतौ विरजोम्बरधारिणौ ॥ २९ ॥

**मौलिनौ** ‘व्रीह्यादिभ्यश्च’ इति वचनात् मौलिमन्तावित्यर्थः ।

अकालकौमुदीं चैव चक्रतुः [1]सर्वकामिनीः ।
नित्यः प्रमुदितः सर्वस्तयोश्चैव सुहृज्जनः ॥ ३० ॥

**अकालकौमुदीं** स्वमुखकान्त्याऽकालचन्द्रिकाम् । **सुहृज्जने** [illegible], ‘सुहृत्क्षय’ इति पाठे **सुहृत्क्षये** सुहृद्गृहे कामिनीः **कामिनीः** [illegible] [illegible]तुः । [2]‘चन्द्रिका कौमुदी ज्योत्स्ना’ इत्यमरः ।

॥ इति अष्टषष्ट्यधिकशततमोऽध्यायः ॥

---

१ [illegible]M; BORI पृ. ९९७; **‘सार्वकालिकीम्’** इति कुं पाठः ।
२ अ. को. १-३-१६

**पञ्च चाक्षरजातानि स्वरसञ्ज्ञानि यानि च ।**
**नारदस्त्वथ देवर्षिराजगाम यदृच्छया ।**
**तमागतमृषिं दृष्ट्वा प्रत्युद्गम्याभिवाद्य च** ॥ ३७ ॥

**पञ्च चाक्षरजातीनि स्वरसञ्ज्ञानि यानि च** इत्यत्र **अक्षर जातीनि** केवलहलन्ताक्षराणां जातयो येषु तानि **पञ्च** कु चु टु तु पु इति पञ्चनामानि, **स्वरसञ्ज्ञानि** स्वरैः सम्यक् ज्ञायन्त इति स्वरसञ्ज्ञानि क ख ग घ ङ इत्यादिरूपाणि च सम्यगाख्यता देवर्षिर्नारदः यदृच्छया आजगामेति योजना । पदवाक्यप्रमाणाख्यसकलशास्त्रेष्वपि निपुण इति भावः ।

॥ इति सप्तषष्ट्यधिकशततमोऽध्यायः ॥

## ॥ अथ अष्टषष्ट्यधिकशततमोध्यायः ॥

**ततो देवा भवन् भीता उग्रं दृष्ट्वा तयोस्तपः ।**
**तपोविघातार्थमथो देवा विघ्नानि चक्रिरे** ॥ ११ ॥

देवा **भवन्** अभवन् ।

**ब्रह्मोवाच –**

**ऋतेऽमरत्वं युवयोः सर्वमुक्तं भविष्यति ।**
**अन्यद्वृणीतां[१] मृत्योश्च विधानममरैः समम्** ॥ २१ ॥

**अन्यद्वृणीताम्** इत्यत्र भवन्तौ अमरत्वादन्यत् अमरैः सह मृत्योर्विधानं **वृणीतां** वृणुताम् । यद्यस्मात्कारणात् महत्तपः अभ्युदितं युवाभ्यां कृतं तस्मात्कारणादिदं अमरत्वादन्यद्भवतामभीष्टं इति भवदुक्तप्रकारेण करिष्यामीति योजना ।

१. BORI पृ. ७९७; '-वृणीतं' इति कुं पाठः ।

सुन्दोपसुन्दावूचतुः –

त्रिषु लोकेषु यद्भूतं किञ्चित्स्थावरजङ्गमम् ।
सर्वस्मान्नौ भयं न स्यादृतेऽन्योन्तं पितामह ॥ २४ ॥

सर्वस्मान्नौ भयं न स्यात् इत्यत्र नौ आवयोरित्यर्थः ।

पितामह उवाच –

यत्प्रार्थितं यथोक्तं च काममेतद्ददानि वाम् ।
मृत्योर्विधानमेतच्च च यथावद्वा भविष्यति ॥ २५ ॥

मृत्योर्विधानामेतच्च अमरैः सह मृत्युविधानं यथावत् उक्तप्रकारेण वां युवयोः भविष्यतीति योजना ।

ततस्तौ तु जटा भित्त्वा मौलिनौ सम्बभूवतुः ।
महार्हाभरणोपेतौ विरजोम्बरधारिणौ ॥ २९ ॥

मौलिनौ 'व्रीह्यादिभ्यश्च' इति वचनात् मौलिमन्तावित्यर्थः ।

अकालकौमुदीं चैव चक्रतुः [१]सर्वकामिनीः ।
नित्यः प्रमुदितः सर्वस्तयोश्चैव सुहृज्जनः ॥ ३० ॥

अकालकौमुदीं स्वमुखकान्त्याऽकालचन्द्रिकाम् । सुहृज्जने [illegible]जने, 'सुहृत्क्षय' इति पाठे सुहृत्क्षये सुहृद्गृहे कामिनीः कामिनीः प्रीताः चक्रतुः । [२]'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमरः ।

॥ इति अष्टषष्ट्यधिकशततमोऽध्यायः ॥

---

१ K,,M; BORI पृ. ९९७; 'सार्वकालिकीम्' इति कुं पाठः ।

२ अ.को. १-३-१६

## ।। अथ एकोनसप्तत्यधिकशततमोऽध्यायः ।।

**मथितैराश्रमैर्भग्नैः विकीर्णकलशस्रुवैः ।**
**शून्यमासीज्जगत्सर्वं कालेनैव हतं तदा ।। १८ ।।**

**कालेनैव** इत्यत्र **कालेन** मृत्युना ।

[१]**राजर्षिभिरदृश्यद्भिः ऋषिभिश्च महासुरौ ।**
**उभौ विनिश्चयं कृत्वा विकुर्वाते वधैषिणौ ।। १९ ।।**

**राजर्षिभिरदृश्यद्भिः** इत्यत्र **अदृश्यद्भिः** अदृश्यमानैः शून्यमासीदिति पूर्वेणान्वयः ।

**निवृत्तकृषिगोरक्षा विध्वस्तनगराश्रमा ।**
**अस्थिकङ्कालसङ्कीर्णा भूर्बभूवोग्रदर्शना ।। २४ ।।**

**अस्थिकङ्कालसङ्कीर्णा** इत्यत्र **अस्था** शिरःपृष्ठाद्यस्था **कङ्कालेन** शरीरास्था चेत्यर्थः । [२]'शरीरास्थि तु कङ्कालः' इत्यमरः ।

**।। इत्येकोनसप्तत्यधिकशततमोऽध्यायः ।।**

## ।। अथ सप्तत्यधिकशततमोऽध्यायः ।।

**तत्र [३]जिष्णुर्महादेवस्तत्राग्निर्वायुना सह ।**
**चन्द्रादित्यौ च शक्रश्च [४]परमेष्ठी तथा बुधः ।। ४ ।।**

---

१. BORI पृ. ४००; **'ततो राजन्नदृश्यद्भिर्ऋषिभिश्च'** इति कुं पाठः ।
२. **अ.को. २-६-६९** । प्र.पाठः **'शरीरस्थ्नि कङ्कालः'** इति ।
३. **'देवो महा-'** इति कुं.पाठः ।
४. BORI पृ. ८०१; **'पारमेष्ठ्यास्तथर्षयः'** इति कुं पाठः ।

**तत्र जिष्णुर्महादेव** इत्यत्र **जिष्णुः** इन्द्रः । [१]'जिष्णुर्लेखर्षभः शक्र' इत्यमरः । **परमेष्ठी तथा बुध** इत्यत्र **परमेष्ठी** भाविब्रह्मा मुख्यवायुः ।

**सुन्दोपसुन्दयोः कर्म सर्वमेव शशंसिरे ।**
**[२]यथाकृतं यथाचेष्टं कृतं येन क्रमेण च ॥ ७ ॥**
**यदा न प्रतिपेद्धारस्तयोः सन्तीह केचन ।**
**निरुद्विग्नौ तदा भूत्वा विजह्रातेऽमराविव ॥ ३ ॥**

**यथाकृतं यथाचेष्टम्** इत्यत्र **यथाकृतं** कृतमनतिक्रम्य, **यथाचेष्टं** ऋष्यादिषु कृतचेष्टामनतिक्रम्य **सर्वं** सर्वशः शशंसिर इति पूर्वेणान्वयः । तयोः कृतं कर्म **येन क्रमेण** येन केनापि क्रमेण यदा प्रतिषेद्धारो न, तदा **निरुद्विग्नौ** भयरहितौ, यथा अमरौ तथा विजह्राते इति योजना ।

**दृष्ट्वा च विश्वकर्माणं व्यादिदेश पितामहः ।**
**सृज्यतां प्रार्थनीयैका प्रमदेति महातपाः ॥ ११ ॥**

**दृष्ट्वा च विश्वकर्माणम्** इत्यत्र पितामहः विश्वकर्माणं दृष्ट्वा उप-विशति व्यादिदेश । अथ प्रार्थनीयेन रूपेण स्त्री सृज्यतामित्यब्रवीत् ।

**त्रिषु लोकेषु यत्किञ्चिद्भूतं स्थावरजङ्गमम् ।**
**समानयद्दर्शनीयं तत्तदत्र स विश्ववित् ॥ १३ ॥**

**त्रिषु लोकेषु यत्किञ्चित्** इत्यत्र त्रिषु लोकेषु यत्किञ्चित् दर्शनीयं स्थावरजङ्गमं **भूतम्** उत्पन्नम् अस्ति, तत्तन्निष्ठं लावण्यं ततस्ततः यत्नात् समानयत् ।

---

१. अ.को. १-१-४२
२. G₁,M; BORI पृ. ८०१; **'यथाहृतं यथाचैव'** इति कुं पाठः ।

**न तस्याः सूक्ष्ममप्यस्ति यद्गात्रे रूपसम्पदा।**
**नियुक्ता यत्र वा दृष्टिर्न सज्जति निरीक्षताम् ॥ १६ ॥**

**न तस्याः सूक्ष्ममप्यस्ति** इत्यत्र तस्याः गात्रे सूक्ष्ममपि अङ्गं **यत्** यस्मात् रूपसम्पदा रहितं नास्ति। 'निन्दितम्' इति पाठे निन्दितं नास्ति, तस्मात् कारणात् सर्वगात्रेष्वपि यत्र दृष्टिर्न सज्जते, तादृशं गात्रं नास्तीति योग्यपदाध्याहारेण योजना।

**प्रीतो भूत्वा स दृष्ट्वैव प्रीत्या चास्यै वरं ददौ।**
**कान्तित्वं[1] सर्वभूतानां स्वश्रिया[2]नुत्तमं वपुः ॥ १८ ॥**

**प्रीतो भूत्वा** इत्यत्र तां दृष्ट्वा प्रीतो भूत्वा तस्यै सर्वभूतानां सकाशादनुत्तमं वपुः, **स्वश्रिया** स्वसन्निधानागतश्रिया, 'व्रीह्यादिभ्यश्च' इति सूत्रात् **कान्तित्वं** कान्तिमत्त्वं च वरं ददौ।

**द्रष्टुकामस्य चात्यर्थं गतायां पार्श्वतस्तया।**
**अन्यदञ्चितपद्माक्षं दक्षिणं निस्सृतं मुखम् ॥ २७ ॥**

**द्रष्टुकामस्य चात्यर्थम्** इत्यत्र **पार्श्वतः** दक्षिणपार्श्वतः तस्यां तिलोत्तमायां गतायां सत्याम् **अत्यर्थं** सम्यक् तां द्रष्टुकामस्य स्थाणोः अञ्चितपद्माक्षं अन्यद्दक्षिणमुखं निस्सृतम्। एवमुत्तरत्रापि योजना।

**तस्या गात्रे निपतिता दृष्टिस्तेषां महात्मनाम्।**
**सर्वेषामेव भूयिष्ठमृते देवं पितामहम् ॥ ३२ ॥**

**सर्वेषामेव भूयिष्ठं** इत्यत्र **भूयिष्ठम्** अत्यन्तम्।

॥ इति सप्तत्यधिकशततमोऽध्यायः ॥

---

१. **'कान्तत्वं'** इति कुं.पाठः। ; २. **'साश्रियानुत्तमं'** इति कुं.पाठः।

## ।। अथ एकसप्तत्यधिकशततमोऽध्यायः ।।

**ततः कदाचिद्विन्ध्यस्य पृष्टोत्तमशिलातले ।**
**पुष्पिताग्रेषु सालेषु विहारमाभिजग्मतुः ।। ६ ।।**

**पृष्टोत्तमशिलातले** इत्यत्र **पृष्टम्** उपरिभागः **उत्तमं** मसृणतया मनोरमं यस्य तस्मिन् शिलातले इत्यर्थः ।

**[1]सर्वैरेतैर्मदैर्मत्तौ अन्योन्यभ्रुकुटीकृतौ ।**
**मदकामसमाविष्टौ परस्परमथोचतुः ।। १५ ।।**

**अन्योन्यभ्रुकुटीकृतौ** इत्यत्र अन्योन्यभ्रुकुटी कुरुत इति तौ तथोक्तौ ।

**मम भार्या तव गुरुरिति सुन्दोऽभ्यभाषत ।**
**मम भार्या तव वधूरुपसुन्दोऽभ्यभाषत ।। १६ ।।**

**मम भार्या तव गुरुः** इत्यत्र ज्येष्ठस्य मम पत्नीत्वात् **तव गुरुः** मातृ-स्थानीयेत्यर्थः । **मम** अनुजस्य मम भार्या **तव वधूः** स्नुषास्थानीया । [2]'वधूर्जाया स्नुषा स्त्री तु' इत्यमरः । पितृसमो ज्येष्ठ इति हि प्राचां न्यायः ।

**।। इत्येकसप्तत्यधिकशततमोऽध्यायः ।।**

**।। इति सुन्दोपसुन्दोपाख्यानं समाप्तम् ।।**

**।। राज्यलाभपर्व समाप्तम् ।।**

---

१ BORI पृ. ८०५; **'सर्वैरेतैर्मदैर्मत्तावन्योन्यं'** इति कुं पाठः ।
२ अ.को. ३-३-१०२

# अर्जुनवनवासपर्व

## ।। अथ द्विसप्तत्यधिकशततमोऽध्यायः ।।

**वर्तमानेषु धर्मेण पाण्डवेषु महात्मसु ।**
**नामर्षन्[1] कुरवः सर्वे हीनदोषाः सुखान्विताः ।। ४ ।।**

**नामर्षन् कुरवः सर्वे हीनदोषान् सुखान्वितान्** इत्यत्र 'नामर्षन्' इति पाठे स्पष्टोऽर्थः । 'व्यवर्धन्' इति पाठे विरुद्धतया अवर्धन् विरोधमेव वर्धयाञ्चक्रुरित्यर्थः ।

**ह्रियते गोधनं क्षुद्रैर्नृशंसैरकृतात्मभिः ।**
**प्रसह्य वोऽस्मद्विषयादभ्यधावत[2] पाण्डवाः ।। ७ ।।**

**वोऽस्मद्विषयात्** इत्यत्र वः राज्ये विद्यमानात् अस्माद्ग्रामादित्यर्थः।

**ब्राह्मणस्वे हृते चोरैर्धर्मार्थे च विलोपिते ।**
**रोरूयमाणे च मयि क्रियतां हस्तधारणा ।। १० ।।**

**ब्राह्मणस्वे हृत** इत्यत्र **ब्राह्मणस्वे** ब्राह्मणद्रव्ये ।

**उपप्रेक्षणजोऽधर्मः सुमहान्स्यान्महीपतेः ।। १६ ।।**

**उपप्रेक्षणजोऽधर्म** इत्यत्र **उपप्रेक्षणजः** उपेक्षणाज्जातः अधर्मः ।

**यद्यस्य कुरवो द्वारि न करोम्यस्य[3] कर्षणम् ।। १६ ।।**

---

१. 'व्यवर्धन्' इति कुं पाठः ।
२. BORI पृ. ८०७; 'चास्माद्विषयात्' इति कुं.पाठः ।
३. 'करोम्यद्य रक्षणम्' इति कुं पाठः ।

यद्यस्य कुरवो द्वारि इत्यत्र अस्मद्गृहद्वारि अस्य ब्राह्मणस्य कुरवः आर्तध्वनिः, रोदनध्वनिरिति यावत्; यद्यस्ति। अस्य कर्षणं नाशनं ...: न करोमि तर्हीत्युत्तरेणान्वयः।

उवाच दीनो राजा च धनञ्जयमिदं वचः।
प्रमाणमस्ति यदि ते मत्तः श्रुणु वचोऽनघ ॥ ३१ ॥

प्रमाणमस्ति यदि त इत्यत्र मत्तः प्रमाणमेव वचनं निस्सरतीति ते ...: यद्यस्ति, तर्हीत्युत्तरेणान्वयः।

[१]गुरोरनुप्रवेशेन नोपघातो यवीयसः।
यवीयसोऽनुप्रवेशो ज्येष्ठस्य विधिलोपकः ॥ ३३ ॥

गुरोरनुप्रवेशेन इत्यत्र गुरोरनुप्रवेशेन गुरो रमणगृहानुप्रवेशेन यवीयसः कनिष्ठस्य उपाघातः धर्मोपघातः न। ज्येष्ठस्य पितृसमत्वात् ...ा मातृसमत्वात् कनिष्ठस्य पुत्रसमत्वात् अनवसरे माता-पितृगृहप्रवेशः पुत्रस्य न दोष इति भावः। ज्येष्ठस्य यवीयसोऽनुप्रवेशः ...ा रमणगृहानुप्रवेशः।

॥ इति द्विसप्तत्यधिकशततमोऽध्यायः ॥

## ॥ अथ त्रिसप्तत्यधिकशततमोऽध्यायः ॥

वेद वेदाङ्गविद्वांसः तथैवाध्यात्मचिन्तकाः।
[२]दीक्षाश्च भगवद्भक्ताः सूताः पौराणिकाश्च ये ॥ २ ॥

---

१. BORI पृ. ८१३; 'गुरोरनुप्रवेशो हि' इति कुं पाठः।
२. '...श्च' इति कुं पाठः।

**वौक्षाश्च भगवद्भक्ता** इत्यत्र **वौक्षाः** 'वा गतिगन्धनयोः' इति धातोः स्त्रियां टापि कृते **वाः** सदागमनशीला नद्यः तासु **औक्षाः** आ समन्तात् **उक्ष** उक्षणं स्नानं येषां ते **वौक्षाः** तीर्थस्नानेन शुद्धान्तःकरणा इत्यर्थः ।

**कथकाश्चापरे राजन् रमणाश्च वनौकसः ।**
**दिव्याख्यानानि ये चापि पठन्ति मधुरं द्विजाः ॥ ३ ॥**

**रमणाश्च वनौकस** इत्यत्र विनोदपरिहासादिना मनो रमयन्तीति **रमणाः** ।

**तेषु प्रबोध्यमानेषु ज्वलितेषु हुतेषु च ।**
**कृतपुष्पोपहारेषु तीरान्तरगतेषु च ॥ ९ ॥**

**तेषु प्रबोध्यमानेषु** इत्यत्र **तेषु** अग्निषु **प्रबोध्यमानेषु** अरण्योर्मथनेन प्रबोध्यमानेषु निरन्तरगतेषु अजस्राग्निष्वित्यर्थः ।

**ददर्श पाण्डवस्तत्र पावकं सुसमाहितः ।**
**कौरव्यस्याथ नागस्य भवने परमार्चिते ॥ १४ ॥**

**कौरव्यस्याथ नागस्य** इत्यत्र कौरव्यस्य धृतराष्ट्रसमाननामधेयत्वात् **कौरव्यस्य** धृतराष्ट्राख्य नागस्येत्यर्थः ।

**परस्परं वर्तमानान् द्रुपदस्यात्मजां प्रति ।**
**यो नोऽनुप्रविशेन्मोहात्स वै द्वादशमासिकम् ॥ २५ ॥**

**नः** अस्माकं मध्ये यः मोहादनुप्रविशेदिति योजना ।

**कृतवांस्तत्र धर्मार्थमत्र धर्मो न दुष्यति ।**
**परित्राणं च कर्तव्यमार्तानां पृथुलोचन ॥ २७ ॥**

तत्र भूलोके, अत्र नागलोके मया सह रमणेऽपि भूलोके ब्रह्मचर्यस्य न भङ्ग इति भावः ।

॥ इति त्रिसप्तत्यधिकशततमोऽध्यायः ॥

## ॥ अथ चतुस्सप्तत्यधिकशततमोऽध्यायः ॥

**अगस्त्य वटमासाद्य वसिष्ठस्य च पर्वतम् ।**
**भृगुतङ्गे च कौन्तेयः कृतवाञ्छौचमात्मनः ॥ २ ॥**

**कृतवाञ्छौचमात्मन** इत्यत्र शुचिरग्निः तत्सम्बन्धि कर्म **शौचं** यज्ञमिति यावत् ।

**अपुत्रः प्रसवेनार्थी तपस्तेपे स उत्तमम् ।**
**उग्रेण तपसा तेन देवदेवः पिनाकधृक् ॥ २२ ॥**

**प्रसवेनार्थी** इत्यत्र **प्रसवेन** सन्तानेन **अर्थी** प्रयोजनवान् ।

**एकैकः प्रसवस्तस्मात् [१] एकप्रसवजं कुल ।**
**तेषां कुमाराः सर्वेषां पूर्वेषां मम जज्ञिरे ॥ २४ ॥**

**एकप्रसवजं कुल** इत्यत्र एकः **प्रसवः** सन्तानः **जः** जायमानो यस्मात् तदिति वरस्य विशेषणम् । **एकप्रसवजं** [२] एकप्रसवोत्पादकमित्यर्थः ॥

**[३] पुत्रिका हेति विधिना सञ्ज्ञिता भरतर्षभ ।**
**तस्मादेकः सुतो योऽस्यां जायते भारतत्वया ॥ २६ ॥**

---

१. S; BORI पृ. ८१३; '-भवत्यस्मिन्कुले सदा' इति कुं पाठः ।
२. एकैक सो.मु.पा. । ; ३. 'पुत्रिका हेतुविधिना' इति कुं पाठः ।

**पुत्रिका हेति विधिना** इत्यत्र 'पुत्रिका ह पुत्र' इति श्रुत्युक्तन्यायेनेत्यर्थः ।

॥ इति चतुस्सप्तत्यधिकशततमोऽध्यायः ॥

## ॥ अथ षट्सप्तत्यधिकशततमोऽध्यायः ॥

**सर्वभूतेषु धर्मज्ञ मैत्रो ब्राह्मण उच्यते ।**
**सत्यो भवतु कल्याण एष वादो मनीषिणाम्** ॥ ५ ॥

**मैत्रो ब्राह्मण उच्यत** इत्यत्र मैत्रीं कुर्वन् **मैत्रः** ।

**ब्राह्मण उवाच –**

**विश्वं[१] शतं सहस्रं च सर्वमक्षय्यवाचकम् ।**
**परिमाणं शतं त्वेतं नेदमक्षय्यवाचकम्** ॥ ८ ॥

**विश्वं शतं सहस्रं च सर्वमक्षयवाचकम्** इत्यत्र 'विश्वं शतं सहस्रमि'त्यादिप्रकारेण सङ्ख्यावाचकपदं सर्वमक्षय्यवाचकम् । शतादीनां पुनः पुनर्गुणने क्रियमाणे अनन्तवाचकमित्यर्थः । एतच्छतं परिमाणं **एवं** पूर्ववत् अक्षय्यवाचकं न । यदा च वः मोचकपुरुषसमागमो भवति तदैव शतकलामादाय वा शतदिनान्यादाय वा शतमासानादाय वा स एव कालः शतपदेन समापदेन च विवक्षित इति भावः ।

**चित्राङ्गदायाः शुल्कार्थं[२] गृह्णत्वं[३] बभ्रुवाहनम् ।**
**अनेन तु महिष्यह्य बभ्रुवाहनवर्धनात्** ॥ २७ ॥

---

१. $T_3$,$G_{1.4}$,$M_{3.5}$; BORI पृ. ८१८; **'शतं शतसहस्रं तु'** इति कुं पाठः ।
२. **'शुल्कं त्वं'** इति कुं पाठः । ; ३. **'गृहाण'** इति कुं.पाठः ।

**चित्राङ्गदायाः शुल्कार्थम्** इत्यत्र **गृह्ण** गृह्णीष्व । **अनेन तु महिष्यद्य** इत्यत्र बभ्रुवाहन **वर्धनात्** वर्धनमुद्दिश्येत्यर्थः ।

॥ इति षट्सप्तत्यधिकशततमोऽध्यायः ॥

## ॥ अथ सप्तसप्तत्यधिकशततमोऽध्यायः ॥

**वैशम्पायन उवाच –**

**सोऽपरान्तेषु तीर्थानि पुण्यान्यायतनानिच ।**
**सर्वाण्येवानुपूर्व्येण जगामामितविक्रमः ॥ १ ॥**

**सोऽपरान्तेषु तीर्थानि** इत्यत्र **अपरान्तेषु** पश्चिमसमुद्रप्रान्तेषु ।

**त्रिदण्डी मुण्डितः कुण्डी अक्षमालाङ्गुलीयकः ।**
**योगभारवहः[1] पार्थो वटवृक्षस्य कोटरम् ॥ ८ ॥**

**कुण्डी** कुण्डिकावान् । [2]'कुण्डिका च कमण्डलुः' इति हलः । **योग-भारवहः** योगोचितदेवपूजादिमात्रभारवहः ।

**[3]चारणानां च वचनादेकाकी स जनार्दनः ।**
**तत्राभ्यगच्छत्कौन्तेयः महात्मानं स माधवः ॥**

**चारणानां** चाराणम् ।

॥ इति सप्तसप्तत्यधिकशततमोऽध्यायः ॥

॥ अर्जुनवनवासपर्व समाप्तम् ॥

---

१ 'योगभारं वहन् पार्थो' इति कुं.पाठः ।

२ ह.को. २-४११

३ BORI पृ. ८२१; 'चाराणां चैव' इति कुं.पाठः ।

# सुभद्राहरणपर्व

## ।। अथ अष्टसप्तत्यधिकशततमोऽध्यायः ।।

**ततो हलधरः क्षीबो रेवती सहितः प्रभुः ।**
**अनुगम्यमानो गन्धर्वैरचरत्तत्र भारत ।। ७ ।।**

**ततो हलधरः क्षीब** इत्यत्र **क्षीबः** मत्तः । [1]'मत्ते शौण्डोत्कटक्षीबा' इत्यमरः ।

**एते परिवृताः स्त्रीभिर्गन्धर्वैश्च पृथक्पृथक् ।**
**तमुत्सवं रैवतके शोभयाञ्चक्रिरे तदा ।। १२ ।।**

**गन्धर्वैश्च पृथक् पृथक्** इत्यत्र **गन्धर्वैः** अश्वैः । [2]'अर्वा गन्धर्वोऽश्व' इति हलः ।

**कृतमेव तु कल्याणं सर्वं मम भवेद् ध्रुवम् ।**
**यदि स्यान्मम वार्ष्णेयी महिषीयं स्वसा तव ।। २० ।।**

**कृतमेव तु कल्याणम्** इत्यत्र यदि अस्याः कल्याणमेव कृतं तर्हि ममसर्वमभीष्टं भवेत् ।

**वासुदेव उवाच –**

**स्वयंवरः क्षत्रियाणां विवाहः पुरुषर्षभ ।**
**स च संशयितः पार्थ स्वभावस्य निमित्ततः ।। २२ ।।**

---

१. अ.को. ३-१-२३
२. ह.को. २-४३६

**स्वभावस्य निमित्तत** इत्यत्र **स्वभावस्य** सन्न्यासस्वभावस्य **निमित्ततः** कारणात् स च स्वयंवरः **संशयितः** संशयं प्राप्तः ।

**वैशम्पायन उवाच –**

**ततोऽर्जुनश्च कृष्णश्च विनिश्चित्येतिकृत्यताम् ।**
**शीघ्रगान्पुरुषानन्यान् प्रेषयामासतुस्तदा ॥ २५ ॥**

**विनिश्चित्येतिकृत्यताम्** इत्यत्र **इतिकृत्यतां** इतिकर्तव्यताम् ।

**भीमसेनस्तु तच्छ्रुत्वा कृतकृत्याः[१] स्म शक्यते ।**
**इत्येवं मनुजैरुक्तं कृष्णः श्रुत्वा महामतिः ॥ २७ ॥**

**कृतकृत्याः स्म शक्यत** इत्यत्र वयं कृतकृत्याः स्म । अर्जुनः कर्तैवं[२], इदं कार्यं तेन कर्तुं शक्यते इति अनुजैः सार्धमुक्त्वा प्रीतिमुपेयिवानिति योजना ॥

**॥ इति अष्टसप्तत्यधिकशततमोध्यायः ॥**

## ॥ अथ एकोनाशीत्यधिकशततमोऽध्यायः ॥

**ततस्तु यादवाः सर्वे मन्त्रयन्ति स्म भारत ।**
**अयं देशातिथिः श्रीमान्यतिलिङ्गधरो द्विजः ॥ १८ ॥**

**अयं देशातिथिः श्रीमान्** इत्यत्र **देशे देशे सञ्चरन्नतिथिः देशातिथिः** ।

**श्रीकृष्ण उवाच –**

**त्वयिस्थिते महाभाग परवानस्मि धर्मतः ।**
**स्वयं तु रुचिरे स्थाने वासयेर्यदुनन्दन ॥ २२ ॥**

१. **'कृतकृत्यं स्म मन्यते'** इति कुं पाठः । ; २. **कर्तव्यं** सो.मु.पा. ।

**परवान्** नाथवान् पराधीन इत्यर्थः ॥

॥ इति एकोनाशीत्यधिकशततमोऽध्यायः ॥

## ॥ अथ अशीत्यधिकशततमोऽध्यायः ॥

**सर्वेषां हर्षमाणानां पार्थो हर्षमुपागमत् ।**
**प्राप्तमज्ञातपूजाभिः[1] चागतं चार्जुनं हरिः ॥ १६ ॥**

**प्राप्तमज्ञातपूजाभिः** इत्यत्र अज्ञातस्य पूजाः **अज्ञातपूजाः** । पार्थमजानमान इव पूजयामासेति भावः ।

**न कृष्णा द्रौपदी [2]रूपं न मेने भद्रया समाम् ।**
**[3]प्राप्ता नाभूदिन्द्रसेना साक्षाद्वा वरुणात्मजा ॥ १७ ॥**

**न कृष्णा द्रौपदी रूपम्** इत्यत्र वासुदेवसहोदरा यद्रूपं बिभर्ति, तद्रूपं द्रौपदी इन्द्रसेना वा वरुणात्मजा वा न प्राप्ताऽभूदिति योजना ।

**सा तथेत्यब्रवीत् कृष्णं करिष्यामि यथाऽऽत्थ माम् ।**
**तोषयिष्यामि [4]ऋष्येण कर्मणाच द्विजर्षभमम् ॥**

**तोषयिष्यामि ऋष्येण** इत्यत्र ऋषेर्योग्यं **ऋष्यं** तेन ।

**अतीतसमये काले [5]सोदराणां धनञ्जयः ।**
**न सस्मार सुभद्रायां कामाङ्कुशनिवारितः ॥ १९ ॥**

---

१. **'प्राप्तमज्ञातरूपेण'** इति कुं पाठः ।
२. **'मेने न रूपे'** इति कुं पाठः । ; ३. **'प्राप्तं'** इति कुं पाठः ।
४. **'वृत्तेन'** इति कुं पाठः ।
५. **'सोदर्याणां'** इति कुं पाठः ।

**सोदराणां धनञ्जयः । न सस्मार** इत्यत्र 'अधीगर्थदयेशां कर्मणि' इति सूत्रात् स्मृत्यर्थधातुयोगे कर्मणि षष्ठीविधानात् सोदराणामिति षष्ठी द्वितीयार्थे । सोदर्यान् सस्मारेत्यर्थः ।

**[१]श्रुत्वा चाशनिनिर्घोषं केशवेनोपसीदता ।**
**उपमामर्जुनं कृत्वा मत्सरः कथितः पुरा ॥ २२ ॥**

**श्रुत्वा चाशनिनिर्घोषं केशवेनोपसीदता । उपमामर्जुनं कृत्वा मत्सरः कथितः पुरा** इत्यत्र **अशनिनिर्घोषं** अशनिसमं अर्जुनधनुर्ज्या-निर्घोषं श्रुत्वा 'मम समीभवितुं त्वमर्जुनः किम्' इति अर्जुनमुपमां कृत्वा राज्ञां यो मत्सर आसीत् सः **उपसीदता** सुभद्रासमीपे स्थितेन **केशवेन** कृष्णेन **कथितः** सुभद्रां प्रति कथितः । अतः सुभद्रायाः अर्जुने बह्वभिमान इति भावः ।

**[२]क्रुद्धमत्तप्रलापश्च वृष्णीनामर्जुनं प्रति ।**
**पौरुषं चोपमां कृत्वा प्रावर्तत धनुष्मताम् ॥ २३ ॥**

**क्रुद्धमत्तप्रलापश्च वृष्णीनामर्जुनं प्रति । पौरुषं चोपमां कृत्वा** इत्यत्र पौरुषमुपमां कृत्वा धनुष्मतां वृष्णीनामर्जुनं प्रति यः क्रुद्धमत्त-प्रलापः प्रावर्तत, सोऽपि केशवेन कथित इति पूर्वेणान्वयः ।

**अन्योन्यकलहे चापि विवादे चापि वृष्णयः ।**
**अर्जुनोऽपि न मे तुल्यः कुतस्त्वमिति ते[३]ऽब्रुवन् ॥ २४ ॥**

---

१. **'श्रुत्वा चाशनिनिर्घोषं केशवेनापि धीमाता । उपमामर्जुनं कृत्वा विस्तरः कथितः पुरा ॥'** इति कुं पाठः ।

२. BORI पृ. ९५९; **'क्रुद्धमान प्रलापश्च'** इति कुं पाठः ।

३. BORI पृ. ९५९; **'चाब्रुवन्'** इति कुं पाठः ।

**अर्जुनोऽपि न मे तुल्यः कुतस्त्वमिति तेऽब्रुवन्** इत्यपि केशवेन कथितम् ।

**जातांश्च पुत्रान् गृह्णन्त आशिषो वृष्णयोऽब्रुवन् ।**
**अर्जुनस्य समो वीर्ये भव तात धनुर्धरः ॥ २५ ॥**

**'अर्जुनस्य समो वीर्ये भव तात धनुर्धर'** इति वृष्णयो यदब्रुवन् तदपि केशवेन कथितम् ।

**तस्मात्सुभद्रा चकमे पौरुषाद्भरतर्षभम् ।**
**सत्यसन्धस्य रूपेण चातुर्येण च मोहिता ॥ २६ ॥**

**तस्मात्सुभद्रा चकम** इत्यत्र **तस्मात्** आत्मानं प्रति अर्जुनशौर्यस्य कृष्णेन वारं वारं वर्णितत्वात् ।

**चारणातिथिसङ्घानां गदस्य च निशम्य सा ।**
**अदृष्टे कृतभावाभूत्सुभद्रा भरतर्षभे ॥ २७ ॥**

**चारणातिथिसङ्घानाम्** इत्यत्र **चारणाः** चारः तेषां अतिथिसङ्घानां **शठस्य** निशठस्य च मुखाच्छ्रुत्वेति योग्यपदाध्याहारः ।

**कीर्तयन्ददृशे यो यः कथञ्चित्कुरुजाङ्गलम् ।**
**तं तमेव तदा भद्रा बीभत्सुं स्म हि पृच्छति ॥ २८ ॥**

**कीर्तयन् ददृशे यो य** इत्यत्र **यः यः** पुरुषः कुरुजाङ्गलं कीर्तयन् सुभद्रया कथञ्चिद्ददृशे, तं तं बीभत्सुमभिपृच्छति[१] ॥

---

१. **पृच्छन्ती** सो.मु.पा. ।

**सरांसि सरितश्चैव वनानि च कथं यते ।**
**दिशः काश्च कथं प्राप्ताश्चरद्भगवता[1] सदा ॥ ३३ ॥**

**चरद्भगवता** इत्यत्र चरंश्चासौ भगवांश्च **चरद्भगवान्** तेन ।

**स तद्व्यक्तं[2] तदा भद्रां बहुनर्मामृतं ब्रुवन् ।**
**उवाच परमप्रीतस्तथा बहुविधाः कथाः ॥ ३४ ॥**

**निशम्य विविधं तस्य लोके चरितमात्मनः ।**
**तथा परिगतो भावः कन्यायाः समपद्यत ॥ ३५ ॥**

**स तद्व्यक्तम्** इत्यत्र व्यक्तं यथा भवति तथा **तत्** तत्कृतप्रश्नोत्तरमित्यर्थः । **आत्मनः** स्वस्य **चरितम्** आचरितम् ।

**अर्जुनोऽहमिति प्रीतस्तामुवाच धनञ्जयः ।**
**यथा भगवतो[3] भावः श्रवणान्मयि भामिनि ॥ ४६ ॥**

**यथा भगवतो भाव** इत्यत्र तव मयि **भगवतः** पूज्यस्य भावः पूज्यत्वमित्यर्थः ।

**कन्यापुरे तु तद्वृत्तं ज्ञात्वा दिव्येन चक्षुषा ।**
**शशास रुक्मिणीं कृष्णो भोजनादि तदार्जुने ॥ ५१ ॥**

**शशास रुक्मिणीम्** इत्यत्र **तदा** सुभद्रायाश्चिन्तार्थत्वेन भोजनदाना-[?]र्थत्वसमये अर्जुने भोजनानि दिशेति रुक्मिणीं **शशास** आज्ञप्त-[?]ान् ।

---

१. **'प्राप्ताश्चरता भवता'** इति कुं पाठः । ; २. **'तथोक्तस्तदा'** इति कुं पाठः ।
३. **'तव गतो'** इति कुं.पाठः ।

काश्यां[1] विद्यमानः शिवः काश्यः । 'पा पाने' इति धातोः चित्तमभिभूय अर्धनारीश्वरं कृत्वा देहस्यार्धमेव पिबन्निव विद्यमानः कामः काश्यपः तेन सह विद्यमानः; कामार्त इति यावत् ।

**नगरे घोपयास हितार्थं सव्यसाचिनः ।**
**इतश्चतुर्थे त्वहनि अन्तर्द्वीपं तु गम्यताम् ॥ ७१ ॥**

**अन्तर्द्वीपं तु गम्यताम्** इत्यत्र **अन्तर्द्वीपं** समुद्रान्तर्विद्यमानं कञ्चि द्वीपम् ।

**सदारैः सानुयात्रैश्च सपुत्रैश्च सबान्धवैः ।**
**गन्तव्यं वासुदेवसमैश्च[2] गन्तव्यं सर्वयादवैः ॥ ७२ ॥**

**वासुदेवसमैः** इत्यत्र वादुदेवेन समं विद्यमानाः **वासुदेवसमाः** तैः ।

**विचित्रमाल्याभरणाश्चित्रगन्धानुलेपनाः ।**
**विहाराभिगताः सर्वे यादवा पानहेतवः[3] ॥ ८९ ॥**

**यादवाः पानहेतव** इत्यत्र **पानहेतवः** पानं हेतुः मदहेतुर्येषां ते तथोक्ताः ।

॥ इति अशीत्यधिकशततमोऽध्यायः ॥

## ॥ अथ एकाशीत्यधिकशततमोऽध्यायः ॥

**कन्यायास्तु पिता भ्राता माता मातुल एव वा ।**
**पितुः पिता पितुभ्राता दाने तु प्रभवतां[4] गताः ॥ ३ ॥**

---

१. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
२. **'सर्ववर्णैश्च'** इति कुं. पाठः । ; ३. **'हर्षसंयुताः'** इति कुं पाठः ।
४. **'प्रभुतां गतः'** इति कुं पाठः ।

**प्रभवतां गता** इत्यत्र **प्रभवाः** समर्थाः तेषां भावः **प्रभवता** ताम् ।

**[१]जायते याऽनुभर्तारं जाया इत्येव नामतः ।**
**पत्नी भार्या च दाराश्च जाया चेतिचतुर्विधाः ॥ ११ ॥**

**जायते याऽनुभर्तारम्** इत्यत्र भर्तारं **अनु** अनुसृत्य मां जायां कुर्वित्यनुसृत्य या **जायते** भार्या जायते सा नामतः जाया; स्वयमेव जातत्वाज्जायेति कथ्यते ।

**नारायणोऽपि [२]धर्मज्ञो नावबुध्येत विश्वकृत् ।**
**धर्मसङ्कटमापन्ने किं नु कृत्वा सुखं भवेत् ॥ १९ ॥**

**नारायणोऽपि धर्मज्ञो नावबुध्येत विश्वकृत्** इत्यत्र **धर्मज्ञः** आपद्धर्मज्ञः नारायणः **नावबुद्ध्येत** त्वयि मयि च अवमानं न कुर्यात् ।

**रागोन्मादप्रलापी सन्नर्जुनो जयतां वरः ।**
**चिन्तयामास पितरं प्रविश्य च लतागृहम् ॥ २२ ॥**

**चिन्तयामास पितरम्** इत्यत्र **पितरम्** इन्द्रम् । **लतागृहं** लतामध्यगतगृहम् ।

**दिव्यस्त्रीभिश्च सहिताः सुभद्रायाः शुभाः क्रियाः ।**
**अर्जुनेऽपि तथा सर्वाः [३]क्रियां भद्रे प्रयोजयन् ॥ ३३ ॥**

**क्रियां भद्रे प्रयोजयन्** इत्यत्र **भद्रे** शोभने दिने **क्रियां** विवाहक्रियाम् ।

---

१. 'जनयेद्यातु भर्तारं' इति कुं पाठः । ; २. 'सर्वज्ञो' इति कुं पाठः ।
३. BORI पृ. ९६२; 'क्रिया भद्राः प्रयोजनम्' इति कुं पाठः ।

**कारयामास [1] वैवाह्यान् माङ्गल्यान् यादवस्त्रियः ।**
**सहाप्सरोभिर्मुदिता भूषयित्वा स्वभूषणैः ॥ ३८ ॥**

**वैवाह्यान्** विवाहसम्बन्धिनः, **माङ्गल्यान्** मङ्गलयोग्यान् शोभनाक्षतादीन् ।

**सुभद्रया सुखं पार्थ खाण्डवप्रस्थमाविश ।**
**यादवैः सहितः पश्चादागमिष्यामि भारत ।**
**यतिवेषेण नियतो [2] वसेस्त्वं रुक्मिणीवृतः ॥ ४६ ॥**

**वसेस्त्वं रुक्मिणीवृत** इत्यत्र **रुक्मिणी** रुक्मवती सर्वालङ्कारभूषिता सुभद्रा तया वृतः वसेः । **रुक्मिणीवृतः** जनार्दनः प्रचक्रामेत्युत्तरेण वा सम्बन्धः ।

**अपि जिष्णुर्विजज्ञे तां ह्रीं श्रियं सन्नतिक्रियाम् ।**
**[3] द्वादशानां वरस्त्रीणां रुपेण सदृशीं सतीम् ॥ ५० ॥**

**द्वादशानां वरस्त्रीणाम्** इत्यत्र **रूपेणासदृशीं सतीं** सुभद्रां 'वागीश्वरी क्रिया कीर्तिर्लक्ष्मीः पुष्टिश्च सन्नतिः । कान्तिर्ह्रीः श्रीः शुचिर्ज्येष्ठा रतिश्च द्वादश स्त्रियः' इति परमसंहितायामुक्तानां द्वादशस्त्रीणां मध्ये ह्रीं श्रियं सन्नतिं क्रियां च **जज्ञे** ज्ञातवान् ।

**सा तु तं मनुजव्याघ्रमनुरक्ता यशस्विनी ।**
**कन्यापुरगता भूत्वा [4] तत्प्रसादमपश्यत ॥ ५२ ॥**

---

१. **'वैवाह्यमङ्गलान्यादवस्त्रियः'** इति कुं पाठः ।
२. **'वस त्वं रुक्मिणीगृहे'** इति कुं.पाठः । ; ३. **'देवतानां'** इति कुं. पाठः ।
४. **'तत्परा समपश्यत'** इति कुं.पाठः ।

**तत्प्रसादमपश्यत** इत्यत्र तस्यां सुभद्रायां प्रसादमित्यर्थः ।

॥ इति एकाशीत्यधिकशततमोऽध्यायः ॥

## ॥ अथ त्र्यशीत्यधिकशततमोऽध्यायः ॥

**युक्तं रथवरं तूर्णमिहानय सुसत्कृतम् ।**
**व्रतार्थमिष[1] भाषित्वा सखीभिः सुभगे सह** ॥ ९ ॥

**व्रतार्थमिव भाषित्वा** इत्यत्र **व्रतार्थं** मम देवतादर्शनव्रतार्थं **इव** इतीव ।

**क्षिप्रमादाय पर्येहि सह सर्वायुधेन च ।**
**[2]अनुकर्षं पताकाश्च तूणीरांश्च धनूंषि च** ॥ ६ ॥

**अनुकर्षं पताकाश्च** इत्यत्र **अनु** पृष्ठतः **कर्ष**(आ)माकर्षणं यासां ता: पताकाः ।

**सुभद्रया तु विज्ञप्तः पूर्वमेव धनञ्जयः ।**
**अभीशुग्रहणे पार्थ न मेऽस्तिसदृशो भुवि** ॥ १७ ॥

**अभीशुः** रथरज्जुः ।

**[3]पार्श्वे वामे पुरस्ताच्च सखा तस्याग्रणीरिव ।**
**ततः कन्यापुरद्वारात् सघोषादभिनिःसृतम्** ॥ २८ ॥

**पार्श्वे वामे पुरस्ताच्च सखा तस्याग्रणीरिव** इति **पार्श्वे** दक्षिणपार्श्वे

---

१. '-मिति' इति कुं. पाठः । ; २. **'अनुकर्षान्पताकाश्च'** इति कुं. पाठः ।
३. **'पार्श्वे चामरहस्ता सा सखी तस्याङ्गनाऽभवत्'** इति कुं. पाठः ।

**वामे** सव्ये पुरस्तादग्रतश्च **अग्रणीः** सर्वोत्तमः **सखा** तस्य सखा सारथ्यं कुर्वन् कृष्ण इव सुभद्रा अश्वानचोदयदिति पूर्वोणान्वयः । 'पार्श्वे चामरहस्ता सा सखी तस्याः सहाभवत्' इति पाठे चामरहस्ता **सा** पूर्वं विद्यमाना **तस्याः** सुभद्रायाः सखी **पार्श्वे** अर्जुनपार्श्वे चामरहस्ता सती सहाभवदित्यर्थः ।

**वैशम्पायन उवाच –**

**शासनात् पुरुषेन्द्रस्य बलेन महता बली ।**
**गिरौ रैवतके नित्यं बभूव विपृथुश्रवाः ॥ १ ॥**

**विपृथुश्रवा** इत्यत्र विपृथुरिति लोके **श्रवः** श्रवणं यस्य स तथोक्तः विपृथुरित्यर्थः ।

**मामेव च [1]सदाकार्षीत् मन्त्रिणं मधुसूदनः ।**
**अन्तरेण सुभद्रां च त्वां च तात धनञ्जय ॥ २५ ॥**

**अन्तरेण सुभद्राम्** इत्यत्र **अन्तरेण** मध्ये सुभद्रां त्वां च वक्तुं मामेवाकार्षीत् ।

**सन्नद्धः कवची खड्गी बद्धगोधाङ्गुलित्रवान् ।**
**[2]गुप्तः सेनानुयात्रेण रथमारोप्य माधवीम् ।**
**रथेनाकाशगेनैव प्रययौ स्वपुरम्प्रति ॥ ३५ ॥**

**गुप्तः सेनानुयात्रेण** इत्यत्र सेनामनुसृत्य यात्रा यस्य **तेन** विपृथुना ।

---

१. BORI पृ. ९६४; **'सदाकाङ्क्षी'** इति कुं.पाठः ।
२. $G_5$; BORI पृ. ७२५; **'युक्तः'** इति कुं पाठः ।

रथेष्वानीयमानेषु कवचेषु ध्वजेषु च ।
अभिक्रन्दे नृवीराणां तदासीत्तुमुलो[1] महान् ॥ ४६ ॥

**तदाऽऽसीत्तुमुलो महान्** इत्यत्र **तुमुलः** कोलाहलः । [2]'कोलाहलः कलकलस्तुमुलो व्याकुलो रव' इति हलः ।

वनमाली ततः क्षीबः कैलासशिखरोपमः ।
नीलवासा मदोत्सिक्त इदं वचनमब्रवीत् ॥ ४७ ॥

**वनमाली ततः क्षीब** इत्यत्र **क्षीबः** मत्तः **वनमाली** हलधरः ।

॥ इति त्र्यशीत्यधिकशततमोऽध्यायः ॥

॥ सुभद्राहरणपर्व समाप्तम् ॥

# हरणाहरणपर्व

# हरणहारिकपर्व

## ॥ अथ चतुरशीत्यधिकशततमोऽध्यायः ॥

अर्थलुब्धान्न वः पार्थो मन्यते सात्वतान्सदा ।
स्वयंवरमनाधृष्यं मन्यते चापि पाण्डवः ॥ ४ ॥

**अर्थलुब्धान्न वः पार्थो मन्यत** इत्यत्र पार्थः वः अर्थलुब्धान्न मन्यते । [illegible]: सन्मानः । एतादृशबुद्ध्यभावे बह्वर्थान् दत्वा कन्यां हरेत् । स्वयंवरं अनाधृष्यं कर्तुं शक्यं न मन्यते । द्रौपदीस्वयंवरवत् असाध्ये

---

१ 'तदासीत्तुमुलं महत्' इति कुं पाठः ।
२ अ.को. १-१३९

कस्मिंश्चिदुपाये कृते सति यादवेष्वपि बहुदमर्थाः सन्ति । तेष्वेव अतः स्वयंवरोऽपि न शक्य इति मन्वानेनार्जुनेन भवत्सु महासामर्थ्यमस्ती-त्यङ्गीकृतम् । अयमेकः सन्मानः ।

**प्रदानमपि कन्यायाः पशुवत्कोऽनु मंस्यते[१] ।**
**विक्रियं चाप्यपत्यस्य कः कुर्यात्पुरुषो भुवि ॥ ५ ॥**

अर्थेन कन्यावरणे पुनरपि दोषद्वयं वक्ति **प्रदानमपि कन्याया** इति । पशुवत् कन्याया निमित्ते **प्रदानं** अर्थप्रदानं कः अनुमंस्यते ।

**"मम शस्त्रा[२] विशेषेण तूणौ चाक्षयसायकौ ।**
**योद्धा पार्थश्च शीघ्रास्त्रः को नु तेन समो भवेत् ।**
**तमभिद्रुत्य सान्त्वेन परमेण धनञ्जयम्" ॥ ११ ॥**

**मम शस्त्रा विशेषेण** इत्यत्र **शस्त्रा** शस्त्राणि । 'सुपां सुलुक्' इति सूत्रात् सुपो लोपः ।

**प्रणश्येद्वो यशः सद्यो न तु सान्त्वे पराजयः ।**
**पितृष्वसायाः पुत्रो मे सम्बन्धं नार्हति द्विषाम् ॥**
**तच्छ्रुत्वा वासुदेवस्य तथा कर्तुं जनाधिप ॥ १३ ॥**

[३]**सम्बन्धं नार्हति द्विषाम्** इत्यत्र **पितृष्वसायाः पुत्रः** पार्थः **द्विषां** मे द्विषामेव सम्बन्धं नार्हति न त्वस्माकम् । ततः सुहृद्भिर्भवद्भिः सौहार्दमेव कर्तव्यं; न तु विरोध इति भावः ।

---

१. BORI पृ. ८२८; **'मन्यते'** इति कुं.पाठः ।
२. **'शस्त्रं'** इति कुं पाठः ।
३. **सन्धानं** सो.मु.पा. ।

**त्वदर्थं योद्धुकामास्ते मदरक्तान्तलोचनाः ।**
**प्रमदानशुचीन्मूढान् सुरामत्तान्नराधमान्[1] ॥ १६ ॥**

**वमनं पानशार्टीस्तान् करिष्यामि शरोत्तमैः ॥ १७ ॥**

**प्रमदानशुचीन्मूढान्** इत्यत्र **प्रमदान्** प्रकृष्टमदान् अशुचीन् मूढान् **पानशाटीन्** सुरापानस्य भाण्डभूतान्, 'शार्टी वस्त्रं विजानीयाच्छाटिं भाण्डं विदुर्बुधा' इत्यभिधानात् । **तान्** यादवान् शरोत्तमैर्विद्ध्वा वमनं **करिष्यामि** कारयिष्यामि । शरैर्विद्ध्वा उदरस्थितमद्यस्य वमनं कारयिष्यामीत्यर्थः ।

**ततस्तु कृतसन्नाहा वृष्णिवीराः समाहिताः ।**
**प्रत्यानयार्थं पार्थस्य जवनैस्तुरगोत्तमैः ॥ २४ ॥**

**जवनैः** वेगयुक्तैः । **प्रत्यानयार्थं, नयो** नयनं, **प्रत्यानयनार्थं** परा-वृत्यानयनार्थमित्यर्थः ।

**अतीत्य तं रैतकं श्रुत्वा तु विपृथोर्वचः ।**
**अर्जुनेन कृतं श्रुत्वा गन्तुकामास्तु वृष्णयः ॥ २७ ॥**

**अर्जुनेन कृत्तं श्रुत्वा** इत्यत्र **दीर्घगतं** दीर्घाध्वानं गतं बहुदूरगतमित्यर्थः ।

॥ इति चतुरशीत्यधिकशततमोऽध्यायः ॥

* * *

[1] 'प्रमात्तानशुचीन्मूढान्' इति कुं पाठः ।

## ।। अथ पञ्चाशीत्यधिकशततमोऽध्यायः ।।

**ततः सुभद्रां सत्कृत्य पार्थोवचनमब्रवीत् ।**
**गोपिकानां तु वेषेण गच्छ त्वं व्रजिनं[1] पुरम्** ।। २ ।।
**काम व्याहरिणी कृष्णा रोचतां ते वचो मम ।**

**गच्छ त्वं व्रजिनं पुरम्** इत्यत्र प्राक्कौरवैः पाण्डवोपरि द्वेषेण कुटिलवास्त्वादिभिर्निर्मितत्वात् **व्रजिनं** वक्रं, परितो व्रजवन्तं गोष्ठवन्तं वा, परेषां सुखेनाप्रवेशाय कुटिलमार्गोपेतत्वाद्वा व्रजिनं, दुर्जनमनसामसह्यत्वेन च वक्रत्वाद्वा व्रजिनम् । [2]'वक्रं व्रजिनं भङ्गुरम्' इति हलायुधः । **व्रजी** नानाविधसेवकव्रजवान् धर्मराजो नेता यस्य तद्व्रजिनं, व्रजिनो गोष्ठवन्तो गोपाः परितः क्षीरनवनीतादिनेतारो यस्येति च योगेन वा **व्रजिनं पुरम्** इन्द्रप्रस्थं गच्छेत्यन्वयः । **कामव्याह(र)रिणी कृष्णा** द्रौपदी कामेन **व्याह(र)रिणी** व्याहारवती व्यवहर्त्री, प्रियं निष्ठुरं वा स्वेच्छया वदन्तीत्यर्थः ।

**ओजसा [3]निर्जिता बह्वीरुवाच परमाशिषः ।**
**तथैव मुदिता भद्रा तामुवाच तथास्त्विति** ।। १७ ।।

**ओजसा निर्जिता** इत्यत्र **ओजसा** सुभद्राया अवष्टम्भशक्त्या, सहनशक्त्येति यावत् । **निर्जिता** वशीकृतमनाः ।

**ततः किलकिलाशब्दः क्षणेन समपद्यत ।**
**हर्षादानर्तयोधानामासाद्य वृजिनं पुरम्** ।। १९ ।।

१. **'वृजिनं'** इति कुं पाठः । ; २. ह.को. ४-६९६
३. **'निर्मिता'** इति कुं पाठः ।

**हर्षादानर्तयोधानाम्** इत्यत्र **आनर्तयोधानां** आनर्तविषयभटानां यादवानामित्यर्थः ।

**यथार्हं मानयामास पौरजानपदानपि ।**
**[१]ततस्तान्यनुयात्राणि तीर्थान्यायतनानि च ॥ २७ ॥**

**ततस्तान्यनुयात्राणि** इत्यत्र अर्जुनमनु यात्रा येषां तानि यादवसैन्यानि **अनुयात्राणि** ।

॥ इति पञ्चाशीत्यधिकशततमोऽध्यायः ॥

## ॥ अथ षडशीत्यधिकशततमोऽध्यायः ॥

**[२]राजा विपृथुरक्रूरः सङ्कर्षणभये सखे ।**
**पित्रा च पुरुषेन्द्रेण पुरस्तादभिमानितः ॥ ८ ॥**

**राजा विपृथुः** इत्यत्र हे सखे इति पौराणामन्योन्यं सम्बुद्धिः । पुरस्तात् सङ्कर्षणभये सति **पित्रा** वसुदेवेन **पुरुषेन्द्रेण** कृष्णेन च राजा विपृथुरक्रूरश्च **अभिमानितः** सुभद्राविवाहे अभिमानवान् कृत इति पर्यंकं सम्बन्धः ।

**वृष्ण्यन्धकमहामात्रैः सह वीरैर्महारथैः ।**
**भ्रातृभिश्च कुमारैश्च योधैश्च शतशो वृतः ॥ १३ ॥**

**वृष्ण्यन्धकमहामात्रैः** इत्यत्र 'महामात्रः प्रधानः स्याद्धस्त्यारोहः

---

१. 'तत्रस्था....' इति कुं.पाठः । S; BORI पृ. ९६५.

२. 'पूर्वं सत्कृत्य राजानमाहुकं मधुसूदनः । तथा विपृथुमक्रूरं सङ्कर्षणविडूरथौ' [illegible] कुं. पाठः ।

कश्चिद्भवेत्'[१] इति वचनात् वृष्ण्यन्धकप्रधानैरित्यर्थः ।

**अक्रूरो वृष्णिवीराणां सेनापतिररिन्दमः ।**
**अनाधृष्टिर्महाबाहुः[२] उद्धवश्च महायशाः ॥ १९ ॥**

**अनाधृष्टिर्महाबाहुः** इत्यत्र न विद्यते **आ** समन्ताद्धृष्टिर्धर्षणं बलात्कारेण हरणं यस्य स तथोक्तः ।

**प्रवालानि च हाराणि भूषणानि सहस्रशः ।**
**कुथास्तरपरिस्तोमान् [३]व्यालाजिनपुरस्कृतान् ॥ ३४ ॥**

**व्यालाजिनपुरस्कृतान्** इत्यत्र **व्यालाजिनं** गजचर्म । 'व्यालो दुष्टगजः प्रोक्तः'[४] इति हलः ।

**स्नानपानोत्सवे चैव प्रयुक्तं वयसान्वितम् ।**
**स्त्रीणां सहस्रं गौरीणां सुवेषाणं सुवर्चसाम् ॥ ४२ ॥**

**स्त्रीणां सहस्रं गौरीणाम्** इत्यत्र 'द्वाविंशद्वार्षिका गौरी श्यामा यौवनमध्यगा' इत्यभिधानात् **गौरीणां** द्वाविंशद्वयस्कानाम् ।

**कृताकृतस्य मुख्यस्य कनकस्याग्निवर्चसः ।**
**मनुष्यभारान्दाशार्हो ददौ दश जनार्दनः ॥ ४५ ॥**

**कृताकृतस्य मुख्यस्य** इत्यत्र 'हेमरूप्ये कृताकृते' इत्यभिधानात्

---

१. ह.को. २-४२७; प्र.पाठः **'महामात्रः प्रधानं स्यादध्यक्षोऽधिकृतः स्मृतः'** इति ।

२. **'-तेजा'** इति कुं.पाठः ।

३. M; BORI पृ. ८३२; **'व्याघ्राजिनपुरस्कृतान्'** इति कुं पाठः ।

४. **हैम. 'व्यालो दुष्टगजे सर्पे'** ।

**कृताकृतस्य** हेमरूप्यात्मकस्य वित्तस्य । कृताकृतं **कृतं** केवलसौवर्णं, **अकृतं** मौक्तिकरत्नादिकं, **कृताकृतं** रत्नखचितसौवर्णाभरणं तस्य ।

**[१]रामं पादग्रहानीकं ददौ पार्थाय लाङ्गली ।**
**प्रीयमाणो हलधरः सम्बन्धं प्रतिमानयन् ॥ ४८ ॥**

**रामं पादग्रहानीकम्** इत्यत्र **पादग्रहाः** पादसेवाकारिणः तेषामनीकम् ।

**रामः सुभद्रां सम्पूज्य परिष्वज्य स्वसां तदा ।**
**न्यासेति द्रौपदीमुक्त्वा परिधाय महाबलः ॥ ५६ ॥**

**न्यासेति द्रौपदीम्** इत्यत्र नूतनतया परिग्रहे मातृपक्षीयैर्विन्यस्यमाना कन्या न्यासेत्युच्यते ।

॥ इति षट्शीत्यधिकशततमोऽध्यायः ॥

## ॥ अथ सप्ताशीत्यधिकशततमोऽध्यायः ॥

**स सात्वत्यामतिरथः सम्बभूव धनञ्जयात् ।**
**[२]मखे निर्मथ्यमानाद्वा शमीगर्भाद्धुताशनः ॥ ६४ ॥**

**मख निर्मथ्यमानाद्वा शमीगर्भाद्धुताशन** इत्यत्र [३]'वा विकल्पोपमानयोः' इत्यभिधानात् **हुताशनो वा** हुताशन इव ।

**चतुष्पादं दशविधं धनुर्वेदमरिन्दमः ।**
**अर्जुनाद्वेद [४]वेदज्ञात्सकलं दिव्यमानुषम् ॥ ६८ ॥**

१. $M_{3.5}$; BORI पृ. ८३४; **'रामः पाणिग्रहणिकं'** इति कुं पाठः ।
२. BORI पृ. ८३५; **'मखे निर्मथनेनेव'** इति कुं पाठः ।
३. ह.को. ५-८७३ ; ४. **'वेदज्ञः सकलं'** इति कुं पाठः ।

**चतुष्पादं दशविधं धनुर्वेदमरिन्दम । अर्जुनाद्वेद वेदज्ञात्सकलं दिव्यमानुषम्** इत्यत्र 'विधिपादी मन्त्रपादः पूजापादस्तथैव च । रहस्यपाद इत्येतदुक्तं पादचतुष्टयम् । शिष्टाविधिः प्रयोगश्च मुष्टिर्लक्ष-निपातनम्। अस्त्रमस्त्रतपश्चर्या प्रमोक्षौ दिव्यमानुषौ । मुक्तानामुप-संहारश्चैतद्दशविधं स्मृतम्' इति वचनात् चतुष्पादं दशविधं धनुर्वेदं ऋगादिवेदज्ञादर्जुनात् **वेद** 'विदॢ लाभे' इति धातोः लब्धवानि-त्यर्थः ।

**शास्त्रतः प्रतिविन्ध्यं[१] तमूचुर्विप्रा युधिष्ठिरम् ।**
**परप्रहरणज्ञाने प्रतिविन्ध्योऽभवत्स्वयम्[२] ॥ ७७ ॥**

**शास्त्रतः प्रतिविन्ध्यं तम्** इत्यत्र विप्राः **युधिष्ठिरं** युधि युद्धे स्थिरं तं कुमारं **शास्त्रतः** ज्योतिश्शास्त्रात् अधिगम्य **प्रतिविन्ध्यं** विन्ध्याचलस्य प्रतिभूतं स्थैर्ये विन्ध्याचलोपममिति यावत् । प्रतिभटान् शस्त्रेण विविध्यतीति वा प्रतिविन्ध्यं ऊचुः । निरुक्तत्वात् बिन्दोरागमः । **परप्रहरणज्ञाने** परेषां **प्रहरणं** प्रहारः तस्य ज्ञाने **स्वयं** स्वयमेव दिनेदिने स्वाभ्यासकौशलेनेति यावत् । प्रतिभटे वेधनसमर्थत्वाद्विन्ध्याचलवत् प्रतिभटप्रहाराभीरुत्वाच्च प्रतिविन्ध्योऽभवत् ।

**[३]सुतसोमसहस्रे तु सोमार्कसमतेजसम् ।**
**सुतसोमं महेष्वासं सुषुवे भीमसेनतः ॥ ७८ ॥**

**सुतसोमसहस्र** इत्यत्र 'षुञ् अभिषवे' इति धातोः **सुतः** प्रस्रुतः

---

१. BORI पृ. ८३६; **'प्रतिविन्ध्यः'** इति कुं पाठः ।
२. S (except M3); BORI पृ. ८३६; **'-ऽभवत्त्वयम्'** इति कुं.पाठः ।
३. $S_1$,$D_2$,$G_{2,6}$; BORI पृ. ८३६; **'सुते सोमसहस्रेतु'** इति कुं पाठः ।

सोमः यैस्ते यजमाना राजानः तेषां सहस्रे **सोमार्कसमतेजसं** चन्द्र-सूर्याविव शोभमानमित्यर्थः। श्रुतसोमोपमत्वाच्छुतसोम इति भावः।

**श्रुतं कर्म महत्कृत्वा निवृत्तेन किरीटिना।**
**जातः पुत्रस्तथेत्येवं श्रुतकर्मा ततोऽभवत् ॥ ७९ ॥**

**श्रुतं कर्म महत्कृत्वा** इत्यत्र **महत्कर्म** पुण्यं कर्म कृत्वा निवृत्तेन किरीटिना, तथा तव पुण्यकर्मानुसारेण पुत्रो जात इति यतः श्रुतः; ततः कर्मपरिपाके श्रुतत्वात् श्रुतकर्मा अभवदिति योजना।

**शतानीकस्य राजर्षेः कौरव्यस्य महात्मनः।**
**चक्रे पुत्रं सनामानं नकुलः कीर्तिवर्धनम् ॥ ८० ॥**

**शतानीकस्येति** पद्यं स्पष्टम्।

**ततस्त्वजीजनत्कृष्णा नक्षत्रे वह्निदैवते।**
**सहदेवात्सुतं तस्माच्छ्रुतसेनेति तं विदुः ॥ ८१ ॥**

**ततस्त्वजीजनत्कृष्णा** इत्यत्र **ततः** शतानीकोत्पत्त्यनन्तरं **वह्नि-दैवतनक्षत्रे** कृत्तिकानक्षत्रे यतः अजीजनत्, **तस्मात्** कृत्तिकानक्षत्रोत्प-न्नत्वात्तं सहदेवसुतं कृत्तिकानक्षत्रोत्पन्नससेनानीसाम्याय श्रुतसेन इति तं विदुः।

**॥ इति सप्ताशीत्यधिकशततमोऽध्यायः ॥**

**॥ हरणाहरणपर्व समाप्तम् ॥**

* * *

# खाण्डवदाहपर्व

॥ अथ अष्टाशीत्यधिकशततमोऽध्यायः ॥

**आश्रित्य धर्मराजानं सर्वलोकोऽवसत्सुखम् ।**
**पुण्यलक्षणधर्माणं[१] स्वदेहमिव देहिनः ॥ २ ॥**

**पुण्यलक्षणधर्माणम्** इत्यत्र **देहिनः** स्वदेहमिव स्थितं पुण्यलक्षणधर्माणं धर्मराजानमाश्रित्य लोकः सुखमवसदित्येकान्वयः ।

**न समं धर्मकामार्थान् सिषेवे भरतर्षभ ।**
**त्रीनिवात्मसमान्बन्धून् नीतिमानिव मानयन् ॥ ३ ॥**

**तेषां समविभक्तानां क्षितौ देहवतामिव ।**
**बभौ धर्मार्थकामानां चतुर्थ इवपार्थिवः ॥ ४ ॥**

**त्रीनिवात्मसमान्** इत्यत्र इह लोके बन्धुमान् पुरुषः आत्मसमान् त्रीन् बन्धूनिव धर्मकामार्थान् **समानयत्** सिषेवे । तौ स्वराष्ट्रे **देहवतामिव** मूर्तिमतामिव विद्यमानानां समविभक्तानां तेषां धर्मकामार्थानां पार्थिवः **चतुर्थः** मोक्ष इव बभौ ।

**नतु केवलदैवेन प्रजा भावेन रेमिरे ।**
**यद्बभूव मनः कान्तं कर्मणा स चकार तत् ॥ १० ॥**

**न तु केवलदैवेन** इत्यत्र **भावेन** ऐहिकविषयभोगाख्यविलासेन । **मनःकान्तं** मनःप्रियम् ।

---

१. $G_1$,$M_{(except\ M3)}$; BORI पृ. ८३७; **'पुण्यलक्षणकर्माणं'** इति कुं पाठः

**ततः कतिपयाहस्य बीभत्सुः कृष्णमब्रवीत् ।**
**[१] कृष्ण कृष्ण (वि)निवर्तन्तां गच्छावो यमुनां प्रति ॥ १४ ॥**

**कृष्ण कृष्ण (वि)निवर्तन्ताम्** इत्यत्र नागरविहारा इति योग्यपदाध्याहारः ।

**वासुदेव उवाच –**

**कुन्तीमातर्ममाप्येतद्रोचते यद्वयं जले ।**
**सुहृज्जनवृताः पार्थ विहरेम यथासुखम् ॥ १६ ॥**

**कुन्तीमातः** इत्यत्र कुन्ती माता यस्येति व्युत्पत्त्या **कुन्तीमातः** कौन्तेयेत्यर्थः ।

**आलयं सर्वभूतानां खाण्डवं खड्गचर्मभृत् ।**
**ददर्श कृत्स्नं तं देशं सहितः सव्यसाचिना ॥ १९ ॥**

**खाण्डवं देशं** खाण्डववनप्रदेशम् ।

**[२] आलयं पन्नगेन्द्रस्य तक्षकस्य महात्मनः ।**
**वेणुशाल्मलिमाल्यङ्गैरुपेतं वेत्रसंवृतम् ॥ २३ ॥**

**माल्यङ्गैः** मातुलङ्गैः ।

**शाकपद्मकतालैश्च शतशाखैश्च रोहिणैः ।**
**निरुद्देशसमप्रख्यं आवृतं गजसंस्थितैः ॥**

**निरुद्देशेत्यत्र गजसंस्थितैः** गजाः सम्यक् तिष्ठन्ति एभिरिति **गज-**

---

१. **'उष्णानि कृष्णवर्तन्ते'** इति कुं पाठः ।
२. BORI पृ. ९६६; **'बिल्वादिमुक्तजम्ब्वाम्रचम्पकैः'** इति कुं.पाठः ।

**संस्थितानि** गजपदानि तैरावृतं, अत एव निर्गताध्वदेशो यथा भवति तथा **समप्रख्यं** समभूमिसमानम् ।

**स्नुहिवेत्रकुलिङ्गाक्षैः हिन्तालैश्च समावृतम् ।**
**व्यालदंष्ट्रिगजाकीर्णं वर्जितं सर्वमानुषैः** ॥ २६ ॥

**कुलिङ्गाक्षैः** वनेक्षुभिः ।

**जगाम तौ कृष्णपार्थौ दिधक्षुः खाण्डवं वनम् ।**
**उपसृष्टं तु तं कृष्णो भ्राजमानं द्विजोत्तमम्** ॥

**दृष्ट्वा जगाम मनसा पावकोऽयमिति प्रभुः ।**
**अर्जुनो वासुदेवश्च तूर्णमुत्पत्य तस्थतुः** ॥ ४५ ॥

**तं** वक्ष्यमाणविनाशम् ।

**॥ इति अष्टाशीत्यधिकशततमोऽध्यायः ॥**

## ॥ अथ एकोननवत्यधिकशततमोऽध्यायः ॥

**इदमिन्द्रः सदा दावं खाण्डवं परिरक्षति ।**
**न च शक्नोम्यहं दग्धुं रक्ष्यमाणं महात्मना** ॥ ६ ॥

**दावं** वनम् । [1]'दवो दावः कान्तारोऽस्त्री महावनम्' इत्यमरः ।

**तमब्रवीद्धूमकेतुः प्रतिगृह्य जलेश्वरम् ।**
**चतुर्थं लोकपालानां देवदेवं सनातनम्** ॥ ३ ॥

**चतुर्थं लोकपालानाम्** इत्यत्र **चतुर्थं** स्वापेक्षया चतुर्थम् ।

---

१. अ.को. ३-३-२०६; प्र.पाठः **'दवदावौ वनारण्यवह्नी'** इति ।

**सर्वशस्त्रैरनाधृष्यं सर्वशस्त्रप्रमाथि च ।**
**सर्वायुधमहामात्रं परसैन्यप्रधर्षणम्** ॥ ७ ॥

**सर्वायुधमहामात्रम्** इत्यत्र [1]'महामात्रः प्रधानः स्यात्' इति वचनात् सर्वायुधप्रधानम् ।

॥ इति एकोननवत्यधिकशततमोऽध्यायः ॥

## ॥ अथ द्विनवत्यधिकशततमोऽध्यायः ॥

**छिद्रं न स्म प्रपश्यन्ति [2]रथयोराशुविक्रमाः ।**
**आविद्धावेव दृश्येते रथिनौ तौ रथोत्तमौ** ॥ ३ ॥

**रथयोराशुविक्रमा** इत्यत्र आशु वनाद्बहिः पलायनाय पादविक्षेपो येषां ते तथोक्ताः ।

**[3]तत्राक्षमात्रा विसृजन् धाराः शतसहस्रशः ।**
**चोदिता देवराजेन जलदाः खाण्डवं प्रति** ॥ १९ ॥

**तत्राक्षमात्रा विसृजन्** इत्यत्र **अक्षमात्राः** ईषादण्डप्रमाणाः ।

॥ इति द्विनवत्यधिकशततमोऽध्यायः ॥

## ॥ अथ त्रिनवत्यधिकशततमोऽध्यायः ॥

**शशाप तं च सङ्क्रुद्धो बीभत्सुर्जिह्मगामिनम् ।**
**पावको वासुदेवश्चाप्यप्रतिष्ठो [4]भवत्विह** ॥ ११ ॥

---

१. ह.को. २-४२७; प्र. पाठः **'प्रधानं'** इति ।
२. $K_2$,$N_{2,3}$; BORI पृ. ८४७; **'रथयोराशुचारिणोः'** इति कुं पाठः ।
३. $T_1$,$G_1$,M; BORI पृ. ८४८; **'ततोऽक्षमात्रा'** इति कुं. पाठः ।
४. **'भविष्यसि'** इति कुं.पाठः ।

**पावको वासुदेवश्च** इत्यत्र हे पार्थ तव सहायभूतः पावकः, वासुदेवः, चशब्देन भवांश्च **इह** लोके **अप्रतिष्ठः** प्रतिष्ठारहितः प्रकर्षेण स्थितिरहितः भवति भवत्विति प्रत्येकं सम्बन्धः ।

**सुखशीतानिलवहं प्रकृतिस्थार्कमण्डलम् ।**
**निष्प्रतीकारहृष्टश्च हुतभुग्विविधाकृतिः** ॥ १८ ॥

**निष्प्रतीकार** इत्यत्र निर्गतः **प्रतीकारः** इन्द्रकृतोऽन्तरायो यस्य स तथोक्तः । भावप्रधानो निर्देशः । स्ववनभक्षणस्य निष्प्रतीकारत्वात् हृष्टरूप इत्यर्थः ।

**कालदण्डं यमो राजन् शिबिकां[1] च धनेश्वरः ।**
**पाशांश्च तत्र वरुणो विचित्रां च तथाऽशनिम्** ॥ ३२ ॥

**शिबिकां च धनेश्वर** इत्यत्र शिबिकामारुह्य गतः । चशब्देन मुद्गराख्यमायुधं च समुच्चिनोति ।

॥ इति त्रिनवत्यधिकशततमोऽध्यायः ॥

## ॥ अथ चतुर्नवत्यधिकशततमोऽध्यायः ॥

**[2]गिरेर्विकीर्यमाणस्य तस्य रूपं तदा बभौ ।**
**सार्कचन्द्रग्रहस्येव नभसः [3]प्राविशीर्यतः** ॥ ५१ ॥

**गिरेर्विकीर्यमाणस्य** इत्यत्र **विकीर्यमाणस्य** शरैराकीर्यमाणस्य,

---

१. Cd; BORI पृ. ८५२; **'गदां चैव'** इति कुं पाठः ।
२. $T_1$,$G_{1.5.6}$; BORI पृ. ८५४; **'गिरेर्विशीर्यमाणस्य'** इति कुं पाठः ।
३. $T_1$,$G_{1.5.6}$,M; BORI पृ. ८५५; **'परिशशीर्यतः'** इति कुं पाठः ।

अत एव(प्र)**प्राविशीर्यतः** बहुधा शीर्यमाणशृङ्गस्य रूपं, **सार्कचन्द्रग्रहस्य** अर्कचन्द्रादिग्रहसहितस्य नभसः रूपमिव बभौ। विशीर्णशृङ्गाणां ग्रहाणां चोपमा।

**[१]तत्पातनादशब्देन त्रासिता इव चाभवन्।**
**ते वनं प्रसमीक्ष्याथ दह्यमानमनेकधा ॥ ४ ॥**

**तत्पातनादशब्देन** इत्यत्र **तस्य** गिरिशृङ्गस्य पाते सति जात नादेन शब्देन शरैर्विशीर्यमाणकाञ्चनशृङ्गशब्देन च।

**बभूव रूपमत्युग्रं सर्वभूतात्मनस्तदा।**
**समेतानां च सर्वेषां दानवानां च सर्वशः ॥ १२ ॥**

**दानवानां च सर्वश** इत्यत्र देवानां दानवानां च मध्ये।

**व्यसवस्तेऽपतन्नग्नौ साक्षात्कालहता इव।**
**न चालभन्त ते शर्म रोधःसुविषमेषु च ॥ ३० ॥**

**रोधसु विषमेषु च** इत्यत्र **रोधस्सु** वनतटेषु।

**निरीक्षितुं वै शक्नोति कश्चिद्योद्धुं कुतः पुनः।**
**एकायनगता येऽपि [२]उत्पतन्त्यत्र केचन ॥ ३४ ॥**

**एकायनगताः** एकमार्गेण **गताः** पुञ्जीभूय गताः **उत्पतन्ति** ऊर्ध्वं पतन्ति।

---

१ $T_1$,$G_1$,M; BORI पृ. ८५५; **'उत्पादनादशब्देन'** इति कुं पाठः।
२ **'निष्पतुस्तत्र'** इति कुं.पाठः।

**पेतुरन्ये महाकाया: [१]दीप्तस्य वसुरेतसः ।**
**समांसरुधिरौघैश्च वसाभिश्चापि तर्पितः ॥ ३६ ॥**

**दीप्तस्य वसुरेतस** इत्यत्र [२]'हिरण्यरेता हुतभुग्दहनः पावकोऽनल' इत्यभिधानात् **वसुरेतसः** हिरण्यरेतसः ।

**तस्मिन् वने दह्यमाने षडग्निर्न ददाह च ।**
**अश्वसेनं मयं चैव चतुरः शार्ङ्कान् तथा ॥ ४७ ॥**

[३]**शार्ङ्कान्** शार्ङ्कनामपक्षिणः ।

॥ इति चतुर्नवत्यधिकशततमोऽध्यायः ॥

## ॥ अथ पञ्चनवत्यधिकशततमोऽध्यायः ॥

**स चिन्तयन्नभ्यगच्छत्सुबहुप्रसवान्खगान् ।**
**शार्ङ्गिकां शार्ङ्को भूत्वा जरितां समुपेयिवान् ॥ १६ ॥**

[४]**शार्ङ्गिकां शा(र्ङ्ग)र्ङ्को भूत्वा** इत्यत्र जात्या शार्ङ्गकां, नाम्ना जरिताम् ।

**तस्यां पुत्रानजनयच्चतुरो ब्रह्मवादिनः ।**
**तानपास्य स तत्रैव जगाम लपितां प्रति ॥ १७ ॥**

**जगाम लपिताम्** इत्यत्र लपिताख्या अपरा तज्जातिस्था तस्यैव स्त्री । तदन्तिकं जगामेत्यर्थः ।

---

१. BORI पृ. ८५४; **'प्रदीप्ते वसुरेतसि'** इति कुं पाठः ।
२. **अ.को. १-१-५५ ;** ३. **शार्ङ्ककान्** सो.मु.पा. ।
४. **शार्ङ्गिकां** सो.मु.पा. ।

अपत्यस्नेहसंयुक्ता जरिता बह्वचिन्तयत् ।
तेन त्यक्तानसन्त्याज्यानृषीनण्डगतान्वने ॥ १९ ॥

**तेन त्यक्तान्** इत्यत्र **असन्त्याज्यान्** त्यागानर्हान् ।

तं सङ्कल्पं [1]विदित्वाऽस्य ज्ञात्वा पुत्रांश्च बालकान् ।
सोऽभितुष्टाव विप्रर्षिर्ब्राह्मणो जातवेदसम् ॥ २२ ॥

**विदित्वाऽस्य** इत्यत्र **अस्य** अग्नेः ।

त्वमन्तः सर्वभूतानां गूढश्चरसि पावक ।
त्वामेकमाहुः कवयस्त्वामाहुस्त्रिविधं पुनः ॥ २४ ॥
त्वामष्टधा कल्पयित्वा यज्ञवाहमकल्पयन् ।
त्वया विश्वमिदं सृष्टं वदन्ति परमर्षयः ॥ २५ ॥

**त्वामेकमाहुः** इत्यत्र **त्रिविधं** त्रेताग्निरूपतया त्रिविधम् । **अष्टधा** अणिमाद्यष्टैश्वर्यवत्तया ।

दहन्ति सर्वभूतानि त्वत्तो निष्क्राम्य हायनाः ।
जातवेदस्त्वयैवेदं विश्वं सृष्टं महाद्युते ॥ २८ ॥

**त्वत्तो निष्क्रम्य हायना** इत्यत्र **हायनाः** 'हय गतौ' इति धातोः दिशि दिशि सञ्चरन्त इति जलदानां विशेषणम् ।

वैशम्पायन उवाच–

एवं स्तुतस्तदा तेन मन्दपालेन पावकः ।
हव्यवाहस्तु नृपते मुनेरमिततेजसः ॥ ३१ ॥

---

१. BORI पृ. ८६१; 'विदित्वाग्नेर्ज्ञात्वा' इति कुं पाठः ।

**हव्यवाहस्तु** इत्यत्र तस्य अमिततेजसः मुनेः मन्दपालस्य हव्यं वहतीति **हव्यवाहः** इति सम्बन्धः ।

॥ इति पञ्चनवत्यधिकशततमोऽध्यायः ॥

## ॥ अथ षण्णवत्यधिकशततमोऽध्यायः ॥

**ततः प्रज्वलिते [१]शुक्रे शार्ङ्गकास्ते सुदुःखिताः ।**
**व्यथिताः परमोद्विग्ना नाधिजग्मुः परायणम्** ॥ १ ॥

'सप्तार्चिर्द(म)मुनाः शुक्र' इत्यभिधानात् **शुक्रः** वह्निः ॥

**इमे च मां कर्षयन्ति शिशवो मन्दचेतसः ।**
**अबर्हाश्चरणैर्हीनाः पूर्वेषां नः परायणाः** ॥ ४ ॥

**अबर्हाश्चरणैर्हीना** इत्यत्र **अबर्हाः** पक्षरहिताः ।

**त्रासयंश्चायमायाति लेलिहानो महीरुहान् ।**
**अजातपक्षाश्च सुता न शक्ताः सरणे मम ।**
**आदाय च न शक्तास्मि पुत्रान् सरितुमन्यथा** ॥ ५ ॥

**सरणे गमने च** इत्यत्र सरणे गमने सरितुं गन्तुम् ।

**जरितारौ कुलं [२]हीदं ज्येष्ठत्वेन प्रतिष्ठितम् ।**
**सारिसृक्कः प्रजायेत पितॄणां कुलवर्धनः** ॥ ९ ॥
**स्तम्बमित्रः तपः कुर्याद्द्रोणे ब्रह्मविदां वरः ।**

---

१. **'वह्नौ'** इति कुं.पाठः ।

२. $G_1$; BORI पृ. ८६३; **'ह्येतज्ज्येष्ठत्वेन'** इति कुं पाठः ।

**इत्येवमुक्त्वा प्रययौ पिता वो निर्घृणः पुरा ॥ १० ॥**

**जरितारौ कुलं हीदम्** इत्यत्र जरितारिरिति ज्येष्ठपुत्रस्य नाम । सारिसृक्कः स्तम्बमित्रः द्रोण इति क्रमेण त्रयाणामनुजानां नाम ।

**कमुपादाय [१] शक्येत गन्तुं कष्टाऽऽपदुत्तमा ।**
**किं नु कृत्वा कृतं कार्यं भवेदिति च विह्वला ।**
**नापश्यत्स्वधिया मोक्षं स्वसुतानां तदानलात् ॥ ११ ॥**

**कमुपादाय शक्येत** इत्यत्र आपत् कस्य उत्तमा कस्य हितकरी, न कस्यापीत्यर्थः । अतः कमुपादाय मया गन्तुं शक्येत ।

**॥ इति षण्णवत्यधिकशततमोऽध्यायः ॥**

## ॥ अथ सप्तनवत्यधिकशततमोऽध्यायः ॥

**[२] संशयं ह्यग्निरागच्छेद्दृष्टं वायोर्निवर्तनम् ।**
**मृत्युर्नोबिलवासिभ्यो बिलेस्यान्नात्र संशयः ॥ ३ ॥**

**संशयं ह्यग्निः** इत्यत्र संशयो यथा भवति तथा अग्निरागच्छेद्धि । अग्न्यगमनं तु सन्दिग्धमिति भावः । **वायोः** विपरीतवायोः सकाशात् अग्नेर्निवर्तनं दृष्टं हि ।

**शार्ङ्गका ऊचुः –**

**नत्वं मिथ्योपचारेण मोक्षयेथा भयाद्धिनः ।**
**समाकुलेषु ज्ञानेषु न बुद्धिकृतमेव तत् ॥ १२ ॥**

---

१. BORI पृ. ८६४; **'शक्येयं'** इति कुं पाठः ।
२. $N_3$,$B_5$,M; BORI पृ. ८६५; **'संशयोवह्निरागच्छेद्दृष्टं'** इति कुं पाठः ।

**हव्यवाहस्तु** इत्यत्र तस्य अमिततेजसः मुनेः मन्दपालस्य हव्यं वहतीति **हव्यवाहः** इति सम्बन्धः ।

॥ इति पञ्चनवत्यधिकशततमोऽध्यायः ॥

## ॥ अथ षण्णवत्यधिकशततमोऽध्यायः ॥

**ततः प्रज्वलिते [१] शुक्रे शार्ङ्गकास्ते सुदुःखिताः ।**
**व्यथिताः परमोद्विग्ना नाधिजग्मुः परायणम् ॥ १ ॥**

'सप्तार्चिर्द(म)मुनाः शुक्र' इत्यभिधानात् **शुक्रः** वह्निः ॥

**इमे च मां कर्षयन्ति शिशवो मन्दचेतसः ।**
**अबर्हाश्चरणैर्हीनाः पूर्वेषां नः परायणाः ॥ ४ ॥**

**अबर्हाश्चरणैर्हीना** इत्यत्र **अबर्हाः** पक्षरहिताः ।

**त्रासयंश्चायमायाति लेलिहानो महीरुहान् ।**
**अजातपक्षाश्च सुता न शक्ताः सरणे मम ।**
**आदाय च न शक्तास्मि पुत्रान् सरितुमन्यथा ॥ ५ ॥**

**सरणे गमने च** इत्यत्र सरणे गमने सरितुं गन्तुम् ।

**जरितारौ कुलं [२] हीदं ज्येष्ठत्वेन प्रतिष्ठितम् ।**
**सारिसृक्कः प्रजायेत पितॄणां कुलवर्धनः ॥ ९ ॥**
**स्तम्बमित्रः तपः कुर्याद्द्रोणो ब्रह्मविदां वरः ।**

---

१. **'वह्नौ'** इति कुं.पाठः ।
२. $G_1$; BORI पृ. ८६३; **'ह्येतज्ज्येष्ठत्वेन'** इति कुं पाठः ।

**इत्येवमुक्त्वा प्रययौ पिता वो निर्घृणः पुरा ॥ १० ॥**

**जरितारौ कुलं हीदम्** इत्यत्र जरितारिरिति ज्येष्ठपुत्रस्य नाम । सारिसृक्कः स्तम्बमित्रः द्रोण इति क्रमेण त्रयाणामनुजानां नाम ।

**कमुपादाय शक्येत[1] गन्तुं कष्टाऽऽपदुत्तमा ।**
**किं नु कृत्वा कृतं कार्यं भवेदिति च विह्वला ।**
**नापश्यत्स्वधिया मोक्षं स्वसुतानां तदानलात् ॥ ११ ॥**

**कमुपादाय शक्येत** इत्यत्र आपत् कस्य उत्तमा कस्य हितकरी, न कस्यापीत्यर्थः । अतः कमुपादाय मया गन्तुं शक्येत ।

**॥ इति षण्णवत्यधिकशततमोऽध्यायः ॥**

## ॥ अथ सप्तनवत्यधिकशततमोऽध्यायः ॥

**[2]संशयं ह्यग्निरागच्छेद्दृष्टं वायोर्निवर्तनम् ।**
**मृत्युर्नोबिलवासिभ्यो बिलेस्यान्नात्र संशयः ॥ ३ ॥**

**संशयं ह्यग्निः** इत्यत्र संशयो यथा भवति तथा अग्निरागच्छेद्धि । अग्न्यगमनं तु सन्दिग्धमिति भावः । **वायोः** विपरीतवायोः सकाशात् अग्नेर्निवर्तनं दृष्टं हि ।

**शार्ङ्गका ऊचुः –**

**नत्वं मिथ्योपचारेण मोक्षयेथा भयाद्धिनः ।**
**समाकुलेषु ज्ञानेषु न बुद्धिकृतमेव तत् ॥ १२ ॥**

---

१. BORI पृ. ८६४; **'शक्येयं'** इति कुं पाठः ।

२. $N_3$,$B_5$,M; BORI पृ. ८६५; **'संशयोवह्निरागच्छेद्दृष्टं'** इति कुं पाठः ।

**समाकुलेषु** इत्यत्र ज्ञानेषु समाकुलेषु सत्सु यत्कृतं, तत् **बुद्धिकृतं** बुद्ध्या कृतं नैव ।

**वयमग्निं समाविश्य लोकानाप्स्यसि शोभनान् ।**
**अथास्मान्न दहेदग्निरम्बायाः[1] पुनरेव नः** ॥ १५ ॥

**अम्बायाः पुनरेव न** इत्यत्र हे अम्ब नः प्रति पुनः **आयाः** आगच्छेः ।

॥ इति सप्तनवत्यधिकशततमोऽध्यायः ॥

## ॥ अथ अष्टनवत्यधिकशततमोऽध्यायः ॥

**जरितारिरुवाच –**

**पुरतः कृच्छ्रकालस्य धीमाञ्जागर्ति पूरुषः ।**
**स कृच्छ्रकालं सम्प्राप्य व्यथां नैवैति कर्हिचित्** ॥ १ ॥

**पुरतः कृच्छ्रकालस्य** इत्यत्र यः धीमान् **कृच्छ्रकालस्य** सङ्कट-प्राप्तिकालात् **पुरतः** पूर्वमेव **जागर्ति** तत्प्रशमोपायं विचार्य तिष्ठति, स इति सम्बन्धः ।

**स्तम्बमित्र उवाच –**

**ज्येष्ठस्तातो भवति वै ज्येष्ठो मुञ्चति कृच्छ्रतः ।**
**ज्येष्ठश्चेन्न प्रजानाति कनीयान्किं करिष्यति** ॥ ४ ॥

**ज्येष्ठस्तात** इत्यत्र **मुञ्चति** मोचयति ।

**द्रोण उवाच –**

**हिरण्यरेतास्त्वरितो ज्वलन्नायाति नः क्षयम् ।**

---

१. $K_{03.4}$ S; BORI पृ. ८६७; '**-रायास्त्वं**' इति कुं पाठः ।

**सप्तजिह्वाननः क्रूरो लेलिहानो विसर्पति ॥ ५ ॥**

**हिरण्यरेता** इत्यत्र नः क्षयं गृहम् ।

**जरितारिरुवाच –**

**आत्माऽसि[1] वायोः पवनः शरीरमुत वीरुधः ।**
**योनिरापश्च ते शुक्रं योनिस्त्वमसि चाम्भसः ॥ ७ ॥**

**आत्मा स वायुः** इत्यत्र हे **पवन** पावन शुक्र पावक! **आत्मा** परमात्मा, सः प्रसिद्धो वायुः, शरीरं, उत वीरुधः, आपश्च ते **योनिः** कारणम् । आत्मनः सर्वस्रष्टृत्वात्, फुत्कारवायुना अग्न्युत्पत्तेः, शरीरात् जाठराग्न्युत्पत्तेः लताकाष्ठादिभ्योप्यग्न्युत्पत्तेः योनित्वम् । 'अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमात्मनो लोहमुत्थितम्' इति वचनात् प्रलयकाले अपां चाग्नियोनित्वमिति द्रष्टव्यम् । 'अग्नेराप' इति श्रुतेः योनिस्त्वमसि चाम्भस इति तु प्रसिद्धम् ।

**सारिसृक्क उवाच –**

**माता प्रपन्ना[2] पितरं न विद्मः पक्षा जाता नैव नो धूमकेतो ।**
**न नस्त्राता विद्यते वै त्वदन्यस्तस्माद्धि[3] नः परिधत्स्वैकवीर ॥९॥**

**माता प्रपन्ना** इत्यत्र **प्रपन्ना** दूरं गता । 'पद गतौ' इति धातुः । **परिधत्स्वैकवीर** इत्यत्र **परिधत्स्व** धारय । 'डुधाञ् धारणपोषणयोः' इति धातुः ।

---

१. BORI पृ. ८६८; **'आत्माऽसि वायोर्ज्वलन शरीरमसि वीरुधाम्'** इति कुं पाठः ।

२. BORI पृ. ८६८; **'प्रणष्टा'** इति कुं पाठः ।

३. BORI पृ. ८६८; **'स्तस्मादस्मांस्त्राहि बालांस्त्वमग्ने'** इति कुं पाठः ।

**त्वमेवैकस्तपसे जातवेदो**
**नान्यस्तप्ताविद्यते गोपु देव ।**
**ऋपीनस्मान् बालकान् पालयस्व**
**परेणास्मान् प्रेहि वै हव्यवाह ॥ ११ ॥**

**त्वमेवैक** इत्यत्र **तपसां** तपनशक्त्या त्वमेव **एकः** प्रधानम् । **गोषु** किरणेषु **तप्ता** तापकर्ता अन्यः न ।

**त्वत्त एताः पुनः शुक्र वीरुधो हरितच्छदाः ।**
**जायन्ते पुष्करिण्यश्च सुभद्रश्च महोदधिः ॥ १७ ॥**

**हरितच्छदा** इत्यत्र **हरिताः** हरिद्वर्णानि **च्छदाः** पत्राणि । [१]'दलं पर्णं छदः पुमान्' इत्यमरः ।

**पिङ्गाक्ष लोहितग्रीव कृष्णवर्त्मन्हुताशन ।**
**परेणप्रेहि मुञ्चास्मान्सागरस्य [२]ग्रहानिव ॥ १९ ॥**

**सागरस्य ग्रहानिव** इत्यत्र बडबाग्निरूपेण दहन्नपि सगरस्य **ग्रहान्** प्रसिद्धमकरानिव अस्मान्मुञ्चेति योजना ।

**द्रोण उवाच –**

**इमे मार्जारकाः शुक्र नित्यमुद्वेजयन्ति नः ।**
**एतान् कुरुष्व दग्धांस्त्वं हुताशन [३]आर्तिसम्भवान् ॥ २४ ॥**

---

१. अ.को. २-४-१४
२. **'गृहानिव'** इति कुं पाठः ।
३. **'सबान्धवान्'** इति कुं. पाठः ।

**आर्तिसम्भवान्** इत्यत्र आर्तेः सम्भवो येभ्यस्तान् एतान् मार्जारानिति सम्बन्धः ।

॥ इति अष्टनवत्यधिकशततमोऽध्यायः ॥

## ॥ अथ द्विशततमोऽध्यायः ॥

**वैशम्पायन उवाच –**

**मन्दपालोऽपि कौरव्य चिन्तयामास पुत्रकान् ।**
**उक्त्वानप्यशीतांशुं[1] नैव स स्म न तप्यते ॥ १ ॥**

**मन्दपालोपि कौरव्य** इत्यत्र **अशीतांशुं** अग्निं प्रति प्रागुक्तवान् मम पुत्रान् मा दहेत्युक्तवानपि **सः** मन्दपालः **न तप्यते स्म न**, नातप्यतेति न । पुत्रस्नेहात्तापमकरोदेवेति भावः ।

**नासमञ्जसवेत्ता** इत्यत्र तेषु पुत्रेषु **असमञ्जसं** अमङ्गलम् अग्निभयात् मरणमित्यर्थः । **वेत्ता** शङ्किता न । तेषु मानसं नास्ति । किन्तु तामेवेत्यादि योजना ।

**न हि पक्षवता न्याय्यं निःस्नेहेन सुहृज्जने ।**
**पीड्यमान उपस्प्रष्टुं[2] शक्तेनात्मा कथञ्चन ॥ १२ ॥**

**न हि पक्षवता** इत्यत्र **सुहृज्जने** स्वसुहृज्जने **निःस्नेहेन** स्नेहरहितेन **पक्षवता** अन्यत्र पक्षवता पुरुषेण पीड्यमानः **आत्मा** जीवः **उपस्प्रष्टुं** उपपन्नतया करेण स्प्रष्टुमपि कथञ्चन शक्यो न । एतत् स्नेहरहितपुरुषकरस्पर्शनं न्याय्यं न हि ।

---

१. BORI पृ. ८७७; **'उक्त्वाऽपि च स तिग्मांशुं नैव शर्माधिगच्छति'** इति कुं.
२. $K_4$; BORI पृ. ८७२; **'उपद्रष्टुं'** इति कुं.पाठः ।

**भूतं हित्वा च भाव्यर्थे योऽवलम्बेत्स मन्दधीः ।**
**अवमन्येत तं लोको यथेच्छसि तथा कुरु ॥ १५ ॥**

**भूतं हित्वा** इत्यत्र **भूतं** जातमपत्यं हित्वा तथा लोकानवमत्य भविष्यत्वे भविष्यदपत्यवान् भविष्यन्, तादर्थ्ये सप्तमी । तद्भावाय ।

**तस्माद्देशादतिक्रान्ते ज्वलने जरिता पुनः ।**
**जगाम पुत्रकानेव जरिता पुत्रगृद्धिनी ॥ १८ ॥**

**तस्माद्देशात्** इत्यत्र महात्मनि ज्वलने, यत्र शा(र्ङ्ग)र्ङकाः स्थिताः तस्माद्देशात् **अतिक्रान्ते** अतिक्रम्य गते सति । यत्र शा(र्ङ्ग)र्ङकाः स्थिताः तं देशमप्यदग्ध्वा पुरतो गते सतीत्यर्थः ।

**ततोऽभ्यगच्छत्सहसा मन्दपालोऽपि भारत ।**
**अथ ते सर्व एवैनं नाभ्यनन्दंस्तदा सुताः ॥ २३ ॥**

**अथ ते सर्व** इत्यत्र ते सर्वे सुताः चिरोषितत्वात् एकवारं नाभ्यजानन्त । पुनः गुरुत्वात् स्वपितृत्वात् तपसः विशेषतश्च अभ्यजानन्त ।

**लालप्यमानमेकैकं जरितां च पुनः पुनः ।**
**नचैवोचुस्तदा किञ्चित्तमृषिं साध्वसाधु वा ॥ २६ ॥**

**लालप्यमाना** इत्यत्र जरिता लालप्यमाना आस । तैः शिशुभिः साध्वसाधु वा नोच्यत इति सम्बन्धः ।

**एवं ब्रुवन्तं दुःखां किं मां न प्रतिभाषसे ।**

**कृतवानस्मि हव्याशो नैव शान्तिमितो लभे ।**
**एवमुक्त्वा तु तां पत्नीं मन्दपालस्तदाऽस्पृशत् ॥ २८ ॥**

**कृतवानपि** इत्यत्र हव्यमश्नातीति **हव्याशोऽ**ग्निः तस्मिन् इमान् शिशून् कृतवानप्यहं **इतः** जीवद्भ्यः शिशुभ्यः परां शान्तिं लभ इति सम्बन्धः ।

**मन्दपाल उवाच –**

**न स्त्रीणां विद्यते किञ्चिदमुत्र पुरुषान्तरात् ।**
**सापत्निकमृते लोके नान्यदर्थविनाशनम् ॥ ३१ ॥**

**न स्त्रीणां विद्यत** इत्यत्र स्त्रीणां **अन्यत्र** देशान्तरे **पुरुषान्तरात्** पुरुषस्य स्वभर्तुः **अन्तरं** व्यवधानं सम्पाद्येति ल्यब्लोपनिमित्ता पञ्चमी । यत् **सापत्निकं** सपत्नीसहितत्वं तदृते किञ्चिदप्रियं न विद्यत इति योजना ।

**सप्तर्षिमध्यगं वीरमवमेने च तं मुनिम् ।**
**अपध्यानेन सा तेन धूमारुणसमप्रभा ।**
**लक्ष्याऽलक्ष्या नाभिरूपा निमित्तमिव पश्यति ॥ ३४ ॥**

**लक्ष्याऽलक्ष्या** इत्यत्र कदाचिल्लक्ष्या कदाचिदलक्ष्या कदाचिदनुकूला कदाचिन्नानुकूला च **निमित्तमिव** सेवादिनिमित्तं यथाऽस्ति तथा लक्ष्यते ।

**अपत्यहेतोः सम्प्राप्तं तथा त्वमपि मामिह ।**
**इष्टमेवं गते हि त्वं सा तथैवाद्य वर्तते ॥ ३५ ॥**

**इष्टमेवम्** इत्यत्र सा अरुन्धती एवं मद्वत् गते स्वभर्तरि इष्टं सख्यं हित्वा यथा त्वं तथैव च वर्तते ।

**नैव भार्येति विश्वासः कार्यः पुंसा कथञ्चन ।**
**हितं कार्यमनुध्याति भार्या पुत्रवती सती ॥ ३६ ॥**

**हितं कार्यम्** इत्यत्र हितं स्वहितम् ।

**॥ इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यामादिपर्वणि खाण्डववनदाहे (मयदर्शने) कविकुलतिलकभाविसमीरश्रीमद्वादिराजतीर्थपूज्यचरणविरचित-लक्षालङ्काराख्यटीकायां द्विशततमोऽध्यायः ॥**

**॥ आदिपर्व समाप्तम् ॥**

# अथ सभापर्व

## अथ मन्त्रपर्व

### ।। अथ द्वितीयोऽध्यायः ।।

**त्वया[१] त्रातोऽस्मि कौन्तेय ब्रूहि किं करवाणि ते ।**
**अहं हि विश्वकर्मा वा[२] असुराणां परन्तप ।। ८ ।।** ७/८१

**अहं हि विश्वकर्मा वा** इत्यत्र वै इति पदच्छेदः । **विश्वानि** समस्तानि **कर्माणि** दारुभिः क्रियमाणकर्माणि[३] यस्य स इति योगेन मयोऽपि विश्वकर्मा ।

**ततः कृष्णश्च पार्थश्च धर्मराजे युधिष्ठिरे ।**
**सर्वमेतत् यथावेद्य[४] दर्शयामासतुर्मयम् ।। २६ ।।**

**यथावेद्य** इत्यत्र आवेद्येति पदच्छेदः ।

**सर्वर्तुगुणसम्पन्नां दिव्यरूपां मनोरमाम् ।**
**दशकिष्कुसहस्राणि[५] मापयामास सर्वतः ।। ३२ ।।**

---

१. कुं. १ अध्यायः । ; २. **'वै'** इति कुं. पाठः ।
३. **'क्रियमाणानि कर्माणि'** सो.मु.पा. ।
४. BORI पृ. ६ ; **'समावेद्य'** इति कुं. पाठः ।
५. BORI पृ. ७ ; **'दशकिष्कुसहस्रां तां'** इति कुं. पाठः ।

**दशकिष्कुसहस्राणि मापयामास सर्वत** इत्यत्र [१]'किष्कुर्हस्ते वितस्तौ च' इत्युक्तत्वात् हस्तपरिमितो देशः किष्कुरित्युच्यते । दश-सहस्रकिष्कुपर्यन्तं सभाकरणाय भूमिं **मापयामास** 'माङ् माने' इति धातोः मानदण्डेन मानं कारयामासेत्यर्थः ।

[२]**अभीपून् प्रति जग्राह स्वयं कुरुपतिस्तदा ।**
**उपारुह्यार्जुनश्चाऽपि चामरव्यजनं सितम्** ।। १७ ।।

**अभीपून् प्रति जग्राह** इत्यत्र **अभीपून्** रथरज्जूः ।

**वैशम्पायन उवाच –**

**निवृत्य धर्मराजस्तु सह भ्रातृभिरच्युतः ।**
**सुहृत्परिवृतो राजा प्रविवेश पुरोत्तमम्** ।। ३४ ।।

**सह भ्रातृभिरच्युत** इत्यत्र **अच्युतः** भक्त्यादिगुणैश्च्युतिरहितः ।

**।। इति द्वितीयोऽध्यायः ।।**

## ।। अथ तृतीयोऽध्यायः ।।

**उत्तरेण तु कैलासं मैनाकं पर्वतं प्रति ।**
**यियक्षमाणेषु पुरा दानवेषु मया कृतम्** ।। ३ ।।

**चित्रं मणिमयं भाण्डं रम्यं बिन्दुसरः प्रति ।**
**सभायां सत्यसन्धस्य यदासीद्वृषपर्वणः** ।। ४ ।।

---

१. अ.को. ३-३-७

२. कुं. २ अध्यायः । $K_3$,$T_1$,$G_{3-5}$,M; BORI पृ. ८ ; '**अभीपून् सम्प्रजग्राह**' इति कुं. पाठः ।

**आगमिष्यामि तद्गृह्य यदि तिष्ठति भारत ॥ ५ ॥**

**उत्तरेण तु कैलासम्** इत्यत्र कैलासमुत्तरेण मैनाकपर्वतं प्रति कैलासपर्वतमारभ्य मैनाकपर्वतपर्यन्तं आयतायां बिन्दुसरोवराख्यतीर्थस्याभिमुख्ये विद्यमानायां सभायां यद्भाण्डमासीत्, तद्गृह्येति सम्बन्धः ।

**निहिता यौवनाश्वेन राज्ञा हत्वा रणे रिपून् ।**
**सुवर्णबिन्दुभिश्चित्रा गुर्वी भारसहा दृढा ॥ ७ ॥**

**यौवनाश्वेन** मुचुकुन्देन ।

**यत्रेष्टं वासुदेवेन सत्रैर्वर्षगणान् बहून् ।**
**श्रद्दधानेन सततं धर्मसम्प्रतिपत्तये ॥ १७ ॥**

**यत्रेष्टं वासुदेवेन** इत्यत्र **वासुदेवेन** नारायणेन । **प्रतिपत्तये** विश्वासाय ।

॥ इति तृतीयोऽध्यायः ॥

## ॥ अथ त्रयोदशोऽध्यायः ॥

**वैशम्पायन उवाच ––**

**[१] तां तु कृत्वा सभां श्रेष्ठां मयश्चार्जुनमब्रवीत् ।**
**भूतानां च महावीर्यो ध्वजाग्रे किङ्करो गणः ॥ १ ॥**

**तां तु कृत्वा** इत्यत्र एषा सभा रचिता । ध्वजाग्रश्च मया कृतो भविष्यति ।

---

१. कुं. ४ अध्यायः ।

**तत्र मल्ला नटा हल्ला[1]: सूता वैतालिकास्तथा ।**
**उपतस्थुर्महात्मानं धर्मपुत्रं युधिष्ठिरम्** ॥ १३ ॥

**तत्र मल्ला** इत्यत्र **हल्लाः** नानावाद्यकुशलाः ।

**[2]प्रत्यक्षदर्शी लोकस्य तिर्यगूर्ध्वमधस्तथा ।**
**साङ्ख्ययोगविभागज्ञो निर्विविक्षुरुदारधीः[3]** ॥ १० ॥

**निर्विविक्षुरुदारधीः** इत्यत्र नितरां वेष्टुमिच्छुः[4] **निर्विविक्षुः** ।

**कच्चिदर्थेन वा धर्मं धर्मेणार्थमथापि वा ।**
**उभौ वा प्रीतिसारेण न कामेन विबाधसे[5]** ॥ २२ ॥

**कच्चिदर्थेन वा धर्मम्** इत्यत्र **अर्थेन** अर्थार्जनप्रयत्नेन **धर्मं** स्वविहितधर्मं न बाधसे कच्चित् । **धर्मेण** सदा स्नानादिव्यसनेन **अर्थं** राजपदवीयोग्यार्थं न बाधसे कच्चित् । अयं सन्न्यासिनां धर्मः; न तु राज्ञ इति भावः । प्रीतिरेव **सारः** श्रेष्ठो यस्मिन् तेन कामेन **उभौ** धर्मार्थौ न विबाधसे कच्चित् । वनितादिविषयासक्तो भूत्वा धर्मार्थौ न जहासि किम् इति भावः ।

**कच्चिदात्मानमन्वीक्ष्य परांश्च जयतां वर ।**
**[6]तथा सन्धायिकर्माणि अष्टौ भारत वर्तसे[7]** ॥ २५ ॥

---

१. **'झल्लाः'** इति कुं.पाठः । ; २. **कुं. ५ अध्यायः** ।
३. S ; BORI पृ. ३६७ ; **'निर्विवित्सुः सुरासुरान्'** इति कुं. पाठः ।
४. **'विवेष्टुं'** सो.मु.पा.।; ५. BORI पृ. २१ ; **'प्रबाधसे'** इति कुं. पाठः ।
६. $M_1$ ; BORI पृ. २२ ; **'तथा सन्धाय कर्माणि'** इति कुं. पाठः ।
७. **'सेवसे'** इति कुं.पाठः ।

**तथा सन्धायिकर्माणि** इत्यत्र **सन्धायीनि** सन्धिं सम्पादयन्तीति सन्धायीनि तानि च तानि कर्माणि च । भारतस्त्वं[१] वर्तसे किं नु इति योजना ।

**कच्चिद्राजगुणैः षड्भिः सप्तोपायांस्तथाऽनघ ।**
**बलाबलं तथा सम्यक् कार्यं[२] दश निषेवसे ॥ २४ ॥**

**कच्चिद्राजगुणैः** इत्यत्र सन्धिविग्रहयानासनद्वैधीभावाश्रयाख्यैः षड्भी राजगुणैः सह सामदानभेददण्डप्रभावोत्साहमन्त्राख्यान् सप्तोपायान्, सम्यग्बलं, सम्यगबलं, **कार्यं** बले अबले सति च कर्तव्यं कर्म इति दश सदा निषेवसे किम् ।

**कच्चित्प्रकृतयः सप्त न लुप्ता भरतर्षभ ।**
**[३]आप्ताश्चैवाव्यवसिनः स्वनुरक्ताश्च सर्वशः ॥ २६ ॥**

**आप्ताश्चैवाव्यसिन** इत्यत्र व्यवसिनः विरुद्धः **अवसः** अवसायः अध्यवसायः तद्वन्तो न भवन्तीति **अव्यवसिनः** ।

**कच्चिन्न तर्कैरत्यूहैः[४] दूतैरपरशङ्किताः ।**
**[५]त्वया वा तव चामात्यैर्भिद्यते तव[६] मन्त्रितम् ॥ २७ ॥**

---

१. लक्षालङ्कारानुसारेण 'भारतः' इति पाठः महाभारतस्य मुद्रितकोशेषु नोपलभ्यते । लक्षालङ्कार एव 'भारत' इति वर्तत इति भाति ।
२. $T_1$ ; BORI पृ. २२ ; '**चतुर्दश परीक्षसे**' इति कुं.पाठः ।
३. $M_1$ ; BORI पृ. २२ ; '**आढ्यास्तथा व्यवसिनः**' इति कुं.पाठः ।
४. '**कृतकैर्दूतैर्ये चाप्यपरिशङ्किताः**' इति कुं. पाठः ।
५. $T_1$,$G_{2-5}$ ; BORI पृ. २२ ; '**त्वत्तः**' इति कुं. पाठः ।
६. $G_2$ ; BORI पृ. २२ ; '**मन्त्रितं तथा**' इति कुं. पाठः ।

**मित्रोदासीनशत्रूणां कच्चिद्वेत्सि चिकीर्षितम् ।**
**[१] उदासीनेषु वृत्तिश्च मध्यमेषूपपद्यते ॥ २८ ॥**

**कच्चिन्न तर्कैरत्यूहैः** इत्यत्र तर्कैः, एवं चेदेवं भविष्यतीत्यूहैः, **दूतैः** परेषां दूतैः **अपरशङ्किताः** परे वैरिण इति शङ्किता न भवन्तीत्य-परशङ्किताः, जात्यादिकमाच्छाद्य तव समीपे सेवकतया स्थिताः वैरिण इत्यर्थः । तैः त्वया वा तव अमात्यैर्वा तव **मन्त्रितं** आलोचनं **न भिद्यते** कच्चित् अन्यैर्न ज्ञायते कच्चिदित्यर्थः । **उदासीनेषु** त्वय्युदासीनेषु **मध्यमेषु** त्वयि च तव शत्रुषु च मैत्रीं दर्शयत्सु **वृत्तिः** तत्तदनुसारेण तव वर्तनं **उपपद्यते कच्चित्** युक्ता जायते कच्चित् । तत्तत्स्वभावाज्ञानात् तेष्वतिमैत्रीं न करोषि कच्चिदित्यर्थः ।

**कच्चिन् मन्त्रयसे नैकः कच्चिन्न बहुभिः सह ।**
**कच्चित्ते मन्त्रितो मन्त्रो न राष्ट्रं परिधावति ॥ ३३ ॥**

**कच्चिन् मन्त्रयस** इत्यत्र **एकः** स्वबन्धूनपि विहाय त्वमेक एव न मन्त्रयसे कच्चित् । **बहुभि**र्ज्ञाताज्ञातैर्बहुभिः ।

**कच्चिन्न सर्वे कर्मान्ताः [२] प्रत्यक्षास्ते विशङ्किताः ।**
**[३] परोक्षा वा महाराज मध्यं ह्यत्र प्रशस्यते ॥ ३५ ॥**

---

१. $G_{1.2}$ ; BORI पृ. २३ ; **'कच्चित्सन्धिं यथाकालं विग्रहं चोपसेवसे'** इति कुं. पाठः ।
२. **'परोक्षास्ते'** इति कुं. पाठः ।
३. S ; BORI पृ. २३ ; **'सर्वे वा पुनरुत्सृष्टाः संसृष्टं चात्र कारणम्'** इति कुं. पाठः ।

**कच्चिन्न सर्वे कर्मान्ता** इत्यत्र **कर्मान्ताः** कर्मकराः, [१]'कर्मान्तः स्यात्कर्मकरो भुजिष्यः किङ्करो मतः' इति हलायुधः । **प्रत्यक्षाः कच्चित्** स्वयमेव तान् दृष्ट्वा कर्मसु नियोजयसि कच्चित् । अथवा, परोक्षा वा अत्र प्रत्यक्षपरोक्षयोर्मध्यं केषुचित्प्रत्यक्षं केषुचित्परोक्षं चेति द्वेधाऽपि स्थितिः प्रशस्यते । सर्वस्यापि स्वमुखेनैव करणं मन्त्र्यादिष्वविश्वास-द्योतकत्वात् राज्ञो न धर्मः । सर्वेषां परमुखेनैव करणे स्वस्याप्रौढि-सूचकत्वाद्राज्ञो न धर्मः। तस्माद्दानसम्भावनादिकं स्वमुखेनैव कर्तव्यम् । बन्धनशिक्षणादिकं तु परमुखेनैव कर्तव्यमिति भावः ।

**विदुस्ते वीरकर्माणि नानवात्तानि कानिचित् ।**

**नानवात्तानि** इत्यत्र **अनवात्तानि** अनुपगृहीतानि कर्तुमनारब्धानी-त्यर्थः । तानि कर्माणि न विदुः कच्चित् । कृतं वा कृतप्रायं वा कर्म सर्वैर्ज्ञातुं शक्यते, करिष्यमाणं तु केनापि न ज्ञेयमिति भावः ।

**कच्चित्कारणिका धर्मे सर्वशास्त्रेषु कोविदाः ।**
**कारयन्ति कुमारांश्च योधमुख्यांश्च सर्वशः ॥ ३७ ॥**

**कच्चित्कारणिका** इत्यत्र [२]'परीक्षकः कारणिकः' इति वचनात्, **कारणिकाः** अस्त्रशास्त्राभ्यासेषु परीक्षकाः आचार्या इत्यर्थः ।

**कच्चित्सूत्राणि सर्वाणि गृह्णासि भरतर्षभ ।**
**हस्तिसूत्राश्वसूत्राणि रथसूत्राणि वा विभो ॥ १२४ ॥**
**कच्चिदस्त्राणि सर्वाणि ब्रह्मदण्डश्च तेऽनघ ।**
**विषयोगास्तथा सर्वे विदिताः शत्रुनाशनाः ॥ १२६ ॥**

---

१. ...क्रमानुपूर्वीकः उपलब्धपाठे न दृश्यते । ; २. अ.को. ३-१-७

**कच्चित्सूत्राणि** इत्यत्र सूचयन्ति तं तमर्थमिति **सूत्राणि** अश्वगजादि-लक्षणशास्त्राणि । ब्राह्मणदोषप्रायश्चित्ताय क्रियमाणद्रव्यदण्डो **ब्रह्म-दण्डः** ।

**[१]कच्चित्ते यास्यतो यात्रां नित्यं गच्छन्त्यनुष्ठिताः ।**
**त्वत्तश्चाराः साम दानं त्रयः पूर्वं समा गुणैः ॥ ६५ ॥**

**कच्चित्ते यास्यत** इत्यत्र **अनुष्ठिताः** त्वामनुसृत्य स्थिताः **गुणैः** विनयादिगुणैः समाः **त्रयः** त्रयस्त्रयः **चाराः** परकटके स्थातुं, तत्रत्य-वार्तामानेतुं, तदुक्तवार्तां स्वनिकटे यथावकाशं वक्तुं चेति त्रयस्त्रयश्चाराः [२]**यात्रां** दण्डयात्रायां सत्यां **पूर्वं** यात्रातः पूर्वमेव त्वत्तः **साम** प्रियवचनं **दानं** द्रव्यदानं च **गच्छन्ति** प्राप्नुवन्ति कच्चित् ।

**कच्चिन्मूलं दृढं कृत्वा परान् यासि विशाम्पते ।**
**[३]तच्च विक्रमसे जेतुं जित्वा च परिरक्षसि ॥ ६६ ॥**

**तच्च विक्रमस** इत्यत्र **तत्** परदलम् ।

**कच्चिदात्मानमेवाग्रे विजित्य विजितेन्द्रियः ।**
**परान् जिगीषसे पार्थ प्रमत्तानजितेन्द्रियान् ॥ ६४ ॥**

**कच्चिदात्मानं** इत्यत्र **आत्मानं** स्वचित्तं **विजित्वा** वशीकृत्य ।

---

१. '**कच्चित्ते यास्यतः शत्रून् पूर्वं यान्ति स्वनुष्ठिताः । साम दानञ्च भेदश्च दण्डश्च विधिवद्गुणाः ।**' इति कुं.पाठः ।
२. अत्र द्वितीया सप्तम्यर्था इति भाति ।
३. '**तांश्च**' इति कुं. पाठः ।

कच्चिदष्टादशान्येषां स्वपक्षे दश सप्त च ।[1]
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः ॥ ४१ ॥

**त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः** इत्यत्र स्वामी, अमात्याः, जनपदः, दुर्गं, दण्डः, कोशः, मित्रं चेति राष्ट्रालङ्कारभूताः सप्त प्रकृतयः । विद्वांसः, कवयः, सूताः, गायकाः, परिहासकाः,पुराणप(पा)ठकाः धर्मशास्त्रनिर्णेतारश्चेति सप्त सभालङ्काराः । प्रकृतयः कर्मकराः, भिषजः, गणकाः, सेना चेति सर्वोपकारभूताश्चतस्रः प्रकृतयः । एवमष्टादश तीर्थवत् तत्तच्चिकीर्षितविचाराय सदा सेव्यत्वात् **तीर्थानी**त्युच्यन्ते । इदं परपक्षे । स्वपक्षे तु स्वस्य स्वचारैरविचार्यत्वात् स्वामिनं राजानं विना सप्तदश प्रकृतयः । सप्तदश तीर्थानि **अविज्ञातैः** पाषण्डवेषादिना कैरप्यज्ञातैः त्रिभिस्त्रिभिश्चारकैः वेत्सि कच्चित् ।

कच्चिद्विनयसम्पन्नः कुलपुत्रो बहुश्रुतः ।
अनसूयुरनुप्रष्टा सत्कृतस्ते पुरोहितः ॥ ४३ ॥
कच्चिदग्निषु ते युक्तो विधिज्ञो मतिमानृजुः ।
हुतं च होष्यमाणं च काले वेदयते सदा ॥ ४४ ॥
कच्चिदङ्गेषु निष्णातो ज्योतिषः प्रतिपादकः ।
उत्पातेषु च सर्वेषु दैवज्ञः कुशलस्तव ॥ ४५ ॥

**कच्चिद्विनयसम्पन्न** इत्यादिश्लोकत्रयं पुरोहितगुणप्रतिपादकम् ।

अमात्यानुपधातीतान् पितृपैतामहान् शुचीन् ।
श्रेष्ठान् श्रेष्ठेषु कच्चित्त्वं नियोजयसि कर्मसु ॥ ४७ ॥

---

१. S ; BORI पृ. २४ ; '**कच्चिदष्टादशान्येषु**' इति कुं. पाठः ।

**अमात्यानुपधातीतान्** इत्यत्र **उपध** उपाधिः तेनातीतान् ।

**कच्चित्त्वां नावजानन्ति याजकाः पतितं यथा ।**
**उग्रप्रतिग्रहीतारं कामयानमिव स्त्रियः ॥ ४९ ॥**

**उग्रप्रतिग्रहीतारम्** इत्यत्र कामयानं पुरुषमुद्दिश्य **स्त्रिय इव** अति-कामुकपुरुषं स्त्रिय इवेत्यर्थः । **उग्रप्रतिग्रहीतारं** उग्रद्रव्यादिकरप्रति-ग्रहीतारं त्वां यज्ञादिसत्कर्मबहिष्कृतत्वात् पतितमिव याजकाः नाव-जानन्ति कच्चित् ।

**कच्चिद्बलस्य ते मुख्याः सर्वयुद्धविशारदाः ।**
**दृष्टाः[१] प्रदानाः विक्रान्तास्त्वया सत्कृत्य मानिताः ॥ ५१ ॥**

**दृष्टाः प्रदाना** इत्यत्र **दृष्टाः** दिने दिने दृष्टाः, **प्रदानाः** 'दो अवखण्डने' इति धातोः प्रकृष्टं **दानं** परदलखण्डनं येभ्यस्ते कच्चित् ।

**कच्चिद्बलस्य भक्तं च वेतनं च यथोचितम् ।**
**सम्प्राप्तकाले दातव्यं ददासि न विकर्षसि ॥ ५२ ॥**

**भक्तं च** इत्यत्र **भक्तं** अन्नम् । **वेतनं** जीवनार्थं दीयमानं द्रव्यम् । अन्नोपजीविनामन्नं, द्रव्योपजीविनां द्रव्यमिति यावत् ।

**कालातिक्रमणादेते भक्तवेतनयोर्भृताः ।**
**भर्तुः कुप्यन्ति दौर्गत्यात्सोऽनर्थः सुमहान् स्मृतः ॥ ५३ ॥**

**भृताः** भटाः ।

---

१. **'धृष्टावदाता'** इति कुं.पाठः ।

**कच्चित् सर्वेऽनुरक्तास्त्वां कुलपुत्राः प्रधावतः[१] ।**
**कच्चित् प्राणांस्तवार्थेषु सन्त्यजन्ति सदा युधि ॥ ५४ ॥**

**कुलपुत्राः प्रधावत** इत्यत्र **प्रधावतः** युद्धे परान् प्रति धावतः, कदाचिद् दैववशात्परावृत्य प्रधावतः तव अर्थे इत्यर्थः ।

**कच्चिन्नैको बहूनर्थान् सर्वशः साम्परायिकान् ।**
**अनुशाधि[२] यथाकामं कामात्मा शासनानि[३] च ॥ ५५ ॥**

**कच्चिन्नैको बहूनर्थान्** इत्यत्र **कामात्मा** कामलग्नचित्तस्त्वं एक एव **यथाकामं** स्वेच्छानुसारेण **साम्परायिकान्** मोक्षोपयोगिभूतान् **बहूनर्थान्** शास्त्रार्थान् निरन्तरश्रवणमननादीन्, **शासनानि** स्मृत्युक्तनित्यनैमित्तिकादिकर्मशासनानि च **नानुशाधि कच्चित्** न शिक्षसे [illegible]चित्; किमनेनेति न धिक्करोषि कच्चिदिति भावः ।

**कच्चित्पुरुषकारेण पुरुषः कर्म शोभयन् ।**
**लभते मानमत्यन्तं[४] भृतो वा वेतनं त्वयि ॥ ५६ ॥**

**कच्चित्पुरुषकारेण पुरुषः कर्म शोभयन् । लभते मानमत्यन्तं भृतो वा वेतनं त्वयि** इत्यत्र त्वयि वेतनं भृतो वा अन्यो वा **पुरुषकारेण** [illegible]ण **कर्म** युद्धकर्म शोभयन् **पुरुषः** शूरपुरुषः त्वत्तः अत्यन्तं **मानं** [illegible] लभते कच्चित् ।

---

१ 'प्रधानतः' इति कुं. पाठः ।
२ $S_1$,$K_4$,G,$M_2$ ; BORI पृ. २६ ; 'अनुशास्ति' इति कुं.पाठः ।
३ $M_{1 (int\ lin, sec.m.)}$; BORI पृ. २६ ; 'शासनातिगः' इति कुं.पाठः ।
४ S , BORI पृ. २६ ; 'मानमधिकं भूयो वा भक्तवेतनम्' इति कुं पाठः ।

**कच्चिद्दारान् मनुष्याणां तवार्थे मृत्युमीयुषाम् ।**
**व्यसने[1] चाभ्युपेतानां बिभर्षि भरतर्षभ ॥ ५८ ॥**

**व्यसने (वा)चाभ्युपेतानाम्** इत्यत्र **अभ्युपेतानां** स्वशरणं गतानां व्यसने सति बिभर्षि कच्चिदित्यन्वयः ।

**कच्चिद्भयादुपगतं क्षीणं वा रिपुमागतम् ।**
**युद्धे वा विजितं पार्थ पुत्रवत्परिरक्षसि ॥ ५९ ॥**

**विजितं** युद्धे जये सति हस्तगृहीतम् ।

**कच्चिद्व्यसनिनं शत्रुं निशम्य भरतर्षभ ।**
**अभियासि जवेनैव समीक्ष्य त्रिविधं बलम् ॥ ६१ ॥**

**समीक्ष्य त्रिविधं बलम्** इत्यत्र स्वभुजबलं स्वसेनाबलं स्वदैवबलं चेति त्रिविधम् ।

**यात्रामारभसे दिष्ट्या प्राप्तकालमरिन्दम ।**
**पार्ष्णिमूले[2] च विज्ञाय व्यवसायं पराजयम् ॥ ६२ ॥**

**पार्ष्णिमूले च** इत्यत्र **पार्ष्णिः** पार्ष्णिग्राहकः **मूलं** मूलभूतधनादिकं ते उभे च विज्ञायेत्यर्थः ।

**कच्चिदष्टाङ्गसंयुक्ता चतुर्विधबला चमूः ।**
**बलमुख्याः[3] सुनीता ते द्विषतां प्रतिबर्धिनी ॥ ६७ ॥**

**कच्चिदष्टाङ्गसंयुक्ता** इत्यत्र अष्टभिरङ्गैः चतुर्विधसेनाङ्गैः यन्तृसारथि-

---

१. **'व्यसनं'** इति कुं.पाठः । ; २. **'पार्ष्णिमूलं'** इति कुं. पाठः ।
३. **'बलमुख्यैः'** इति कुं.पाठः ।

सूतचर्मवर्मशरचापायुधाख्यैः संयुक्ता **चतुर्विधबला** हस्त्यश्वरथपा(प)-दाताख्यचतुर्विधबलवती चमूः **बलमुख्या** बलेन सत्वेन मुख्या ।

**कच्चिल्लवं च मुष्टिं च परराष्ट्रे परन्तप ।**
**[१]अभियाय महाराज [२]विहंसि समरे रिपून्** ॥ ६८ ॥

**कच्चिल्लवं च मुष्टिं च** इत्यत्र 'व्रीहिशाल्यादिकं धान्यं लूयते यल्लवं तु तत् । कार्पासमाषमुद्गाद्यं मुष्टि मुष्टिग्रहं यतः' इति वचनात् **लवं** 'लूञ् छेदने' इति धातोः लकुटेन च्छेद्यं व्रीहिशाल्याद्यं लवमित्युच्यते । कार्पासमाषमुद्गाद्यं मुष्टिनैवोन्मूल्यत्वात् मुष्टिरित्यभिधीयते । रिपून् **अभियाय** अभितः प्राप्य परराष्ट्रे द्विविधमिदं धान्यं विहंसि कच्चित् ।

**कच्चित् [३]कोशं च गोष्ठं च वाहनं परमायुधम् ।**
**आयश्च कृतकल्याणैस्तव भक्तैरनुष्ठितः** ॥ ७१ ॥

**कच्चित्कोशम्** इत्यत्र कोशं गोष्ठं वाहनं परमायुधं चोद्दिश्य योऽयं **आयः** द्रव्यलाभः, सोऽनुष्ठितः कच्चित् ।

**कच्चिदाभ्यन्तरेभ्यश्च बाह्येभ्यश्च विशाम्पते ।**
**रक्षस्यात्मानमेवाग्रे तांश्च [४]तेभ्यो मिथश्च तान्** ॥ ७२ ॥

**कच्चिदाभ्यन्तरेभ्य** इत्यत्र आभ्यन्तराः, सूतसेनापतिसादिनिषादि-

---

१ $T_1, G_4$ ; BORI पृ. २७ ; **'अविहाय'** इति कुं. पाठः ।

२ $D_{(except\ D4)}, G_4, V_1, B_{2.5}, M_2$ ; BORI पृ. २७ ; **'निहंसि'** इति कुं. पाठः ।

३ **'कोशश्च कोष्ठं द्वारमायुधम्'** इति कुं. पाठः ।

४ **'तेभ्यो'** इति कुं. पाठः ।

पुरव्यावहारिकराष्ट्रान्तपालादयो बाह्याः; तेभ्यः अग्रे प्रथमं आत्मानमेव रक्षसि कच्चित्। तेषाम(भ्यु)त्युन्नतावप्यात्मक्षयः। अत्यवमानेऽप्यात्मक्षयः । अतस्तान् मध्यमपरिपाट्या[१] पोषयसि कच्चिदित्यर्थः । **तान्** उभयान्, **तेभ्यः** आन्तरेभ्यो बाह्येभ्यश्च रक्षसि कच्चित् । आन्तरबाह्ययोरन्योन्यं कलहो यथा न भवति तथा रक्षसि किम् । **तान्** आन्तरान् **तान्** बाह्यांश्च मिथः रक्षसि कच्चित्।

**कच्चिन्न पाने द्यूते वा क्रीडासु प्रमदासु वा[२]।**
**प्रतिजानन्ति पूर्वाह्ले व्ययं व्यसनजं तव** ॥ ७३ ॥

**कच्चिन्न पाने द्यूते वा** इत्यत्र अह्नः पूर्वं विद्यमाना रात्रिः पूर्वाह्लपदेनोच्यते । तत्र क्रियमाणे **पाने** मधुपाने **व्यसनजं** चित्तभ्रमाख्यव्यसनाज्जातं **व्ययं** राज्यमपि तवैव तिष्ठत्विति स्त्रीषु कृतं व्ययं, **द्यूते** अक्षक्रीडादिद्यूते **क्रीडासु** जलक्रीडादिक्रीडासु **प्रमदासु** अतिप्रियस्त्रीषु वा **व्यसनजं** स्त्रीव्यसनाज्जातं तव **व्ययं** हारकङ्कणादिव्ययं **न प्रतिजानन्ति** बाह्या जना न प्रतिजानन्ति कच्चित्।

**कच्चिज्ज्ञातीन् गुरून् वृद्धान् वणिजः शिल्पिनः श्रितान्।**
**अभीक्ष्णमनुगृह्णासि धनधान्यैः[३] सुदुर्गतान्** ॥ ७५ ॥

**सुदुर्गतान्** सुष्ठु दुरवस्थागतान्।

---

१. **-परिमित्या (परिपंक्त्या)** इति श्रीसोदावादिराजमठतः मुद्रितपुस्तके पाठान्तरम्।

२. $S_1$,$K_1$,$G_{1,3,6}$,M ; BORI पृ. २८ ; **'च'** इति कुं. पाठः।

३. $G_6$ ; BORI पृ. २८; **'धनधान्येन दुर्गतान्'** इति कुं.पाठः।

**कच्चिच्चायव्यये युक्ताः सर्वे गणकलेखकाः ।**
**अनुतिष्ठन्ति पूर्वाह्णे नित्यमायं व्ययं तव ॥ ७६ ॥**

'आयव्ययेन' इति पाठे आयव्ययेन ज्ञापितेनेत्यर्थः ।

**कच्चिन्न लुब्धाश्चौरा वा वैरिणो वा विशाम्पते ।**
**अप्राप्तव्यवहारा वा तव कर्मस्वनुष्ठिताः ॥ ७९ ॥**

**अप्राप्तव्यवहारा वा** इत्यत्र **अप्राप्तव्यवहाराः** अज्ञातव्यवहाराः ।

**कच्चिद्राष्ट्रे तटाकानि पूर्णानि च बृहन्ति च ।**
**भागशो विनिविष्टानि न कृषिर्देवमातृका ॥ ८१ ॥**

**भागशो विनिविष्टानि** इत्यत्र **भागशः** तत्तदुचितभागैः **विनिविष्टानि** विशेषेण निर्दिष्टानि तव राज्ये सर्वाऽपि कृषिः **देवमातृका** देवकृतवृष्टिरेव मातेव माता यस्याः सा न हि कच्चित् । किन्तु तटाकादिमातृकाऽप्यस्ति । अतोऽयं विचार इति भावः ।

**कच्चिन्न भक्तं बीजं च कर्षकस्यावसीदति ।**
**प्रति[१] गुञ्जशतं वृद्ध्या ददास्यृणमनुग्रहम् ॥ ८२ ॥**

**प्रति गुञ्जशतं[२] वृद्ध्या** इत्यत्र **प्रति** एकैकं कृषीवलं प्रति **गुञ्जशतं** शतगुञ्जापरिमितं द्रव्यं **वृद्ध्या** तदुचितवृद्ध्या ऋणं ददासि कच्चित् इत्यर्थः ।

**कच्चित् स्वनुष्ठिता तात वार्ता ते साधुभिर्जनैः ।**
**वार्तायां संश्रितस्तात लोकोऽयं सुखमेधते ॥ ८३ ॥**

---

१ S.G$_5$ ; BORI पृ. २८; **'प्रत्येकं च शतं'** इति कुं.पाठः ।

२ **'गुञ्जाशतं'** सो.मु.पा.।

**कच्चित् स्वनुष्ठिता** इत्यत्र **वार्ता** वृद्धिजीवनरूपा वैश्यवृत्तिः **स्वनुष्ठिता** सुष्ठु अनुष्ठिता; अल्पीयसीं वृद्धिमादाय अनुष्ठितेत्यर्थः ।

**कच्चिच्छूराः कृतप्रज्ञाः पञ्च पञ्च स्वनुष्ठिताः ।**
**क्षेमं कुर्वन्ति [१]संहृत्य राजन् जनपदे तव** ॥ ८४ ॥

**पञ्च पञ्च स्वनुष्ठिता** इत्यत्र **स्वनुष्ठिताः** ग्रामे ग्रामे सम्यगर्पिताः । **संहृत्य** रिपुकटकाद्भये सति पुञ्जीभूय ।

**कच्चिन्नगरगुप्त्यर्थं ग्रामा नगरवत्कृताः ।**
**ग्रामवच्च कृता [२]रक्षा ते च सर्वे त्वदर्पणाः** ॥ ८५ ॥

**कच्चिन्नगरगुप्त्यर्थम्** इत्यत्र **ग्रामाः** नगरस्य परितो विद्यमाना ग्रामाः, **नगरवत्** परिखाप्राकारादिना नगरोपमाः कृताः कच्चित् । **ग्रामवत्** स ग्रामो यावदायामवान् तद्वत् जनान् सम्पूर्य रक्षा कृता कच्चित् । **त्वदर्पणाः** त्वत्त एव **अर्पणं** तत्र स्थापनं येषां ते तैरन्तैः कृतभटाश्चेत् कदाचित् [३]तेन सह तवैव विरोधं कुर्युरिति भावः ।

**[४]कच्चिद्बलेनानुमताः समानि विषमाणि च ।**
**पुराणि [५]चाराः साध्यक्षाः चरन्ति विषये तव** ॥ ८६ ॥

**कच्चिद्बलेन** इत्यत्र **बलेन** सदा सञ्चरणसत्वेन, **अनुमताः** सम्मताः, **साध्यक्षाः** महानगरे स्वनायकसहिताः चाराः **समानि** लोकसम्मत-

---

१. **'संहत्य'** इति कुं.पाठः ।; २. **'प्रान्तास्ते च'** इति कुं.पाठः ।
३. **'ते'** सो.मु.पा.।
४. $K_{1,3,4}$,$\tilde{N}_1$,$B_1$,$D_4$,S ; BORI पृ. २९; **'कच्चिद्बलेनानुगताः'** इति कुं. पाठः ।
५. $K_2$,$T_1$,$G_{3,5}$,$M_1$ ; BORI पृ. २९; **'चोरान्निघ्नन्तः'** इति कुं.पाठः ।

चरित्राणि, **विपमाणि** विषमचरित्राणि च **चरन्ति** आचरन्ति । पुराणि उद्दिश्य **चरन्ति** सञ्चरन्ति ।

**[१]कच्चिचारान्निशि श्रुत्वा तदर्थमनुचिन्त्य च ।**
**प्रियाण्यनुभवन् शेषे न त्वमन्तःपुरे नृप ॥ ८८ ॥**

**कच्चिचारान्निशि** इत्यत्र चारादिति पञ्चमी ।

**कच्चिद् द्वौ प्रथमौ यामौ रात्रेः सुप्त्वा विशाम्पते ।**
**सञ्चिन्तयसि धर्मार्थौ याम उत्थाय पश्चिमे ॥ ८९ ॥**

**कच्चिद् द्वौ प्रथमौ** इत्यत्र 'यामात्परत एवाथ स्वपेत्' इति वचनात् पूर्वयामादुपरितनौ चतुर्थयामात्प्रथमावित्यर्थः ।

**[२]कच्चिच्छरीरमाबाधमौषधैर्नियमेन वा ।**
**मानसं वृद्धसेवाभिः सदा पार्थापकर्षसि ॥ ९३ ॥**

**कच्चिच्छरीरम्** इत्यत्र **आबाधं** दुःखम् ।

**कच्चिद्वैद्याश्चिकित्सायामष्टाङ्गायां विशारदाः ।**
**सुहृदश्चानुरक्ताश्च शरीरे ते हिताः सदा ॥ ९४ ॥**

**कच्चिद्वैद्याश्चिकित्सायाम्** इत्यत्र **अष्टाङ्गायाम्** औषधसङ्ग्रहः, पेषणं, [illegible]यातपाभ्यां तापः, रसयोगः, ना(डि)डीपरीक्षा, अनुपानं, औषध-[illegible]नं, पथ्यं चेति अष्टाङ्गायाम् ।

---

१. BORI पृ. २९; **'कच्चिदात्ययिकं'** इति कुं.पाठः ।

२. $K_{1}$,$D_{n2}$,$G_{3.5.6}$ ; BORI पृ. ३०; **'कच्चिच्छारीर-'** इति कुं.पाठः ।

**कच्चिन्न लोभात् मोहाद्वा मानाद्वापि विशाम्पते ।**
**अर्थिप्रत्यर्थिनः प्राप्तान्नापास्यसि कथञ्चन ॥ ९५ ॥**

**अर्थिप्रत्यर्थिन** इत्यत्र **अर्थिनः** याचकान् **प्रत्यर्थिनो** वैरिणः **नापास्यसि** न त्यजसि । धनैरेकं [१] तर्पयसि शरैरपरं तर्पयसि कच्चित् इति भावः ।

**कच्चित्ते [२] सर्ववैद्येषु [३] गुणेनार्वा प्रवर्तते ।**
**ब्राह्मणानां च [४] तत्सुष्ठु तव नैःश्रेयसी शुभा ॥ १०० ॥**

**कच्चित्ते सर्ववैद्येषु** इत्यत्र ते **अर्वा** अश्वः । [५] 'अर्वा गन्धर्वोऽश्वः सप्तिर्वाजी तुरङ्गमस्तुरगः' इति हलः । **सर्ववैद्येषु** सकलविद्यासम्बन्धिषु नानाविधविद्यावस्तुष्वित्यर्थः । गुणेन वर्तते कच्चित्; बलेन तानुल्लङ्घ्य न गच्छति कच्चिदित्यर्थः । **सुष्ठु** शोभनम् ।

**कच्चित्तव गृहेऽन्नानि स्वादून्यश्नन्ति वै द्विजाः ।**
**गुणवन्ति गुणोपेतास्तवाध्यक्षं सदक्षिणम् ॥ १०२ ॥**

**गुणवन्ति** इत्यत्र **गुणेन** विनयादिगुणेन **उपेताः** प्राप्ता इति द्विजानां विशेषणम् ।

---

१. **'तर्पयन् सुशरैः'** सो.मु.पा.।
२. $S_{(G4.om.)}$ ; BORI पृ. ३०; **'सर्वविद्यासु'** इति कुं.पाठः ।
३. **'गुणतोऽर्चा'** इति कुं. पाठः ।
४. $G_{2,4}$ ; BORI पृ. ३१; **'साधूनां'** इति कुं. पाठः ।
५. प्र.पाठे एवमानुपूर्वीकः नोपलभ्यते । प्र.पाठस्त्वेवं वर्तते – **'अर्वती वडवा वामी प्रसूता वाजिनी स्मृता'** ह.को. २.४४०

[1] कच्चिदार्यविशुद्धात्मा हारितश्चोरकर्मणि ।
अदृष्टशास्त्रकुशलैर्न लोभाद्वध्यते शुचिः ॥ १०८ ॥

**कच्चिदार्यविशुद्धात्मा** इत्यत्र **अदृष्टशास्त्रकुशलैः** अविवेकिभिः, चोरकर्मणीति निमित्तसप्तमी । चौर्याख्यनिमित्तात् **हारितः** देशान्तरं प्रापितः **विशुद्धात्मा** वस्तुगत्या विशुद्धात्मा इति सम्बन्धः ।

[2] दृष्टो गृहीतस्तत्कारि तज्ज्ञैर्दृष्टः [3] सकारणैः ।
कच्चिन्न मुच्यते स्तेनो द्रव्यलोभान्नरर्षभ ॥ १०९ ॥

**दृष्ट** इत्यत्र **सकारणैः** पदशोधनादिकारणसहितैः **तज्ज्ञैः** चौर्यशोधने निपुणैः मामिकैः **दृष्टः** चोर इति निर्णीतः **दृष्टः** त्वया च दृष्टः ।

उत्पन्नान् कच्चिदाढ्यस्य दरिद्रस्य च भारत ।
अर्थान्न [4] पथ्या पश्यन्ति तवामात्या हृता धनैः ॥ ११० ॥

**अर्थान्न पथ्या** इत्यत्र **पथ्याः** त्वदमात्यत्वात् **पथ्येव** मार्ग एव गन्तुं योग्याः ते अमात्याः अर्थेन **हृताः** सन्तः तं नाशयेति केनचिद्दत्तधनैः हृताः सन्त इत्यर्थः । आढ्यस्य दरिद्रस्य वा अर्थान्न पश्यन्ति कच्चित् ।

नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रताम् ।
अदर्शनं ज्ञानवतामालस्यं पञ्चवृत्तिताम् ॥ १११ ॥

**नास्तिक्यम्** इत्यत्र **दीर्घसूत्रता** [5] 'दीर्घसूत्रश्चिरक्रियः' इत्यभिधानात् चिरकालपर्यन्तमालोच्य कर्ता **दीर्घसूत्रः** तस्य भावः ।

---

१. 'कच्चिदार्यो विशुद्धात्मा क्षारितश्चौरकर्मणि' इति कुं.पाठः । २.'दुष्टो' कुं. ३. BORI पृ. ३२; 'सकारणः' इति कुं. पाठः । ; ४.'मिथ्या' इति कुं. पाठः
५. अ.को. ३-१-१७

**एकचिन्तनमर्थानामनर्थज्ञैश्च चिन्तनम् ॥ १११ ॥**

**एकचिन्तनम्** इत्यत्र अर्थानाम् **एकचिन्तनं** एकाग्रचिन्तनम् ।

**द्रव्योपकरणं कच्चित्सर्वदा सर्वशिल्पिनाम् ।**
**चातुर्मास्यादधिकृतं[1] नियतं सम्प्रयच्छसि ॥ १२२ ॥**

**चातुर्मास्यादधिकृतम्** इत्यत्र **चातुर्मास्यात्** मासचतुष्टयं मासचतुष्टयमतीत्य ।

**कच्चित्सूत्राणि सर्वाणि गृह्णासि भरतर्षभ ।**
**हस्तिसूत्राश्वसूत्राणि रथसूत्राणि वा विभो ॥ १२४ ॥**

**कच्चित्सूत्राणि** इत्यत्र **सूत्राणि** तत्तज्जातीनां सूचनात् गजादिशास्त्ररहस्यानि ।

**[2]कालचक्रं च साक्षाच्च भगवान् हव्यवाहनः ।**
**नरा दुष्कृतकर्माणो दक्षिणायनमृत्यवः ॥ ३१ ॥**

**नरा दुष्कृतकर्माण** इत्यत्र सोढुमशक्यं दुस्सहमितिवत् कर्तुमशक्यं **दुष्कृतं** तादृशं **कर्म** शुभकर्म येषां ते तथोक्ताः ।

**[3]नीलपीतैः सिताः श्यामैः सितैर्लोहितकैरपि ।**
**अवतानैस्तथा गुल्मैर्मञ्जरीजालधारिभिः ॥ ३ ॥**

**अवतानैस्तथा गुल्मैः** इत्यत्र **अव** अधस्तादेव **तानो** विस्तारो येषां ते ।

---

१. **'चातुर्मास्यावरं सम्यङ्नियतं'** इति कुं. पाठः । ; २. कुं. ८ **अध्यायः** ।
३. कुं. ९ **अध्यायः** ।

[1]उपतिष्ठन्ति धनदं गन्धर्वाप्सरसां गणाः ।
अनिशं [2]गीतवादित्रैर्नृत्तगीतैश्च सा सभा ॥ १४ ॥

अनिशम् इत्यत्र **गीतवादित्रैः** वेण्वाद्यैः ।

[3]दिव्यैर्नानाविधैर्भावै[4]र्भावद्भिरमितप्रभैः ॥ १५ ॥

**दिव्यैर्नानाविधैः** इत्यत्र **भावद्भिः** भा प्रभा तद्वद्भिः ।

नानारूपैरिव कृता मणिभिः सा सुभास्वरैः ।
स्तम्भैर्न च धृता सा तु शाश्वती न च सा क्षरा ॥ १४ ॥

**न च सा क्षरा** इत्यत्र **क्षरा** नाशवती न च ।

[5]अति सूर्यं च चन्द्रं च शिखिनं च स्वयम्प्रभा ।
दीप्यते नाकपृष्ठस्था भर्त्सयन्तीव भास्करम् ॥ १६ ॥

**अति सूर्यं च** इत्यत्र **अति** अतिक्रम्य ।

[6]एक एव तु राजर्षिर्हरिश्चन्द्रो महामुने ।
कथितस्ते [7]सभानित्यो देवेन्द्रस्य महात्मनः ॥ ६ ॥

**कथितस्ते सभानित्य** इत्यत्र सभा नित्या यस्येति विग्रहः ।

[8]पिताऽऽह त्वा च कौन्तेय पाण्डुः कौरवनन्दन ।
हरिश्चन्द्रे श्रियं दृष्ट्वा नृपतौ जातविस्मयः ॥ २८ ॥

---

१. कुं. १० अध्यायः । ; २. 'दिव्यवादित्रै-' इति कुं.पाठः ।
३. कुं. ११ अध्यायः ।; ४. 'र्भासद्भि-' इति कुं.पाठः ।
५. 'अतिचन्द्रं च सूर्यं' इति कुं.पाठः ।; ६. कुं. १२ अध्यायः
७. BORI पृ. ६२ ;'सभायां वै' इति कुं.पाठः । ; ८.'पिता च त्वाऽऽह' कुं.

**पिताऽऽह त्वा च कौन्तेय** इत्यत्र **त्वा** त्वां पिता पाण्डुः आहेति सम्बन्धः।

**[१]क्रियतां दीयतां देयं मुक्तकोपो बलान्वितः।**
**साधुधर्मेति [२]पार्थस्य नान्यच्छ्रूयेत भाषितम् ॥ ८ ॥**

**मुक्तकोपो बलान्वित** इत्यत्र मुक्तकोपो भव, बलान्वितो भव, साधुधर्मा भव, यज्ञादिकं क्रियतां, देयं दीयतां **इति** एवं पार्थस्य भाषितं **श्रूयेत** अश्रूयतेत्यर्थः।

**निकामवर्षाः स्फीताश्च आसन् जनपदास्तथा।**
**[३]वार्धुषीर्यज्ञसन्तानः गोरक्षां कर्षणं वणिक् ॥ १३ ॥**

**विशेषात् सर्वमेवैतत्सञ्जज्ञे राजकर्मणा ॥ १४ ॥**

**वार्धुषीर्यज्ञसन्तान** इत्यत्र **वार्धुषीः** वृद्धिजीवनं कुर्वन् सर्ववर्णानां विशेषाद्राजकर्मणि च घृतक्षीरदानादिना यज्ञस्य सम्यक् **तानः** विस्तारः यस्मात्स वणिक् गोरक्षां कर्षणं च **जज्ञे** जनयामासेति सम्बन्धः।

**यस्मिन्नधिकृतः सम्राड् भ्राजमानो महायशाः।**
**यत्र राजन् दश दिशः पितृतो मातृतस्तथा।**
**अनुरक्ताः प्रजा आसन्नागोपाला द्विजातयः ॥ १९ ॥**

**यस्मिन्** राजसूये।

---

१. कुं.पाठानुसारेण अत्र त्रयोदशोऽध्यायः। $T_1, G_{3-6}$,M ; BORI पृ. ६६; **'सर्वेषां दीयतां देयं मुष्णन्कोपमदावुभौ।'** इति कुं.पाठः।

२. S ; BORI पृ. ६६; **'धर्मेति'** इति कुं.पाठः।

३. **'वार्षुधी यज्ञसत्वानि गोरक्षं'** इति कुं.पाठः।

येनाभिषिक्तो नृपतिर्वारुणं गुणमृच्छति ।
तेन राजाऽपि तं कृत्स्नं सम्राड् गुणमभीप्सति ॥ २२ ॥

**येनाभिषिक्त** इत्यत्र **येन** राजसूयाभिषेकेण ।

[१] दर्विहोमानुपादाय सर्वान् यः प्राप्नुते क्रतून् ।
अभिषेकं च यज्ञान्ते सर्वजित्तेन चोच्यते ॥ २५ ॥

**दर्विहोमानुपादाय** इत्यत्र स्रुचि क्रियमाणः चर्वाद्यसाधारणहोमो दर्विहोमः ।

स धर्म्यं पाण्डवस्तेषां वचः श्रुत्वा विशाम्पते ।
धृष्टमिष्टं वरिष्ठं च जग्राह मनसाऽरिहा ॥ २८ ॥

**धृष्टमिष्टम्** इत्यत्र **धृष्टं** धैर्ययुक्तम् ।

श्रुत्वा सुहृद्वचस्तच्च जानंश्चाप्यात्मनः क्षमम् ।
[२] सम्प्रशस्तः क्रियारम्भः परीक्षामुपचक्रमे ॥ २९ ॥

**सम्प्रशस्त** इत्यत्र क्रियारम्भे कर्षणादिना क्रियमाणभूपरीक्षायाम् ।

वैशम्पायन उवाच –

चतुर्भिर्भीमसेनाद्यैर्भ्रातृभिः सहितो हितम् ।
एवमुक्तस्तथा पार्थो धर्म एव मनो दधे ॥ ३० ॥

**चतुर्भिर्भीमसेनाद्यैः** इत्यत्र **हितं** हितवचनं उक्तः ।

---

१. **'दर्वी'** इत्यपि वादिराजीयपाठः दृश्यते ।
२. G$_{1.3.6}$ ; BORI पृ. ६८; **'स प्रशस्तक्रियारम्भः'** इति कुं. पाठः ।

युधिष्ठिर उवाच –

**भवन्तो राजसूयस्य सम्राडर्हस्य सुक्रतोः ।**
**श्रद्दधानस्य वदत ममावाप्तिः कथं भवेत्** ॥ ३६ ॥

**भवन्तो राजसूयस्य** इत्यत्र भवन्तः शंसन्त्विति योग्यपदाध्याहारः ।

**अर्जुनेन यमाभ्यां च गुरुवत्पर्युपासितः ।**
**तं विश्रान्तं शुभे देशे क्षणिनं कल्पमच्युतम् ।**
**धर्मराजः समागम्य ज्ञापयत्[1] स्वप्रयोजनम्** ॥ ५४ ॥

**तं विश्रान्तम्** इत्यत्र **क्षणिनं** दत्तावसरम् ।

[2]**कृतोऽयं कुलसङ्कल्पः क्षत्रियैर्वसुधाधिप ।**
**निदेशवाग्भिस्तत्तेह विदितं भरतर्षभ** ॥ ३ ॥

**निदेशवाग्भिः** इत्यत्र **निदेशवाग्भिः** ऋषीणामादेशवाग्रूपैः पुराणैः ।

**ऐलस्येक्ष्वाकुवंशस्य प्रकृतिं परिचक्षते ।**
**राजानः श्रेणिबद्धाश्च तथाऽन्ये क्षत्रिया भुवि** ॥ ४ ॥

**ऐलस्येक्ष्वाकुवंशस्य** इत्यत्र **इक्ष्वाकुवंशस्य** इक्ष्वाकुकन्यावंशत्वादिक्ष्वाकुवंशं **ऐलस्य,** ऐलं पुरूरवसं, **प्रकृतिं** सोमवंशस्य मूलकारणमित्यर्थः ।

**प्रभुर्यस्तु परो राजा यस्मिन्नेकवशे जगत् ।**
[3]**तत्साम्राज्यं जरासन्ध प्राप्तो भवति योनितः** ॥ १० ॥

---

१. **'ज्ञापयत्'** इत्ययं छान्दसप्रयोगः इति भाति ।; २. कुं. १४ अध्यायः ।
३. BORI पृ. ७२; **'स साम्राज्यं महाराज ... योगतः'** इति कुं. पाठः ।

**तत्साम्राज्यम्** इत्यत्र **तत्साम्राज्यं** ययातिना अनुभूतं साम्राज्यं **योनितः** जन्मारभ्य खण्डाधिपतींस्तान् स [१] स्ववशे कृत्वा ययातिवत्सर्वं राज्यं जरासन्धः स्वयमेव पालयतीति भावः ।

**प्रियाण्याचरतः प्रह्वान् सदा सम्बन्धिनस्ततः ।**
**भजतो न [२] भजन्त्यस्मादप्रियेषु व्यवस्थितः ॥ २३ ॥**

**भजतो न भजन्ति** इत्यत्र **अस्मात्** मत्सम्बन्धाख्यकारणात् प्रियेषु व्यवस्थितो मा । भीष्मकादिषु प्रियं न करोतीत्यर्थः ।

**अथ हंस इति ख्यातः कश्चिदासीत् महान्नृपः ।**
**[३] नरोऽन्यो निहतस्तत्र सङ्ग्रामेऽष्टादशावृतः [४] ॥ ४३ ॥**

**अथ हंस इति ख्यात** इत्यत्र **अन्यः** डि(भि)बिकाग्रजहंसादन्यः कश्चिन्**नरः** मनुष्यश्च हंसाभिध आसीत् । **अष्टादशावृतः** अष्टादशाक्षौहिणीसेनावृतः सः अन्यो हंसः निहतः ।

**तौ स राजा जरासन्धः श्रुत्वा च निधनं गतौ ।**
**पुरं [५] निवेश्य मनसा प्रययौ भरतर्षभ ॥ ४७ ॥**

**पुरं निवेश्य** इत्यत्र पुरमिति रेफान्तस्त्रीलिङ्गपूःपदस्य द्वितीया ।

**सामर्थ्यवन्तः सम्बन्धाद्गोमन्तं समुपाश्रिताः ।**

---

१. **'सर्वान्'** सो.मु.पा.।
२. $G_3$ ; BORI पृ. ७४; **'भजन्त्यस्मानप्रियेषु'** इति कुं.पाठः ।
३. S ; BORI पृ. ७६; **'रामेण स हतस्तत्र'** इति कुं.पाठः ।
४. $M_{1(inf.lin.)}$ ; BORI पृ. ७६; **'-वरे'** इति कुं. पाठः ।
५. **'शून्यन'** इति कुं. पाठः ।

**[१]त्रियोजनायुतं सद्म त्रिस्कन्धं योजनावधि ॥ ५७ ॥**
**योजनान्ते शतद्वारं वीरविक्रमतोरणम् ॥ ५८ ॥**

**त्रियोजनायुतम्** इत्यत्र **योजनया** एकयोजनया **युतं** सहितं यथा भवति तथा विस्तीर्णं **सद्म** अन्तःपुरम् । **योजनान्ते** एकैकयोजनामध्ये **शतद्वारं** दुर्गान्तर्वर्तिगृहाणां शतसङ्ख्याकद्वारैर्युक्तम् ।

**एवमेते रथाः सप्त राजन्नन्यान्निबोध मे ।**
**कृतवर्मा ह्यनाधृष्टिः समीकः समितिञ्जयः ॥ ६१ ॥**

**एवमेत** इत्यत्र **रथाः** महारथाः ।

**वसुदेवोग्रसेनौ च सप्तैते मन्त्रिपुङ्गवाः ।**
**प्रसेनजिच्च यमलो राजराजगुणान्वितः ॥ ६४ ॥**

**स्यमन्तको मणिर्यस्य रुक्मं निस्रुवते बहु ।**
**पुत्रौ चान्धकभोजस्य वृद्धो राजा च ते दश ॥ ६५ ॥**

**प्रसेनजिच्च** इत्यत्र प्रसेनेन सहितः **जित्** सत्राजित् **प्रसेनजित्** । **यस्य** सत्राजितः । 'अन्धकभोजस्य' इति पाठे अन्धककुलप्रभेदभोजकुलजस्य उग्रसेनस्येत्यर्थः ।

**स हि निर्जित्य निर्जित्य पार्थिवान् पृतनागतान् ।**
**पुरमानीय बद्ध्वा च चकार पुरुषव्रजम् ॥ ७६ ॥**

**पुरुषव्रजम्** इति पुरुषाख्यपशूनां **व्रजं** गोष्ठम् ।

---

१. **'त्रियोजनायतं'** इति कुं.पाठः ।

[1] विशाला बहुला भूमिर्बहुरत्नसमाचिता ।
दूरं गत्वा विजानाति श्रेयो वृष्णिकुलोद्वह ॥ ४ ॥

**बहुरत्नसमाचिता** इत्यत्र बहुभिः रत्नसमैः पुरुषैः आचिता । **श्रेयः** श्रेष्ठं पुरुषम् ।

ऋद्ध्या मरुत्तस्तान् पञ्च [2] साम्राज्येनेति शुश्रुम ।
तस्माद्वंश्यानुमृशन्नैवमेव सतां युगे ॥ १७ ॥

**साम्राज्येनेति शुश्रुम** इत्यत्र साम्राज्येनेति इत्थम्भूतलक्षणे चेयं तृतीया । साम्राज्यसहिता इति शुश्रुम इत्यर्थः । **तस्माद्वंश्यान्** इत्यत्र युगे युगे सतां **वंश्यान्** वंशोद्भवान् [3] **अनुमृशन्** विचारयन् **एवं** बालकवत् **नैव** हन्यमानो नैव । किन्तु सर्वान् विचार्य कश्चिदर्थमारभमाणः तत्कार्यं साधयेदेव ।

अतन्द्रितश्च प्रायेण दुर्बलो बलिनं रिपुम् ।
[4] जयेत् सम्यङ्नयो राजन् नीत्यार्थानात्मनो हितान् ॥ १२ ॥

**जयेत् सम्यक्** इत्यत्र **नयो** विनयः ।

साम्राज्यमिच्छतस्ते तु सर्वाकारं युधिष्ठिर ।
[5] सङ्ग्राह्यलक्षणं प्राप धर्मार्थनयलक्षणैः ॥ १८ ॥

---

१. कुं. १५ अध्यायः ।
२. $G_{2,3}$,M ; BORI पृ. ८३; '**सम्राजस्त्वनुशुश्रुम । सर्वान् वंश्याननुमृशन्नैते ग्नन्ति युगे**' इति कुं. पाठः ।
३. '**अनुमर्शयन्**' सो.मु.पा.।; ४. '**जयेत्सम्यक्प्रयोगेण नी-**' इति कुं.पाठः ।
५. BORI पृ. ८३; '**निग्राह्यलक्षणं प्राप्तिर्धर्मार्थ-**' इति कुं. पाठः ।

**बार्हद्रथो [१] जरासन्धस्तं विद्धि भरतर्षभ ।**
**न चैनं प्रत्ययुद्ध्यन्त कुलान्येकशतं नृपाः ॥ १९ ॥**
**[२] तस्मादेतद्बलादेव साम्राज्यं कुरुते हि सः ॥ २० ॥**

**सङ्ग्राह्यलक्षणम्** इत्यत्र **धर्मार्थनयलक्षणैः** धर्मार्थनया एव **लक्षणानि** असाधारणधर्मा येषां ते तैः पुरुषैः सङ्ग्राह्यं यल्लक्षणं धर्मार्थनयाख्यं, तत्त्रितयमपि प्राप इति **तं** जरासन्धं विद्धि । **एतद्बलात्** धर्मार्थ-नयाख्यलक्षणत्रितयबलात् ।

**मूर्धाभिषिक्तं नृपतिं [३] प्रधानपुरुषं बलात् ।**
**आदत्ते न च नो [४] द्रष्टा भागं पुरुषतः कचित् ॥ २२ ॥**

**मूर्धाभिषिक्तम्** इत्यत्र यः पुमान् **पुरुषतः** सत्पुरुषाद् **भागं** एकैक-गुणभागं नादत्ते स पूर्वोक्तं प्रधानपुरुषं द्रष्टा च न ।

**तण्डुलप्रस्थको [५] राजा कपर्दिनमुपासते ।**
**प्रोक्षितानां प्रमृष्टानां राज्ञां पशुपतेर्गृहे ।**
**पशूनामिव का प्रीतिर्जीविते भरतर्षभ ॥ २४ ॥**

**तण्डुलप्रस्थक** इत्यत्र अक्षतैः शिवपूजार्थं प्रतिदिनं प्रस्थप्रस्थतण्डुल-वान् । 'तण्डुलप्रस्थके राजन्' इति पाठे तण्डुलप्रस्थकाख्यशिवस्थाने ।

---

१. $M_2$ ; BORI पृ. ८३; **'जरासन्धस्तद्विद्धि'** इति कुं.पाठः ।
२. BORI पृ. ८३ ; **'तस्मादिह बलादेव'** इति कुं.पाठः ।
३. BORI पृ. ८३ ; **'प्रधानपुरुषः'** इति कुं.पाठः ।
४. **'दृष्टोऽभागः'** इति कुं.पाठः ।
५. **'-प्रस्थके'** इति कुं.पाठः ।

**क्षत्रियः शस्त्रमरणो यदा भवति सत्कृतः ।**
**ततः स्म मागधं सङ्ख्ये प्रतियुद्ध्येत[१] यद्वयम् ॥ २५ ॥**

**क्षत्रिय** इत्यत्र सत्कृतः क्षत्रियः **शस्त्रमरणः** शस्त्रे एव मरणं यस्य । शस्त्रमरणादभीत इति यावत् । जरासन्धं प्रतियुध्येत । अन्यत् स्पष्टम् ।

**षडशीतिः समानीताः शेषा चान्ये[२] चतुर्दश ।**
**जरासन्धेन राजानस्ततः क्रूरं प्रवत्स्यते ॥ २६ ॥**

**षडशीतिः समानीता** इत्यत्र **षडशीतिः** षडशीतिकुलोत्पन्नाः, **शेषाः** एतच्छेषभूता अन्ये राजानश्चेति [३]'कुलान्येकशतं नृपाः'इति प्रागुक्तनृपा इत्यर्थः ।

**प्राप्नुयात्स यशो दीप्तं तत्र यो विघ्नमाचरेत् ।**
**जयेद्यश्च जरासन्धं स सम्राण्णियतं भवेत् ॥ २७ ॥**

**तत्र** राजवधे ।

[४]**जरासन्धबलं प्राप्य दुष्पारं भीमविक्रमम् ।**
[५]**समो हि यः परोक्षः स्यात् किमु तत्र विचेष्टितम् ॥ ३ ॥**
[६]**अस्मिन्नर्थान्तरे युक्तमनर्थं प्रतिपद्य च ।**

---

१. **'प्रतिबाधेम'** इति कुं.पाठः । ;

२. S ; BORI पृ. ८४; **'राजंश्चतुर्दश'** इति कुं.पाठः । ; ३. **सभा – १५.१९**

४. **कुं. १६ अध्यायः ।**

५. **'यमोऽपि न विजेताऽऽजौ तत्र वः किं-'** इति कुं.पाठः ।

६. $T_1$,$G_{2,4}$,$M_1$ ; BORI पृ. ८५; **'अस्मिंस्त्वर्थान्तरे युक्तमनर्थः प्रतिपद्यते'** इति कुं.पाठः ।

**तस्मान्न प्रतिपत्तिस्तु कार्या युक्ता मता मम ॥ ४ ॥**

**समो हि यः परोक्षः स्यात्** इत्यत्र **परोक्षः** जरासन्धसेनयैव युद्धे सति अन्तःपुरस्थेन तेनादृष्टत्वात् परोक्षः । **अर्थान्तरे** जरासन्धवधाख्य-प्रयोजनान्मध्ये **युक्तं** प्राप्तं **अनर्थं** प्रागुक्तमनर्थं **प्रतिपद्य** ज्ञात्वा ।

**सन्न्यासं रोचये साधु कार्यस्यास्य जनार्दन ।**
**प्रतिहन्ति मनो मेऽद्य राजसूयो दुराहरः ॥ ५ ॥**

**सन्न्यासं रोचय** इत्यत्र **अस्य** राजसूयाख्यकार्यस्य **सन्न्यासं** त्यागम् । आहर्तुमशक्यो **दुराहरः** ।

**अर्जुन उवाच –**

**[१]धनुरस्त्रं शरा वीर्यं पक्षो भूमिर्यशो बलम् ।**
**प्राप्तमेतन्मया राजन् दुष्प्रापं [२]यदिहेप्सितम् ॥ ७ ॥**

**धनुरस्त्रम्** इत्यत्र **इह** लोके **दुष्प्रापं** प्राप्तुमशक्यं धनुरादिकं मया प्राप्तमिति सम्बन्धः ।

**कुले जन्म प्रशंसन्ति वैद्याः साधु सुनिष्ठिताः ।**
**बलेन सदृशं नास्ति वीर्यं तु मम रोचते ॥ ८ ॥**

**वैद्याः साधु सुनिष्ठिता** इत्यत्र **वैद्याः** विद्यावन्तः ।

**सर्वैरपि गुणैर्युक्तो निर्वीर्यः किं करिष्यति ।**
**[३]द्रव्यभूता गुणाः सर्वे तिष्ठन्ति हि पराक्रमे ॥ ११ ॥**

---

१. BORI पृ. ८६ ; **'धनुः शस्त्रं'** इति कुं. पाठः ।
२. **'यदभीप्सितम्'** इति कुं.पाठः ।
३. BORI पृ. ८६ ; **'गुणीभूता'** इति कुं. पाठः ।

**द्रव्यभूता गुणा** इत्यत्र **द्रव्यात्** धनात् **भूताः** जाताः **गुणाः** परपराभवादयः ।

**जयस्य हेतुः सिद्धिर्हि कर्म दैवं च संश्रितम् ।**
**संयुक्तो हि बलैः कश्चित् प्रमादान्नोपयुज्यते ॥ १२ ॥**

**जयस्य हेतुः** इत्यत्र **सिद्धिः** मन्त्रसिद्धिः,दैवं,संश्रितं कर्म च पुण्यलक्षणं शौर्यादिकर्म वा ।

[१]**अबले विक्रिया यादृक् तथा मोहो बलान्विते ।**
**तावुभौ नाशकौ हेतू राज्ञा त्याज्यौ जयार्थिना ॥ १४ ॥**

**अबले विक्रिया** इत्यत्र **विक्रिया** परयाचनादिविकारः । **मोहः** अहङ्काराज्ज्ञातकार्यविस्मरणम् ।

**अनारम्भे तु[२] निर्युक्तो भवेदगुणनिश्चयः ।**
**गुणान्निस्संशयात् राजन्नैर्गुण्यं मन्यसे कथम् ॥ १६ ॥**

**अनारम्भे तु निर्युक्त** इत्यत्र **अगुणनिश्चयः** आरम्भजातद्रव्यप्राप्त्यादिगुणाभावे निश्चयो यस्य सः अगुणनिश्चयः । **निस्संशयाद्गुणात्** निस्संशयं गुणमपेक्ष्य ।

[३]**कालोऽयं सुलभः पश्चात् मुनीनां शममिच्छताम् ।**
**साम्राज्यं तु भवेच्छक्यं वयं योत्स्यामहे परान् ॥ १७ ॥**

---

१. **'दैन्यं यथा बलवति'** इति कुं.पाठः ।

२. $G_{1,2,6}$,$M_2$ ; BORI पृ. ८७; **'हि नियतो'** इति कुं. पाठः ।

३. S (Except M2) ; BORI पृ. ८७; **'कापायं सुलभं'** इति कुं. पाठः ।

**कालोऽयम्** इत्यत्र अयं कालः **सुलभः** युद्धाय सुलभः। शममिच्छतां मुनीनां पश्चात्काल एव सुलभः। राज्ञामस्माकं 'श्वः कार्यमद्य कुर्वीत' इति वचनात् अयं वर्तमानः काल एव सुलभः।

**॥ इति अष्टादशोऽध्यायः ॥**

## ॥ अथ विंशोऽध्यायः ॥

**[१]न स्म मृत्युं वयं विद्म रात्रौ वा यदि वा दिवा।**
**न चापि कश्चिदमरमयुद्धेनानुशुश्रुम ॥ २ ॥**

**न चापि** इत्यत्र **अमरं** मरणरहितम्।

**एतावदेव पुरुषैः कार्यं हृदयतोषणम्।**
**[२]नयेनाबाधदृष्टेन यदुपक्रमते परान् ॥ ३ ॥**
**सुनयस्यानपायस्य संयोगे [३]नापराक्रमः।**
**सङ्गत्या जायतेऽसाम्यं साम्यं च न भवेद् द्वयोः ॥ ४ ॥**

**नयेनाबाधदृष्टेन** इत्यत्र **आबाधं** स्वबाधपर्यन्तं दृष्टेन। लोके दृष्टेन नयेन परानुपक्रमत इति यत् अनपायस्य तस्य सुनयस्य संयोगे सति **अपराक्रमः** पराक्रमाभावः। न स्वपीडापर्यन्तं विनयमेव कुर्वन् अपराक्रमी न भवतीति भावः।

**अनयस्यानुपायस्य संयुगे परमः क्षयः।**
**संशयो जायते [४]साम्ये साम्यं तु न भवेद्द्वयोः ॥ ५ ॥**

---

१. कुं. १७ अध्यायः।  २. **'नयेन विधिदृष्टेन'** इति कुं. पाठः।
३. **'परमः क्रमः'** इति कुं. पाठः।
४. S(Except M1 first time) ; BORI पृ. ८८; **'साम्याज्जयश्च'** इति कुं.पाठः।

**संशयो जायत** इत्यत्र 'शक्तानां भूषणं क्षमा' इति न्यायेन शक्तै-र्विनये कृते सति **साम्ये** शत्रोः स्वस्य च समत्वे संशयो जायते । **द्वयोः** शक्ताशक्तयोः साम्यं तु न भवेत् ।

**ते वयं नयमास्थाय शत्रुदेशसमीपगः ।**
**कथमन्तं न गच्छेम वृक्षस्येव नदीरयाः ।**
**पररन्ध्रे पराक्रान्ताः स्वरन्ध्रावरणे स्थिताः ॥ ६ ॥**

**कथमन्तम्** इत्यत्र **नदीरयाः** नदीवेगाः वृक्षस्य **अन्तम्** उन्मूलनेना-वसानमिव अन्तं जरासन्धसेनाया **अन्तम्** अवसानं कथं न गच्छेम । गच्छेमैवेति योजना ।

**अनभिव्यक्तसम्बन्धाः प्रविष्टाः शत्रुसद्म तत् ।**
**शत्रुदेशमुपाक्रम्य तं कामं प्राप्नुयामहे ॥**

**अनभिव्यक्तसम्बन्धा** इत्यत्र अनभिव्यक्तः **सम्बन्धः** क्षत्रियत्वाख्य-जातिसम्बन्धो यैस्ते तथोक्ताः । **तं** जरासन्धं कामं प्राप्नुयामहे ।

**अनवद्यान्[१] ह्यसम्बन्धान् प्रविष्टाः शत्रुसद्म तत् ।**
**शत्रुदेशमुपाक्रम्य तं कामं प्राप्नुयामहे ॥ ८ ॥**

**अनवद्यान्** इत्यत्र **असम्बन्धान्** विप्रवेषत्वादस्मासु वध्यघातकभाव-सम्बन्धरहितान् अत एव **अनवद्यान्** अस्मासु अवद्यमकुर्वतः शत्रून् [illegible] शनैः शत्रुदेशमुपाक्रम्य तं जरासन्धं कामं प्राप्नुयामहे ।

**एको ह्येव श्रियं नित्यं बिभर्ति पुरुषर्षभः ।**
**अन्तरात्मेव भूतानां तत्क्षये[२] वै बलक्षयः ॥ ९ ॥**

१. **'अनवद्या ह्यसम्बुद्धाः'** इति कुं. पाठः ।; २. **'तत्क्षयं नैव लक्षये'** कुं. पाठः ।

**एको ह्येव** इत्यत्र **भूतानामन्तरात्मा** परमात्मेव **एकः** जरासन्ध एव **श्रियं** सेनादिश्रियम् । **तत्क्षये** जरासन्धस्य क्षये **बलक्षयः** सेनानाशः स्वयमेव स्यादिति भावः ।

**अथवैनं निहत्याजौ शेषेणापि समाहताः ।**
**प्राप्नुयाम ततः स्वर्गं ज्ञातित्राणपरायणाः ॥ १० ॥**

**शेषेण** इत्यत्र **शेषेण** तत्सेनाशेषेण ।

**युधिष्ठिर उवाच –**

**कृष्ण कोऽयं जरासन्धः किंवीर्यः किंपराक्रमः ।**
**यस्त्वां स्पृष्ट्वाऽग्निसदृशं न दग्धः शलभो यथा ॥ ११ ॥**

**शलभो यथा** इत्यत्र शलभो यथा अग्निस्पर्शे दग्धो भवति तथा अयं कुतो न दग्ध इति व्यतिरेके दृष्टान्तः ।

**कृष्ण उवाच–**

**अक्षौहिणीनां तिसृणां पतिः समरदर्पितः ।**
**राजा बृहद्रथो नाम मगधाधिपतिर्बली ॥ १३ ॥**

**अक्षौहिणीनाम्** इत्यत्र तिसृणामक्षौहिणीनां बलादिति शेषः ।

**सोऽहं तपश्चरिष्यामि पत्नीभ्यां सहितो वने ।**
**नाप्रजस्य मुने कीर्तिः [१] स्वर्गश्चैव क्षयो भवेत् ।**
**एवमुक्तः स राज्ञा तु मुनिः कारुण्यमागतः ॥ २९ ॥**

**नाप्रजस्य** इत्यत्र अप्रजस्य कीर्तिर्न । स्वर्गश्च **क्षयः** गृहं न भवेत् ।

---

१. **'स्वधा चैवाक्षया'** इति कुं. पाठः ।

**यजस्वं विविधैर्यज्ञैरिन्द्रं तर्पय चेन्दुना ।**
**पुत्रं राज्ये प्रतिष्ठाप्य तत आश्रममाव्रज ॥ ३८ ॥**

**इन्द्रं तर्पय चेन्दुना** इत्यत्र **इन्दुना** सोमरसेन ।

**अथ काले महाप्राज्ञ यथासमयमागते ।**
**प्रजायेतामुभे राजन् शरीरशकले तदा ॥ ४६ ॥**

[१] **प्रजायेतामुभ** इत्यत्र उभे नार्यौ **प्रजायेतां** प्रजनयेताम् ।

**उद्विग्ने सह सम्मन्त्र्य ते भगिन्यौ तदाऽबले ।**
**सजीवे प्राणिशकले [२]तत्प्रजाते सुदुःखिते ॥ ४८ ॥**

**सजीव** इत्यत्र **अबले** रोदनस्तनपानादिकं कर्तुं बलरहिते सजीवे प्राणिशकले उत्पन्ने सति **तत्** तदा ते भगिन्यौ सुदुःखिते प्रजाते ।

[३]**एवमेष तदा वीर बलिभिः कुकुरान्धकैः ।**
**वृष्णिभिश्च महाराज नीतिहेतोरुपेक्षितः ॥ २८ ॥**

**नीतिहेतोरुपेक्षित** इत्यत्र बलवता विरोधे सति स्थानान्तरे गन्तव्यमिति नीतिहेतोः ।

॥ इति विंशोऽध्यायः ॥

॥ मन्त्रपर्व समाप्तम् ॥

---

१. 'प्रजायेथं' इत्यपि पाठः दृश्यते । BORI पृ. ९२.

२. $D_{n.1}$; BORI पृ. ९२; 'तत्यजाते' इति कुं.पाठः ।

३. कुं.१९ अध्यायः ।

# जरासन्धवधपर्व

## ।। अथ एकविंशोऽध्यायः ।।

वासुदेव उवाच –

[1] पतितौ हंसडिभिकौ कंसश्च सगणो हतः ।
जरासन्धस्य निधने कालोऽयं समुपागतः ।। १ ।।

पतितौ इत्यत्र पतितौ दुर्मार्गवर्तिनौ ।

मयि नीतिर्बलं भीमे रक्षिता चावयोर्जयः ।
मागधं साधयिष्याम इष्टिं त्रय इवाग्नयः ।। ३ ।।

रक्षिता चावयोर्जय इत्यत्र जयः विजयः पार्थः ।

त्रिभिरासादितोऽस्माभिर्विजने स नराधिपः ।
न सन्देहो यथा युद्धमेकेनाप्युपयास्यति ।। ४ ।।

त्रिभिरासादित इत्यत्र आसादितः युद्धाय प्रापितः ।

अवमानाच्च लोभाच्च [2] व्यायामाच्चैव धर्षितः ।
भीमसेनेन युद्धाय ध्रुवमप्युपयास्यति ।। ५ ।।

व्यायामात् विशेषणायामादुन्नतेः ।

यदि भीमबलं वेत्सि यदि ते प्रत्ययो मयि ।
भीमसेनार्जुनौ शीघ्रं न्यासभूतौ प्रयच्छ मे ।। ७ ।।

---

१. कुं. २० अध्यायः । ; २. 'बाहुवीर्याच्च दर्पितः' इति कुं. पाठः ।

**भीमसेनार्जुनौ** इत्यत्र **न्यासभूतौ** मद्वशे न्यस्तुं योग्यौ।

**युधिष्ठिर उवाच –**

**यथा वदसि गोविन्द सर्वं तदुपपद्यते।**
**न हि त्वदग्रतस्तेषां येषां लक्ष्मीः पराङ्मुखी ॥ १० ॥**

**न हि त्वदग्र** इत्यत्र त्वदग्रतः स्थितिर्न हि।

**त्रिभिर्भवद्भिर्हि विना नाहं जीवितुमुत्सहे।**
**धर्मकामार्थरहितो रोगार्त इव दुर्गतः[१] ॥१३ ॥**

**दुर्गत** इत्यत्र दुःखं गतः।

**[२]सुप्रणीतबलो यो हि कुरुते कार्यमुत्तमम्।**
**अन्धं बलं जडं [३]चाहुः प्रणीतमविचक्षणैः ॥ १६ ॥**

**सुप्रणीतबल** इत्यत्र **सुष्ठु** अवसरं ज्ञात्वा **प्रणीतं** प्रयुक्तं बलं येन स तथोक्तः। देशकालादिकं ज्ञात्वा बलं प्रयुञ्जान इत्यर्थः। अविचक्षणैः **प्रणीतं** यत्र क्वापि प्रयुक्तं बलं अन्धं जडं चाहुः। अन्धवज्जडवच्च कार्याकारीत्यर्थः।

**यतो हि निम्नं भवति नयन्ति हि ततो जलम्।**
**यतश्छिद्रं ततश्चापि नयन्ते धीवरा जलम् ॥ १७ ॥**

**यतश्छिद्रम्** इति **यतः** यस्मिन् पुरुषे **ततः** बलात् **छिद्रं** 'छिदिर् द्वैधीकरणे' इति धातोः अङ्गविच्छेदो भवति **ततस्तत्र**।

---

१ BORI पृ. ९९ ; **'दुःखितः'** इति कुं.पाठः।; २. **'सुप्रणीतौ बलौघो'** कुं.
३ S. BORI पृ. १००; **'प्राहुः प्रणेतव्यं विचक्षणैः'** इति कुं. पाठः।

**एवं प्रज्ञानयबलं क्रियोपायसमन्वितम् ।**
**पुरस्कुर्वीत कार्येषु [१] कृष्ण कार्यार्थसिद्धये ॥ १९ ॥**

**कृष्ण कार्यार्थसिद्धय** इत्यत्र हे कृष्णेति सम्बुद्धिः ।

**एवमेव यदुश्रेष्ठं यावत्कार्यार्थसिद्धये ।**
**अर्जुनः कृष्णमन्वेतु भीमोऽन्वेतु धनञ्जयम् ।**
**नयो जयो बलं चैव [२] विक्रमाद्वृद्धिमेष्यति ॥ २० ॥**

**नयो जयो बलं चैव** इत्यत्र **नयः** नीतिः, **जयः** परवशीकरणाख्य-जयः, **बलं** अन्ते स्वसत्वप्रदर्शनं चेति त्रयं **विक्रमात्** विशिष्टक्रमात् नयः पूर्वं, जयो मध्ये, बलं पश्चादिति क्रमात्प्रयुक्तं चेत् **वृद्धिमेष्यति** अन्तिमं बलमतिवृद्धं भवतीत्यर्थः ।

**[३] वर्षास्विनां ब्राह्मणानां स्नातकानां परिच्छदैः ।**
**आच्छाद्य सुहृदां वाक्यैर्मनोज्ञैरभिनन्दिताः ॥ २२ ॥**

**वर्षास्विनाम्** इत्यत्र वर्षेषु बहुवर्षेषु आसनवन्तो **वर्षास्विनः** वृद्धा-स्तेषां, **स्नातकानां** व्रतस्थानां **[४] परिच्छदैरलङ्कारैः आच्छाद्य** स्वस्वरूप-माच्छाद्य ।

**हतं मेने जरासन्धं दृष्ट्वा भीमपुरोगमौ ।**
**एककार्यसमुद्यन्तौ कृष्णौ युद्धेऽपराजितौ ॥ २४ ॥**

---

१. BORI पृ. १०० ; **'कृष्णकार्यार्थसिद्धये'** इति कुं.पाठः ।
२. $\tilde{N}_1, V_1, B_3$ ; BORI पृ. १००; **'विक्रमे सिद्धिमेष्यति'** इति कुं. पाठः ।
३. **'वर्चस्विनां'** इति कुं. पाठः ।
४. BORI पृ. १०१ **'बलिच्छदैः'** इति वादिराजीयपाठः ।

**भीमपुरोगमौ** इत्यत्र **भीमपुरोगमौ** भीमस्य पुरोगमौ ।

[१] **ईशौ हि तौ महात्मानौ सर्वकार्यप्रवर्तिनौ ।**
[२] **धर्मार्थौ काममोक्षाणां कार्याणां इव निग्रहे ॥ २५ ॥**

**धर्मार्थौ** इत्यत्र **काममोक्षाणां** कामात् **मोक्षः** धर्मार्थयोः मोचनं येषां तानि कार्याणि स्त्रीसम्भोगादीनि तेषां निग्रहे सति धर्मार्थाविव **तौ** कृष्णार्जुनौ ईशौ हि ।

॥ इति एकविंशोऽध्यायः ॥

## ॥ अथ द्वाविंशोऽध्यायः ॥

[३] **स पारिहार्यो मेध्यानां मागधोऽयं मणेः कृते ।**
**कौशिको मणिमांश्चैव चक्राते चाप्यनुग्रहम् ॥ १० ॥**

**स पारिहार्य** इत्यत्र **स** मागधो देशः मणेः कृते **मेध्यानां** ऋष्यादीनां पारिहार्यः हारो विहारः परितो विहारयोग्यः[४] । मणेः चिन्तामणित्वेन निकटे दारिद्र्यादिदोषाभावादिति भावः ।

[५] **यत्र माषादवृषभं तेनानर्घ्यं बृहद्रथः ।**
[६] **तं हत्वा माषनालांश्च तिस्रो भेर्यश्चकार ह ॥ २० ॥**

---

१ BORI पृ. १०१; **'हितौ'** इति कुं.पाठः ।
२ **'धर्मकामार्थलोकानां कार्याणां च प्रवर्तकौ'** इति कुं. पाठः ।
३ कुं. २१ अध्यायः । **'अपरिहार्या मेघानां मागधा मनुना कृताः'** इति कुं.पाठ
४ **'विहरणयोग्यः'** सो.मु.पा.।
५ BORI पृ. १०५; **'मांसादमृषभमाससाद'** इति कुं. पाठः ।
६ **'मासतालाभिस्तिस्रो भेरीरकारयत्'** इति कुं. पाठः ।

**स्वपुरे स्थापयामास तेन चानह्य चर्मणा ।**
**यत्र ताः प्राणदन् भेर्यो दिव्यपुष्पावचूर्णिताः ॥ २१ ॥**

**यत्र मापादवृपभम्** इत्यत्र वृषभरूपी माषादनामकोऽसुरो माषाद-वृषभः **तं** माषादं हत्वा **मापनालान्** शृङ्गद्वयकण्ठनालाख्यान् त्रीन्नालान् तेन चर्मणा **आनह्य** बद्ध्वा तिस्रो भेर्यः यथा भवन्ति तथा चकार । **भेर्यः** त्रिभिरेतैस्ताडितास्तिस्रो भेर्यः प्राणदन् ।

**मागधानां सुरुचिरं चैत्यकं [१] ते द्रुमं गिरिम् ।**
**[२] शिरसीव जिघासन्तो जरासन्धजिघांसवः ॥ २३ ॥**

**स्थिरं सुविपुलं शृङ्गं सुमहत्तत्पुरातनम् ।**
**अर्चितं माल्यदामैश्च सततं सुप्रतिष्ठितम् ॥ २४ ॥**

**विपुलैर्बाहुभिर्वीरास्तेऽभिहत्याभ्यपातयन् ॥ २५ ॥**

**मागधानां सुरुचिरम्** इत्यत्र 'चैत्यकं बद्धमूलं स्यात्' इत्यभिधानात् **चैत्यं** बद्धमूलं द्रुमं, जरासन्धजिघांसवः **ते** कृष्णाद्याः **शिरसि** जरा-सन्धशिरसि **जिघांसन्त इव** घातं कुर्वन्त इव द्रुमं गिरिं च विपुलैर्बाहुभि-रभि(ह)हत्य अभ्यपातयन्निति सम्बन्धः । **माल्यदामैः** माल्यानां मालायोग्यपुष्पाणां दामदामभिः माल्यदामभिः ।

**एतस्मिन्नेव काले तु ब्राह्मणा वेदपारगाः ।**
**दृष्ट्वा तु [३] दुर्निमित्तं तं जरासन्धमदर्शयन् ॥ २६ ॥**

---

१. **'तं समाद्रवन्'** इति कुं. पाठः ।
२. BORI पृ. १०५; **'समाघ्नन्तो जरासन्धं जिघांसवः'** इति कुं. पाठः ।
३. S; BORI पृ. १०६; **'दुर्निमित्तानि'** इति कुं. पाठः ।

दृष्ट्वा इत्यत्र दुर्निमित्तं दुःखकारणं दुर्निमित्तात्मकं च तं शृङ्गद्रुमयोः पातम् ।

पर्यग्नि[1] कुर्वंश्च नृपं द्विरदस्थं पुरोहिताः ।
ततस्तच्छान्तये राजा जरासन्धः प्रतापवान् ॥ २७ ॥

पर्यग्नि कुर्वन् इत्यत्र परितः अग्निः नीराजनरूपोऽग्निः यथा भवति तथा कुर्वन् अकुर्वन् । मङ्गलारत्या सत्कृतवन्त इत्यर्थः ।

स्नातकव्रतिनस्ते तु बाहुशस्त्रा निरायुधाः ।
युयुत्सवः प्रविविशुर्जरासन्धेन भारत ॥ २८ ॥

जरासन्धेन सह युयुत्सव इति सम्बन्धः ।

कर्पूरशृङ्गं कोष्ठं च सफलं चान्तरापणे ।
वैश्याद्बलाद्गृहीत्वा ते विहृत्य च महारथाः ॥ ३१ ॥

कर्पूरशृङ्गम् इत्यत्र शृङ्गं गोशृङ्गमध्योद्भूतं गोरोचनम् ।

ततोऽर्धरात्रे सम्प्राप्ते यातो यत्र स्थिता द्विजाः ।
तस्य ह्येतद्व्रतं राजन् बभूव भुवि विश्रुतम् ॥ ४१ ॥

तस्य ह्येतद् इत्यत्र एतत् एतेषां कृष्णभीमार्जुनानां आपणादिषु [illegible]चरित्रम् ।

वरध्यमविचार्यं[2] च ब्राह्मणस्य विशेषतः ।
कर्म चैतद् द्विलिङ्गस्य[3] किं वोऽद्य प्रसमीक्षितम् ॥ ५३ ॥

---

1 BORI पृ.१०६ ; 'पर्यग्न्यकुर्वंश्च' इति कुं. पाठः ।

2 'वदध्यं वाचि वीर्यं च' इति कुं. पाठः ।

3 BORI पृ. १०८ ; '-लिङ्गस्थं' इति कुं. पाठः ।

**वरध्वमविचार्यम्** इत्यत्र **वरध्वं** वरयध्वम् । **कर्म चैतत्** इत्यत्र **द्विलिङ्गस्य** द्वयोर्ब्रह्मक्षत्रयोर्लिङ्गं यस्य तस्य ।

**एवं च मामुपास्थाय कस्माच्च विधिनार्हणाम् ।**
**प्रणीतां नानुगृह्णीत कार्यं किं वाऽस्मदागमे ॥ ५४ ॥**

**अस्मदागम** इत्यत्र **अस्मदागमे** अस्मान् प्रत्यागमे ।

**क्षत्रियो बाहुवीर्यस्तु न तथा वाक्यवीर्यवान् ।**
**अप्रगल्भं वचस्तस्य तस्माद्बार्हद्रथेरितम् ॥ ५८ ॥**

**क्षत्रियो बाहुवीर्य** इत्यत्र **तस्य** क्षत्रियस्य । **तस्मात्** क्षत्रियाणामप्रगल्भवचनत्वात् हे बार्हद्रथ तव ईरितमपि अप्रगल्भमिति पूर्वपदावृत्त्या योजना ।

**॥ इति द्वाविंशोऽध्यायः ॥**

## ॥ अथ त्रयोविंशोऽध्यायः ॥

**वैकृते[१] चासति[२] कथं मन्यध्वं मामनागसम् ।**
**अरिं वै ब्रूत हे विप्राः सतां समय एष हि ॥ २ ॥**

**वैकृते चासति** इत्यत्र विरुद्धं कुर्वन् विकृत् विकृतो भावः **वैकृतं** वैरमित्यर्थः । **सतां समय एष हि** इत्यत्र **एष हि** वक्ष्यमाणो हि ।

**अर्थधर्मोपघाताद्धि मनः समुपतप्यते ।**
**योऽनागसि प्रसृजति[३] क्षत्रियोऽपि न संशयः ॥ ३ ॥**

---

१. कुं. २२ अध्यायः । ; २. BORI पृ. ११०; **'वा सति'** इति कुं. पाठः ।
३. BORI पृ. १११; **'प्रसजति क्षत्रियो हि '** इति कुं.पाठः ।

**योऽनागसि** इत्यत्र यः क्षत्रियः **अपि** अन्योऽपि **अनागसि प्रसृजति** आगसि न प्रसृजति तस्मात् **अर्थधर्मोपघातात्** अर्थधर्मयोरुपघातो यस्मात्स तथोक्तः तस्मात्पुरुषात् मनः समुपतप्यते । एष सतां समय इति पूर्वेणान्वयः ।

**अतोऽन्यथाऽऽचँ[१]रँल्लोकधर्मज्ञः सन्महाव्रतः ।**
**वृजिनां गतिमाप्नोति श्रेयसोऽप्युपहन्ति च ॥ ४ ॥**

**अतोऽन्यथा** इत्यत्र लोकधर्मज्ञः महाव्रतश्च सन् पुरुषः **अतः** स्वविहितस्वभावात् **अन्यथा** वैपरीत्ये आचरन् ।

**त्रैलोक्ये [२]क्षत्रधर्माद्धि श्रेयांसं साधुचारिणाम् ।**
**नान्यं धर्मं प्रशंसन्ति ये च धर्मविदो जनाः ॥ ५ ॥**

**तस्य मेऽद्य स्थितस्येह स्वधर्मे नियतात्मनः ।**
**अनागसं [३]प्रजानन्तः प्रमादादिव जल्पथ ॥ ६ ॥**

**त्रैलोक्य** इत्यत्र क्षत्रधर्मान्निमित्तात् **श्रेयांसं** श्रेष्ठं मां अनागसं प्रजानन्तः प्रमादात् इति उक्तप्रकारेण जल्पथ ।

**अस्मांस्तदेनोपगच्छेत्कृतं बार्हद्रथे त्वया ।**
**वयं हि शक्ता धर्मस्य रक्षणे धर्मचारिणः ॥ १० ॥**

**अस्मांस्तदेन** इत्यत्र बृहद्रथस्यापत्यं पुमान् बार्हद्रथिः तस्य सम्बुद्धिः हे बार्हद्रथे ।

---

१ ‘चरँल्लोके धर्मज्ञः सन्महारथः’ इति कुं. पाठः ।

२ BORI पृ. १११; ‘क्षत्रधर्मो हि श्रेयान् वै’ इति कुं.पाठः ।

३ $T_1,G_{3\ 5}$,M; BORI पृ. ११२; ‘प्रजानां च’ इति कुं.पाठः ।

**तस्माद्द्योपगच्छामस्तव बार्हद्रथान्तिकम् ।**
**मनुष्याणां समालम्भो न च दृष्टः कदाचन ।**
**स कथं मानुषैर्देवं यष्टुमिच्छसि शङ्करम्** ॥ ११ ॥

**समालम्भः** सम्यगालम्भनं हिंसा ।

**[1]सवर्णोऽपि विवर्णानां पशुसञ्ज्ञां करिष्यसि ।**
**कोऽन्य एवं यथा हि त्वं जरासन्ध वृथामतिः** ॥ १२ ॥

**सवर्णोऽपि** इत्यत्र **सवर्णः** ब्राह्मणत्वादिवर्णसहितः **विवर्णानां** विगतवर्णानां वर्णबाह्यानामपीत्यर्थः । हिंसनं न कुर्यात् । सवर्णानां हिंसनं न कुर्यादिति किं वाच्यं इति सम्बन्धः ।

**ते [2]त्वा ज्ञातिक्षयकरं वयमार्तानुसारिणः ।**
**ज्ञातिवृद्धिनिमित्तार्थं विनिहन्तुमिहागताः** ॥ १४ ॥

**ते त्वा** इत्यत्र **ते** वयं **त्वा** त्वाम् ।

**नास्ति लोके पुमानन्यः [3]क्षत्रियोऽस्मानतीत्य च ।**
**मन्यसे स च ते राजन् सुमहान् बुद्धिविप्लवः** ॥ १५ ॥

**नास्ति लोक** इत्यत्र **सः** अस्मानतीत्य नृपसिंहोद्योगः ।

* * *

---

१. **'सवर्णो हि सवर्णानां'** इति कुं. पाठः ।
२. $G_{1,2}$,M; BORI पृ. ११२; **'त्वां'** इति कुं.पाठः ।
३. S ; BORI पृ. ११२; **'क्षत्रियेष्विति चैव तत्'** इति कुं.पाठः ।

**स्वर्गं ह्येव समास्थाय रणयज्ञेषु दीक्षिताः ।**
**[१]जयन्ते क्षत्रिया [२]लोकांस्तान्विद्धि मनुजर्षभ ॥ १७ ॥**

**तान्विद्धि** इत्यत्र ये पूर्वोक्तविधया जयन्ते तानस्मान्विद्धीति योजना ।

**स्वर्गयोनिर्महद्ब्रह्म स्वर्गयोनिर्महद्यशः ।**
**[३]स्वर्गयोनिस्तपो युद्धे मृत्युः सोऽव्यभिचारवान् ॥ १८ ॥**

**एष ह्यैन्द्रो [४]वैजयिकः गुणैर्नित्यं समाहितः ।**
**येनासुरान् पराजित्य जगत्पाति शतक्रतुः ॥ १९ ॥**

**स्वर्गयोनिस्तप** इत्यत्र युद्धे **तपः** शत्रुतपनमित्यर्थः । विजयसम्बन्धी **वैजयिकः** ।

**[५]अस्य स्यात् स्वर्गमास्थाय [६]निग्रहीतुं यथा तव ।**
**मागधैर्विपुलैः सैन्यैः बाहुल्यबलदर्पितः ॥ २० ॥**

**[७]अस्य स्यात् स्वर्गं** इत्यत्र यथा तव भुवि **निग्रहीतुं** शत्रुनिग्रहणं कर्तुं मनः स्यात्, तथा **अस्य** इन्द्रस्य स्वर्गमास्थाय **निग्रहीतुं** त्वदादि-शत्रुसंहारं कर्तुं मनः स्यात् ॥

---

१. $K_{2,4}$,$G_3$,$M_1$ ; BORI पृ. ११३; **'जयन्ति'** इति कुं. पाठः ।
२. $\tilde{N}_1$,$V_1$,$B_{2,3}$,$D_{1,2}$,$T_1$,G ; BORI पृ. ११३; **'लोकांस्तद्विद्धि'** इति कुं. पाठः ।
३. BORI पृ.११३ ; **'स्वर्गं योनिस्तपो'** इति कुं. पाठः ।
४. S ; BORI पृ. ११३; **'वैजयन्तो'** इति कुं. पाठः ।
५. **'स्वर्गमार्गाय कस्य स्यात्'** इति कुं. पाठः ।
६. **'विग्रहो वै'** इति कुं.पाठः ।
७. **'यस्य'** सो.मु.पा.।

**यावदेतदसम्बुद्धं तावदेव भवेत्तव ।**
**विषह्यमेतदस्माकमतो राजन् ब्रवीमि ते ॥ २२ ॥**

**विषह्यमेतत्** इत्यत्र '[1]विर्निषेधे पृथग्भावे' इति वचनात् **विषह्यं** असह्यम् ।

**दम्भोद्भवः कार्तवीर्य उत्तरश्च बृहद्रथः ।**
**श्रेयसो ह्यवमत्येह विनेशुः सबला नृपाः ॥ २४ ॥**

**श्रेयसो ह्यवमत्य** इत्यत्र **श्रेयसः** श्रेष्ठान् ।

**योऽस्मद्भयादतिक्रम्य सागरानूपमाश्रितः ।**
**जन्मभूमिं परित्यज्य मधुरां प्राकृतो यथा ॥ ३० ॥**

**सागरानूपम्** इत्यत्र सागरस्य अनूपं **अनु** अनूकूलं **उपम्** उपकण्ठम् ।

**वैशम्पायन उवाच –**

**तस्य रोषाभिभूतस्य जरासन्धस्य गर्जतः ।**
**सर्वभूतानि वित्रेसुर्ये तत्रासन् समागताः ॥ ३४ ॥**

**वित्रेसुः** विशेषेण त्रासं प्रापुः ।

**जरासन्ध उवाच –**

**[2]नाजितं वै नरपतीनहमादद्मि [3]कश्चन ।**
**[4]जितः कः पर्यवस्थाता कोऽत्र यो न मया जितः ॥ ३७ ॥**

१. **'वि निषेधे'** सो.मु.पा.। ; २. **'नाजितान्वै'** इति कुं.पाठः ।
३. BORI पृ. ११४; **'कांश्चन'** इति कुं. पाठः ।; ४. **'अजितः'** इति कुं.पाठः

**अहमादद्मि कश्चन** इत्यत्र जयतीति जित् **अजितम्** अजयशीलं **न आदद्मि** 'दद दाने' इति धातोः युद्धाय नाङ्गीकरोमि । **जितः** जयशीलस्य मम अग्रे ।

**क्षत्रियस्यैतदेवाहुर्धर्म्यं कृष्णोपजीवनम् ।**
**विक्रम्य वशमानीय कामतो यत्समाचरेत् ॥ ३८ ॥**

**कृष्णोपजीवनम्** इत्यत्र **एतत्** वक्ष्यमाणं, हे कृष्ण इति सम्बुद्धिः । **कामतः** स्वेच्छानुसारेण ।

**तौ[१] तु सेनापती राजा सस्मार भरतर्षभ ।**
**कौशिकं चित्रसेनं च तस्मिन् युद्ध उपस्थिते ॥ ४१ ॥**

**ययोस्ते नामनी राजन् हंसेति डिभिकेति[२] च**
**पूर्वं स्तः[३] कथितौ काले नृलोके लोकसत्कृतौ ॥ ४२ ॥**

**तौ तु सेनापती** इत्यत्र हंसेति डिभकेति च पूर्वं विद्यमानौ तौ तु जरासन्धस्य सेनापती **काले** अतीतकाले **कथितौ** मृताविति कथितौ । प्राक् तौ सेनापती, इदानीं कौशिकचित्रसेनाविति भावः ।

**तं तु राजन्विभुः शौरी राजानं बलिनां वरम् ।**
**स्मृत्वा पुरुषशार्दूलं शार्दूलसमविक्रमम्[४] ॥ ४४ ॥**

---

१. **'स तु सेनापतिं'** इति कुं.पाठः ।
२. BORI पृ. ११५; **'डिबिकेति'** इति कुं.पाठः ।
३. **'सङ्कथिते पुम्भिः'** इति कुं.पाठः ।
४. $D_{1,2}$,$G_5$,$M_2$ ; BORI पृ. ११५; **'-शार्दूलः'** इति कुं. पाठः ।

**नात्मनाऽऽत्मवतां मुख्य इयेष मधुसूदनः ।**
**[१] ब्राह्मणाऽऽज्ञां पुरस्कृत्य हन्तुं हलधरानुजः ॥ ४६ ॥**

तर्हि जरासन्धोऽपि प्रागेव कृष्णेन कस्मान्न हत इत्यत आह– **स्मृत्वा पुरुषशार्दूलम्** इत्यादि । **ब्राह्मणाज्ञां** ब्रह्मणश्चतुर्मुखस्य सम्बन्धिनी ब्राह्मणी सा च सा आज्ञा च । 'वायुर्भीमो भूत्वा जरासन्धं घातयत्वि'ति चतुर्मुखस्याज्ञां पुरस्कृत्येत्यर्थः ।

॥ इति त्रयोविंशोऽध्यायः ॥

## ॥ अथ चतुर्विंशोऽध्यायः ॥

**[२] तदर्थमुग्रसेनस्य मधुरायां सुतस्तदा ।**
**अभिषिक्तस्तदाऽमात्यैः स वै तीव्रपराक्रमः ॥ ६ ॥**

**तदर्थम्** इत्यत्र **तदर्थं** प्रबलजरासन्धप्रियार्थम् ।

**यच्च तेऽत्र भयं राजन् शक्यते बाधितुं त्वया ।**
**[३] इयं च शक्या पालयितुं अयशस्यं च रक्षितुम् ॥ १६ ॥**

**इयं च शक्या** इत्यत्र **अयशस्यं** अयशस्करकर्मोद्युक्तं त्वां च रक्षितुं शक्नोमीति सम्बन्धः ।

॥ इति चतुर्विंशोऽध्यायः ॥

---

१. $K_{2\text{-}3}$,$T_1$,$G_{3\text{-}5}$,$M_1$ ; BORI पृ. ११९; **'ब्राह्मीमाज्ञां'** इति कुं.पाठः ।
२. कुं. २३ अध्यायः ।
३. **'इयं शक्या पालयितुं समयं चैव रक्षितुम्'** इति कुं. पाठः ।

## ।। अथ पञ्चविंशोऽध्यायः ।।

**[१]अथ तस्यां समभवद्बलदेवस्तु सत्तमः ।**
**[२]याम्येनमायया राजा नियमो तं विशाम्पते ।। २० ।।**

**याम्येनमायया** इत्यत्र **याम्येनमायया, याम्यानां** यमभटानां **इना** समर्था या **माया** दुर्गा सा तथोक्ता । गर्भस्रवणे सति कुतो जीवो नीत इति शङ्कापरिहारार्थमिदं विशेषणम् । नियमयति सर्वमिति नियमो **राजा** नारायणः ।

**देवक्या गर्भमतुलं रोहिण्या जठरेऽक्षिपत् ।**
**आकृष्य कर्षणात् सम्यक्सङ्कर्षण इति स्मृतः ।। २१ ।।**

**आकृष्य कर्षणात्** इत्यत्र देवक्युदराद्गर्भमाकृष्य रोहिण्युदरं प्रत्या-[illegible]र्पणादित्यर्थः ।

**जातमात्रं [३]वासुदेवमपकृष्य पिता ततः ।**
**उपजह्रे परिक्रीतां सुतां गोपस्य कस्यचित् ।। २५ ।।**

**जातमात्रम्** इत्यत्र **अपकृष्य** गोकुलं प्रति नीत्वा **ततः** गोकुलात् [illegible]रिक्रीतां स्वसुतं दत्वा [४]तत्क्रयरूपेणेव स्वीकृताम् ।

**[५]मुमुक्षमाणस्तं शब्दं देवदूतस्य पार्थिवः ।**
**वासुदेवं महात्मानमर्पयामास गोकुले ।। २६ ।।**

---

[१] [illegible].पाठानुसारेण अत्र पूर्वाध्याय एव अनुसरति ।
[२] **'याम्यया मायया'** इति कुं. पाठः । ; ३. **'-मथाकृष्य'** इति कुं.पाठः ।
[४] **तत्क्रयरूपेणैव** सो.मु.पा. । ; ५. **'अमृष्यमाणस्तं'** इति कुं. पाठः ।

देवदूतस्य **तं शब्दम्** अष्टमो गर्भः तव मृत्युरिति शब्दं **मुमुक्षमाणः** मोचयितुमिच्छन् ।।

[१] **आर्येत्युवाच तं शब्दं तस्मादार्येति कीर्तिता ।**
**एवं तं वञ्चयित्वा च राजानं स महामतिः ।।**

**आर्येत्युवाच** इत्यत्र तां प्रति आर्येति शब्दमुवाच । प्राक् शिशुरूपा इदानीम् **आर्या** स्थूलेत्युवाचेत्यर्थः ।

**एतद्वैरं कौरवेय जरासन्धस्य माधवे ।**
**आशासितार्थे राजेन्द्र संरुरोध विनिर्जितान् ।। ३५ ।।**

**आशासितार्थे** इत्यत्र आशासितः **अर्थः** धनं शिवप्रसादश्च येन सः ।

**।। इति पञ्चविंशोऽध्यायः ।।**

## ।। अथ षड्विंशोऽध्यायः ।।

[२] **उवाच मतिमान् राजा भीमं भीमपराक्रमः ।**
**भीम योत्स्ये त्वया सार्धं श्रेयसा निर्जितं वरम् ।। ९ ।।**

**भीम योत्स्य** इत्यत्र **श्रेयसा** श्रेष्ठेन, 'भावे क्तः' इति वचनात् **निर्जितं** निर्गतो **जयः** पराजयः **वरं** श्रेष्ठम् ।

[३] **तद्युद्धमुत्सार्य जनं युद्धमासीदुपह्वये ।**
**बलिनोः संयुगे राजन् वृत्रवासवयोरिव ।। २८ ।।**

---

१. BORI पृ. ३७१.; २. कुं.२४. **अध्यायः** ।
३. **'तद्धीममुत्सार्य जनं युद्धमासीदुपप्लवे'** इति कुं. पाठः ।

**तद्युद्धमुत्सार्य जनम्** इत्यत्र **उप** समीपे **ह्वये** द्रष्टृजनानामन्योन्य-माह्वाने सति तं जनं उत्सार्येत्यर्थः ।

**प्रकर्षाणाकर्षणाभ्यामनुकर्षविकर्षणैः ।**
**[१]विकर्षतां तथाऽन्योन्यं जानुभिश्चावजघ्नतुः ॥ २९ ॥**

**विकर्षतां** आकर्षतां इति लङि लुङि वा द्विवचनम् ।

**॥ इति षड्विंशोऽध्यायः ॥**

## ॥ अथ सप्तविंशोऽध्यायः ॥

**[२]नायं पापो मया कृष्ण युक्तः स्यादनुरोधितुम् ।**
**प्रायेण यदुशार्दूल बान्धवक्षयकृत्तव ॥ २ ॥**

**अयं पाप** इत्यत्र **अनुरोधितुम्** अनुकूलं कर्तुम् ।

[३]**कर्तव्यम्** इत्यत्र **कर्तव्यं** स्वस्यैव कर्तुं योग्यं कर्म **उपशस्य** समीप-स्थकृष्णार्जुनौ प्रति स्तुत्वा ।

**ते वै रत्नभुजं कृष्णं रत्नार्हं पृथिवीश्वराः ।**
**राजानं चक्रुरासाद्य मोक्षिता महतो भयात् ॥ २४ ॥**

**ते वै रत्नभुजम्** इत्यत्र 'भुज पालनाभ्यवहारयोः' इति धातोः स्व-जीवरत्नपरिपालकं कृष्णं **रत्नार्हं** स्वमौलिरत्नयोग्यपादपीठं पार्थिवं स्वेषां राजानं चक्रुः ।

---

१. 'आचकर्षतुरन्योन्यं' इति कुं.पाठः । ; २. कुं.२५ अध्यायः ।
३. अत्र मुद्रितकोशेषु श्लोकः नोपलभ्यते ।

**[१] तयोः सौन्दर्यवान्नाम विधेयः कृष्णसारथिः ।**
**अभ्यासघाती सन्दृश्यो दुर्जयः सर्वराजभिः ॥ २६ ॥**

**तयोः सौन्दर्यवान्** इत्यत्र **तयोः** भीमार्जुनयोः **विधेयः** इदं कुर्विति विधातुं योग्यः किङ्कर इत्यर्थः । [२] 'विधेयः किङ्करो मतः' इत्यमरः ।

**शक्रविष्णू हि सङ्ग्रामे चेरतुस्तारकामये ।**
**रथेन तेन वै कृष्ण उपारुह्य ययौ तदा ॥ २८ ॥**

**चेरतुस्तारकामय** इत्यत्र **शक्रविष्णू** इन्द्रोपेन्द्रौ शत्रुनेत्रतारकाणामामयो यस्मात्तस्मिन् देवासुरसङ्ग्रामे येन रथेन चेरतुः तेनेति सम्बन्धः ।

**चिन्तयामास कृष्णोऽथ गरुत्मन्तं स चाभ्ययात् ।**
**क्षणे तस्मिन् स [३] तेनासीच्चैत्ये यूप इवोच्छ्रितः ॥ ३६ ॥**

**क्षणे तस्मिन्** इत्यत्र **चैत्ये** बद्धभूमिके **यूपे** देवालयध्वज इत्यर्थः ।

**गत्वैकत्वं स कृष्णेन पार्थाभ्यां चापि सत्कृतः ।**
**विवेश मतिमान् राजा पुनर्बार्हद्रथं पुरम् ॥ ६९ ॥**

**गत्वैकत्वम्** इत्यत्र **एकत्वम्** ऐकमत्यम् ।

---

१. $G_2$; BORI पृ. १२१; **'यः स सोदर्यवान्नाम ह्रियोधी कृष्णसारथिः'** इति कुं.पाठः ।

२. **'विधेयो विनयग्राही वचनेस्थित आश्रवः'** इति अ.को.(३-१-२४) पाठः उपलभ्यते ।

३. $K_2$ ; BORI पृ. १२२; **'तेनासीच्चैत्यवृक्ष इवोत्थितः'** इति कुं. पाठः ।

त्वद्बुद्धिबलमाश्रित्य यागार्होऽस्मि जनार्दन ।
पीतं पृथिव्याः कुण्डेन[१] यशस्ते पुरुषोत्तम ॥ ८२ ॥

**पीतम्** इत्यत्र **पृथिव्या** भूमण्डलाख्यकुण्डेन कुम्भेन । दिगन्त-विश्रान्ता कीर्तिः सम्पादितेति भावः ।

॥ इति सप्तविंशोऽध्यायः ॥

॥ जरासन्धवधपर्व समाप्तम् ॥

# दिग्विजयपर्व

## ॥ अथ त्रिंशोऽध्यायः ॥

वैशम्पायन उवाच –

[२]ऋषेस्तद्वचनं स्मृत्वा निशश्वास युधिष्ठिरः ।
धर्मं धर्मभृतां श्रेष्ठः कर्तुमिच्छन् परन्तपः ॥ १ ॥

**ऋषेस्तद्वचनम्** इत्यत्र **ऋषेर्नारदस्य तद्वचनं** राजसूयः कर्तव्य इति प्रागुक्तवचनम् ।

स्वस्ति वाच्यार्हतो विप्रान् प्रयाहि भरतर्षभ ।
दुर्हृदामप्रहर्षाय सुहृदां नन्दनाय च ॥ ८ ॥

**स्वस्ति वाच्य** इत्यत्र मह्यं स्वस्ति देहीति **वाच्य** अर्थयित्वा ।

[३]तस्य पार्थिवतामीप्सोः करस्तस्मै प्रदीयताम् ।
भवान्पितृसखश्चैव प्रीयमाणो मयापि च ।

---

१. 'क्रुद्धेन' इति कुं. पाठः । ; २. कुं.२६ अध्यायः ।
३. कुं. २७ अध्यायः । ; ४. BORI पृ. १२९; '-मीप्से' इति कुं.पाठः ।

**ततो नाज्ञापयामि त्वां प्रीतिपूर्वं प्रदीयताम् ॥ २४ ॥**

**तस्य पार्थिवताम्** इत्यत्र **तस्य पार्थिवतां** तत्सम्बन्धिपार्थिवतां ईप्सोर्मम तुष्टोऽसि चेत् तस्मै क(रं)रः प्रदीयताम् ।

**[१] मोदापुरं वामदेवं [२] सुसङ्कुलमनामिनम् ।**
**उलूकानुत्तरांश्चैव तांश्च राज्ञः समानयत् ॥११॥**

**नामः** नमनं नम्रता अस्यास्तीति नामी स न भवतीति **अनामी** तं उद्धतं राजानमित्यर्थः ।

**[३] तत्र तित्तिरिकल्मापान् मण्डूकाख्यान् हयोत्तमान् ।**
**लेभे स करमत्यन्तं गन्धर्वनगरात्तदा ॥ ६ ॥**

**तत्र तित्तिरिकल्मापान्** इत्यत्र **तित्तिरिकल्मापान्** तित्तिरिपक्षिवत् कल्माषान् कृष्णापा(ण्डु)ण्डरान् । 'कल्माषः कृष्णपाण्डुरः'[४] इति हलः । [५] 'तित्तिरिः कुक्कुभो लावो जीवञ्जीवश्चकोरकः' इत्यमरः ।

**तं कलापधरं शूरं सरथं सधनुःकरम् ।**
**सवर्मं सकिरीटं वै सन्नद्धं सपरिच्छदम् ॥ ५६ ॥**

**तं कलापधरम्** इत्यत्र [६] 'कलापो भूषणे बर्हे' इत्यभिधानात् **कलापधरं** भूषणधरम् ।

---

१. कुं.२८ अध्यायः । ; २. 'सुदामानं सुसङ्कुलम्' इति कुं.पाठः ।
३. कुं.२९ अध्यायः ।; ४. ह.को. ४.७३६
५. अ.को. २-५-३५
६. अ.को. ३-३-१२९

सुकुमारं महासत्वं तेजोराशिमनुत्तमम् ।
शक्रोपममित्रघ्नं परवारणवारणम् ॥ ५७ ॥

**परवारणवारणम्** इत्यत्र **परवारणान्** पराख्यगजान् निवारयतीति स तथोक्तः तम् ।

॥ इति त्रिंशोऽध्यायः ॥

## ॥ अथ एकत्रिंशोऽध्यायः ॥

[१]ततो दिव्यानि वस्त्राणि दिव्यान्याभरणानि च ।
[२]योगाजिनानि दिव्यानि तस्य ते प्रददुः करम् ॥ ७५ ॥

**योगाजिनानि** इत्यत्र योगाभ्यासार्हचर्माणि ।

॥ इति एकत्रिंशोऽध्यायः ॥

## ॥ अथ सप्तत्रिंशोऽध्यायः ॥

[३]**कारण्डमेयम्** इत्यत्र **चक्रपुरः** चक्रवर्तिनां पट्टणानि । स्वयमेव शरणं न प्राप्ताश्चेत्तन्नगराण्यपि बलात्प्रविश्य वशीचकारेत्यर्थः । चक्रवत्परितः सञ्चरतां चोराणां पुराणि च । मध्यमपदलोपी समासः ।

वैशम्पायन उवाच –
[४]तत्र [५]माहिष्मतीवासो भगवान् हव्यवाहनः ।
श्रूयते [६]निगृहीतो वै पुरस्तात्पारदारिकः ॥ २९ ॥

१. कुं.पाठानुसारेण अत्र पूर्वाध्याय एवानुसरति ।
२. $M_{1 (inf.lin.)}$; BORI पृ. १३६; **'क्षौमाजिनानि'** इति कुं.पाठः ।
३. अत्र श्लोकः मुद्रितकोशेषु नोपलभ्यते ।; ४. **कुं. ३२ अध्यायः**
५. BORI पृ. १४५; **'तत्र माहिस्मतीवासी'**कुं; ६. **'हि गृहीतो वै'** इति कुं.

**तत्र माहिष्मतीवास** इत्यत्र पाणिग्रहणे साक्षिभूतेन तेन हव्यवाहन **पारदारिकः** परदाराभिमर्शी तद्देशप्रभुः **निगृहीतः** निग्रहं प्रापितः ।

**ततः स भगवानग्निश्चकमे तां सुदर्शनाम् ।**
**नीलस्य राज्ञः सर्वेषामुपनीतश्च सोऽभवत्** ॥ ३२ ॥

**उपनीतः** प्रसादितः ।

**[1]तदा ब्राह्मणरूपेण चरमाणो यदृच्छया ।**
**चकमे तां वरारोहां कन्यामुत्पललोचनाम् ।**
**तं तु राजा यथाशास्त्रमशासद्धार्मिकस्तदा** ॥ ३३ ॥

**तदा ब्राह्मणरूपेण** इत्यत्र **यदृच्छया** आगतं योग्यायोग्यं च सर्वं स्वस्य सर्वभक्षकत्वात् ब्राह्मणरूपेण **चरमाणः** 'चर गतिभक्षणयोः' इति धातोः भक्षमाणः अग्निरासीत् । **अशासत्** शिक्षितवान् ।

**वरेण च्छन्दयामास तं नृपं स्विष्टकृत्तमः ।**
**अभयं च स जग्राह स्वसैन्ये वै महीपतिः** ॥ ३७ ॥

**स्विष्टकृत्** सुष्ठु इष्टकृत् ।

**एवमग्निर्वरं प्रादात् स्त्रीणामप्रतिवारणे ।**
**स्वैरिण्यस्तत्र नार्यो हि यथेष्टं [2]प्रचरन्त्युत** ॥ ४० ॥

**स्वैरिण्य** इत्यत्र **स्वैः** स्वभर्तृभिरेव **ईरणं** प्रेरणं यासां ताः स्वैरिण्यः तथाविधा नार्यः प्रचरन्ति ।

---

१. BORI पृ. १४५; **'ततो ब्राह्मणरूपेण रममाणो'** इति कुं.पाठः ।
२. BORI पृ. १४६; **'विचरन्त्युत'** इति कुं. पाठः ।

[१] भृगुकच्छान्ततो धीमान् साम्नैवामित्रकर्शनः ।
आगम्यतामिति प्राह धर्मराजस्य शासनात् ॥ ७८ ॥

**भृगुकच्छान्तत** इत्यत्र 'प्रपातस्त्वतटो भृगुः'[२] इत्यभिधानात् **भृगोः** सह्याचलदाक्षिणात्यशृङ्गस्य समीपस्थं **कच्छं** दक्षिणसमुद्रतीरं तस्य **अन्ततः** अवसाने ।

स चास्य प्रतिजग्राह शासनं प्रीतिपूर्वकम् ।
[३] तच्च कालधृतं धीमानभ्यमन्यत स प्रभुः ॥ ८१ ॥

**तच्च कालधृतम्** इत्यत्र **कालं** बहुकालमारभ्य **धृतं** करिष्यामीति [४] मनसोऽवधृतं तत् धर्मराजस्य शासनम् ।

[५] आश्चर्यभूतं ददृशुर्द्रमिडास्ते समागताः ।
महासेनोपमं दृष्ट्वा पूजां चक्रुश्च तस्य वै ॥ १७ ॥

**महासेनोपमम्** इत्यत्र 'कार्तिकेयो महासेनः शरजन्मा षडाननः'[६] इत्यभिधानात् । षण्मुखोपमम् ।

स चास्य प्रतिजग्राह शासनं प्रीतिपूर्वकम् ।
तच्च कालकृतं धीमानभ्यमन्यत स प्रभुः ॥ ८१ ॥

**तच्च कालकृतम्** इत्यत्र कालकृतमङ्गीकृतम् ।

॥ इति सप्तत्रिंशोऽध्यायः ॥

---

१. **'भृगुकच्छात्ततो'** इति कुं.पाठः ।; २. अ.को. २-३-४
३. **'तच्च कृष्णकृतं'** इति कुं.पाठः ।; ३. **'मनसा'** सो.मु.पा.।
५. कुं. ३३ अध्यायः ।; ६. अ.को. १-१-३९

## ॥ अथ अष्टत्रिंशोऽध्यायः ॥

**[१] स चास्य गतभी राजन्प्रतिजग्राह शासनम् ।**
**ततः शाकलमभ्येत्य मद्राणां पुटभेदनम् ॥ १४ ॥**

**मद्राणां पुटभेदनम्** इत्यत्र **पुटभेदनं** पट्टणम् । [२]'पट्टणं पुटभेदनम्' इत्यमरः ।

**[३] कलभानां सहस्राणि कोशं तस्य महात्मनः ।**
**ऊहुर्दश महाराज कृच्छ्रादिव महाधनम् ॥ १८ ॥**

**कलभानाम्** इत्यत्र **तस्य** नकुलस्य **कोशम्** आर्जितद्रव्यं **कलभानां** बालगजानां दशसहस्राणि ऊहुः । 'वह प्रापणे' इति धातोः लिटि बहुवचनम् । **ऊहुः** निन्युरित्यर्थः ।

**॥ इति अष्टत्रिंशोऽध्यायः ॥**
**दिग्विजयपर्व समाप्तम्**

# राजसूयपर्व

## ॥ अथ एकोनचत्वारिंशोऽध्यायः ॥

**[४] सर्वारम्भाः सुप्रवृत्ता गोरक्षा कर्षणं वणिक् ।**
**विशेषात् सर्वमेवैतत् सञ्जज्ञे [५] राजकर्मणा ॥ ३ ॥**

---

१. कुं. २५ अध्यायः । ; २. अ.को. २-२-१
३. **'करभाणां सहस्राणि केशं'** इति कुं. पाठः ।; ४. **कुं. ३६ अध्यायः ।**
५. $K_{3.4}$,$B_{1.3.5m.6}$; BORI पृ. १५४; **'राजकर्मणः'** इति कुं.पाठः ।

**सञ्ज्ञे राजकर्मणा** इत्यत्र **राजकर्मणा** राजाज्ञया।

**[१]स दीक्षापय गोविन्द त्वमात्मानं महाभुज।**
**त्वयीष्टवति दाशार्ह विपाप्मा भविता ह्यहम्** ॥ २१ ॥

**स दीक्षापय गोविन्द** इत्यत्र स त्वम् **आत्मानं** मां राजसूये दीक्षापयेति धर्मराजप्रार्थनम्।

**[२]सर्वे पेयांश्च कार्यन्तां रसगन्धसमन्विताः।**
**मनोरथप्रीतिकराः द्विजानां कुरुसत्तम** ॥ ३१ ॥

**सर्वे पेयान्** इत्यत्र हे कुरुसत्तम सर्वे वयं पेयादीन् आहर्तुं युक्ताः स्मः। इन्द्रसेनादीनां सारथीनां युधिष्ठिरं प्रति प्रत्युत्तरम्।

**स्वयं ब्रह्मत्वमकरोत्तस्य सत्यवतीसुतः।**
**धनञ्जयानामृषभः सुसामा सामगोऽभवत्** ॥ ३४ ॥

**धनञ्जयानाम्** इत्यत्र **धनञ्जयानां** यज्ञकुशलत्वात् दक्षिणारूपधनं जयन्ति प्राप्नुवन्तीति **धनञ्जयाः** याजकाः तेषामृषभः।

॥ इति एकोनचत्वारिंशोऽध्यायः ॥

## ॥ अथ चत्वारिंशोऽध्यायः ॥

**[३]ज्येष्ठे मूले त्वमावास्यां मृगाजिनसमावृतः।**
**रौरवाजिनसंवीतो नवनीताक्तदेहवान्** ॥ ४६ ॥

---

१. BORI पृ. १५७; **'तद्दीक्षापय'** इति कुं. पाठः।; २. **'सर्वकामांश्च'** कुं.पा
३. कुं.पाठानुसारेण पूर्वाध्याय एवानुसरति। **'ज्येष्ठामूले अमावास्यां'** इति कुं.पा

**ज्येष्ठे मूल** इत्यत्र ज्येष्ठे मासे मूलानक्षत्रे । **रौरवाजिनसंवीत** इत्यत्र 'कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररोहिषाः'[१] इत्यभिधानात् **रौरवाजिनं** कृष्णाजिनम् ।

**[२]गवायुतसहस्राणि शयनानां च भारत ।**
**[३]रुग्मस्य योषितां चैव धर्मराजः पृथक् ददौ ॥ ५५ ॥**

**रुग्मस्य योषिताम्** इत्यत्र रुग्मस्य अयुतसहस्राणि **योषितां** कन्यानां दासीनां वा सहस्राणीत्यर्थः ।

॥ इति चत्वारिंशोऽध्यायः ॥

## ॥ अथ द्विचत्वारिंशोऽध्यायः ॥

**[४]अस्मिन् क्रतौ यथोक्तानि यज्ञाङ्गानि द्विजातिभिः ।**
**अभिसञ्ज्ञांश्च सम्भारान् धौम्योक्तान् भरतर्षभ ॥**

**अभिसञ्ज्ञांश्च सम्भारान्** इत्यत्र **अभिसञ्ज्ञान्** नानाविधसञ्ज्ञान् ।

**[५]रत्नैश्च बहुभिस्तत्र धर्मराजमवर्धयत् ।**
**कथं तु मम कौरव्यो रत्नदानैः समाप्नुयात् ॥ १४ ॥**
**यज्ञमित्येव राजानः स्पर्धमाना ददुर्धनम् ॥ १५ ॥**

---

१. अ.को. २-५-१०
२. $B_{1,2,6}$, $T_1$,$G_{3,5,6}$; BORI पृ. १६०; **'गवां शतसहस्राणि'** इति कुं. पाठः ।
३. **'रुक्मस्य'** इति कुं.पाठः । ; ४. BORI पृ. १६५
५. कुं. ३८ अध्यायः ।

**कथं तु मम** इत्यत्र स्पर्धमाना राजानः 'कौरव्यः मम रत्नदानैर्यज्ञं कथं समाप्नुयात्, न कथञ्चित्' इत्युक्त्वा ददुः । बहुधनसाध्ये यज्ञे ममाल्पधनं कुत्रोपयुज्यत इति विनयमुक्त्वा ददुरित्यर्थः ।

**ऋद्ध्या तु वरुणं देवं स्पर्धमानो युधिष्ठिरः ।**
**षडग्निनाथ यज्ञेन सोऽयजद्दक्षिणावता ॥ १८ ॥**

**षडग्निनाथ यज्ञेन** इत्यत्र गार्हपत्याहवनीयदक्षिणाग्निसभ्यावसथ्य-वैवाहिकाख्याः **षडग्नयः** । वैवाहिको नाम औपासनाग्निः ।

**सर्वान् जनान् सर्वकामैः समृद्धैः समतर्पयत् ।**
**अन्नवान् बहुभक्ष्यश्च भुक्तवज्जनसंवृतः ।**
**[१]रत्नोपहारकर्मण्यो बभूव स समागमः ॥ १९ ॥**

**भुक्तवज्जनसंवृत** इत्यत्र भुक्तवन्तश्च ते जनाश्च भुक्तवज्जनाः । **रत्नोपहारकर्मण्यः** रत्नोपहाराख्यकर्मवान् ।

॥ इति द्विचत्वारिंशोऽध्यायः ॥
॥ राजसूयपर्व समाप्तम् ॥

* * *

---

१. BORI पृ. १६७ ; **'रत्नोपहारसम्पन्नो'** इति कुं.पाठः ।

# अर्घाहरणपर्व

## ।। अथ त्रिचत्वारिंशोऽध्यायः ।।

**वैशम्पायन उवाच –**

**ततोऽभिषेचनीयेऽह्नि ब्राह्मणा राजभिः सह ।[1]**
**अन्तर्वेदिं प्रविविशुः सत्काराहा महर्षयः[2] ।। १ ।।**

**अन्तर्वेदिं** इत्यत्र 'वेदिः परिष्कृता भूमिः'[3] इति वचनात् ब्राह्मणानामुपवेशार्थं शालान्तरालङ्कृता भूमिः **अन्तर्वेदिः** ।

**समेता ब्रह्मभवने देवा देवर्षयस्तथा ।**
**कर्मान्तरमुपासन्तो जजल्पुरमितौजसः ।। ३ ।।**

**कर्मान्तरम्** इत्यत्र अन्यदन्यत्कर्म **कर्मान्तरम्** ।

**एवमेतन्न चाप्येवमेवं चैतन्न चान्यथा ।**
**इत्यूचुर्बहवस्तत्र वितण्डानाः[4] परस्परम् ।। ४ ।।**

**वितण्डानाः परस्परम्** इत्यत्र एवमेतत्, एतदेव च नेत्याद्याकारेण वितण्डावादं कुर्वन्तः जजल्पुरिति पूर्वेणान्वयः ।

**अहो बत महद्भूतं स्वयम्भूर्यदिदं स्वयम् ।**
**आदास्यति पुनः क्षत्रमेवं बलसमन्वितम् ।। १९ ।।**

---

१. कुं.३९ अध्यायः ।
२. $K_{1,2}$,$D_4$,$S_{(except\ M1)}$; BORI पृ. १६८; **'अन्तर्वेदीं'** इति कुं.पाठः ।
३. अ.को. २-७-१८; ४. BORI पृ. १६८; **'वितण्डां वै'** इति कुं. पाठः ।

आदास्यति 'दो अवखण्डने' इति धातोः आ समन्तात् संहरिष्यति ।

इत्येतां नारदश्चिन्तां चिन्तयामास सर्ववित् ।
हरिं नारायणं ज्ञात्वा यज्ञैरिज्यं[१] तमीश्वरम् ॥ २० ॥

यज्ञैरिज्यम् इत्यत्र इज्यं पूजायोग्यम् ।

॥ इति त्रिचत्वारिंशोऽध्यायः ॥

## ॥ अथ चतुश्चत्वारिंशोऽध्यायः ॥

[२]सदाराः सजनामात्या वहन्तो रत्नसञ्चयान् ।
विकृष्टत्वाच्च देशस्य गुरुभारतया च ते ॥ २४ ॥

विकृष्टत्वात् इत्यत्र भूशोधनार्थं लाङ्गलेन देशानां विकृष्टत्वात् । तस्य च देशस्याल्पत्वादिति भावः ।

ययुः प्रमुदिताः पश्चाद्भगवन्तं समन्वयुः ।
बलं शेषं समुदितं परिगृह्य समन्ततः ॥ २५ ॥

अजश्चक्रायुधः शौरिरमित्रगणमर्दनः ।
[३]बलाधिकारं निक्षिप्य सम्मन्यानकदुन्दुभिम् ॥ २६ ॥

सम्प्रायाद्यावश्रेष्ठो यजमाने युधिष्ठिरे ।
उच्चावचमुपादाय धर्मराजाय माधवः ॥ २७ ॥

---

१. $S_1$,$B_3$,$D_{2.6}$,$G_{3.6}$; BORI पृ. १७०; 'यज्ञैरीज्यं' इति कुं.पाठः ।
२. कुं.पाठानुसारेण पूर्वाध्याय एवानुसरति ।
३. 'बलाधिकारे' इति कुं.पाठः ।

धनौघं पुरतः कृत्वा खाण्डवप्रस्थमाययौ ।
तत्र यज्ञागतान् पश्यंश्चैद्यवर्गसमागतान् ॥ २८ ॥

नादयन् रथघोषेण ह्युपायान् मधुसूदनः ।
असूर्यमिव सूर्येण निवातमिव वायुना ॥ ३१ ॥

विशन्तं यज्ञभूमिं तां सितस्यावरजं प्रभुम् ।
तेजोराशिमृषिं विप्रमदृश्यं वै विजानताम् ॥३४॥

वयोतिगानां वृद्धानां मार्गमावृत्य तिष्ठताम् ।
जगतस्तस्थुषश्चैव प्रभवाप्ययमच्युतम् ॥३५॥

अनन्तमन्तं शत्रूणाममित्रगणमर्दनम् ।
भगवान्[1] सर्वभूतानां आपत्स्वभयमच्युतम् ॥३६॥

भविष्यं भावनं भूतं द्वारवत्यामरिन्दम ।
स दृष्ट्वा कृष्णमायान्तं प्रतिपूज्यामितौजसम् ॥३७॥

**सितस्य** बलरामस्य ।

**भगवान् सर्वभूतानाम्** इत्यारभ्य **खाण्डवप्रस्थमाययौ** इत्यन्त-श्लोकानामयं भावः – हे **अरिन्दम** जनमेजय यः यादवश्रेष्ठो माधवः आनकदुन्दुभिं **बलाधिकारं** सेनानायकं द्वारवत्यां निक्षिप्य धर्मराजाय उच्चावचं धनौघं पुरतः कृत्वा खाण्डवप्रस्थं यज्ञारम्भात् प्राक् आययौ, **ऋजुम्**[2] अनुग्रवत्स्थितं,चक्रायुधं, शौरिं, जगतस्तस्थुषश्चैव प्रभवाप्ययं,

---

१. **'प्रभवं'** इति कुं. पाठः ।

२. अयं प्रतीकः मुद्रितकोशेषु नोपलभ्यते ।

अच्युतं, अनन्तं, शत्रूणां अन्तं, अत एवामित्रगणमर्दनं, सर्वभूतानां प्रभवं, अच्युतं यथा भवति तथा आपत्सु आश्रयं, **भविष्यं** उपरि बुद्धादिरूपेणावतरिष्यन्तं, **भावनं** इदानीं कृष्णव्यासादिरूपेण वर्तमानं, **भूतं** मत्स्यादिरूपेण प्रागवतीर्णं, तेजोराशिं, ऋषिं **अदृश्यं** दर्शनायोग्यं तमेनं कृष्णं दृश्यं प्राकृतं जनमिव जानतां **वयोतिगानां** वृद्धानां अत एव मार्गमावृत्य तिष्ठतां सतां[1], युधिष्ठिरे यजमाने सति द्वारवत्यां समुदितं अमित्रगणमर्दनं **शेषं** अवशिष्टं **बलं** सैन्यं समन्ततः परिगृह्य **सम्प्रायात्** यज्ञसभां विहाय महासभां प्रत्येव आगतवान् । रथघोषेण तान् यज्ञागतान् चैद्यादीन् सर्वान् नादयन् सन् **उपायात्** सभामध्यमुपायात् ।

**आरिराधयिषुर्धर्मः पूजयित्वा द्विजोत्तमान् ।**
**महदादित्यसङ्काशमासनं च जगत्पते ।**
**[2]तमनासादितं कैश्चित्तस्मिन्नुपविवेश सः ॥ ३९ ॥**

**आसनं च जगत्पतेः** इत्यत्र ददाविति योग्यपदाध्याहारः ।

**आचार्यमृत्विजं चैव [3]संयुक्तं च युधिष्ठिर ।**
**स्नातकं च प्रियं प्राहुः षडर्घार्हान्नृपं तथा ॥ ४१ ॥**

**संयुक्तम्** इत्यत्र तत्काले आगतमतिथिम् ।

॥ इति चतुश्चत्वारिंशोऽध्यायः ॥

---

१. **'सभां'** सो.मु.पा.।
२. **'ददौ नासादितं'** इति कुं.पाठः ।
३. BORI ; **'संयुजं'** इति कुं. पाठः ।

## ।। अथ षट्चत्वारिंशोऽध्यायः ।।

**[१]बाला यूयं न जानीध्वं धर्मः सूक्ष्मो हि पाण्डवाः ।**
**अयं [२]त्वत्राभ्यतिक्रान्तो ह्यापगेयोऽल्पदर्शनः ।। ३ ।।**

**अयं त्वत्र** इत्यत्र अयं सूक्ष्मो धर्मः ।

**त्वादृशो धर्मयुक्तो हि कुर्वाणः प्रियकाम्यया ।**
**भवत्यभ्यधि कं भीष्मो लोकेष्ववमतः सताम् ।। ४ ।।**

**भवत्यभ्यधि कं** इत्यत्र हे भीष्म लोकेषु सतामवमतः कृष्णः **कं** **अभि** कं प्रति, **अधि** अधिकः भवति इति योजना ।

**बाला यूयं न जानीध्वं धर्मः सूक्ष्मो हि पाण्डवाः ।**
**अयं [३]तत्र व्यतिक्रान्तः आपगेयोऽल्पदर्शनः ।। ३ ।।**
**कथं ह्यराजा दाशार्हो मध्ये सर्वमहीक्षिताम् ।**
**अर्हणामर्हति तथा यथा युष्माभिरर्चितः ।। ५ ।।**

**अयं तत्र** इत्यत्र विशेषेणातिक्रान्तमतिक्रमणं यस्य स तथोक्तः । धर्मं कुर्वता त्वया कृष्णस्य प्रियकाम्यया कथं कृष्णः अर्चित इत्युत्तरेणान्वयः ।

**नैवर्त्विङ्नैव चाचार्यो न राजा मधुसूदनः ।**
**[४]अर्चितस्त्वत्कुरुश्रेष्ठ किमन्यत्प्रियकाम्यया ।। १७ ।।**

---

१. कुं. ४० अध्यायः ।; २. '**तत्राभ्यतिक्रान्तो**' इति कुं. पाठः ।
३. '**तत्राभ्यतिक्रान्तः**' इति कुं.पाठः ।
४. '**अर्चितश्च**' इति कुं. पाठः ।

अर्चितस्त्वत् इत्यत्र त्वत् त्वत्तः ।

**वयं तु न भयादस्य कौन्तेयस्य महात्मनः ।**
**प्रयच्छामः करान् सर्वे न लोभान्न च सान्त्वनात्** ॥ १९ ॥

**प्रयच्छाम** इत्यत्र **लोभात्** मातुःस्वस्रीय इति लोभात् ।

**यदि भीताश्च कौन्तेयाः कृपणा[१] हि तपस्विनः ।**
**ननु त्वया[२] हि बोद्धव्यं यां पूजां माधवार्हसि** ॥ २५ ॥

**यदि भीताश्च कौन्तेया** इत्यत्र **हि** तर्हि **हि** कथमिति चाव्ययद्वय-स्यार्थो ज्ञेयः । राज्ञां मध्ये कथं पूजां कृतवन्तः ।

**अयुक्तामात्मनः पूजां त्वं पुनर्बहुमन्यसे ।**
**हविषः प्राप्य विष्यन्दं[३] प्राशिता श्वेव निर्जने** ॥ २७ ॥

**हविषः प्राप्य** इत्यत्र **विष्यन्दं** पात्रात् पतितभागम् ।

**[४]न हि धर्मं परं जातु नावबुध्येत पार्थिवः ।**
**भीष्मः शान्तनवस्त्वेनं मावमंस्था[५] अतोऽन्यथा** ॥ ३ ॥
**[६]यमं चैनान् महीपालांस्त्वत्तो वृद्धतरान् बहून्** ॥ ४ ॥

---

१. **'कृपणाश्च'** इति कुं. पाठः ।
२. **'त्वयापि'** इति कुं.पाठः ।
३. $B_1, T_1, G_{3.4}, M_1$ ; BORI पृ. १७५; **'निष्यन्दं'** इति कुं. पाठः ।
४. कुं.४१ अध्यायः ।
५. BORI पृ. १७६; **'मावमंस्थास्त्वमन्यथा'** इति कुं.पाठः ।
६. $T_1, G_{3.5}$ ; BORI पृ. १७६; **'पश्य चैतान्म'** इति कुं.पाठः ।

**यमं चैनान्** इत्यत्र **अतः** अवमानात्कारणात् । **अन्यथा** अवमाने सतीत्यर्थः । **यमं** यमसदृशं भीष्ममिति पूर्वेणान्वयः ।

**॥ इति षट्चत्वारिंशोऽध्यायः ॥**

## ॥ अथ सप्तचत्वारिंशोऽध्यायः ॥

**[1]शिरस्तस्य दिवं राजन्नाभिः खं चरणौ मही ।**
**अश्विनौ कर्णयोर्देवौ चक्षुषी शशिभास्करौ ॥ १७ ॥**

**शिरस्तस्य** इत्यत्र **दिवं** द्युलोकं तस्य शिर आहुरिति सम्बन्धः ।

**नारायणो महायोगी सर्वज्ञः परमात्मवान् ।**
**ब्रह्मभूतस्तदात्मानं ब्रह्माणमसृजत् स्वयम् ॥ २० ॥**

**परमात्मवान्** परमचित्तवान् परमप्रयत्नवान् वा । **ब्रह्मभूत** इत्यत्र **ब्रह्मणो** वेदात् **भूतः** अभिव्यक्तः । **तदात्मानं** वेदात्मानं वेदप्रवर्तकमित्यर्थः ।

**सर्वमेवासृजद्ब्रह्मा तथा लोकांस्तथा प्रजाः ।**
**[2]तेन तद्व्यसृजंस्तत्र प्राप्तकाले युधिष्ठिर ॥ २२ ॥**

**तेन तद्व्यसृजत्** इत्यत्र **तेन** ब्रह्मणा **तत्** रुद्रादियोगिवृन्दं व्यसृजत् ।

**आभूतसम्प्लवाश्चैव बहुधाऽद्धाऽपचक्रमुः ।**
**मन्वन्तरयुगा राजन् [3]सैकल्पा भूतसम्प्लवाः ॥ २४ ॥**

---

१. कुं. ४३ अध्यायः । ; २. BORI पृ. ३८८; **'ते च'** इति कुं. पाठः ।
३. **'सङ्कल्पा'** इति कुं. पाठः ।

**आभूतसम्प्लवा** इत्यत्र **आभूतसम्प्लवाः, भूतसम्प्लवः** प्रलयः तत्पर्यन्तं विद्यमानाः लोकानां बहुकोट्यः **अपचक्रमुः** ब्रह्मणो देहान्निर्गताः सृष्टा इत्यर्थः । **सकल्पा** इत्यत्र **सकल्पाः** दैनन्दिनकल्पेन ब्रह्मकल्पेन च सहिताः ।

॥ इति सप्तचत्वारिंशोऽध्यायः ॥

## ॥ अथ अष्टचत्वारिंशोऽध्यायः ॥

**सुप्त्वा[1] युगसहस्रं स प्रादुर्भवति कार्यवान् ।**
**अनेकबहुसाहस्रैर्देवदेवो जगत्पतिः ॥ ३ ॥**

**ब्रह्माणं कपिलं चैव पारश्रेष्ठी[2] तथैव च ।**
**देवान् सप्तर्षिभिश्चैव शङ्करं च महायशाः ॥ ४ ॥**

**ब्रह्माणं कपिलम्** इत्यत्र **कपिलं** कपिर्भूत्वा लसतीति व्युत्पत्त्या कपिलं मुख्यवायुम् । [3]'तौ विवेश स्वयं वायुरि'ति वायोर्वक्ष्यमाणत्वादत्रापि कपिलो वायुः । **पारश्रेष्ठी** इत्यत्र **पारः** संसारसमुद्रस्य पारे विद्यमानः **श्रेष्ठी** श्रेष्ठा मुक्ता एव सेवकतया अस्य वर्तन्त इति श्रेष्ठी ...देवो नारायण[4] इति पूर्वेण सम्बन्धः ।

**भूमिं बद्ध्वा कृतौ पूर्वावजेयौ द्वौ महाऽसुरौ ।**
**कर्णस्रोतोद्भवौ तौ तु विष्णोस्तस्य महात्मनः ॥ ८ ॥**

---

१. कुं.४४ अध्यायः ।; २. 'परमेष्ठि' इति कुं.पाठः ।
[illegible] सभा ४४-९; ३. सभा ४३-२७
[illegible] BORI पृ.३८८; 'तौ कर्णमलसम्भूतौ' इति कुं.पाठः ।

**भूमिं बद्ध्वा** इत्यत्र **भूमिं** स्वकरचरणाद्यङ्गेषु बद्ध्वा। **कर्णस्रोतो-द्भवौ** इत्यत्र स्रवत्यत्र वायुरिति व्युत्पत्त्या **स्रोतानि** नवद्वाराणि।

**आसीदादौ स्वयंजन्म तत्पङ्कजमपङ्कजम्।**[1]
**पूजयामास वसतिं ब्रह्मा लोकपितामहः ॥ १६ ॥**

**आसीदादौ** इत्यत्र **स्वयंजन्म** स्वयं पङ्कादिकारणं विना केवलं स्वतः स्वस्वभावदेव जन्म यस्य तद् स्वयंजन्मेति पङ्कजस्य विशेषणम्।

**प्रीतौ स्वस्तव युद्धेन श्लाघ्यस्त्वं मृत्युरावयोः।**
**आवां जहि न यत्रोर्वी सलिलेन परिप्लुता ॥ २३ ॥**

**आवां जहि** इत्यत्र **उर्वी** अस्मन्मरणभूमिः।

**हतौ च तव पुत्रत्वं प्राप्नुयाव सुरोत्तम।**
**यो ह्यावां युधि निर्जेता तस्यावां विहितौ सुतौ ॥ २४ ॥**

रूपद्वयेन वायोः दैत्यद्वये सन्निधानात् हतौ च तव पुत्रत्वमित्युक्तम्।

**॥ इति अष्टचत्वारिंशोऽध्यायः ॥**

## ॥ अथ एकोनपञ्चाशोऽध्यायः ॥

**एष पौष्करिको नाम प्रादुर्भावः प्रकीर्तितः।**[2]
**पुराणैः कथ्यते यत्र वेदश्रुतिसमाहितः ॥ ३ ॥**

**पौष्करिक** इत्यत्र **पौष्करिकः** पुष्करसम्बन्धी **प्रादुर्भावः** पद्मनाभाख्यप्रादुर्भावः।

**॥ इति एकोनपञ्चाशोऽध्यायः ॥**

---

१. BORI पृ.३८९; 'आससाद' इति कुं.पाठः।; २. कुं. ४५ अध्यायः।

## ॥ अथ पञ्चाशोऽध्यायः ॥

**दशवर्षसहस्राणि शतानि दश पञ्च च ।**
**जपोपवासैस्तस्यासीत् स्थाणुर्मौनव्रतो दृढः[१] ॥ ३ ॥**

**जपोपवासैः** इत्यत्र **तस्य** प्रागुक्ततपसः **जपोपवासैः** तपोनिमित्तजपोपवासैरित्यर्थः । **स्थाणुः** स्थाणुवन्निश्चल आसीत् मौनव्रतश्चाभवदिति क्रियाद्वयसम्बन्धः ।

**ववर्षुः शस्त्रवर्षैस्ते सुसङ्क्रुद्धास्तदा हरिम् ।**
**तैः[२] सृष्टान् सर्वशस्त्राणि भक्षयामास वै हरिः ॥ ५८ ॥**

**तैः सृष्टान्** इत्यत्र शरानिति योग्यपदाध्याहारः ।

॥ इति पञ्चाशोऽध्यायः ॥

## ॥ अथ द्विपञ्चाशोऽध्यायः ॥

**रूपं[३] कृत्वा महाभीमं महदादिसमेदिनीम्[४] ।**
**सम्प्राप्य दिवमाकाशमादित्यसदने स्थितः ॥ १७ ॥**

**महदादिसमेदिनीम्** इत्यत्र महदादिलोकैः सहितमेदिनी ।

**ततो[५] राज्ञां सहस्रं स भङ्क्त्वा पूर्वमरिन्दमः ।**
**सहस्रं मुसलेनाहन्सहस्रमुदकृन्तत ॥ ९ ॥**

---

१. 'व्रतोपवासतस्तस्थौ स्थाणुमौनव्रतः' इति कुं.पाठः ।
२. 'तैः सृष्ट सर्वशस्त्राणि' इति कुं.पाठः । ; २. कुं. ४७ अध्यायः ।
४. 'जहाराशु समेदिनीम्' इति कुं.पाठः ।
५. कुं. ४९ अध्यायः ।

**चतुर्दशसहस्राणि कणधूममपाययत्** ॥ १० ॥

**उदकृन्तत** 'कृन्त च्छेदने' इति धातोः परशुना चिच्छेद । **चतुर्दश-सहस्राणि** उक्तविधया त्रिसहस्रन्यूनचतुर्दशसहस्राणि **कणधूमं** तृणकणैः मृत्तिकाकणैश्च सहकृतधूमं, 'सुडुमण्णु' इत्यपभ्रंशभाषा । **तमपाययत्** एकवारं कृतशिक्षां [1] त्रिसहस्रामपि अपाययदिति वा चतु-र्दशसहस्राणि ।

[2] **रामरामेत्यभिक्रुष्टैः ब्राह्मणैः क्षत्रियार्दितैः ।**
**निघ्नन् शतसहस्राणि रामः परशुनाभिभूः** ॥ ११ ॥

**रामराम** इत्यत्र **अभिक्रुष्टैः** अभितः **क्रुष्टं** आक्रोशनं येषां ते तथोक्ताः ।

**कृत्वा निःक्षत्रियां चैव भार्गवः स महायशाः ।**
**इन्द्रगोपकवर्णस्य जीवञ्जीवनिभस्य च** ॥ १७ ॥

**जीवञ्जीवनिभस्य च** इत्यत्र [3] 'जीवञ्जीवश्चकोरक' इति वचनात् रक्तवर्णकोराख्यपक्षिसदृशस्य ।

**॥ इति द्विपञ्चाशोऽध्यायः ॥**

## ॥ अथ त्रिपञ्चाशोऽध्यायः ॥

[4] **इष्ट्वा सागरपर्यन्तां काश्यपाय महीं ददौ ।**
**तस्याग्रेणानुपर्येति भूमिं कृत्वा विपांसुलाम्** ॥ २० ॥

---

१. **'त्रिसहस्रीमपि'** सो.मु.पा.।; २. **'रामरामेत्यभिकृष्टो'** इति कुं.पाठः ।
३. अ.को. २-७-१८
४. कुं. पाठानुसारेण अत्र पूर्वाध्याय एवानुसरति ।

**तस्याग्रेण** इत्यत्र **तस्य** भूप्रदानस्य **अग्रेण** अवसानकालेन। भूमिं **विपांसुलां** विगताः **पांसुलाः** पापिष्ठा यस्यां सा ताम्।

**वेदिमष्टादशोत्सन्धां[1] हिरण्यस्यातिपौरुषीम्।**
**रामेण जामदग्न्येन प्रतिजग्राह काश्यपः ॥ २२ ॥**

**वेदिमष्टादशोत्सन्धाम्** इत्यत्र **अष्टादशोत्सन्धां** सप्तद्वीपाः सप्तसमुद्राः मेरुः काञ्चनभूमिः वज्रलेपः लोकालोकश्चेति अष्टादशोत्सन्धाः उत्कृष्टाः सन्धयो यस्याः सा तां **अतिपौरुषीं** बहुशः क्षत्रियाणां संवृतत्वात्, **हिरण्यस्य** क्षत्रियकुलादार्जितनानासुवर्णराशेः सम्बन्धिनीं **वेदिं** 'वेदिः परिष्कृता भूमिः'[2] इति वचनात् अलङ्कृतभूमिं कश्यपाय ददौ।

**नग्निकानां कुमारीणां गायन्तीनामुपाशृणोत्।**
**राम राम महाबाहो भृगूणां कीर्तिवर्धन ॥ २९ ॥**

**नग्निकानां कुमारीणाम्** इत्यत्र 'नग्निकाऽनागतार्तवा'[3] इत्यभिधानात् **नग्निकानां** रजोदर्शनरहितानाम्।

**पश्चाधिष्ठाय धर्मात्मा तं रथं विससर्ज ह।**
**आदिकाले प्रवृत्तं तु विभजन्[4] करमीश्वरः।**
**नाग्रत्तं श्रद्धया सौभं न ह्यशक्तो महायशाः ॥ ३० ॥**

**आदिकाल** इत्यत्र **कालं** कश्चित्कालपर्यन्तं प्रकृष्टतपआदिसत्कर्माणि **विभजन्** विशेषेण भजन् **श्रद्धया** कुमारीणां वाक्येषु श्रद्धया।

---

१. 'दशोत्सेधां' इति कुं. पाठः। ; २. अ.को. २-५-३५
३. अ.को. २-५-३५; ४. 'व्यभजत्' इति कुं. पाठः। BORI पृ. ३९७

**जामदग्न्य इति ख्यातो यस्त्वयं भगवानृषिः ।**
**सोऽस्य भागस्तपस्तेपे भार्गवो लोकविश्रुतः ॥ ३१ ॥**

**सोऽस्य भाग** इत्यत्र **अस्य** कृष्णस्य **भागः** स्वरूपांशभूतः ।

॥ इति त्रिपञ्चाशोऽध्यायः ॥

## ॥ अथ चतुःपञ्चाशोऽध्यायः ॥

[१] **तिथौ नावमिके जज्ञे तथा दशरथादपि ।**
**कृत्वाऽऽत्मानं महाबाहुश्चतुर्धा विष्णुरव्ययः ॥ २ ॥**

**तिथौ नावमिक** इत्यत्र **नावमिके** नवमीसम्बन्धिनि ।

[२] **कर्मार्थमेव कौन्तेय जज्ञे तत्र महायशाः ।**
**तमप्याहुर्मनुष्येन्द्रं सर्वभूतपतेस्तनुम् ॥ ४ ॥**

**कर्मार्थमेव** इत्यत्र **कर्मार्थमेव** राक्षसहननाख्यकर्मार्थमेव ।

**वर्तमाने महायज्ञे जनकस्य महात्मनः ।**
**भग्नं माहेश्वरं चापं क्रीडयालीलया[३] भृशम् ॥ ७ ॥**

**भग्नं माहेश्वरम्** इत्यत्र 'हेला लीलेत्यमी (हा) भावाः क्रियाः शृङ्गार-भावजाः'[४] इत्यभिधानात् आ ईषत् **लीला** शृङ्गाररसजातमन्दहासऋषि-मुखनिरीक्षणादिलीला यस्यां सा तया क्रीडया ।

---

१. कुं. ५० अध्यायः ।
२. **'धर्मार्थमेव'** इति कुं. पाठः ।
३. $G_2$; BORI पृ. ३९७; **'क्रीडता लीलया'** इति कुं. पाठः ।
४. अ.को. २-६-८

**पूर्वोचितत्वात् सा लक्ष्मीर्भर्तारमनुशोचती[१] ।**
**जनस्थाने वसन्कार्यं त्रिदशानां चकार सः ॥ १२ ॥**

**भर्तारमनुशोचती** इत्यत्र लोकविडम्बकं भर्तारमनुसृत्य शिला-
ण्टकादिषु गमने सति **शोचन्ती** शोकं दर्शयन्ती ।

[२]**दशाश्वमेधानाजह्रे ज्योतिरुक्थ्यान्निरर्गलान् ।**
**नाश्रूयन्ताशुभा वाचो नात्ययः प्राणिनां तदा ॥ २९ ॥**

**दशाश्वमेधान्** इत्यत्र [३]जारुधिर्नाम सरयूतीरदेशविशेषः । **निरर्गलान्**
प्रत्यूहान् ।

[४]**पर्यदेवन्न विधवा नानाथाः कश्चनाभवन् ।**
**सर्वमासीत्तदा तृप्तं रामे राज्यं प्रशासति ॥**

**पर्यदेवम्** इत्यत्र परितः **अदेवं** देवरहितगृहं न ।

[५]**न सङ्करकरा वर्णा [६]नाकृष्टाकरको जनः ।**
**न च स्म वृद्धा बालानां प्रेतकार्याणि कुर्वते ॥**

**नाकृष्टाकरक** इत्यत्र **अकृष्टे** अकर्षणे सति आ समन्तात् **करः**
नं यस्य सः **अकृष्टाकरकः** तादृशो जनो न नास्ति ।

---

१ 'चति' इति कुं.पाठः ।
२ 'दशाश्व-' इति कुं. पाठः ।
३ प्रतीकं श्लोकेषु न पठ्यते ।
४ BORI पृ. ३०८
५ BORI पृ. ३९८
६ 'न कृष्टकृज्जनः' इति BORI पाठः ।

[१]नरा नात्यचरन् भार्यां भार्या नात्यचरन् पतीन् ।
[२]नासीदपकृषिर्योगे रामे राज्यं प्रशासति ॥

नासीत् इत्यत्र योगे योगाभ्यासे अपगता कृषिः प्रयत्नः यस्य स तथोक्तः ।

[३]धर्मेण पृथिवीं सर्वामनुशासति भूमिपे ।
[४]तपस्तपस्येवाभूच्च धर्मो धर्ममनुव्रतः ।
पृथिव्यां धार्मिके तस्मिन् रामे राज्यं प्रशासति ॥

तपः धर्मश्चाभवतामिति सम्बन्धः ।

[५]शत्रूणां भयकृद्दाता मधुहेति स विश्रुतः ।
[६]स शक्रोऽर्जुनरामाणां [७]किल स्थानान्यसूदयत् ॥ ४३ ॥

शक्रोऽर्जुन इत्यत्र स्थानानि प्रतिस्थानानि ।

॥ इति चतुः पञ्चाशोऽध्यायः ॥

## ॥ अथ पञ्चपञ्चाशोऽध्यायः ॥

[८]देवतानामभिमुखास्तस्थुर्दैतेयदानवाः ।
देवास्तु युध्यमानास्ते दानवानभियू[९] रणे ॥ १० ॥

---

१. BORI पृ. ३९८; २. 'नासीदल्पकृपिर्लोके' इति BORI पाठः ।
३. BORI पृ. ३९९; ४. 'तपस्येत्राभवन् सर्वे सर्वे धर्ममनुव्रताः ।' इति कुं.
५. BORI पृ. ३९९; ६. 'शकटार्जुनरामाणां' इति कुं. पाठः ।
७. 'कीलस्था-'इति कुं. पाठः ।; ८. कुं. ५१ अध्यायः ।
९. '-नभ्ययू' इति कुं. पाठः ।

**अभियू रण** इत्यत्र 'बहुलं छन्दस्यमाङ्योगे' इति वचनात् **अभि** आभिमुख्येन **युः** अयुरिति लङि रूपम् ।

॥ इति पञ्चपञ्चाशोऽध्यायः ॥

## ॥ अथ अष्टपञ्चाशोऽध्यायः ॥

**[1]तत्र एकेन पादेन पातयित्वा तथा शिशुः ।**
**न्युब्जः पयोधराकाङ्क्षी ससार च रुरोद च** ॥ २० ॥

**न्युब्जः पयोधराकाङ्क्षी** इत्यत्र 'न्युब्जं विद्यादधोमुखम्' इति निघण्टोः अधोमुखो **न्युब्जः** ।

**प्रत्यक्षं शूरसेनान्यं[2] दृश्यते महदद्भुतम् ।**
**शयानेन हतः पक्षी शिशुना तिग्मतेजसा** ॥ २२ ॥

**शूरसेनान्यम्** इत्यत्र **शूरसेनानीः** कंसः तत्कृतं कर्म **शूरसेनान्यम्** । अद्भुतं शकटादिरूपेण दैत्यप्रेषणम् । **पक्षी** कंसपक्षपातवान् ।

**वनमालापरिक्षिप्तौ सालपोताविवोद्गतौ ।**
**अरविन्दकृतापीडौ रज्जुयज्ञोपवीतिनौ** ॥ ३३ ॥

**अरविन्दकृतापीडौ** इत्यत्र आपीडं शिरसोऽलङ्कारः ।

**सशिक्यतुम्बुरुकरौ गोपवेणुप्रवादकौ ।**
**क्वचिद्धसन्तावन्योन्यं क्रीडमानौ क्वचिद्वने** ॥ ३४ ॥

---

१ कुं. ५२ अध्यायः ।
२ '-सेनानां' इति कुं. पाठः ।

**सशिक्यतुम्बुरुकरौ** इत्यत्र पाथेयस्थापनाय कम्बलतन्तुकृतशील-विशेषः **शिक्यं**, दारुकृततन्त्रीवाद्यविशेषः **तुम्बुरुः**, शिक्यसहिततुम्बुरुः करे ययोस्तौ ।

**[१]काकपक्षधरः श्रीमाञ्छ्यामः पद्मनिभेक्षणः ।**
**श्रीवत्सेनोरसा युक्तः शशाङ्क इव लक्ष्मणा ॥ २ ॥**

**श्रीवत्सेनोरसा** इत्यत्र श्रीर्वसत्यस्मिन्निति **श्रीवत्सम्** ।

**तेषां सङ्गायतामेव वादयामास केशवः ।**
**[२]पुनर्वाद्यान्तरे वेणुं तुम्बवीणां च तत्र वै ॥ १२ ॥**

**पुनर्वाद्यान्तरे वेणुम्** इत्यत्र **तुम्बवीणा** अलाबुकृतवीणा ।

**सुदामानममित्रघ्न सर्वसैन्यपुरस्कृतम् ।**
**[३]मृगरूपेण गोविन्दो निजघान च भारत ॥ ३१ ॥**

**मृगरूपेण गोविन्द** इत्यत्र **मृगरूपेण** सिंहरूपेण ।

**॥ इति अष्टपञ्चाशोऽध्यायः ॥**

## ॥ अथ षष्टितमोऽध्यायः ॥

पुनरपि प्रागुक्तबाललीलाशेषं वर्णयति– **ततः कदाचित्** इत्यादिना ।

**ततः कदाचित् कौन्तेय रामकृष्णौ वनं गतौ ।**
**चारयन्तौ प्रवृद्धानि गोधनानि शुभाननौ ॥ १७ ॥**

---

१. कुं. ५३ अध्यायः ।;  २. **'पर्ण'** इति कुं.पाठः ।
३. **'बालरूपेण'** इति कुं. पाठः ।

प्राक् सङ्कोचेनोक्तं कंसयुद्धं पुनर्विस्तरेणाह – **कश्च नारायणादन्य** इत्यादिना ।

**[१] परमां मुख्यतां प्राप्तः सर्वलोकेषु विश्रुतः ।**
**कश्च नारायणादन्यः सर्वरत्नविभूषितम् ॥ १५ ॥**

एवञ्च प्रक्रान्तकथाभ्यन्तरे कथान्तरमप्यारभमाणो भीष्मः सरस-सुन्दरीभिरितस्ततो विकृष्यमाणः कामुक इव कृष्णकथायाः पदे पदे स्वादुतां स्वस्य हरिकथारसिकतां च दर्शयन्नास्ते ।

**शस्त्रजालमहाफेनां सादिवेगमहाजलाम् ।**
**गदापरिघपाठीनां नानाकवचशैवलाम् ॥ २७ ॥**

**गदापरिघ** इत्यत्र **पाठीनो** मत्स्यः । 'मीनः पाठीन एव च'[२] इत्यमरः ।

**ततः पार्थिवमायान्तं सहितं सर्वराजभिः ।**
**सरस्वत्यां जरासन्धमजयत्पुरुषोत्तमः ॥ ३३ ॥**

**सरस्वत्यां जरासन्धम्** इत्यत्र सरांसि अस्यां वर्तन्त इति **सरस्वती** यमुना ।

**[३] स भूम्यां [४] मूर्तिलिङ्गस्थः सर्वदेवासुरान्तकः ।**
**मानुषाणां ऋषीणां च प्रतीपमकरोत् तदा ॥**

---

१. कुं. ५४ अध्यायः ।
२. एवमानुपूर्वीकोऽमरः नोपलभ्यते । **'सहस्रदंष्ट्रः पाठीनो'** इति अ.को. १ १०-१८ बहुदंष्ट्रमत्स्यविषयकः दृश्यते ।
३. BORI पृ. ४०७
४. **'मूर्ध्नलिङ्गस्थः'** इति कुं.पाठः ।

**स भूम्याम्** इत्यत्र मूर्ध्नि लिङ्गं स्थं स्थितं यस्य सः मूर्ध्निलिङ्गस्थः।

**[१]औदकायां विरूपाक्षं जघान मधुसूदनः ।**
**ततः प्राग्ज्योतिषं नाम दीप्यमानमिव श्रिया ।**
**पुरमासादयामास तत्र युद्धमवर्तत ॥ ३२ ॥**

**औदकायाम्** इत्यत्र **औदकायां** परितः उदकेनावृतत्वात् औदकेति च तां पुरीं वदन्ति ।

**आदेवयानमावृत्य पन्थानं पर्यवस्थिताः ।**
**त्रासनास्सुरसङ्घानां विरूपै राक्षसैस्सुर ॥ ७ ॥**

**आदेवयानम्** इत्यत्र **आदेवयानं** देवविमानपर्यन्तम् ।

**अतीव हि पुरी रम्या द्वारका वासवक्षयात् ।**
**अति [२]वैराज्यमप्यद्धा प्रत्यक्षस्ते युधिष्ठिर ॥ ११ ॥**

**अति वैराज्यम्** इत्यत्र **वैराज्यं** पाताललोकम् ।

**॥ इति षष्टितमोऽध्यायः ॥**

## ॥ अथ द्विषष्टितमोऽध्यायः ॥

**[३]मुहूर्तं लालयित्वा तु नरकं मधुसूदनः ।**
**प्रवृत्तचक्रं चक्रेण प्रममाथ बलाद्बली ॥ ३४ ॥**

**प्रवृत्तचक्रम्** इत्यत्र प्रकर्षेण वर्तमानं सेनाचक्रं यस्य तम् ।

---

१. कुं. ५५ **अध्यायः**।; २. **'वैराजमप्यद्धा'** इति कुं.पाठः ।
३. कुं. पाठानुसारेण अत्र पूर्वाध्याय एवानुसरति ।

भूमिस्तु पतितं दृष्ट्वा प्रायच्छत् कुण्डले सुतम् ।
प्रदाय च महाबाहुमिदं वचनमब्रवीत् ॥ ३६ ॥

सुतं तत्सुतं भगदत्तम् ।

सृष्टस्त्वयैव [1]मधुमंस्त्वयैव विनिपातितः ।
यथेच्छसि तथा क्रीड प्रजास्तस्यानुपालय ॥ ३७ ॥

सृष्ट इत्यत्र मधुमन् मधुकुलवन् ।

कुण्डले [2]दर्पसम्पूर्णस्ततो मे निहतोऽसुरः ।
नैव मन्युस्त्वया कार्यो यत्कृतं मयि भामिनि ॥ ४० ॥

ततो म इत्यत्र मे मया ।

[3]मणिमुक्ताप्रवालानि वैडूर्यविकृतानि च ।
[4]विस्तारकल्पार्कमणीन् विपुलान् स्फाटिकानपि ॥ ३ ॥

विस्तारकल्प इत्यत्र विस्तारेण कल्पः कल्पना येषां ते तथोक्ताः अर्कमणयः सूर्यकान्तमणयः ।

भीमरूपाश्च मातङ्गाः प्रवालविकृताः कुथाः ।
तं च विंशतिसाहस्रा द्विस्तावत्यः करेणवः ॥ ९ ॥

प्रवालविकृता इत्यत्र कुथाः गजास्तरणकम्बलविशेषाः ।

---

१ 'मधुहंस्त्वयैव' इति कुं.पाठः ।

२ BORI पृ. ४०९; 'हतवान् दर्पात्ततस्ते निहतः सुतः' इति कुं. पाठः ।

३ [illegible]६. अध्यायः ।

४ 'विस्ताराल्पांश्चार्कमणीन्'इति कुं.पाठः ।

**अष्टौ शत सहस्राणि देशजाश्चोत्तमा हयाः ।**
**गोभिश्चाविष्कृतैर्यान्यैः[१] कामं तव जनार्दन ॥ १० ॥**

**यान्यैः** यानवाहकैः ।

**[२]एतत्ते प्रापयिष्यामि वृष्ण्यावासमरिन्दम ।**
**आविकानि च सूक्ष्माणि शयनान्यावसानि च ॥**

**आविकानि** इत्यत्र (आवसानि) आ समन्ताद्वसन्ति येषु तानि, चित्रकम्बलादिकृतमन्दिराणि ।

**समेत्य यदुसिंहस्य [३]चक्रुर्धाराञ्जलिं स्त्रियः ।**
**ऊचुश्चैनं हृषीकेशं सर्वास्ताः कमलेक्षणाः ॥ १९ ॥**

**चक्रुर्धाराञ्जलिम्** इत्यत्र मोदाश्रुधारया सह अञ्जलिम् ।

**ततोऽस्मत्प्रियकामार्थं भगवान् [४]मारुतः स्वयम् ।**
**यथोक्तं नारदेनाथ न चिरात्तद्भविष्यति ॥ २५ ॥**

**मारुतः स्वयम्** इत्यत्र इत्युवाचेति क्रियाध्याहारेण योजना ।

**न्यङ्कुभिश्च वराहैश्च रुरुभिश्च निषेवितम् ।**
**सप्रपातमहासानुं विचित्रशिखिसङ्कुलम् ॥ ३५ ॥**

---

१. **'यावत्कामात्तर्व'** इति कुं.पाठः ।
२. BORI -पृ ४१०
३. **'चक्रुरस्याञ्जलिं'** इति कुं.पाठः ।
४. BORI -पृ ४११; **'मारुतोऽब्रवीत्'** इति कुं.पाठः ।

**न्यङ्कुभिश्च** इत्यत्र **न्यङ्कुः** कृष्णसारमृगः । [1]'रङ्कुस्तथा न्यङ्कुरिति प्रसिद्धा वातप्रमीशम्बरकृष्णसारा' इति हलः ।

॥ इति द्विषष्टितमोऽध्यायः ॥

## ॥ अथ त्रिषष्टितमोऽध्यायः ॥

[2]**समुच्छ्रितपताकानि** [3]**परिप्लवनिभानि च ।**
**काञ्चनाभानि भास्वन्ति मेरुकूटनिभानि च ॥ ९ ॥**

**समुच्छ्रितपताकानि** इत्यत्र परितः प्लवन्तीति **परिप्लवा** मेघाः ।

**सहर्म्यैः सार्धचन्द्रैश्च** [4]**स्वनिर्व्यूहैः सदन्तुरैः ।**
**सयन्त्रगृहसम्बाधैः सधातुभिरिवाद्रिभिः ॥ ११ ॥**

**स्वनिर्व्यूहैः सदन्तुरैः** इत्यत्र 'दन्त उन्नत उरच्' इति वचनात् **दन्तुरा** उन्नतदन्ता गजाः तत्सहितैः ।

**यं चकार महाभागस्त्वष्टा वासव चोदितः ।**
**प्रासादं हेमनाभस्य सर्वतो योजनायतम् ॥ १९ ॥**

**हेमनाभः** पद्मनाभः ।

॥ इति त्रिषष्टितमोऽध्यायः ॥

---

१. ह.को. २-२३०
२. अत्र ५७ अध्यायः ।
३. **'पारिप्लवा'** इति कुं. पाठः ।
४. **'सनिर्यूहैः सपञ्जरैः'** इति कुं. पाठः ।

## ॥ अथ चतुष्षष्टितमोऽध्यायः ॥

**[१]रेवती च महाभाग रुक्मिणी च पतिव्रता ।**
**सत्या जाम्बवती चोभे गान्धारी शिशुमापि [२]या ॥ २ ॥**

**शिशुमा या** इत्यत्र शिशुमेति कृष्णमहिष्या नामान्तरम् ।

॥ इति चतुष्षष्टितमोऽध्यायः ॥

## ॥ अथ सप्ततितमोऽध्यायः ॥

**आरथ्यामाहतक्रोधः शिशुपालश्च निर्जितः ।**
**वक्रश्च स हतः सङ्ख्ये शतधन्वा च क्षत्रियः ॥ ५ ॥**

**आरथ्यामाहत** इत्यत्र आ समन्ताद्रथिनो यत्र गच्छन्ति सा वीथी **आरथी** ।

**[३]अक्षप्रपतने चैव नेमिहंसपदेषु च ।**
**उभौ तावपि कृष्णेन [४]सुराष्ट्रौ विनिपातितौ ॥ १० ॥**

**नेमिहंसपदेषु** देशेषु ।

**[५]प्राप्य लोहितकूटानि कृष्णेन वरुणो जितः ।**
**अजेयो दुष्प्रधर्षश्च लोकपालो महाद्युतिः ॥ ५६ ॥**

**प्राप्य लोहितकूटानि** इत्यत्र **लोहितकूटानि** हेममयगिरिशृङ्गाणि ।

---

१. कुं. ५९ अध्यायः ।; २. **'च'** इति कुं.पाठः ।
३. **'अक्षप्रपत्तने राजन्नवहेलनतत्परौ'** इति कुं.पाठः ।
४. **'सुराष्ट्रे'** इति कुं.पाठः । ; ५. BORI पृ. ४२१.

**द्रौणिं कृपं च कर्णं च भीमसेनं सुयोधनम् ।**
**[1]वक्रानुयाने सहिताञ्जिगाय भरतर्षभ ॥ १५ ॥**

**वक्रानुयान** इत्यत्र रैवताचले वक्रीभूय अनुयाने जात्येकवचनं, स्वस्वानुकूलरथेषु **सहितान्** पुञ्जीभूतान् ।

॥ इति सप्ततितमोऽध्यायः ॥
अर्घाहरणपर्व समाप्तम्

* * *

# शिशुपालवधपर्व

## ॥ अथ एकसप्ततितमोऽध्यायः ॥

**[2]उक्तमेतत्तृतीयायां प्रकृतौ वर्तता त्वया ।**
**वक्तुं धर्मादपेतार्थं त्वं हि सर्वकुरूत्तमः ॥ २ ॥**

**उक्तमेतत्** इत्यत्र **तृतीयायां** तामस्यां **प्रकृतौ** ।

**यत्र कुत्सा प्रयोक्तव्या भीष्म बालतरैर्नरैः ।**
**तमिमं ज्ञानवृद्धः सन् गोपं संस्तोतुमिच्छसि ॥ ६ ॥**

**यत्र कुत्सा** इत्यत्र [3]'कुत्सा निन्दा च गर्हणे' इत्यभिधानात् **कुत्सा** निन्दा ।

---

१. 'युद्धाय सहितान् राज' इति कुं.पाठः ।
२. कुं. ६४ अध्यायः । 'युक्तमेत-' इति कुं. पाठः ।
३. अ.को. १-६-१३

**यद्यनेन हता बाल्ये शकुनिश्चित्रमत्र किम् ।**
**तौ वाऽश्ववृषभौ भीष्म यौ न युद्धविशारदौ ॥ ७ ॥**

**शकुनिः** बकपक्षी ।

**अर्कप्रमाणौ तौ वृक्षौ यद्यनेन निपातितौ ।**
**नागश्च दमितोऽनेन तत्र को विस्मयः कृतः ॥ ९ ॥**

**अर्कप्रमाणौ** इत्यत्र **अर्कः** अर्कतरुः ।

**आत्मानमात्मनाऽऽधातुं यदि शक्तो जनार्दनः ।**
**अकामयन्तं तं भीष्म कथं साध्विव पश्यसि ॥ १९ ॥**

**आत्मानमात्मना** इत्यत्र **आत्मानं** चित्तं **आधातुं** सन्धातुं । **साधु** शोभनं कर्म अकामयन्तं **तं** कृष्णं सध्विति कथं पश्यसि ।

**न गाथा गाथिनं शास्ति पठतीति[१] न कारणम् ।**
**प्रकृतिं यान्ति भूतानि कुलिङ्गशकुनिर्यथा ॥ २० ॥**

**न गाथा गाथिनम्** इत्यत्र **गाथा** केनचिदुक्ता अबद्धं वा सुबद्धं वा वर्णयन्ती कथा गाथा । **गाथिनं** गाथावन्तं गाथागायकमित्यर्थः । **न शास्ति** न शिक्षति । **पठति** गाथां पठतीति कृत्वा **कारणं** श्रैष्ठ्यस्य कारणं न । भूतानि **प्रकृतिं** स्वस्वप्रकृतिं **यान्ति** यावती प्रकृतिरस्ति तावतीमेव यान्ति । स्तुत्या उच्चाः निन्दया नीचाश्च न भवन्तीत्यर्थः । **कुलिङ्गशकुनिः** कुलिङ्गाख्यः पक्षी । अस्य कथा उपरि स्पष्टा भविष्यति ।

---

१. $T_1$,$G_{5,6}$,M ; BORI पृ. १८६; **'बहुचेदपि गायति'** इति कुं.पाठः ।

[१] दारेषु यस्य चान्येन मिषतः प्राज्ञमानिनः ।
तव जातान्यपत्यानि सज्जनाचरिते पथि ॥ २७ ॥

**दारेषु यस्य च** इत्यत्र तव **मिषतः** सतः ।

को हि धर्मोऽस्ति ते भीष्म ब्रह्मचर्यमिदं वृथा ।
[२] यं धारयसि मोहाद्वा क्लीबत्वाद्वा न संशयः ॥ २८ ॥

**यं धारयसि** इत्यत्र **मोहात्** 'नापुत्रस्य लोकोऽस्ति' इति शास्त्रार्थस्य अज्ञानात् ।

न त्वहं तव धर्मज्ञ पश्याम्युपचयं क्वचित् ।
न हि ते सेविता वृद्धा य एवं धर्ममब्रवीः ॥ २९ ॥

**न हि ते सेविता** इत्यत्र ते त्वया ।

हंस उवाच –

प्रजास्वहिंसा धर्मो वै हिंसाऽधर्मः खगव्रजाः ।
एतदेवानुबोद्धव्यं धर्माधर्मः समासतः ॥ ३८ ॥

**धर्माधर्म** इत्यत्र धर्मेण सहितः अधर्मः **धर्माधर्मः** ।

अन्तरात्मन्यभिहते रौषि पत्ररथाशुचि ।
अण्डभक्षणकर्मैतत्तव वाचमतीयते ॥ ५२ ॥

**अन्तरात्मनि** इत्यत्र अन्तः रौषी, **आत्मनि** मुखादिदेहे हृद्यः । **पत्ररथः** पक्षी हंसः ।

॥ इति एकसप्ततितमोऽध्यायः ॥

---

१. $K_{1\ 3}$,$D_{n1}$ ; BORI पृ. १८७; **'भार्ययोर्यस्य'** इति कुं. पाठः ।
२. **'यद्धारयसि'** इति कुं. पाठः ।

## ॥ अथ द्विसप्ततितमोऽध्यायः ॥

[१] **येन धर्मात्मनाऽऽत्मानं ब्रह्मण्यमभिजानता ।**
[२] **नेषितं पाद्यमस्मै तद्दातुमग्रे दुरात्मने ॥ ४ ॥**

**येन धर्मात्मना** इत्यत्र दुरात्मने अस्मै दातुमिषितं पाद्यं अनेन **इषितं** इच्छितम् ।

**अथवा नैतदाश्चर्यं येषां त्वमसि भारत ।**
**स्त्रीसधर्मा च वृद्धश्च सर्वार्थानां प्रदर्शकः ॥ ८ ॥**

**स्त्रीसधर्मा** इत्यत्र **स्त्रीसधर्मा** स्त्रियाः समानधर्मा स्त्रीसदृश इत्यर्थः ।

**त्रिशिखां भ्रुकुटीं चास्य ददृशुः सर्वपार्थिवाः ।**
**ललाटस्थां त्रिकूटस्थां गङ्गां त्रिपथगामिव ॥ ११ ॥**

**त्रिशिखाम्** इत्यत्र कोपादुद्बुद्धमध्यग्रन्थिरेका शिखा, प्रान्तयोर्द्वे एवं त्रिशिखामित्यर्थः ।

**उत्पतन्तं तु वेगेन जग्राहैनं मनस्विनम् ।**
**भीष्म एव महाबाहुर्महासेनमिवेश्वरः ॥ १३ ॥**

**महासेनमिव** इत्यत्र [३]'कार्तिकेयो महासेन' इत्यभिधानात् ईश्वरः षण्मुखमिव जग्राह ।

---

१. कुं. ६५ अध्यायः ।
२. $K_{3,4}$,$\tilde{N}_1$,$V_1$,$B_{3,5}$,$D_{2,6}$; BORI पृ. १९१; **'प्रेषितं'** इति कुं.पाठः ।
३. अ.को. १-१-३९

**तस्य भीमस्य भीष्मेण वार्यमाणस्य भारत ।**
**[1] गुरोर्बहुविधैर्वाक्यैः क्रोधः प्रशममागतः ॥ १४ ॥**

गुरोर्भीष्मस्य ।

**नातिचक्राम भीष्मस्य स हि वाक्यमरिन्दमः ।**
**[2] समुद्भूतो घनापाये वेलामिव महोदधिः ॥ १५ ॥**

**समुद्भूत** इत्यत्र वर्षासु समुद्भूतः महोदधिः घनापाये शरदि वेलामिव नातिचक्राम ।

**उत्पतन्तं तु वेगेन पुनः पुनररिन्दमः ।**
**न स तं चिन्तयामास सिंहः क्रुद्धो मृगं यथा ॥ १७ ॥**

**न स तम्** इत्यत्र **सः** भीमः **तं** शिशुपालम् ।

**नैषा चेदिपतेर्बुद्धिर्यत्त्वामाह्वयतेऽच्युतम् ।**
**भीमसेन महाबाहो [3] कृष्णस्यैव विनिश्चयः ॥ २१ ॥**

**कृष्णस्यैव विनिश्चय** इत्यत्र **विनिश्चयः** विपरीतनिश्चयः ✓ अयं शिशुपालः कृष्णस्यैव वध्य इति योग्यपदाध्याहारः ।

**॥ इति द्विसप्ततितमोऽध्यायः ॥**

* * *

---

१. S ; BORI पृ. १९१; **'गुरुणा विविधैर्वाक्यैः'** इति कुं.पाठः ।
२. $K_{1\text{-}2}$,$B_{3\text{-}6}$ ; BORI पृ. १९२; **'समुद्धृत्तो'** इति कुं.पाठः ।
३. **'कृष्णस्यैष'** इति कुं. पाठः ।

## ।। अथ त्रिसप्ततितमोऽध्यायः ।।

**[1]येनेदमीरितं वाक्यं ममैतं तनयं प्रति ।**
**प्राञ्जलिस्तं नमस्यामि ब्रवीतु स पुनर्वचः ।। ७ ।।**

**[2]महद्बलं महद्भूतमित्युक्त्वा पुनरुत्तरम् ।।**

**याथातथ्येन भगवान् देवो वा यदि वेतरः ।**
**श्रोतुमिच्छामि पुत्रस्य कोऽस्य मृत्युर्भविष्यति ।। ८ ।।**

**प्राञ्जलिस्तम्** इत्यत्र महद्बलं यस्य तं महांश्चासौ भूतश्च **महद्भूतः** तं नमस्यामि । स पुनः वचः ब्रवीतु श्रोतुमिच्छामि ।

**अन्तर्भूतं ततो भूतमुवाचेदं पुनर्वचः ।**
**[3]येनोत्सङ्गे गृहीतस्य भुजावभ्यधिकावुभौ ।। ९ ।।**

**[4]भविष्यतस्तु सम्भग्नौ सोऽस्य मृत्युर्भविष्यति ।**

**येनोत्सङ्ग** इत्यत्र **अभ्यधिकौ** सहजभुजद्वयादधिकौ **उभौ** सम्भग्नौ भविष्यतः सोऽस्य मृत्युः ।

**[5]तौ दामघोषं राजानम् अभिवाद्य यथाक्रमम् ।**
**अभिवाद्य यथान्यायं यथाश्रेष्ठं [6]नृपांश्च तान् ।। १६ ।।**

---

१. कुं. ६६ अध्यायः । ; २. S; BORI पृ. १९३

३. BORI पृ. १९३; **'यस्योत्सङ्गे'** इति कुं. पाठः ।

४. S; BORI पृ. १९४

५. $T_1, G_{1.4-6}$, M; BORI पृ. १९४

६. **'नृपं च ताम्'** इति कुं.पाठः ।

**तौ दामघोषम्** इत्यत्र दमघोष एव दामघोषः । यादवानां मध्य इत्यर्थः ।

॥ इति त्रिसप्ततितमोऽध्यायः ॥

## ॥ अथ चतुस्सप्ततितमोऽध्यायः ॥

**[१]एषो ह्यस्य महाबाहुस्तेजोंशश्च हरेर्ध्रुवम् ।**
**तमेव पुनरादातुं कुरुतेऽत्र मतिं हरिः ॥ ३ ॥**

**एषो ह्यस्य** इत्यत्र 'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम्'[२] इति वचनात् **एषः** ईशैश्वर्यदायी हरेस्तेजोंशः **अस्य** शिशुपालस्य वर्तते ।

**शिशुपाल उवाच –**

**संस्तवाय मनो भीष्म परेषां रमते यदि ।**
**तदा संस्तुहि राज्ञस्त्वमिमं हित्वा जनार्दनम् ॥ ७ ॥**

**संस्तवाय मन** इत्यत्र तर्हि त्वत्कृतसंस्तवाय मम मनः रमते इति सम्बन्धः ।

**[४]वरदं स्तुहि बाह्लीकमिमं पार्थिवसत्तमम् ।**
**जायमानेन येनेयमभवद्दारिता मही ॥ ८ ॥**

---

१. कुं. ६७ अध्यायः ।'**एष**' इति कुं.पांठः ।
२. भगवद्गीता १०-४१
३. '**संस्तवे च**' इति कुं. पाठः ।
४. '**दरदं**' इति कुं.पाठः ।

कृष्णाग्रपूजा[१]धिकाराय प्राक् प्रस्तावितानेत्र राज्ञः प्रशंसाधिकाराय पुनः प्रस्तावयति – **वरदं स्तुहि बाह्लीकम्** इत्यादिना । तेन न पौनरुक्त्यम् । अत एव तत्र कथं कृष्णोऽर्चितस्त्वयेत्युक्तम् । अत्र तु किं प्रशंससि माधवमित्येवोच्यते ।

**[२]सर्वाङ्गविषयाध्यक्षं सहस्राक्षसमं बले ।**
**स्तुहि कर्णमिमं भीष्म महाचापविकर्षणम् ॥ ९ ॥**

**सर्वाङ्गविषय** इत्यत्र समस्ताङ्गराज्याधिपतिम् ।

**[३]यस्य ते कुण्डले दिव्ये सहजे [४]च ददौ तदा ।**
**कवचं च महाबाहो [५]बालार्कं शारदं शुभम् ॥ १० ॥**

**यस्य ते कुण्डले** इत्यत्र **यस्य** कर्णस्य ये कुण्डले स्तः यत्कवचं चास्ति स कर्णः ते कुण्डले तत्कवचं च **तदा** दानकाले प्राप्ते ददौ । **शारदं शुभम्** इत्यत्र **शारदं** विशारदम् ।

**किं हि शक्यं [६]त्वया कर्तुं यद्वृद्धानां [७]मया नृप ।**
**पुरा कथयतां नूनं न श्रुतं धर्मवादिनाम् ॥ २३ ॥**

**यद्वृद्धानां मया** इत्यत्र कृतमिति शेषः ।

---

१. धिक्काराय सो.मु.पा.।
२. $G_{1.3}$; BORI पृ. १९७; **'वङ्गाङ्गविषयाध्यक्षं'** इति कुं. पाठः ।
३. $G_{1.4}$; BORI पृ. १९७; **'यस्येमे कुण्डले'** इति कुं. पाठः ।
४. $G_{1.2}$; BORI पृ. १९७; **'देवनिर्मिते'** इति कुं.पाठः ।
५. **'बालार्कसदृशप्रभम्'** इति कुं.पाठः ।
६. **'मया'** इति कुं.पाठः ।
७. $G_2$; BORI पृ. १९८; **'त्वया'** इति कुं. पाठः ।

**यदस्तव्यमिमं शश्वत् मोहात् संस्तौषि भक्तितः ।**
**केशवं तच्च ते भीष्म न [१]किञ्चिदपि मन्यसे ॥ २५ ॥**

**केशवं तच्च ते** इत्यत्र हे भीष्म **तत्** तस्मात् **ते** स्तुतिनिन्दे किञ्चिदपि **न मन्यसे** स्तुतिनिन्दादोषं न जानासीति भावः ।

**कथं भोजस्य पुरुषे वत्सपाले दुरात्मनि ।**
**समावेशयते[२] सर्वं [३]जगत्कथनकाम्यया ॥ २६ ॥**

**कथं भोजस्य** इत्यत्र **कथनकाम्यया** कृष्णकीर्तिकथनेच्छया भवान् सर्वं जगत् ईदृशे कृष्णे **कथं समावेशयते** सर्वं जगदेतदाश्रयमिति कथं स्तौषीति भावः ।

**[४]न चैषां न च ते भक्तिः प्रकृतिं याति भारत ।**
**तेनैवं वन्दिवत्स्तौषि श्रुतमन्येन न श्रुतम् ।**
**मयैव कथितं पूर्वं कुलिङ्गशकुनिर्यथा ॥ २७ ॥**

**न चैषां न च ते भक्तिः प्रकृतिं याति भारत** इत्यत्र **एषां** पाण्डवानां भक्तिः कृष्णे क्रियमाणा भक्तिः **प्रकृतिं** वस्तुस्वभावं **न याति** गत्यर्थानां ज्ञानार्थत्वात् न जानाति । ते भक्तिश्च प्रकृतिं न याति । **श्रुतं** भवदीयें-न श्रुतं **अन्येन** भवद्भ्योऽन्येन न श्रुतं कृष्णं वन्दिवत् स्तौषीति भावना । **कुलिङ्गशकुनिः** कुलिङ्गाख्यः पक्षी ।

---

१. G$_{1,2}$; BORI पृ. १९८; '**कश्चिदनुमन्यते**' इति कुं.पाठः ।
२. '**-यसे**' इति कुं.पाठः ।
३. '**जगत्केवलकाम्यया**' इति कुं. पाठः ।
४. '**अथ चैषा न ते बुद्धिः**' इति कुं. पाठः ।

**सा हि मांसार्गलं भीष्म मुखात्सिंहस्य खादतः ।**
**दन्तान्तरविलग्नं यत्तदादत्तेऽल्पचेतना ॥ ३० ॥**

**सा हि मांसार्गलम्** इत्यत्र **मांसार्गलं** मांसाख्यस्वबाधकवस्तु ।

**इच्छतः सा हि सिंहस्य भीष्म जीवत्यसंशयम् ।**
**तद्वत्त्वमप्यधर्मिष्ठ सदा वाचः प्रभाषसे ॥ ३१ ॥**

**इच्छतः** क्षुद्रतया तदहिंसनमिच्छतः ।

**हन्यतां दुर्मतिर्भीष्मः पशुवत्साध्वसं[1] नृपैः ।**
**सर्वैः समेत्य संरब्धैर्दह्यतां वा कटाग्निना ॥ ३७ ॥**

**पशुवत्साध्वसं नृपैः** इत्यत्र **साध्वसं** भीतिर्यथा भवति तथा ।

**उक्तस्योक्तस्य नेहान्तमहं समुपलक्षये ।**
**यत्तु वक्ष्यामि तत्सर्वं शृणुध्वं वसुधाधिपाः ॥ ३९ ॥**

**आन्तम्** अन्ते विद्यमानं कार्यम् ।

**कृष्णमाह्वयतामद्य युद्धे चक्रगदाधरम् ।**
**यादवस्यैव देवस्य देहं विशति[2] पातितः ॥ ४२ ॥**

**यादवस्यैव** इत्यत्र **यादवस्य देवस्य** कृष्णस्य, **निपातितः** भवद्भिः निपातितः शर एव देहं भवद्देहं विशति ।

॥ इति चतुस्सप्ततितमोऽध्यायः ॥

---

१. **'पशुवत्साध्वयं नृपाः'** इति कुं. पाठः ।
२. $G_4$ ; BORI पृ. २००; **'विशतु'** इति कुं.पाठः ।

## ॥ अथ पञ्चसप्ततितमोऽध्यायः ॥

श्रीभगवानुवाच –

**अपेत[1] सबलाः सर्व आश्वस्ता मम शासनात् ।**
**मा दुष्टो दूषयेत्पाप एष वः सर्वपार्थिवान्** ॥ १३ ॥

**अपेत** इति लोटि मध्यमपुरुषवचनम् ।

**सौवीरात्प्रतिपत्तौ[2] च बभ्रोरेष तपस्विनः ।**
**भार्यामभ्यहरन् मोहादकामां तामितो गताम्** ॥ १८ ॥

**सौवीरात्प्रतिपत्तौ च** इत्यत्र **प्रतिपत्तौ** 'पद्लृ गतौ' इति धातोः द्वारकां प्रत्यागमने सति, **बभ्रोः** बभ्रुनामकयादवस्य ।

**एष मायाप्रतिच्छन्नः कारूशार्थे तपस्विनीम् ।**
**जहार भद्रां वैशालीं मातुलस्य नृशंसकृत्** ॥ १९ ॥

**करूशार्थे** दन्तवक्रार्थं, **मातुलस्य** वसुदेवस्य **नृशंसकृत्** निष्ठुरकारी ।

**विशालराज्ञो दुहितां मम पित्रा वृतां सतीम् ।**
**अनेन कृत्वा सन्धानं करूशेन जिहीर्षया[3]** ॥ २१ ॥

**जिहीर्षया** कन्यापहारेच्छया ।

---

१ कुं. ६८ अध्यायः ।
२ 'सौवीरागन्प्रतियातां' इति कुं. पाठः ।
३ BORI पृ. ४२४; **'जिगीषया'** इति कुं. पाठः ।

**एवमेतदपर्यन्तमेष वृष्णिषु किल्बिषी।**
**अस्माकमयमारम्भांश्चकार परमानृजुः** ॥ २३ ॥

**परमानृजुः** इत्यत्र परमश्चासौ **अनृजुः** वक्रश्चेति विग्रहः।

**शतं क्षन्तव्यमस्माभिर्वधार्हाणां किलागसाम्।**
**बद्धोऽस्मि समयैर्घोरैर्मातुलेयोऽस्य सङ्गरे**[1] ॥ २४ ॥

**मातुलेयोऽस्य सङ्गर** इत्यत्र अस्य मातुलेयः अहं सङ्गरे प्राप्ते सति वधार्हाणां आगसां शतं क्षन्तव्यमिति घोरैः समयैः बद्धोऽस्मीति योजना।

**वैशम्पायन उवाच –**

**एवमादि ततः सर्वे सहितास्ते नराधिपाः।**
**गर्हणं शिशुपालस्य वासुदेवेन विश्रुताः** ॥ ३१ ॥

**वासुदेवेन विश्रुता** इत्यत्र **विश्रुताः** विशेषेण श्राविता इत्यर्थः।

**स तांस्तु विद्रुतान् सर्वान् साश्वपत्तिरथद्विपान्।**
[2]**तदा तद्वृष्णिवीरेण त्रासितानुरुविक्रमान्** ॥ ३८ ॥

**तदा तद्वृष्णिवीरेण** इत्यत्र स चासौ वृष्णिवीरश्च **तद्वृष्णिवीरः** तेन।

॥ इति पञ्चसप्ततितमोऽध्यायः ॥

---

१. **'र्मातुरस्यैव सङ्गरे'** इति कुं. पाठः।
२. BORI पृ. ४२५

## ॥ अथ षट्सप्ततितमोऽध्यायः ॥

नारद उवाच–

पराक्रमं[1] च मार्गं च सन्निपातं समुच्छ्रयम् ।
आरोहणं कुरुश्रेष्ठ अन्योन्यप्रतिसर्पणम्[2] ॥ ५ ॥

रश्मीनां व्यतिसंसर्गं व्यायामं वृत्तिपीडनम् ।
दर्शनादर्शनं चैव अदृश्यानां च दर्शनम् ॥ ६ ॥

हानिं वृद्धिं च ह्रासं च वर्णस्थानं बलाबलम् ।
सर्वमेतत्परीक्षेत ग्रहाणां ग्रहकोविदः ॥ ७ ॥

**पराक्रमं च मार्गं च** इत्यत्र परस्याक्रमणं **पराक्रमं**, एकग्रहदशाऽवसाने ग्रहान्तरदशावाप्तिः । **मार्गं** वक्रावक्रगतिरूपमार्गम् । **सन्निपातं** पञ्चषडादिग्रहयोगम् । **समुच्छ्रयं** केन्द्राद्युच्चस्थानस्थितिम् । **आरोहणं** नीचस्थानादुच्चस्थानारोहणम् । **अन्योन्यप्रतिसर्पणं** ग्रहयोः परस्परयुद्धम् । **रश्मीनां व्यतिसंसर्गं** नीचोच्चग्रहयोरेकराशौ मेलनम् । **व्यायामं** कालक्षेपेण फलदानम् । **पीडनं** सद्यः पीडनम् । दर्शनादर्शनानां दृश्यन्त इति व्युत्पत्त्या दृश्यादृश्यग्रहाणां **दर्शनादर्शनं** दृश्यस्य बृहस्पत्यादेः अदर्शनं मौढ्यसञ्ज्ञितं, अदृश्यस्य राह्वादेश्चन्द्रोपरागादौ दर्शनम् । **हानिं** हान्याख्यफलदत्वम् । **वृद्धिं** वृद्धिफलदत्वम् । **ह्रासं** व्ययफलदत्वम् । **वर्णस्थानं** बृहस्पतियोगे ब्राह्मणानां, अङ्गारकयोगे क्षत्रियाणां, शनैश्चरादिग्रहयोगे वैश्यशूद्राणां फलं; उपरागादेः श्वेतिम्नि ब्राह्मणानां,

---

१ कुं. ६९ अध्यायः ।

२ $T_1, G_{3,5,6}, M_1$; BORI पृ. ४२६; **'अन्योन्यं प्रतिसर्पणम्'** इति कुं.पाठः

रक्तिम्नि क्षत्रियाणां, पीतिम्नि वैश्यानां, नीलिम्नि शूद्रादीनां फलं वा; कस्यचिद्ग्रहस्य श्वेतवर्णं वस्त्रपुष्पादिकं, कस्यचिद्रक्तं, कस्यचित्पीतं, कस्यचिन्नीलमिति वा वर्णस्थानम् । **बलाबलं** ग्रहाणां प्राबल्यं दौर्बल्यं च ।

**भौमाः पूर्वं प्रवर्तन्ते खेचराश्च ततः परम् ।**
**[१]उत्पाद्यन्ते च लोकेऽस्मिन्नुत्पाता देवनिर्मिताः ॥ ८ ॥**

**उत्पाद्यन्ते च लोकेऽस्मिन्** इत्यत्र अरिष्टकाले अकस्मादुत्पाद्यन्त इत्युत्पाता इत्यर्थः ।

**अच्छाये विमलाच्छाया प्रतिच्छायेव दृश्यते ।**
**यत्र चैत्यकवृक्षाणां तत्र विद्यान्महद्भयम् ॥ १० ॥**

**अच्छाये विमलच्छाया** इत्यत्र यत्र चैत्यकवृक्षाणाम् **अच्छाये** छायाया अयोग्ये स्थले विमला छाया, **प्रतिच्छाया** सूर्यादीन् प्रत्येव च्छाया ।

**शीर्णपर्णप्रवालाश्च शुष्कपर्णाश्च [२]चैत्यगाः ।**
**अपभ्रष्टप्रवालाश्च तत्र भावं विनिर्दिशेत् ॥ ११ ॥**
**स्निग्धपत्रप्रवालश्च दृश्यन्ते यत्र चैत्यकाः ।**
**[३]हीयमानाश्च वृक्षाश्च भावस्तत्र न संशयः ॥ १२ ॥**

**शीर्णपर्णप्रवाला** इत्यत्र **शीर्णपर्णाः** पतितपर्णाः **प्रवालाः** पल्लवच्छोभमानाः, **चैत्यगाः** वृक्षगाः पर्णाश्च **अपभ्रष्टप्रवालाः** अपगतप्रवालाः

---

१. $G_3$ ; BORI पृ. ४३३; **'उत्पद्यन्ते'** इति कुं.पाठः ।
२. **'चैत्यकाः'** इति कुं. पाठः । ; २. **'ईहमानाश्च'** इति कुं.पाठः ।

शुष्कपर्णा एव दृश्यन्ते,तत्र **भावम्** उत्पातसद्भावम् । **हीयमानाः** क्षीयमाणा वृक्षाः स्निग्धपत्रप्रवाला दृश्यन्ते ।

**नदीनां स्रोतसोऽकाले द्योतयन्ति महाभयम् ।**
**वनस्पतिः पूज्यमानः पूजितोऽपूजितोऽपि वा ॥ १५ ॥**

**वनस्पतिः पूज्यमान** इत्यत्र **अपूजितः** पूजार्थं सङ्कल्पितः पूजामप्राप्तश्चेत्यर्थः ।

**भिद्यमानो यदा वृक्षो निनदेच्चापि पातितः ।**
**सह राष्ट्रं च पतितं न तं वृक्षं निपातयेत्[1] ॥ १७ ॥**

**न तं वृक्षं निपातयेत्** इत्यत्र तं वृक्षं वृक्षान्तरे शिलया वा प्रतिरुद्धं दण्डरज्ज्वाद्युपायेन पुनर्निपातयेदित्यर्थः ।

**अथैनं छेदयेत्कश्चित् प्रतिक्रुद्धो वनस्पतिः ।**
**छेत्ता भेत्ता पतिश्चैव क्षिप्रमेव नशिष्यति ॥ १८ ॥**

**अथैनं छेदयेत्** इत्यत्र **एनं** वृक्षं **छेदयेत्** पातार्थं मध्ये छेदयेत्, इन्धनार्थं वा छेदयेदित्यर्थः ।

**[2]दैवतानां च पतनं मण्टपानां च पातनम् ।**
**अचलानां प्रकम्पश्च तत्पराभवलक्षणम् ॥ १९ ॥**

**दैवतानां च पतनम्** इत्यत्र उत्सवे उदूह्य नीयमानानां देवानां पतनम् ।

---

१. **'प्रपातयेत्'** इति कुं. पाठः ।
२. **'देवतानां'** इति कुं.पाठः ।

[1] **देवता यत्र नृत्यन्ति नदन्ति च हसन्ति च।**
**उन्मीलन्ति निमीलन्ति राष्ट्रक्षोभं विनिर्दिशेत्** ॥ २२ ॥

**देवताः** देवालयान्तस्स्थितदेवाः।

**शिला यदि प्रसिञ्चन्ति स्नेहांश्चोदकसम्भवान्।**
[2] **अन्यद्वारि भयं किञ्चित् तद्भयस्य निदर्शनम्** ॥ २३ ॥

**अन्यद्वारि भयम्** इत्यत्र **वारि** उदके अन्यत् किञ्चित् **भयं** भयङ्कर-रक्तबुद्बुदादिकम्।

**देवागारेषु वा यत्र राज्ञो वा यत्र वेश्मनि।**
**विकृतं यदि दृश्येत नागावासेषु वा पुनः** ॥ ३० ॥

**विकृतं यदि दृश्येत** इत्यत्र **विकृतं** रावणहस्ताद्याकारेण जायमानो मृद्विकारः।

[3] **श्रेणीपदान् वा सर्पान् वा डुण्डुभानथ** [4] **दीपकान्।**
**मण्डूको ग्रसते यत्र तत्र राजा विनश्यति** ॥ ३५ ॥

**श्रेणीपदान्** इत्यत्र श्रेणीभूतबहुपादयुक्ताः प्राणिनः। 'चेरटे' इत्यपभ्रंशभाषा। **दीपकान्** तमसि दीपाकारेण ज्वलमानान् खद्योतान् सरीसृपप्राणिविशेषान् वा। 'सण्णजिरि' [5] इत्यपभ्रंशभाषा।

---

१. BORI पृ. ४२६; **'अर्चा यत्र प्रनृत्यन्ति'** इति कुं. पाठः।
२. **'अन्यद्वा विकृतं'** इति कुं. पाठः।
३. $M_1$ ; BORI पृ. ४२७; **'एणीपदान्'** इति कुं. पाठः।
४. $G_{2.6}$,$M_1$ ; BORI पृ. ४२७; **'दीप्यकान्'** इति कुं.पाठः।
५. कन्नडभाषायाम्

**अभिन्नं वाप्यपक्वं वा यत्रान्नमुपचीयते ।**
**[१] जीवन्ते ते म्रियन्ते वा तदन्नं नोपभुञ्जते ॥ ३६ ॥**

**अभिन्नं वाऽप्यपक्वं वा** इत्यत्र **अभिन्नं वा** पाकेन तण्डुलेषु विदारणरहितं वा, **अपक्वं वा** पाकरहितं वा, **यत्र** भाण्डे, अन्नम् **उपचीयते** अभिवर्धते । **ते** तण्डुलाः **जीवन्ते वा** तण्डुलीभावेनैव तिष्ठन्ति वा, **म्रियन्ते वा** तण्डुलीभावं त्यक्त्वा हस्तेन स्पर्शे सति चूर्णीभवन्ति वेत्यर्थः ।

**उदपाने च यत्रापो विवर्धन्ते युधिष्ठिर ।**
**स्थावरेषु प्रवर्तन्ते [२] निर्गच्छेयुः पुनस्ततः ॥ ३७ ॥**

**उदपाने च यत्र** इत्यत्र [३] 'पुंस्येवान्धुः प्रहिः कूपमुदपानं तु पुंसि वा' इत्यभिधानात् **उदपाने** कूपे । **ततः** कूपान्निर्गच्छेयुः । **स्थावरेषु** भूप्रदेशेषु प्रवर्तन्ते च ।

**अजैडकाः स्त्रियो गावो ये चान्ये च वियोनयः ।**
**विकृतानि प्रजायन्ते तत्र तत्र पराभवः ॥ ३९ ॥**

**विकृतानि प्रजायन्त** इत्यत्र विकृतानि यथा भवन्ति तथा प्रजाकारेण जायन्ते ।

**॥ इति षट्सप्ततितमोऽध्यायः ॥**

---

१ $T_1, G_4$ ; BORI पृ. ४२७; **'जीर्यन्ते वा'** इति कुं. पाठः ।
२ **'निर्गच्छेच्च'** इति कुं.पाठः ।
३ अ.को. १-१०-२६

## ।। अथ सप्तसप्ततितमोऽध्यायः ।।

**योऽसौ[1] चेदिपतेस्तात विनाशः[2] समुपस्थितः ।**
**निवेदयति गोविन्दः स्वैरुपायैर्न संशयः ।। ४४ ।।**

**योऽसौ चेदिपतेस्तात** इत्यत्र विनश्यत्यनेनेति **विनाशो** गोविन्दः तत् विनाशसूचकदुर्निमित्तम् ।

**ररास च मही कृत्स्ना सवृक्षवनपर्वता ।**
**अपर्वणि च मध्याह्ने सूर्यं स्वर्भानुरग्रसत् ।। ५० ।।**

**ररास च मही कृत्स्ना** इत्यत्र **ररास** 'रसी उद्वेगे' इति धातोः तत्रास त्रस्ता जाता ।

।। इति सप्तसप्ततितमोऽध्यायः ।।

## ।। अथ अष्टसप्ततितमोऽध्यायः ।।

**द्वैरथं[3] काङ्क्षितं यद्वै तदिदं पर्युपस्थितम् ।**
**चिरस्य बत मे दिष्ट्या वासुदेव सह त्वया ।**
**अद्य त्वां निहनिष्यामि भीष्मं च सह पाण्डवैः ।। ३ ।।**

**द्वैरथं काङ्क्षितम्** इत्यत्र द्वौ रथौ ययोस्तौ द्विरथौ तयोर्भावः **द्वैरथं** द्वन्द्वयुद्धमित्यर्थः ।

---

१. BORI पृ. ४२७; **'सोऽसौ'** इति कुं. पाठः । कुं. पाठानुसारेण पूर्वाध्याय एवानुसरति ।
२. BORI पृ. ४२७; **'विनाशं समुपस्थितम्'** इति कुं. पाठः ।
३. कुं. ७० अध्यायः ।

शिशुपाल उवाच–

[१] अद्य ते मामका बाणाः नेष्यन्ति तत्र संयुगे।
हत्वा त्वां ससुतामात्यं पाण्डवांश्च तरस्विनः ॥ १६ ॥

अद्य त इत्यत्र ते मामका बाणाः नेष्यन्ति यमलोकं प्रापयिष्यन्ति।

ततोऽस्त्रेणैव [२] भगवानकृन्तत शरान् बहून्।
[३] निकृत्य च शरान् सर्वान् अन्तर्धामथ चक्रतुः ॥ १९ ॥

अन्तर्धामथ चक्रतुः इत्यत्र अन्तर्धामन्तर्धानम्। [४] 'अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम्' इत्यमरः।

[५] अपसन्नृप इत्यत्र अपसन् सुनीथं विहाय शिशुपालं प्रत्यगच्छन्।

रुधिरं परिसुस्राव [६] सोऽतीव पुरुषोत्तमः।
न यन्ता न रथो वापि न चाश्वाः पर्वतोपमाः ॥ ४१ ॥

रुधिरं परिसुस्राव इत्यत्र अति अतिशयेन रुधिरं परिसुस्रावेव।

अहं मृत्युश्च भविता काले काले दुरात्मनः।
न भेतव्यं तथा सूत नैषु चिन्मयि तस्थिरे [७] ॥ ४८ ॥

---

१. G१; BORI पृ. ४२८; 'अद्याङ्गं ... ...भेत्स्यन्ति' इति कुं. पाठः।
२. BORI पृ. ४२८; 'चान्योन्यं निकृत्य' इति कुं.पाठः।
३. 'शरवर्षैस्तदा चैद्यमन्तर्धातुं प्रचक्रमे' इति कुं.पाठः।
४. अ.को. १-३-१२; ५. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते।
६. 'मदं मत्त इव द्विपः' इति कुं.पाठः।
७. 'नैष कश्चिन्मयि स्थिते' इति कुं. पाठः।

**नैषु चिन्मयि तस्थिर** इत्यत्र ये शराः मयि तस्थिरे तेषां मध्ये **चित्** कश्चिदिषुः मयि न । असुरजनमोहनार्थं शरविद्ध इव अहमभवम् । वस्तुस्थित्या ममाङ्गे एकोऽपि शरः न लग्न इति भावः ।

**सम्मोहयित्वा भगवांश्चक्रं दिव्यं समाददे ।**
**चिच्छेद च सुनीथस्य शिरश्चक्रेण संयुगे ॥ ५० ॥**

**चिच्छेद च सुनीथस्य** इत्यत्र सुनीथस्य पश्यतः सतः चैद्यस्य शिरः चिच्छेदेत्यर्थः ।

**तदद्भुतममन्यन्त दृष्ट्वा सर्वे महीक्षितः ।**
**यद्विवेश महाबाहुं तत्तेजः पुरुषोत्तमम् ॥ ५३ ॥**

**तेजः** ज्योतिर्मयस्य जयस्य देहात्मकं तेजः ।

**ततश्चेदिपतेर्देहात् तेजोऽग्र्यं ददृशुर्नृपाः ॥ ५१ ॥**
**उत्पतन्तं महाराज सुवोऽन्तादिव[१] भास्करम् ।**
**ततः कमलपत्राक्षं कृष्णं लोकनमस्कृतम् ।**
**ववन्दे तत्तदा तेजो विवेश च नराधिप ॥ ५२ ॥**

**सुवोऽन्तात्** इत्यत्र **सुवः** स्वर्लोकस्य **अन्तात्** मध्यात् ।

**हस्तैर्हस्ताग्रमपरे प्रत्यपिक्षन्[२]नमर्पिताः ।**
**अपरे दशनैरोष्ठानदशन् क्रोधमूर्च्छिताः ॥ ५६ ॥**

**हस्तैर्हस्ताग्रम्** इत्यत्र **प्रत्यपिक्षन्** पेषणं कृतवन्तः ।

---

१. **'गगनादिव'** इति कुं.पाठः । ; २. **'प्रत्यपिंपन्नमर्पिताः'** इति कुं. पाठः ।

प्रजापतिगणा ये तु मध्यस्थाश्च महात्मनि ।
ब्रह्मर्षयश्च सिद्धाश्च गन्धर्वोरगचारणाः ॥ ६१ ॥

प्रजापतिगणा इत्यत्र प्रजापतिगणाः ब्रह्मादिप्रजापतीनां गणाः ।

॥ इति अष्टसप्ततितमोऽध्यायः ॥

## ॥ अथ एकोनाशीतितमोऽध्यायः ॥

वैशम्पायन उवाच –

ततः[1] प्रववृते यज्ञो धर्मराजस्य धीमतः ।
शान्तविघ्नार्हणक्षोभो महर्षिगणसङ्कुलः ॥ १ ॥

शान्तविघ्नार्हणक्षोभ इत्यत्र अर्हणात् क्षोभः शिशुपालस्य क्षोभः विघ्नश्चासावर्हणक्षोभश्च स शान्तो यत्र स तथोक्तः ।

तस्मिन् यज्ञे प्रवृत्ते तु वागीशा[2] हेतुवादिनः ।
हेतुवादान् बहून् प्राहुः परपक्षजिगीषवः ॥ ३ ॥

वागीशाः विद्याधीशाः ।

ददृशुस्ते नृपतयो यज्ञस्य विधिमुत्तमम् ।
उपेन्द्रस्येव विहितं सहदेवेन भारत ॥ ४ ॥

उपेन्द्रस्येव इत्यत्र देवैः सह वर्तमानः सहदेव इन्द्रः तेनोपेन्द्रस्य विहितं कर्मेव ।

---

१ कुं. ७१ अध्यायः ।

२ 'वाग्मिनो' इति कुं. पाठः ।

राजानः स्रग्विणश्चैव सम्मृष्टमणिकुण्डलाः ।
तान् पर्यवीविपन्[१] विप्रान् शतशोऽथ सहस्रशः ॥ १८ ॥
विविधान्यन्नपानानि लेह्यानि विविधानि च ॥ १९ ॥

**पर्यवीविपन्** इत्यत्र अतिशयेन परिवेषयामासुः ।

भेर्यश्च मुरजाश्चैव मड्डुका गोमुखाश्च ये ।
शृङ्गवर्णाम्बुजा[२] वीणाः श्रूयन्ते स्म सहस्रशः ॥ ४३ ॥

**शृङ्गवर्णाम्बुजा** इत्यत्र **अम्बुजाः** शङ्खाः, **वर्णाः** वाद्यविशेषाः ।

॥ इति एकोनाशीतितमोऽध्यायः ॥

## ॥ अथ अशीतितमोऽध्यायः ॥

[३]प्रस्थिताः स्वानि राष्ट्राणि मामापृच्छ्य परन्तपाः ।
[४]ते न व्रजत भद्रं वो विषयान्तं नृपोत्तमान् ॥ १४ ॥

**ते न व्रजत** इत्यत्र ते यूयम् ।

॥ इति अशीतितमोऽध्यायः ॥

॥ शिशुपालवधपर्व समाप्तम् ॥

---

१. **'परीविविपुः'** इति कुं.पाठः ।
२. **'शृङ्गवंशाम्बुजा'** इति कुं. पाठः ।
३. कुं. **७२ अध्यायः ।**
४. **'अनुव्रजत'** इति कुं. पाठः ।

# द्यूतपर्व

## ॥ अथ एकाशीतितमोऽध्यायः ॥

**वैशम्पायन उवाच –**

[१] **अनुसंसाद्य नृपतीन् पाण्डवाः पाण्डवाग्रजम् ।**
**अभिजग्मुर्महेष्वासा धर्मराजं युधिष्ठिरम्** ॥ १ ॥

**अनुसंसाद्य नृपतीन्** इत्यत्र **अनुसंसाद्य** अनुप्राप्य ।

॥ इति एकाशीतितमोऽध्यायः ॥

## ॥ अथ चतुरशीतितमोऽध्यायः ॥

[२] **तत्र स्फाटिकतोयां वै स्फाटिकाम्बुजशोभिताम् ।**
**वापीं मत्वा स्थलमिव सवासाः प्रापतज्जले** ॥ ६ ॥

तत्र **स्फाटिकतोयाम्** इत्यत्र स्फाटिकवच्छोभमानशुभजलां, स्फाटिकवच्छोभमानशुभ्राम्बुजयुक्ताम् ।

**एवं प्रलम्भान् विविधान् प्राप्य तत्र विशाम्पते ।**
**पाण्डवेयाभ्यनुज्ञातस्ततो दुर्योधनो नृपः** ॥ १४ ॥

**प्रलम्भान्** वञ्चनानि ।

---

१ S ; BORI पृ. २१८; 'अनुसंसार्य' इति कुं. पाठः । **कुं. ७३ अध्यायः ।**

२ 'ततः' इति कुं. पाठः । **कुं. ७४ अध्यायः ।**

**न मामवैहि** इत्यत्र **भूतां** प्रभूतां युधिष्ठिरे तां श्रियं दृष्ट्वा मम मां श्रियं नावैहि । तत्सम्पदः अग्रे मम सम्पदतितुच्छेति भावः ।

**सपत्नानृद्ध्यतोऽऽत्मानं हीयमानं निशाम्य च ।**
**अदृश्यामपि कौन्तेये[1] नाहं पश्यामि वर्धतीम्** ॥ २६ ॥

**सपत्नानृद्ध्यत** इत्यत्र सपत्नान् **ऋद्ध्यतः** वर्धमानान्, अस्मान् हीयमानान्, कौन्तेये **अदृश्यां** द्रष्टुमशक्यां **वर्धतीं** वर्धमानां श्रियं च निशाम्य अहं किं किमपि अन्नाच्छादनादिकं न पश्यामि । तद्द्रष्टुमपि मनो नायाति । भोक्तुं नेति किं वक्तव्यमिति भावः ।

**[2]कदलीपत्रवर्णानि कृष्णश्यामारुणानि च ।**
**काम्भोजः प्राहिणोत्तस्मै परार्ध्यानपि कम्बलान् ।**
**गजयोषिद्गवाश्वस्य शतशोऽथ सहस्रशः** ॥ २९ ॥

**कदलीपत्रवर्णानि** इत्यत्र चित्राम्बराणीति शेषः ।

**ब्राह्मणा वाटधानाश्च गोमन्तः शतसङ्घशः ।**
**त्रिखर्वं बलिमादाय द्वारि तिष्ठन्ति वारिताः** ॥ ३४ ॥

**ब्राह्मणा वाटधाना** इत्यत्र **वाटधानाः** पुष्पवाटादिना **धानाः** धनवन्तः ।

**कमण्डलूनुपादाय जातरूपमयाञ्शुभान् ।**
**त्रैखर्वाः प्रतिपाद्यास्मै[3] लेभिरेऽथ प्रवेशनम्** ॥ ३५ ॥

---

१. **'कौन्तेय श्रियं पश्यन्निवोद्यताम्'** इति कुं. पाठः ।
२. $M_1$ ; BORI पृ. २१९; **'कदलीमृगमोकानि'** इति कुं. पाठः ।
३. **'प्रतिवेद्य..'** इति कुं.पाठः ।

**त्रैखर्वा** इत्यत्र **त्रयः** धर्मार्थकामाः **खर्वाः** तुच्छाः यस्मात् पुरुषार्थात् स मोक्षस्त्रिखर्वः, तत्सम्बन्धिनः **त्रैखर्वाः** मुमुक्षव इत्यर्थः । त्रिखर्व-विषयस्था वा **त्रैखर्वाः** **अस्मै** धर्मराजाय **प्रतिपाद्य** निवेदयित्वा ।

॥ इति चतुरशीतितमोऽध्यायः ॥

## ॥ अथ षडशीतितमोऽध्यायः ॥

**वैशम्पायन उवाच –**

**[१] एवमुक्तः शकुनिना राजा दुर्योधनस्ततः ।**
**[२] धृतराष्ट्रं नरव्याघ्रमपदान्तरमब्रवीत्** ॥ ६६ ॥

धृतराष्ट्रं **नरव्याघ्रम्** इत्यत्र **अपदान्तरं** न विद्यते **पदान्तरं** वाक्यान्तरं यथा भवति तथा ।

**[३] ये च तत्र सभास्तारा राजानो ब्रह्मवित्तम ।**
**के चैनमन्वमोदन्त के चैनं प्रत्यषेधयन्** ॥ २ ॥

**ये च तत्र सभास्तारा** इत्यत्र **सभास्ताराः** सभ्याः । [४]'सभासदः सभास्ताराः सभ्याः सामाजिकाश्च ते' इत्यमरः ।

**[५] आर्तवाक्यं तु तत्तस्य प्रणयोक्तं निशम्य सः ।**
**[६] दुर्योधनस्य शान्त्यर्थं धृतराष्ट्रोऽन्वशात्तदा** ॥ ७२ ॥

---

१ कुं. पाठानुसारेण पूर्वाध्याय एवानुसरति ।
२ G; BORI पृ. २२३; '**धृतराष्ट्रमिदं वाक्यमपदा-**' इति कुं. पाठः ।
३ G; BORI पृ. २२६; '**के**' इति कुं. पाठः । कुं. ७७ अध्यायः ।
४ अ.को. २-७-१६; ५. अयं श्लोकः कुं. पाठानुसारेण ७६ अध्यायस्थः ।
६ '**धृतराष्ट्रोऽब्रवीत् प्रेष्यान् दुर्योधनमते स्थितः**' इति कुं.पाठः ।

**धृतराष्ट्रोऽन्वशात्तदा** इत्यत्र **अन्वशात्** अनुशासनमकरोत् ।

**अपजीवा इवाभान्ति निघ्नाश्चित्रककिङ्कराः ।**[1]
**कारस्करा लोहजङ्घा युधिष्ठिरनिवेशने** ॥ २२ ॥

**हिमवत्सागरानूपाः सर्वे रत्नाकरास्तथा ।**
**अन्त्याः सर्वे पर्युदस्ता युधिष्ठिरनिवेशने** ॥ २३ ॥

**अपजीवा इव** इत्यत्र **कारस्कराः** कुर्वन्तीति काराः करा येषां ते तथोक्ताः, कराभ्यां बहुकार्यकरणसमर्था इत्यर्थः । लोहवद्दृढा जङ्घा येषां ते **लोहजङ्घाः**, पदाभ्यां बहुदूरगमनेऽप्यालस्यरहिता इत्यर्थः । एतादृशाः **किङ्कराः** किङ्करनामकदैत्यगणाः । यद्वा कारस्करा लोहजङ्घाश्च जातिविशेषा एव । **अपजीवा इव** अपगतो जीवो येषां ते **अपजीवाः**, मृता इव प्रातिकूल्यकरणे असमर्था इत्यर्थः । **अपजीवाः** अपहृतं, जीवयतीति व्युत्पत्त्या **जीवो** जीवनधनं यैस्ते त इव । धनं दत्त्वा सङ्गृहीतभटा इव युधिष्ठिरनिवेशने **निघ्नाः** 'निघ्नः परवशो मतः'[2] इत्यभिधानात् सर्वोक्तकारिणो भृत्याः सन्तः आ समन्तात् नगरस्योपरि परितश्च **आभान्ति** प्रकाशन्ते । करणगमनादावतिसमर्था एते दैत्याः धर्मराजभवने दासानुदासास्सन्तः तिष्ठन्तीति भावः । **अन्त्याः** भुवः कोणे वर्तमानाः, **पर्युदस्ताः** परितः उत्कर्षेण अस्तं राष्ट्रं यैस्ते पर्युदस्ताः गिरिकन्दरादिषु विद्यमानाश्चोराः भूतपिशाचादयश्च युधिष्ठिरनिवेशने निघ्ना इव आभान्ति ।

---

१. **'आवर्जिता इवाभान्ति नीपाश्चित्रककौकुराः'** इति कुं. पाठः ।
२. ह.को. २.३४१ । **'तथा'** इति प्र. पाठः ।

[1]ज्येष्ठोऽहमिति मां मत्वा श्रेष्ठश्चेति विशाम्पते ।
युधिष्ठिरेण सत्कृत्य युक्तो रत्नपरिग्रहे ॥ २४ ॥

ज्येष्ठोऽहमिति इत्यत्र **ज्येष्ठः** वयोज्येष्ठः, **श्रेष्ठः** गुणैः श्रेष्ठः, **युक्तः** नियुक्तः ।

उपस्थितानां रत्नानां [2]श्रेष्ठानां रत्नहारिणाम् ।
[3]पारमन्तं न पश्यामि नापरं तत्र भारत ॥ २५ ॥

**उपस्थितानाम्** इत्यत्र रत्नानां, रत्नहारिणां जनानां च पारं अन्तं **अपरं** आदिं च न पश्यामि ।

कृतां बिन्दुसरोरत्नैर्मयेन स्फाटिकच्छदाम् ।
अपश्यं नलिनीं पूर्णामुदकस्येव भारत ॥ २७ ॥

कृतां **बिन्दुसरोरत्नैः** इत्यत्र **बिन्दुसरोरत्नैः** बिन्दुसरसः समीपस्थ-पापर्वसभारत्नैः मयेन कृताम् ।

[4]शत्रोरत्न इत्यत्र भवान् ईदृशं मां यदि **ममृषे** सेहे ।

पुनश्च तादृशीमेव वापीं जलजशालिनीम् ।
[5]सभां पुष्करिणीं मत्वा पतितोऽस्मि नराधिप ॥ ३१ ॥

पुष्करिणीं सभां मत्वेति सम्बन्धः ।

---

१. $T_1, G_{1-3}, M_1$ ; BORI पृ. २२८; **'ज्येष्ठोऽयमिति'** इति कुं. पाठः ।
२. **'श्रेष्ठानामर्घहारिणाम्'** इति कुं.पाठः ।
३. **'नादृश्यत परम्पारं'** इति कुं.पाठः ।
४. तत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
५. **'मत्वा शिलासमां तोये'** इति कुं. पाठः ।

**नामधेयानि रत्नानां पुरस्तान्न श्रुतानि मे ।**
**यानि दृष्टानि मे तस्यां मनस्तपति तच्च मे ॥ ३८ ॥**

**न श्रुतानि** इत्यत्र तेषां वाक्यानि न श्रुतानि, मुखानि न दृष्टानि ।

**॥ इति षडशीतितमोऽध्यायः ॥**

## ॥ अथ संप्ताशीतितमोऽध्यायः ॥

[१]**और्णांश्चैलान् वार्षदंशान् जातरूपपरिष्कृतान् ।**
**प्रावाराजिनमुख्यांश्च काम्भोजः प्रददौ बहून् ॥ ३ ॥**

**और्णांश्चैलान् वार्षदंशान्** इत्यत्र [२]'ऊर्णा मेषादिलोम्नि स्यात्' इत्यभिधानात् **और्णान्** ऊर्णकृतचित्रकम्बलादीन्, **वार्षदंशान्** वृषभदंशनशीलत्वाद्वृषदंशा व्याघ्रादयस्तत्सम्बन्धिचर्मनर्मनखादीन् ।

**अश्वांस्तित्तिरिकल्माषांस्त्रिदशान्**[३] **शुकनासिकान् ।**
[४]**उष्ट्रवामीस्त्रिगर्तांश्च पुष्टान् पीलुशमीङ्गुदैः ॥ ४ ॥**

**अश्वांस्तित्तिरिकल्माषान्** इत्यत्र तित्तिरिपक्षिवत्[५] कृष्णपाण्डुरान् **त्रिदशान्** त्रिः त्रिवारं दशवर्षाणि येषां ते तथोक्ताः, त्रिदशवयस्कानित्यर्थः । **पीलुशमीङ्गुदैः** [६]'पीलुर्गुडफलस्रंसी' इत्यभिधानात् द्राक्षाखर्जूरनारिकेलादयः **पीलवः, शमी** शमीवृक्षः, इङ्गुदोऽपि

१. **'और्णान् बैलान्'** इति कुं. पाठः । **कुं. ७८ अध्यायः ।**
२. **अ.को. ३-३-४९;** ३. '**-स्त्रिशतं'** इति कुं. पाठः ।
४. **'उष्ट्रवामीस्त्रिगर्ताश्च पुष्टाः'** इति कुं.पाठः । ; ५. **त्रिंशत्** सा.मु.पा.
६. **अ.को. २-४-२८**

पुष्पलताविशेषः तैः पुष्टान् अश्वादीन् चतुष्पदः । 'पुष्टाः' इति पाठे त्रिगर्तानां विशेषणम् ।

**[1]गोपानसेन गोपानां दासमीयाश्च सर्वशः ।**
**[2]प्रीत्यर्थं ते महाभागा धर्मराज्ञो महात्मनः ॥**

**गोपानसेन गोपानाम्** इत्यत्र **गोपानसेन** गोपानां **आनसेन** अनस्सम्बन्धिना नानाभारेण सहिताः ।

**[3]वसान्नयोन्यदूष्याश्च द्वारि तस्यावतस्थिरे ॥ ५ ॥**

**वसान्नयोन्यदूष्या** इत्यत्र [4]'हृन्मेदस्तु वपा वसा' इत्यभिधानात् **वसया** मत्स्यमृगादीनां हृन्मेदसा अन्नं येषां ते वसान्नाः, तथापि योनितः स्वस्वजातितः **अदूष्याः** दूषयितुमयोग्याः, वसान्नाश्च ते योन्यदूष्याश्च वसान्नयोन्यदूष्याः । यद्वा **वसान्ना** म्लेञ्छविशेषाः, **योन्यदूष्याः** स्त्रीराज्याधिपतयः । **त्रिगर्ताः** त्रिगर्तदेशस्थाः ।

**प्रीयमाणः प्रसन्नात्मा स्वयं स्वजनसंवृतः ।**
**त्रैखर्वो [5]रथमुख्यांश्च पाण्डवाय न्यवेदयत् ॥ ७ ॥**

**त्रैखर्वो रथमुख्यांश्च** इत्यत्र **त्रैखर्वः** त्रिखर्वविषयाधिपती राजा ।

**यश्च स द्विजमुख्येन राज्ञः शङ्खो निवेदितः ।**
**प्रीत्या दत्तः [6]कुणिन्देन धर्मराजाय धीमते ॥ ८ ॥**

---

१. **'गोपाः स्वीयेन सहितास्तदादाय चतुष्पदम्'** इति कुं. पाठः ।
२. BORI पृ २३१ ; ३. **'वसातयोऽन्यद् द्रव्यं च'** इति कुं. पाठः ।
४. अ.को. २-६-६४; ५. **'रथमुख्येशः'** इति कुं. पाठः ।
६. **'कुविन्देन'** इति कुं. पाठः ।

**यश्च स** इत्यत्र **यः** शङ्खः कुणिन्देन राज्ञा दत्तः **स** राज्ञः शङ्खः **द्विजमुख्येन** केनचिद्ब्राह्मणेन धर्मराजाय निवेदितः ।

**ततः प्रहृष्टो बीभत्सुरददाद्धेमशृङ्गिणः ।**
**शतानानडुहान् पञ्च द्विजमुख्याय भारत ॥ १४ ॥**

**द्विजमुख्याय** शङ्खदात्रे ब्राह्मणाय ।

**काश्मीरराजो माद्वीकं[1] शुण्डं च सरसं मधु ।**
**बलिं च कृत्स्नमादाय पाण्डवायाभ्युपागमत् ॥ १६ ॥**

**काश्मीरराजो माद्वीकम्** इत्यत्र 'शुण्डापानं मदस्स्थानम्'[2] इत्यभिधानात् शुण्डापानयोग्यत्वात् मदकरत्वाद्वा शुण्डनामकं **मधु** मधुरं **माद्वीकं** मद्यम् ।

**वङ्गो जाम्बूनदमयान् पर्यङ्काञ्छतशो नृप ।**
**दक्षिणात् सागराभ्याशात् प्रवालं[3] च परं गतम् ॥ २० ॥**

**प्रवालं च परं गतम्** इत्यत्र **परं** पेषणादिना उत्तमस्वभावं **गतं** प्राप्तम् ।

**दार्दुरं चन्दनं मुख्यं भारं षण्णवति द्रुतम् ।**
**पाण्डवाय ददौ पाण्ड्यः शङ्खांस्तावत एव च ॥ २२ ॥**

**दार्दुरं चन्दनम्** इत्यत्र **दार्दुरं** दर्दुरेण क्रूरेण ग्रन्थिकोटरादिना सहितम् ।

---

१. BORI ; **'माद्वीकं शुद्धं न'** इति कुं. पाठः ।
२. अ.को. २-१०-४०;   ३. **'प्रावारांश्च परश्शतम्'** इति कुं. पाठः ।

**उपायनं यदा दद्युस्तदा द्वारमलभ्यत ।**
**[1] इन्द्रवृष्टैर्वर्धयन्ति [2] धान्यैर्नाद्यमुखैस्तु ये ॥ ३८ ॥**

**इन्द्रवृष्टैः** इत्यत्र इन्द्रवृष्ट्युद्भवैः, **नाद्यमुखैः** नदीभवानि नाद्यानि, मुखपदेन तटाकजानि गृह्यन्ते ।

**[3] अश्मसारमयं भाण्डं शुभ्रदन्ततनूनसः ।**
**प्राग्ज्योतिपाधिपो दत्त्वा भगदत्तोऽव्रजत्तदा ॥ ४३-४४ ॥**

**अश्मसारमयं भाण्डम्** इत्यत्र [4] 'गिरिसारमश्मसारं लोहं कालायसं तथा शस्त्रम्' इत्यभिधानात् **अश्मसारमयं** लोहमयम् । **शुभ्रदन्ततनूनस** इत्यत्र शुभ्राः दन्ताः तनूः शरीरं नाः नासिका च येषां तान् **शुभ्रदन्ततनूनसः** गजानित्यर्थः ।

**औष्णीपानहयांश्चैव बाहुकान् पुरुपादकान् ।**
**एकपादांश्च तत्राहमपश्यं द्वारि वारितान् ॥ ४५ ॥**

**एकपादांश्च** इत्यत्र **एकस्मिन्** सूक्ष्मपात्रे **पादाः** पादचतुष्टयं येषां ते एकपादाः तान् शिक्षितानिति भावः ।

**जातरूपमनर्घ्यं च ददुस्तस्यैकपादकाः ।**
**सिंहलश्च तदा राजा परिगृह्य धनं बहु ॥ ४८ ॥**

**एकपादकाः** एकपादाख्यदेशस्थाः ।

---

१. 'इन्द्रकृष्टैः' इति कुं. पाठः । ; २. 'धान्यैर्नदमुखैस्तु' इति कुं. पाठः ।
३. 'अश्वसारमयान् भाण्डान् शुभान् दन्तत्सरुनसीन्' इति कुं.पाठः ।
४. ह.को. २-१७१.

**[१]गोशीर्षकं पद्मकं च हरिं श्यामं च चन्दनम् ।**
**भाराणां शतमेकं तु द्वारि तिष्ठति वारितः ॥ ४९ ॥**

**गोशीर्षकम्** इत्यत्र [२]'तैलप(र्णा)र्णिकगोशीर्षहरिचन्दनमस्त्रियां' इत्यभिधानात् श्रेष्ठचन्दनेष्ववान्तरविशेषः ।

**पौण्ड्राश्च दामलिप्ताश्च यथाकामकृतो नृपाः ।**
**कालेयकं च रूप्यं च परिगृह्य परिच्छदान् ॥ ५१ ॥**

**कालेयकं च रूप्यं च** इत्यत्र **कालेयकं** ज्वालामुख्याख्यकालीदेशः काश्मीरदेशः, तत्र भवं **कालेयकं** कुङ्कुमम् ।

**अगरून् स्फाटिकांश्चैव [३]दन्ताञ्जातिफलानि च ।**
**[४]तक्कोलकांश्च लवङ्गाश्च कर्पूरांश्च महाबल ॥ ५२ ॥**

**[५]तक्कोलकांश्च** इत्यत्र [६]'तक्कोलकं कोशफलम्' इत्यभिधानात् **तक्कोलकं** कोशफलसञ्ज्ञितं परिमलद्रव्यम् । **दन्ताः** गजदन्ताः । **जातिफलं** जाजिफलम् । 'जायिकायी' [७]इत्यपभ्रंशभाषा ।

**[८]चीनान् हूणान् शकानोड्रान् पर्वतान्तरवासिनः ।**
**[९]आहार्षुर्दशसाहस्रान् विनीतान् दिक्षु विश्रुतान् ॥ ५५ ॥**

---

१. BORI पृ. ४३७ ; **'गोशीर्षं हरितश्यामं'** इति कुं.पाठः ।
२. अ.को. २-६-१३१; ३. **'दन्ताञ्जातीफलानि'** इति कुं.पाठः ।
४. **'तक्कोलांश्च'** इति कुं. पाठः ।; ५. **तत्कोलकांश्चेत्यत्र** सो.मु.पा. ।
६. अ.को. २-६-१३०; **'कक्कोलकं'** इति प्र. पाठः ।
७. कन्नडभाषायाम् ; ८. **'चीना हूणाः कपाः काचाः'** इति कुं. पाठः ।
९. BORI पृ.२३४

**चीनान् हूणान्** इत्यत्र **अन्तरवासिनः** समुद्रद्वीपवासिनः **चीनान् हूणान्** चीनहूणादिजातिविशेषवतो म्लेच्छविशेषान् । हारिषुरिति तेषामधिपतिः कश्चित् ।

**[१]उष्णीषकं करं चैव किट्टजं पट्टजं तथा ।**
**प्रमाणरागस्पर्शाढ्यं [२]वाहिचीनसमुद्भवम् ।**
**रसान् गन्धान् [३]प्रशंसन् सस्ततो द्वारमलभ्यत ॥ ५७ ॥**

**उष्णीषकं करम्** इत्यत्र **किट्टजं** [४]'गोर्दं किट्टं मलोऽस्त्रियाम्' इत्यभिधानात् लोहमलेन कृतं, **पट्टजं** पट्टतन्तूद्भवं, **प्रमाणेन** तत्तच्छिरसामपेक्षितप्रमाणेन रागस्पर्शेन च आढ्यं, वाहिदेशे चीनदेशे च समुद्भवं **उष्णीपकं** शिरोवेष्टनमेव **करम्** उपायनम्, उपलक्षणं चैतत् । तत्कृतकञ्चुकप्रावरणादिकं करमुपायनं प्रशंसन् चीनहूणादिजातिविशेषांश्च प्रकर्षेण धर्मराजाय शंसन् **सः** हारिषुः द्वारपालैः द्वारं **अलभ्यत** प्राप्यत । अन्तः प्रवेशित इत्यर्थः ।

**खर्वटास्तोमराश्चैव शूरा वर्धनकास्तथा ॥ ५७ ॥**

खर्वटादयोपि जातिविशेषाः ।

**बलादूरुगमा राजन् गणितं चार्बुदं मया ।**
**[५]किट्टीकृतं सुवर्णं च पद्मकिञ्जल्कसन्निभम् ॥ ६१ ॥**

---

१. **'औष्णीकं कम्बलं चैव कीटजं मणिजं तथा'** इति कुं.पाठः ।
२. **'बाह्लीचीन'** इति कुं.पाठः ।; ३. **'प्रशसन्तस्ततो'** इति कुं.पाठः ।
४. अ.को. २-६-६५
५. $G_2$ ; BORI पृ. २३४; **'कूटिकृतं'** इति ।

**किट्टीकृतं** किट्टवत्पिण्डाकारेण कृतं सुवर्णम् ।

**हयैर्विनीतैः सम्पन्नान् वैयाघ्रपरिवारितान् ।**
**विचित्रान् सपरिस्तोमांश्चापानि विविधानि च** ॥ ६५ ॥

**वैयाघ्रं** व्याघ्रचर्म ।

**जतुचेलान्[१] द्विसाहस्रं दुकूलान्ययुतानि च** ॥ ६७ ॥

**जतुचेलान्** इत्यत्र लाक्षारसेन रक्तवर्णचेलान् ।

**॥ इति सप्ताशीतितमोऽध्यायः ॥**

## ॥ अथ अष्टाशीतितमोऽध्यायः ॥

**वङ्गाः[२] कलिङ्गा मगधास्ताम्रलिप्ताः सपुण्ड्रकाः ।**
**दुकूलं कौशिकं चैव पत्रोर्णं चैव भारत** ॥ ९३ ॥

**कौशिकं चैव** इत्यत्र [३]'पत्रोर्णं धौतकौशेयं बहुमूल्यं महाधनम्' इत्यभिधानात् **पत्रोर्णं** धौतकौशेयम् ।

**ईषादन्तान् हेमकक्ष्यान् पद्मवर्णान् कुथावृतान् ।**
**शैलाभान्नित्यमत्तांश्चाप्यभितः [४]कम्बुकिङ्करान्** ॥ ९५ ॥

**अभितः कम्बुकिङ्करान्** इत्यत्र अभितः कम्बुधराः किङ्करा येषां तान् ।

---

१. BORI ; **'जन्तुचेलान्'** इति कुं. पाठः ।
२. कुं. पाठानुसारेण अत्र पूर्वाध्याय एवानुसरति ।
३. **अ.को. २-६-११३**
४. **'काम्यकं सरः'** इति कुं. पाठः ।

**तुम्बुरुस्तु [1] मुदाऽऽदत्त गन्धर्वो वाजिनां शतम् ।**
**आम्रपत्रसवर्णानामदद्धेममालिनाम् ॥१०३॥**

**तुम्बुरुस्तु मुदाऽऽदत्त** इत्यत्र **आदत्त** दत्तवान् ।

**[2] अन्तरात्मा महाराज तस्माद्यन्मे न शाम्यति ।**
**अश्वेनेव युगं नद्धं विपरीतं हि दृश्यते ॥**

**अश्वेनेव युगं नद्धम्** इत्यत्र अश्वेन विपरीतं यथा भवति तथा **नद्धं** बद्धं युगमिव मम च धर्मराजस्य च त्वया दत्ता पदवी विपरीता दृश्यत इति दृष्टान्तानुसाराद्दार्ष्टान्तिकमप्युन्नेयम् ।

**[3] उच्चावचान् महान् मह्यं राजभिः प्रेषितान् बहून् ।**
**शत्रूणां पश्यतो दुःखान् मुमूर्षा मे व्यजायत ॥१२०॥**

**उच्चावचान् महान् मह्यम्** इत्यत्र मह्यं राजभिः प्रेषितान् बहून् उच्चावचान् **महान्** [4] 'मह उद्धव उत्सवः' इत्यभिधानात् उत्सवान् ।

**[5] भुक्ताभुक्तकृतं नैव सर्वमाकुब्जवामनान् ।**
**[6] अभुक्ता वै याज्ञसेनी प्रत्यवैक्षद्विशाम्पते ॥१२७॥**

**भुक्ताभुक्तकृतं नैव** इत्यत्र **आ कुब्जवामनान्, कुब्जः** पादयोरेव ह्रस्वः, **वामनः** सर्वाङ्गेष्वपि ह्रस्वः तान् मर्यादीकृत्य **सर्वं** प्राणिजातं,

---

१. 'प्रमुदितो' इति कुं. पाठः ।; २. BORI पृ. २४१
३. **'उच्चावचानुपग्राहान् राजभिः प्रापितान् बहून्'** इति कुं. पाठः ।
४. अ.को. १-७-३८
५. BORI पृ. २४३; **'अभुक्तं भुक्तवद्वापि सर्वमाकुब्जवामनम्'** इति कुं. पाठः
६. **'अभुञ्जाना'** इति कुं.पाठः ।

भुक्ताभुक्तकृतं भावप्रधानो निर्देशः । भुक्ततया अभुक्ततया च कृतं नैव, सर्वे च भुक्ततयैव कृता इति भावः । **अभुक्ता** न विद्यते **भुक्तं** भोजनं यस्याः सा । **याज्ञसेनी** द्रौपदी प्रति प्रति **अवैक्षत्** दृष्टवती । स्वभोजनात्पूर्वं भोजनरहितः कोऽपि नास्ति खल्विति प्रत्येकं विचारितवतीति भावः ।

**॥ इति अष्टाशीतितमोऽध्यायः ॥**

## ॥ अथ एकोननवतितमोऽध्यायः ॥

**[१] चेकितान उपासङ्गं धनुः काश्य उपाहरत् ।**
**असिं च सुत्सरुं शल्यः शैक्यं काञ्चनभूषणम् ॥ ९ ॥**

**चेकितान उपासङ्गम्** इत्यत्र [२] 'तूणोपासङ्गतूणीरनिषङ्गाः' इत्यभिधानात् **उपासङ्गं** तूणीरं, [३] 'त्सरुः खड्गादिमुष्टौ स्यात्' इत्यभिधानात् **त्सरुः** खड्गमुष्टिः सन् त्सरुः मुष्टिग्रहणप्रदेशो यस्य तं, दधिदुग्धादिपात्रस्थापनार्थं कृतो रज्जुविशेषः शिक्या, शिक्यानां समूहः **शैक्यम्** ।

**तमस्मै शङ्खमाहार्षीद्वारुणं कलशोदधिः ।**
**शैक्यं निष्कसहस्रेण सुकृतं विश्वकर्मणा ॥ १५ ॥**

**कलशोदधिः** क्षीरसमुद्रः ।

---

१. कुं. ७९ अध्यायः ।
२. अ.को. २-८-८८
३. अ.को. २-८-८९

एवं दृष्ट्वा नाभिविन्दामि शर्म
परा[1]क्षमाणोऽपि कुरुप्रवीर ।
तेनाहमेवं कृशतां गतश्च
विवर्णतां चैव सशोकतां च ॥ २६ ॥

**पराक्षमाण** इत्यत्र **परा** सम्यक्, क्षाम्यत इति क्षमाणः स न भवतीति **अक्षमाणः** असहमान इत्यर्थः ।

॥ इति एकोननवतितमोऽध्यायः ॥

## ॥ अथ नवतितमोऽध्यायः ॥

[2]व्युप्तं नश्च समानार्थं तुल्यमित्रं युधिष्ठिरम् ।
अद्विषन्तं कथं द्विष्यात्त्वादृशो भरतर्षभ ॥ २ ॥

**व्युप्तं नश्च** इत्यत्र **नः** अस्माभिः **व्युप्तं** विशेषेण उप्तं बीजवत् इन्द्रप्रस्थे स्थापितम् ।

[3]**अनुमेहीम्** इत्यत्र 'मिह सेचने' इति धातोः सकलेष्टसिञ्चनवर्ती कुरु ।

[4]निर्वर्तिष्वव्यथो दक्षो नित्यमुत्थानवान् [5]यतः ।
अप्रमत्तो विनीतात्मा नित्यं भद्राणि पश्यति ॥ ११ ॥

---

१. **'समीक्षमाणोपि'** इति कुं.पाठः । कुं.८० अध्यायः ।
२. $T_1, G_{5,6}$ ; BORI पृ. २४७; **'अव्युत्पन्नं'** इति कुं.पाठः ।
३. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
४. **'विपत्तिष्वव्यथो'** इति कुं. पाठः ।
५. $T_1, G_{1-5}$,M; BORI पृ. २५१; **'नरः'** इति कुं. पाठः ।

**निर्वर्तिषु** इत्यत्र **निर्वर्तिषु** नितरां वर्तमानेषु । **यतः** 'यती प्रयत्ने' इति धातोः प्रयत्नवान् ।

**॥ इति नवतितमोऽध्यायः ॥**

## ॥ अथ एकनवतितमोऽध्यायः ॥

[१] **द्वावेतौ ग्रसते भूमिः सर्पो बिलशयानिव ।**
**राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ १४ ॥**

**सर्पो बिलशयानिव** इत्यत्र बिले शेरत इति **बिलशयाः** मूषिकाः ।

[२] **कुलं राष्ट्रं विनाशिता** इत्यत्र **विनाशिता** विनाशयिता ।

[३] **केवलं तेन चात्मानम्** इत्यत्र तेन नाशेन सः नष्टः द्विजः राजा वा आत्मानं वंशं भृत्यं सबन्धुकं राष्ट्रं च नाशयतीति योग्यक्रिया-ध्याहारेण योजना ।

[४] **जन्मवृद्धिमिवार्याणां यो वृद्धिमभिकाङ्क्षते ।**
**एधते ज्ञातिषु स वै सद्यो वृद्धिर्हि विक्रमः ॥ १९ ॥**

**जन्मवृद्धिमिवार्याणाम्** इत्यत्र आर्याणां **जन्मवृद्धिं** जन्मना वृद्धिं सत्कुलप्रसूसतत्वमिव ।

---

१. कुं. ८१ अध्यायः ।
२. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
३. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
४. **'जन्मवृद्धिमिवार्थानां'** इति कुं. पाठः ।

[1]अनावृत्तस्य किं मेऽद्य जीवितेन विशाम्पते ।
**वर्धन्ते पाण्डवा नित्यं वयं त्वस्थिरवृद्धयः ॥ २१ ॥**

**अनावृत्तस्य** इत्यत्र न विद्यते **आवृत्तं** आवर्तनं युधिष्ठिरश्रियः आकर्षणं यस्य स तथोक्तः ।

॥ इति एकनवतितमोऽध्यायः ॥

## ॥ अथ द्विनवतितमोऽध्यायः ॥

**[2]अक्षन् क्षिपन्नक्षतः सन् विद्वानविदुषो जये ।**
**ग्लहान् धनूंषि मे विद्धि शरानक्षांश्च भारत ॥ ३ ॥**

**अक्षतः** अक्षेषु विद्वान् इति सम्बन्धः । [3]'पणोऽक्षेषु ग्लहे' इत्यभिधानात् **ग्लहः** पणबन्धनम् ।

**[4]जयश्च धर्मतपनस्तथैव भरतर्षभ ।**
**तस्माद्विनयतो जेता तावुभौ च विरोधिनौ ॥ ८ ॥**

**जयश्च धर्मतपन** इत्यत्र **जयः** युद्धेन शत्रूणां जयः **धर्मतपनः**, **धर्मं** अहिंसाख्यधर्मं **तापयति** नाशयतीति स तथोक्तः; **तथैव** तद्वदेव धर्मश्च जयतपनः, तस्मात् कारणाद्विरोधिनौ **तावुभौ** धर्मजयौ, **विनयतः** विनयेन प्रवर्तनात् जेता भवेत् । विनयेन अक्षशीलायां कृतायां तत्सम्पदाहरणाख्यजयोऽपि भविष्यति, तेषां हिंसा च न भविष्यतीति भावः ।

---

१. 'एतादृशस्य' इति कुं.पाठः ।; २. कुं. ८२ अध्यायः ।
३. अ.को. २-१०-४५; ४. 'जयश्च धर्मतोपेत-' इति कुं. पाठः ।

**भयं परिहरन् मत्त आत्मानं परिपालयन् ।**
**वर्षासु क्लिन्नवटवत्तिष्ठन्नैवावसीदति ॥ ११ ॥**

**भयं परिहरन् मत्त** इत्यत्र **मत्त** इत्यस्मच्छब्दात् तसिलन्तपञ्चमी, मदाख्यनिमित्तात् । **भयं** लोकापवादभयं **परिहरन्** दुर्योधन एव दुष्टः धृतराष्ट्रः किं करिष्यतीति बहिष्कुर्वन् । आत्मानं विनयेन परिरक्षन्, अत एव वर्षासु क्लिन्नवटवत् तिष्ठन् भवान् नावसीदति । यथा वटः निदाघसमये आपाततः जलासेकरहित इव तिष्ठति, मूलेन जलं पिबति च, तथैवेति भावः ।

**धृतराष्ट्र उवाच –**

**सर्वथा पुत्र बलिभिर्विग्रहो मे न रोचते ।**
**[1]वैरं विकोशे सृजति तद्धै शस्त्रमनायसम् ॥ १३ ॥**

**वैरं विकोशे सृजति** इत्यत्र **विकोशं** विगतकोशस्थधनम् ।

**स्वर्गद्वारं दीव्यतां नो विशिष्टं तद्वर्तिनां चापि तथैव युक्तम् ।**
**भवेदेवं ह्यात्मना तुल्यमेव दुरोदरं पाण्डवैस्त्वं कुरुष्व ॥१६॥**

**दुरोदरं पाण्डवैः** इत्यत्र **दुरोदरं** द्यूतं **कुरुष्व** कारयस्व ।

**दृष्टं ह्येतद्विदुरेणैव सर्वं विपश्चिता बुद्धिविद्यानुगेन ।**
**[2]तदेवैतदयशस्याभ्युपैति महद्भयं क्षत्रियजीवघाति ॥ १८ ॥**

**तदैवैतद्** इत्यत्र हे अयशस्य इति दुर्योधनं प्रति सम्बुद्धिः ।

**॥ इति द्विनवतितमोऽध्यायः ॥**

---

१. **'वैरं विकारं सृजति'** इति कुं. पाठः ।
२. **'तदेवैतदवशस्याभ्युपैति'** इति कुं. पाठः ।

## ॥ अथ त्रिनवतितमोऽध्यायः ॥

विदुर उवाच –

[1]गान्धारराजः शकुनिर्विशाम्पते
[2]राजा तु देवी कृतहस्तो मताक्षः ।
विविंशतिश्चित्रसेनश्च राजा
सत्यव्रतः पुरुमित्रो जयश्च ॥ १३ ॥

**राजा तु देवी** इत्यत्र **देवो** देवनम् । [3]'धूर्तोऽक्षदेवी कितवः' इत्यमरः।

वैशम्पायन उवाच –

एवमुक्त्वा विदुरं धर्मराजः
प्रायात्रिकं सर्वमाज्ञाप्य पूर्णम् ।
प्रायाच्छ्वोभूते सगणः सानुयात्रः
सह स्त्रीभिर्द्रौपदीमादि कृत्वा ॥ १७ ॥

**द्रौपदीमादि कृत्वा** इत्यत्र आदिर्यथा भवति तथा आदि ।

ब्राह्मणेभ्यो धनं दत्वा [4]गम्यर्थं स यथाविधि ।
अन्येभ्यः स तु दत्त्वा च गन्तुमेवोपचक्रमे ॥ २३ ॥

**ब्राह्मणेभ्यो धनम्** इत्यत्र **गम्यर्थं, गमिनः** गन्तुः स्वस्य **अर्थं** प्रयोजनार्थम् ।

---

१. कुं. ८३ अध्यायः । ; २. 'राजाऽतिदेवी' इति कुं. पाठः ।
३. अ.को. २-१०-४३; ४. 'गत्यर्थं' इति कुं. पाठः ।

वैशम्पायन उवाच –

प्रविवेश ततो राजा नगरं नागसाह्वयम् ।
धृतराष्ट्रेण चाहूतः कालस्य समयेन च ॥ ४६ ॥

**कालस्य समयेन** इत्यत्र कालनामकपरमात्मनः **समयेन** सङ्कल्पेन ।

स हास्तिनपुरं गत्वा धृतराष्ट्रगृहं ययौ ।
समियाय च धर्मात्मा धृतराष्ट्रेण पाण्डवः ॥ ४७ ॥

**समियाय च धर्मात्मा** इत्यत्र **सं** सङ्गमं इयाय ।

**॥ इति त्रिनवतितमोऽध्यायः ॥**

## ॥ अथ चतुर्नवतितमोऽध्यायः ॥

[१]अक्षग्रहः सोऽभिभवेत्परं न
स्तेनैव कालो भवतीदमात्थ[२] ।
दीव्यामहे पार्थिव मा विशङ्कां
कुरुष्व पाणं च चिरं च मा कृथाः ॥ ८ ॥

**अक्षग्रह** इत्यत्र **सः अक्षग्रहः** अक्षेषु क्रियमाणः पणः **अभिभवेत्** पराभवं प्रापयेत् । **तेनैव** पराभवाख्यकारणेनैव **कालः** विहारकालः भवति । **इदं** पराभवप्रापणं **आत्थ** [३]'अमार्गेण नोऽजैषीरि'ति वदताऽमार्गेण जयस्य त्वयैवोक्तत्वादिति भावः । **पाणं** पणं कुरुष्वेति क्रियावृत्त्या योजना ।

---

१. **'अक्षग्लहः'** इति कुं. पाठः । कुं. ८४ अध्यायः ।

२. BORI पृ. २६३; **'दोषो भवतीह पार्थ'** इति कुं. पाठः ।; ३. **सभा.८४-६**

युधिष्ठिर उवाच –

एवमाहायमसितो देवलो मुनिसत्तमः ।
इमानि [1]शोकद्वाराणि यो वै [2]सञ्चरते सदा ॥ ९ ॥

इदं वै देवनं पापं [3]मायया कितवैः सह ।
[4]जयस्तु युद्धधर्मेण तत्परं न तु देवनम् ॥ १० ॥

नार्या [5]नेच्छन्ति भाषाभिर्मायया न चरन्त्युत ।
अजिह्ममशठं युद्धमेतत्सत्पुरुषव्रतम् ॥ ११ ॥

शक्तितो ब्राह्मणार्थाय शिक्षितुं प्रयतामहे ।
[6]तद्वै विद्वान् मातिदेवीः माजैषीः शकुने परान् ॥ १२ ॥

निकृत्या कामयेनाहं सुखान्युत धनानि वा ।
[7]किं तवास्याद्य निकृतेर्वित्तमेतेन युज्यते ॥ १३ ॥

**इमानि शोकद्वाराणि** इत्यत्र यः मायया कितवैः सह इदं पापं देवनं सदा सञ्चरते, सः इमानि **शोकद्वाराणि** वित्तव्ययपापादीनि **सञ्चरते** सम्यगाचरति । युद्धधर्मेण **जयस्तु** जय एव । **तत्** तस्मात्कारणात् **तत्** युद्धमेव **परं** उत्तमम् । **भाषाभिः** म्लेच्छादिभाषाभिः **नेच्छन्ति** व्यवहर्तुं

१. M₁ ; BORI पृ. २६३; **'लोकद्वाराणि'** इति कुं. पाठः ।
२. BORI पृ. २६३; **'भ्राम्यति सर्वदा'** इति कुं. पाठः ।
३. BORI पृ. २६३; **'निकृत्या'** इति कुं. पाठः ।
४. **'धर्मेण तु जयो युद्धे'** इति कुं.पाठः ।
५. **'म्लेच्छन्ति'** इति कुं. पाठः ।
६. **'वित्तं'** इति कुं.पाठः ।
७. **'कितवस्येह कृतिनो वृत्तमेतन्न पूज्यते'** इति कुं.पाठः ।

नेच्छन्ति । **शिक्षितुं** दुर्जनान् शिक्षितुम् । तत् विद्वान् त्वं मातिदेवीः **अति** धर्ममतिक्रम्य मा देवीः मा जैषीश्च । **निकृतेः** कापट्यात् कृतेन **एतेन** देवनेन तव वित्तं **अस्य** दुर्योधनस्य अद्य युज्यते किमिति योजना ।

**[१] योऽश्रोत्रियस्सुतं चैति निकृत्यैव युधिष्ठिर ।**
**विद्वानविदुषोऽभ्येति नाहुस्तां निकृतिं जनाः ॥ १४ ॥**

**अश्रोत्रियः** श्रुतितत्त्वमजानानः । **सुतः** पुत्रः, तं यः श्रोत्रियः निकृत्या अभ्येति, यो विद्वान् अविदुषः निकृत्या अभ्येति, तामेव निकृतिमाहुः । अन्यैः सह निकृतिः न दोषायेति भावः ।

**॥ इति चतुर्नवतितमोऽध्यायः ॥**

## ॥ अथ पञ्चनवतितमोऽध्यायः ॥

**[२] इमे निष्कसहस्रस्य कुम्भिनो भरितं शतम् ।**
**कोशो हिरण्यमक्षय्यं जातरूपमनेकशः ।**
**एतद्राजन् मम धनं तेन दीव्याम्यहं त्वया ॥ ११ ॥**

**इमे निष्कसहस्रस्य** इत्यत्र **भरितं** अयुतं यथा भवति तथा **निष्कसहस्रस्य कुम्भिनः** निष्कसहस्रक्रयार्हकुम्भवन्तः **इमे** अर्थाः । अयुतायुतद्रव्यपरिपूर्णबहुसङ्ख्याकसौवर्णकुम्भान्तस्स्थापितार्था इति यावत् ।

---

१. $K_{1-3}$,; BORI पृ. २६४; '**श्रोत्रियः श्रोत्रियानेति**' इति कुं. पाठः ।
२. '**सन्ति निष्कसहस्रस्य भाण्डिन्यो भरिताः शुभाः**' इति कुं. पाठः । कुं. ८५ अध्यायः ।

**अष्टौ यं कुररच्छायाः सदश्वा राष्ट्रसम्मताः ।**
**वहन्ति [1] नैषा मुच्येत [2] पदा भूमिमुपास्पृशन् ।**
**एतद्राजन् धनं मह्यं तेन दीव्याम्यहं त्वया ॥ १९ ॥**

**वहन्ति नैषा मुच्येत** इत्यत्र एते हयाः यदा **भूमिं** रणभूमिं पदा उपास्पृशन्, तदा **एषा** भूमिः पदात् न मुच्येत । रणभूमिं परित्यज्य पलायनं न कुर्वन्तीति भावः ।

**सहस्रसङ्ख्या नागा मे मत्तास्तिष्ठन्ति सौबल ।**
**हेमकक्ष्या कृतापीडाः पद्मिनो हेममालिनः ॥ २४ ॥**

**हेमकक्ष्या** इत्यत्र **हेमकक्ष्याः** सुवर्णोदरबन्धनोपेताः । **कृतापीडाः** कृतशिरोलङ्काराः । 'इभस्स्तम्बेरमः पद्मी' [4] इत्यभिधानात् **पद्मिनो** गजाः ।

**सुदन्ता राजवहनाः सर्वशब्दक्षमा युधि ।**
**ईषादन्ता महाकायाः सर्वे [5] इष्टा करेणवः ॥ २५ ॥**

इष्टाः करेणवः येषां ते तथोक्ताः ।

**युधिष्ठिर उवाच –**

**शतं दासीसहस्राणि तरुण्यो हेमभद्रिकाः ।**
**[6] कञ्चुकेयूरधारिण्यो निष्ककण्ठ्य स्वलङ्कृताः ॥ १७ ॥**

१. **'नैपां'** इति कुं. पाठः । ; २. **'पदाद्भूमिमुपस्पृशन्'** इति कुं. पाठः ।
३. B.4,S(G5omit); BORI पृ. २६८; **'हेमकक्षाः'** इति कुं. पाठः ।
४. अ.को. २-८-३५; ५. **'चाष्टकरेणवः'** इति कुं. पाठः ।
६. **'कम्बु-'** इति कुं. पाठः ।

**कञ्चुकेयूर** इत्यत्र **कञ्चुः** कञ्चुकः ।

युधिष्ठिर उवाच –

**एतावन्ति च दासानां सहस्राण्युत सन्ति मे ।**
**प्रदक्षिणानुलोमाश्च प्रावारवसनाः सदा ॥ २१ ॥**

**प्रदक्षिणानुलोमा** इत्यत्र **प्रदक्षिणानुलोमाः** प्रकृष्टानि दक्षिणानि दक्षिणावर्तान्यनुकूललोमान्येषां ते, लक्षणवन्त इत्यर्थः ।

युधिष्ठिर उवाच –

**रथास्तावन्त एवेमे [१] हेमभाण्डाः पताकिनः ।**
**हयैर्विनीतैः सम्पन्ना रथिभिश्चित्रयोधिभिः ॥ २८ ॥**

**हेमभाण्डाः** सुवर्णोपकरणानि ।

**एकैको ह्यत्र लभते सहस्रपरमां भृतिम् ।**
**युध्यतोऽयुध्यतो वापि वेतनं मासकालिकम् ।**
**एतद्राजन् मम धनं तेन दीव्याम्यहं त्वया ॥ २९ ॥**

एकैकः रथी **सहस्रपरमां** सहस्रादुपरितनां **भृतिं** भरणाय कल्पित-द्रव्यम् ।

**एवं वर्णस्य वर्णस्य [२] समुच्चयसहस्रशः ।**
**यथा समुदिता वीराः सर्वे वीरपराक्रमाः ॥ ३५ ॥**

---

१. **'हेमदण्डाः'** इति कुं. पाठः ।

२. $T_1, G_{3,5,6}$ ; BORI पृ. २७०; **'समुचीय सहस्रशः'** इति कुं. पाठः ।

**एवं वर्णस्य वर्णस्य** इत्यत्र क्षत्रवैश्यादिवर्णस्य **समुच्चयसहस्रशः समुच्चयस्य** समुदायस्य **सहस्रशः** सहस्राणि ।

॥ इति पञ्चनवतितमोऽध्यायः ॥

## ॥ अथ षण्णवतितमोऽध्यायः ॥

**[१]मधु वै माध्विको लब्ध्वा प्रपातं नैव बुध्यते ।**
**आरुह्य तं मज्जति वा पतनं चाधिगच्छति ॥ ५ ॥**

**मधु वै माध्विक** इत्यत्र **माध्विको** मद्यकर्ता ।

**सोऽयं मत्तोऽक्षद्यूतेन मधुवन्न परीक्षते ।**
**प्रपातं बुध्यते नैव वैरं कृत्वा महारथैः ॥ ६ ॥**

**मधुवत्** मधुकर्तृवत् ।

**विदितं मे महाप्राज्ञ [२]स्वे परे वाऽसमञ्जसम् ।**
**पुत्रं सन्त्यक्तवान् पूर्वं पौराणां हितकाम्यया ॥ ७ ॥**

**स्वे परे वा** इत्यत्र **स्वे** स्वकीये दुर्योधने, **परे** धर्मराजे वा **असमञ्जसं** अन्याय्यम् ।

**गृहे किल कृतवासाँल्लोभाद्राजा न्यपीडयत् ।**
**[३]सदोपभुग्नो लोभान्धो हिरण्यार्थी परन्तप ॥ १३ ॥**

**सदोपभुग्नः** वक्रीभूतः ।

---

१. कुं. ८६ अध्यायः । ; २. **'भोजेष्वेवासमञ्जसम्'** इति कुं. पाठः ।
३. **'स चोपभोगलोभान्धा'** इति कुं. पाठः ।

**आयतिं च ददत्त्वं[१] च उभे सद्यो व्यनाशयत् ।**
**तदर्थकामस्तद्वत्त्वं माद्रुहः पाण्डवान्नृप ॥ १४ ॥**

**आयतिं च ददत्त्वं च** इत्यत्र ददतो भावः ददत्त्वम् ।

**तथात्वकामः पाण्डूनां मा द्रुहीर्भरतर्षभ ।**
**मोहात्मा तप्यसे पश्चात्पक्षिहा पुरुषो यथा ॥ १५ ॥**

**तथात्वकामः पाण्डूनाम्** इत्यत्र **अकामः** परवित्तेषु कामरहितः ।

**॥ इति षण्णवतितमोऽध्यायः ॥**

## ॥ अथ सप्तनवतितमोऽध्यायः ॥

**ज्ञाताः[२] प्रियाः शान्तनवा भैमसेनाः[३] सबाह्लिकाः ।**
**दुर्योधनापराधेन कृच्छ्रं प्राप्स्यन्ति सर्वशः ॥ १९ ॥**

**ज्ञाताः प्रिया** इत्यत्र **भैमसेनाः** भयङ्करसेनासहिताः । [४]'काम्बोजा बाह्लिका हयाः' इत्यभिधानात्, **सबाह्लिकाः** सहतुरगाः ।

**यश्चित्तमन्वेति परस्य राजन्**
**वीरः कविः स्वामवमत्य दृष्टिम् ।**
**नावं समुद्र इव बालनेत्रा-**
**मारुह्य घोरे व्यसने निमज्जेत् ॥ २१ ॥**

**नावं समुद्र इव** इत्यत्र **बालः** बालक एव नेता यस्याः ताम् ।

---

१. **'तदात्वं'** इति कुं. पाठः ।

२. **'प्रातिपेयाः'** इति कुं. पाठः । कुं. पाठानुसारेण पूर्वाध्याय एवानुसरति ।

३. BORI पृ. २७४; **'भीमसेनाः'** इति कुं. पाठः ।; ४. **अ.को. २-८-४५**

दुर्योधनो ग्लहते पाण्डवेन
प्रीयायसे त्वं जयतीति तच्च ।
अतिनर्मा जायते सम्प्रहारो
यतो विनाशः समुपैति पुंसाम् ॥ २२ ॥

ग्लहते पणं बध्नाति ।

[१]आकर्षते वाक्यबलप्रणीतो
हृदि प्रौढो मन्त्रपदः समाधिः ।
[२]युधिष्ठिरेण सकलस्तवाऽस्तु
सुखप्रदः सुचिरं ते सुधन्वा ॥ २३ ॥

**आकर्षते वाक्यबलप्रणीत** इत्यत्र युधिष्ठिरेण वाक्यबलात् **प्रणीतः** कृतः हृदि **प्रौढः** प्रौढियुक्तः **मन्त्रपदः** भविष्यत्कार्याणामालोचनस्य स्थानभूतः **सुधन्वा** सुष्ठु तव पुत्रस्य धनवान् सकलः **समाधिः** तूर्ष्णी स्थितिः तव चित्तम् **आकर्षते** अङ्गीकारयति । ते सुचिरं सुखप्रदोऽस्तु । किञ्चित्कालं अनेन द्रव्येण सुखी भव । पश्चाद्भाविकार्यं त्वमेवानु-भविष्यसीति भावः ।

यदा मन्युं पाण्डवोऽजातशत्रु-
र्न संयच्छेदक्षमदाभिभूतः ।
वृकोदरः सव्यसाची यमौ च
कोऽत्र द्वीपः स्यात् तुमुले वस्तदानीम् ॥ २५ ॥

---

१ $D_1$ ; BORI पृ. २७५; **'आकर्षस्तेऽवाक्फलः सुप्राणीतो'** इति कुं. पाठः ।
२ $N_1$; BORI पृ. २७५; **'युधिष्ठिरेन कलहस्तवायमचिन्तितोऽभिमतः सुधन्वना'** इति कुं.पाठः ।

**तदानीं** उपरि **तुमुले** युद्धे ।

**महाराज प्रभवस्त्वं धनानां**
**पुरा द्यूतान्मनसा यावदिच्छेः ।**
**बहुवित्तान् पाण्डवांश्चेज्जयस्त्वं**
**[1] किञ्चिद्वः स्याद्वस्तु विन्देत पार्थान्** ॥ २६ ॥

**किञ्चिद्वः स्यात्** इत्यत्र **वः** यद्वसु किञ्चित् **स्यात्** पाण्डवागमनकालेऽपि स्यात्, तद्वसु पार्थान् विन्देतेति योजना ।

**॥ इति सप्तनवतितमोऽध्यायः ॥**

## ॥ अथ अष्टनवतितमोऽध्यायः ॥

**[2] स विज्ञेयः पुरुषोऽन्यत्रकामो**
**[3] निन्दाप्रशंसे हि तथा युनक्ति ।**
**जिह्वा मनो हृदयं निर्णिनक्ति**
**ज्यायो निरीहं मनसः प्रातिकूल्यम्** ॥ २ ॥

**जिह्वा मनो हृदयम्** इत्यत्र **निर्णिनक्ति** 'निजिर् शौचपृथग्भावयोः' इति धातोः तव जिह्वा मनः हृदयं च पृथग्भावं प्राप्नोति । [4] 'मनस्यन्यद्वचस्यन्यत्कर्मण्यन्यत्' इति वाक्यार्थमनुकरोषीति भावः । **ज्यायः** अतिशयितं तव मनसः प्रातिकूल्यं **निरीहं** निष्फलं इति योजना ।

---

१. S $T_1$,$G_{2.4.5}$,$M_1$; BORI पृ. २७६; **'किं ते तत्स्याद्वसु विन्देह पार्थान्'** इति कुं.पाठः । २. **कुं. ८७ अध्यायः ।**

३. **'जिह्वात्मनो हृदयस्थं व्यनक्ति जानीमहे त्वन्मनसः'** इति कुं.पाठः ।

४. वृ.चा. २-६०

एकः शास्ता न द्वितीयोऽस्ति शास्ता
गर्भे शयानं पुरुषं शास्ति शास्ता ।
तेनानुशिष्टः प्रवणादिवाम्भो
यथा नियुक्तोऽस्मि तथा भवामि ॥ ८ ॥

**तेनानुशिष्ट** इत्यत्र [१]'प्रवणः क्रमनिम्नोर्व्याम्' इत्यभिधानात् क्रमेण निम्नभूप्रदेशात् अम्भ इवेत्यर्थः ।

धीरेव कुरुते तस्य कार्याणामनुशासनम् ।
यो बलादनुशास्तीह सोऽमित्रं तेन विन्दति ॥ ९ ॥

**यो बलात्** इत्यत्र **बलात्** भृत्यबलतः विचार्य । **तस्य** राज्ञः ।

मित्रतामनुवृत्तं तु समुपेक्षत्यपण्डितः ।
प्रदीप्य यः प्रदीप्ताग्निं प्राक्चिरं नाभिधावति ।
[२]तस्माच्च न स विन्देत शिष्टं [३]कश्चन भारत ॥ १० ॥

**तस्माच्च न स विन्देत** इत्यत्र **तस्माद्** भटात् **सः** राजा **शिष्टं** अवशिष्टं **कश्चन** पुरुषार्थम् ।

विदुर उवाच–
एतावता पुरुषं ये त्यजन्ति
तेषां सख्यमन्तवद् ब्रूहि राजन् ।

---

१ अ.को. ३-३-५६

२ G₃; BORI पृ. २७९; **'भस्मापि न स विन्देत'** इति कुं. पाठः ।

३ D₅; BORI पृ. २७९; **'कचन'** इति कुं. पाठः ।

**राज्ञां हि चित्तानि परिप्लुतानि**
**सान्त्वं दत्वा मुसलैर्घातयन्ति ॥ १२ ॥**

**परिप्लुतानि** परितः प्लवन्ति चञ्चलानीत्यर्थः ।

**न श्रेयसे नीयते मन्दबुद्धिः**
**स्त्री श्रोत्रियस्येव ग्रहे प्रदुष्टा ।**
**ध्रुवं न रोचे[1] भरतर्षभस्य**
**पतिः कुमार्या इव षष्टिवर्षः ॥ १४ ॥**

**न रोचे** सेवां न रोचे ।

[2]**अनुप्रियं चेदनुकाङ्क्षसे त्वं**
**सर्वेषु कार्येषु हिताहितेषु ।**
**स्त्रियश्च राजन् जडपङ्गुकांश्च**
**पृच्छ त्वं वै तादृशांश्चैव सर्वान् ॥ १५ ॥**

**अनुप्रियं चेत्** इत्यत्र हिताहितेषु कार्येषु **अनुप्रियम्** अनुकूलतया प्रियं; हितेऽप्यनुकूलमहितेऽप्यनुकूलमित्यर्थः ।

[3]**नाप्रियः साधुर्भवति न मेधावी न पण्डितः ।**
**प्रियेष्वेतानि दृश्यन्ते यावद्द्वेषो हि भारत ॥**

**नाप्रियः साधु** इत्यत्र **अप्रियः** यस्य यस्मिन् प्रीतिर्नास्ति सः अप्रियः ।

---

१. **'रोचेद्भरतर्षभस्य'** इति कुं. पाठः ।
२. BORI पृ. २८०; **'अतः प्रियं'** इति कुं. पाठः ।; ३. BORI पृ. २८१

आशीविषान्नेत्रविषान् कोपयेन्न च पण्डितः ।
एवं तेऽहं वदामीदं प्रयतः कुरुनन्दन ॥ २० ॥

आशीविषान् इत्यत्र अशीविषान् सर्पान्, नेत्रविषान् नेत्रयोः कोपाख्यविषं येषां तान् शूरपुरुषांश्च न कोपयेत् ।

॥ इति अष्टनवतितमोऽध्यायः ॥

## ॥ अथ एकोनशततमोऽध्यायः ॥

[१] धृतराष्ट्रस्तु संहृष्टः पर्यपृच्छत् पुनः पुनः ।
किं जितं किं जितमिति [२] व्याकारं नाभ्यरक्षत ॥ ४४ ॥

व्याकारं नाभ्यरक्षत इत्यत्र व्याकारं विरुद्धाकारम् ।

॥ इति एकोनशततमोऽध्यायः ॥

## ॥ अथ शततमोऽध्यायः ॥

विदुर उवाच –
[३] दुर्विभाव्यं भाषितं त्वादृशेन
न मन्द सम्बुद्ध्यसि पाशबद्धः ।
प्रपाते त्वं लम्बमानो न वेत्सि
व्याघ्रान् मृगः कोपयसेऽतिवेलम् ॥ २ ॥

दुर्विभाव्यम् इत्यत्र दैवमिति शेषः ।

---

१. कुं. ८८ अध्यायः । ; २. 'ह्याकारं' इति कुं. पाठः ।
३. BORI पृ. २८८; 'दुर्विभापं' इति कुं. पाठः ।

**नारुन्तुदः स्यान्न नृशंसवादि न हीनतः परमभ्याददीत।**
**ययास्य वाचा पर उद्विजेत न तां वदेद्रुशतीं पापलोक्याम् ॥६॥**

**नारुन्तुदः स्यात्** इत्यत्र [1]'अरुन्तुदं तु मर्मस्पृक्' इत्यभिधानात् **अरुन्तुदो** मर्मस्पर्शी।

**अजो हि शस्त्रमगिलत्किलैकः शस्त्रे विपन्ने शिरसास्य भूमौ।**
**निकृन्तनं स्वस्य कण्ठस्य घोरं तद्वद्वैरं मा कृथा पाण्डुपुत्रैः ॥८॥**

**अजो हि शस्त्रम्** इत्यत्र **अजः** परमात्मा।

**[2]न किञ्चिदीड्यं प्रवदन्ति पार्था वनेचरं वा गृहमेधिनं वा।**
**तपस्विनं वा परिपूर्णविद्यं भपन्ति [3]ये वै श्वनराः सदैव ॥९॥**

**भपन्ति ये वै श्वनराः सदैव** इत्यत्र ये पापं ईड्यं सदैव भषन्ति, ते **श्वनराः** श्वानश्च ते नराश्चेति नराकाराः श्वान इत्यर्थः।

**द्वारं सुघोरं नरकस्य जिह्मं न बुद्ध्यते धृतराष्ट्रस्य पुत्रः।**
**[4]तमभ्येत्येतारो बहवः कुरूणां द्यूतोदये सह दुःशासनेन ॥१०॥**

**तमभ्येत्येतार** इत्यत्र तं द्वारसमूहं **अभ्येत्येतारः** अतिक्रम्य गन्तारः बहवः कुरवः सन्ति।

**[5]तेषां नूनं भवितायं कुरूणां सुदारुणः सर्वहरो विनाशः।**
**वाचः काव्याः सुहृदां पथ्यरूपा न श्रूयन्ते वर्धते लोभ एव १२**

---

१. अ.को. ३-१-८३ ; २. BORI पृ. २९०; 'न किञ्चिदित्थं' इति कुं.पा
३. 'हैवं' इति कुं.पाठः।; ४. 'तमन्वेतारो' इति कुं.पाठः।
५. 'अन्तो नूनं' इति कुं. पाठः।

तेषां कुरूणां **सर्वहरः** सर्वान् हरतीति सर्वहरः । सुदारुणः विनाशः । अनेन दुर्योधनेन सम्पादित इति योग्यक्रियया सम्बन्धः ।

॥ इति शततमोऽध्यायः ॥

## ॥ अथ एकाधिकशततमोऽध्यायः ॥

**वैशम्पायन उवाच –**

**[1] एवमुक्तः प्रातिकामी स सूतः**
**प्रायाच्छीघ्रं राजवचो निशम्य ।**
**प्रविश्य च श्वेव हि सिंहगोष्ठं**
**समासदन्महिषीं पाण्डवानाम्** ॥ १५ ॥

**प्रातिकामी** प्रातिकामीति दुर्योधनसूतस्य नाम ।

**द्रौपद्युवाच –**

**कथं त्वेवं वदसि प्रातिकामिन्**
**को हि दीव्येद्भार्यया राजपुत्रः ।**
**मूढो राजा द्यूतमदेन मत्तो**
**[2] अहो नान्यत्कैतवमस्य किञ्चित्** ॥ १७ ॥

**मूढो राजा** इत्यत्र **कैतवं** कितवस्य दुर्योधनस्य योग्यं कैतवं अन्यत् [illegible]भद्रस्तु न स्यात्किं, अहो ।

---

१. [illegible]. पाठानुसारेण अत्र पूर्वाध्याय एवानुसरति ।

२. K[illegible],$B_{2,6}$,$G_2$,$M_2$; BORI पृ. २९२; **‘ह्यभून्नान्यत्कैतवमस्य किञ्चित्’** [illegible]. पाठः ।

[1] कस्यस्विन्नः पराजैषीरिति त्वामाह द्रौपदी ।
किं नु पूर्वं पराजैषीरात्मानमथवापि माम् ॥ २२ ॥

**कस्यस्वित्** इत्यत्र **कस्यस्वित्** कस्य कार्यस्य अर्थे ।

द्रौपद्युवाच –
एवं [2] द्यूते व्यदधात् संविधाता
स्पर्शावुभौ (अजौ) स्पृशतो [3] धीरबालौ ।
धर्मं त्वेकं परमं प्राह लोके
स नः शमं धास्यति गोप्यमानः ॥ २७ ॥

**एवं द्यूत** इत्यत्र उभौ धीरबालावपि **स्पर्शौ** स्पृश्येते इति स्पर्शौ अजौ स्पृशतः ।

धर्मे स्थितो धर्मसुतो महात्मा
धर्मश्च सूक्ष्मो निपुणोपलक्ष्यः ।
वाचापि भर्तुः परमाणुमात्रं इच्छामि
दोषं न गुणान् विसृज्य ॥ ५० ॥

**निपुणोपलक्ष्य** इत्यत्र निपुणैरुपलक्ष्यः **निपुणोपलक्ष्यः** ।

इदं त्वकार्यं कुरुवीरमध्ये रजस्वलां यत्परिकर्षसे माम् ।
न चापि कश्चित्कुरुते स्म [4] पूजां ध्रुवं तवेदं मतमभ्युपेतः ॥ ५१ ॥

**कुरुते स्म पूजां** इत्यत्र **पूजां** धर्मस्य पूजाम् ।

---

१. **'कस्येशो नः'** इति कुं. पाठः । ; २. **'नूनं'** इति कुं. पाठः ।
३. **'वृद्धबालौ'** इति कुं. पाठः ।; ४. **'अत्र कुत्सां'** इति कुं.पाठः ।

वैशम्पायन उवाच –

तथा ब्रुवन्ती करुणं सुमध्यमा
भर्तॄन् कटाक्षैः कुपितानपश्यत् ।
सा पाण्डवान् कोपपरीतदेहान्
सन्दीपयामास [1]कटाक्षपत्रैः ॥ ५४ ॥

कटाक्षपत्रैः इत्यत्र कटाक्षाख्यसन्देशपत्रैरित्यर्थः ।

भीष्मउवाच –

न धर्मसौक्ष्म्यात् सुभगे विवेक्तुं
शक्नोमि ते प्रश्नमिमं यथावत् ।
[2]अस्वोऽप्यशक्तः पणितुं परस्वं
स्त्रियाश्च भर्तुर्वशतां समीक्ष्य ॥ ५९ ॥

अस्वोऽप्यशक्त इत्यत्र अस्वः द्रव्यरहितो दरिद्रः गतसकलद्रव्यो
॥ ।

द्रौपद्युवाच –

आहूय राजा कुशलैरनार्यै-
र्दुष्टात्मभिर्नैकृतिकैः सभायाम् ।
द्यूतप्रियैर्नातिकृतप्रयत्नं[3]
कस्मादयं नाम [4]निकृष्टकामः ॥ ६२ ॥

---

१. 'कटाक्षपातैः' इति कुं. पाठः ।
२. (i, ; BORI पृ. २९८; 'अस्वाम्यशक्तः' इति कुं. पाठः ।
३. 'प्रयत्नः' इति कुं. पाठः ।; ४. 'निसृष्टकामः' इति कुं. पाठः ।

**आहूय राजा** इत्यत्र नातिकृतप्रयत्नं धर्मराजमाहूय, **कुशलैः** कपटद्यूतकुशलैः, एतैः सह कस्मात् **निकृष्टकामः** एतादृशनीचकार्ये कृतमनाः । कस्मादासीदिति सम्बन्धः ।

**[१] स शुद्धकामो निकृतिप्रवृत्तिमबुध्यमानः कुरुपाण्डवाग्र्यः ।**
**संभूय सर्वैश्च जितोऽपि यस्मात् पश्चादयं कैतवमभ्युपेतः ॥६३॥**

**स शुद्धकाम** इत्यत्र **सः** धर्मराजः पश्चात्तत्कैतवं **अभ्युपेतः** ज्ञातवान् ।

**न सा सभा यत्र न सन्ति वृद्धा**
**न ते वृद्धा ये न वदन्ति धर्मम् ।**
**नासौ धर्मो यत्र न सत्यमस्ति**
**न तत्सत्यं यच्छलेनानुविद्धम् ॥ ६५ ॥**

**यच्छलेनानुविद्धम्** इत्यत्र **च्छलेन** अन्तःकपटेन ।

**॥ इति एकाधिकशततमोऽध्यायः ॥**

## ॥ अथ द्व्यधिकशततमोऽध्यायः ॥

**भीम उवाच –**

**[२] भवन्ति वेश्या वर्धक्यः कितवानां युधिष्ठिर ।**
**न ताभिरुत दीव्यन्ति दया चैवास्ति तास्वपि ॥ १ ॥**

---

१. $T_1$; BORI पृ. २९८; **'अशुद्धभावैर्निकृतिप्रवृत्तैरबुध्यमानः'** इति कुं. पाठः
२. S; BORI पृ. २९९; **'भवन्ति गेहे बन्धक्यः'** इति कुं. पाठः । कुं. ९० अध्यायः ।

**भवन्ति वेश्या वर्धक्य** इत्यत्र स्वगृह एव निवेशनयोग्या दास्यो **वेश्याः** । बहूनां पुरुषाणां स्वयोनिं विक्रीय स्वप्रभोर्धनं वर्धयन्त्यो वाराङ्गना **वर्धक्यः** ।

**अर्जुन उवाच –**

**न सकामाः परे कार्या धर्ममेवाचरोत्तमम् ।**
**भ्रातरं धार्मिकं ज्येष्ठं कोऽतिवर्तितुमर्हति ॥ ८ ॥**

**न सकामा** इत्यत्र समानकामाः **सकामाः** । धर्मराजं पराभावयितुं शात्रवः कामयन्ते, त्वमपि तद्वन्न कामयेति भावः ।

**भीमसेन उवाच –**

**[१]एवमस्मिन् कृते विद्यां यद्याह स्म धनञ्जय ।**
**दीप्तोऽग्नौ सहितौ बाहू [२]प्रक्षिपेयं बलादिव ॥ १० ॥**

**एवमस्मिन् कृत** इत्यत्र एवं दृश्यमानप्रकारेण **कृते** धर्मराजेन कृते सति **अस्मिन्** धर्मराजे **विद्यां** धर्मबुद्धिं यदि भवानाह स्म, तर्हि तव च तस्य च सहितौ बाहू अग्नौ प्रक्षिपेयमिति सम्बन्धः ।

**कर्ण उवाच–**

**दृश्यन्ते वै विकर्णेह वैकृतानि बहून्यपि ।**
**तज्जातस्तद्विनाशाय यथाऽग्निररणीप्रजः[३] ॥ २७ ॥**

---

१. $G_{1,2,4,6}$,M ; BORI पृ. ३००; **'एवमस्मिन्कृतं विद्यां यदि नाहं धनञ्जय'** इति कुं. पाठः ।

२. S ; BORI पृ. ३००; **'निर्दहेयं'** इति कुं. पाठः ।

३. **'-णिप्रजः'** इति कुं.पाठः ।

**अरणीप्रज** इत्यत्र प्रकर्षेण जातः **प्रजः** ।

**व्याधिर्बलं नाशयते शरीरस्थोऽपि सम्भृतः ।**
**तृणानि पशवो घ्नन्ति स्वपक्षं चैव कौरवः ॥**[१]

**तृणानि पशव** इत्यत्र **तृणानि** स्वास्तरणतृणानि ।

**स वै विवदनाद्भीतः सुधन्वानं विलोकयन् ।**
**तं सुधन्वाब्रवीत् क्रुद्धो ब्रह्मदण्ड इव ज्वलन्** ॥ ७१ ॥

**स वै विवदनात्** इत्यत्र **विवदनात्** विरुद्धस्य कथनात् ।

**यदि वै वक्ष्यसि मृषा प्रह्लादाथ न वक्ष्यसि ।**
**शतधा ते शिरो वज्री वज्रेण प्रहरिष्यति** ॥ ७२ ॥

**यदि वै वक्ष्यसि** इत्यत्र **न वक्ष्यसि** सत्यं न वक्ष्यसि ।

**साक्षी च**[२] **विब्रुवन् साक्ष्यं गोकर्णशिथिलं चरन्**[३] **।**
**सहस्रं वारुणान् पाशानात्मनि प्रतिमुञ्चति** ॥ ७७ ॥

**साक्षी च विब्रुवन्** इत्यत्र **साक्ष्यं** साक्षिसम्बन्धिवचनं **विब्रुवन्** विपरीततया वदन् । **गोकर्णशिथिलं चरन्** इत्यत्र गोकर्णशिथिलं गौः आर्तानां प्रश्नवाक् **कर्णात्** श्रोत्रात् **शिथिला** विस्रंसिता यथा भवति तथा **चरन्** आचरन्, औद्धत्यात्तत्प्रश्नवाक्यमेवाशृण्वन्नित्यर्थः । यद्वा **गोकर्णशिथिलं गोः** प्रष्टुर्वचनस्य **कर्णः** कर्णनमाकर्णनं तस्मिन्

---

१. BORI पृ. ३०२
२. $T_1$,$G_{2-4}$,M ; BORI पृ. ३०२; **'वा'** इति कुं. पाठः ।
३. **'-लश्चरन्'** इति कुं.पाठः ।

जातेऽपि **शिथिलः** प्रत्युत्तराच्छिथिलो भ्रंशितो यथा भवति तथा **चरन्** आचरन्, प्रष्टुः प्रत्युत्तरमवदन्नित्यर्थः । [१]'यो हि प्रश्नं न विब्रूयाद्वितथं वाऽपि निर्दिशत्' इति प्रागपि अवचनविपरीतवचनयोरुक्तत्वादत्राप्यय-मेवार्थः ।

**विद्धो धर्मो ह्यधर्मेण सभां यत्रोपपद्यते ।**
**न चास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः ॥ ७९ ॥**

**न चास्य शल्यम्** इत्यत्र **अस्य** धर्मस्य । **विद्धाः** पापविद्धाः ।

**अनेना भवति श्रेष्ठो मुच्यन्ते च सभासदः ।**
**एनो गच्छति कर्तारं निन्दार्हो यत्र निन्द्यते ॥ ८१ ॥**

**एनो गच्छति** इत्यत्र **कर्तारं** निन्दार्हप्राचीनपापकर्तारं निन्द्यं **एनः** निन्दकानां श्रेष्ठादीनां **एनः** पापम् ।

**हृतस्वस्य हि यद्दुःखं हतपुत्रस्य चैव यत् ।**
**ऋणिनः प्रति यच्चैव स्वार्थाद्भ्रष्टस्य चैव यत् ॥ ८३ ॥**

**स्वार्थाद्भ्रष्टस्य** इत्यत्र **स्वार्थात्** स्वारब्धप्रयोजनात् ।

[२]**अध्यूढा याश्च यद्दुःखं साक्षिभिर्विहतस्य च ।**
**एतानि वै समान्याहुर्दुःखानि त्रिदिवेश्वराः ॥ ८५ ॥**

**अध्यूढाः** अधिकया सपत्न्या सह ऊढाः ।

---

१. सभा- ९०-७५
२. **'अध्यूढायाश्च'** इति कुं.पाठः ।

**तानि सर्वाणि दुःखानि प्राप्नोति वितथं ब्रुवन् ।**
**समक्षं दर्शनात् साक्षी श्रवणाच्चेति धारणात् ॥ ८९ ॥**

**समक्षं दर्शनात्** इत्यत्र इति समक्षं दर्शनं यथा,तथा श्रवणात्, **धारणात्** पत्रशिलादिषु शासनरूपेण धारणात् ।

**विदुर उवाच–**

**एवं वै परमं धर्मं श्रुत्वा सर्वे सभासदः ।**
**यथाप्रश्नं तु कृष्णाया मन्यध्वं तत्र किं परम् ॥ ९० ॥**

**मन्यध्वं तत्र** इत्यत्र **तत्र** कृष्णायाः प्रश्ने ।

**॥ इति द्व्यधिकशततमोऽध्यायः ॥**

## ॥ अथ त्र्यधिकशततमोऽध्यायः ॥

**द्रौपद्युवाच –**

**पुरस्तात्करणीयं[१] मे न कृतं कार्यमुत्तरम् ।**
**विह्वलाऽस्मि कृताऽनेन कर्पता बलिना बलात् ॥ १ ॥**

**पुरस्तात्करणीयम्** इत्यत्र **कार्यं** दुश्शासनहस्तच्छेदाख्यकार्यम् । विह्वला कृताऽस्मीति सम्बन्धः ।

**किन्वतः कृपणं भूयो यदिदं[२] स्त्री सती शुभा ।**
**सभामध्यं विगाहेऽद्य क्व नु धर्मो महीक्षिताम् ॥ ८ ॥**

**यत्** यस्मात् इदं द्यूतम् ।

१. कुं. ९१ अध्यायः । ; २. $T_1$; BORI पृ. ३११; 'यदहं' इति कुं. पाठः ।

[1]धर्मं स्त्रियः सभां पूर्णां न नयन्तीति नः श्रुतम् ।
स नष्टः कौरवेयेषु पूर्वो धर्मः सनातनः ॥ ९ ॥

**धर्मं स्त्रियः सभां पूर्णाम्** इत्यत्र [2]'स्याद्धर्ममस्त्रियाम्' इत्यभिधानात् धर्ममिति नपुंसकम् । नयन्तीति नञः सम्बन्धः ।

कथं हि भार्या पाण्डूनां पार्षतस्य स्वसा सती ।
वासुदेवस्य च सखी पार्थिवानां [3]सभामिमाम् ॥ १० ॥

**पार्थिवानां सभामिमाम्** इत्यत्र कथं नीतेति योग्यक्रियया सम्बन्धः ।

न विवेक्तुं च ते प्रश्नमिमं शक्नोमि निश्चयात् ।
सूक्ष्मत्वाद्गहनत्वाच्च कार्यस्यास्य च गौरवात् ॥ १६ ॥

**कार्यस्यास्य च गौरवात्** इत्यत्र **अस्य** भविष्यतः भूभारहरणाख्यस्य ।

[4]कुले जाता तु कल्याणि [5]व्यसनाभ्यागता भृशम् ।
[6]धर्मान् मार्गान्न च्यवन्ते [7]यथा नस्त्वं वधूः स्थिता ॥ १८ ॥

**कुले जाता** इत्यत्र भृशं व्यसनाभ्यागता एते धर्मान्मार्गान्न च्यवन्ते । [8]'वधूर्जाया स्नुषा' इत्यभिधानात् त्वं **नः** अस्माकं सर्वेषां **वधूः** स्नुषा यथा तथा भवसीति योजना ।

॥ इति त्र्यधिकशततमोऽध्यायः ॥

---

१. **'धर्म्यां स्त्रियं सभां पूर्वे'** इति कुं. पाठः ।; २. अ.को. १-४-२४
३. **'-मियाम्'** इति कुं.पाठः ।; ४. **'कुलेषु जाताः'** इति कुं. पाठः ।
५. **'व्यसनैराहता'** इति कुं. पाठः ।; ६. **'धर्म्यान्मार्गान्न-'** इति कुं. पाठः ।
७. BORI पृ. ३१२; **'येषां'** इति कुं. पाठः ।; ८. अ.को. ३-३-१०२

## ।। अथ चतुरधिकशततमोऽध्यायः ।।

[१]अनीश्वरं विब्रुवन्त्वार्यमध्ये
युधिष्ठिरं तव पाञ्चालि हेतोः ।
कुर्वन्तु सर्वे चानृतं धर्मराज़ं
पाञ्चालि त्वं मोक्ष्यसे दासभावात् ।। ४ ।।

**अनीश्वरम्** इत्यत्र राज्यस्य ईश्वरो न भवतीत्यनीश्वरः तम् ।

**न हि मुच्येत [२]सञ्जीवन् पदा भूमिमुपस्पृशन् ।**
**[३]सत्यधर्मान् परामृश्य पाञ्चाल्या मूर्धजानिमान् ।। १४ ।।**

**न हि मुच्येत सञ्जीवन्** इत्यत्र पाञ्चाल्याः इमान् मूर्धजान् उपस्पृशन् अयं दुश्शासनः मे **पदा** पादेन **भूमिमुपस्पृशन्** पादघातेन भूमौ निपातित इत्यर्थः । जीवन्न मुच्यते हि । सत्यधर्मान् परामृश्य मुच्येत ।

**एवमुक्त्वा महाबाहुं विस्फुरन्तं मुहुर्मुहुः ।**
**तमुवाच तदा भीष्मो द्रोणो विदुर एव च ।।[४]**

**एवमुक्त्वा** इत्यत्र **विस्फुरन्तं** ओष्ठविस्फुरणं कुर्वन्तम् ।

।। इति चतुरधिकशततमोऽध्यायः ।।

* * *

---

१. कुं. ९२ अध्यायः ।
२. **'मे जीवन्पदा'** इति कुं.पाठः ।
३. $T_1$,$G_{1,2}$; BORI पृ. ३१४; **'मर्त्यधर्मा परामृश्य'** इति कुं. पाठः ।
४. BORI पृ.३१५

## ।। अथ पञ्चाधिकशाततमोऽध्यायः ।।

**कर्ण उवाच–**

**[१]त्रयः किलेमे ह्यधना भवन्ति दासः पुत्रश्चास्वतन्त्रा च नारी ।**
**[२]त्वं दासपत्नी धनमस्य भद्रे हीनेश्वरा दासधनं च [३]दासी ।। १९ ।।**

**त्रयः किलेम** इत्यत्र न विद्यते धनं येषां ते **अधनाः** । गृहस्थित-सर्वधनेषु स्वातन्त्र्यरहिता इत्यर्थः । त्वं **दासपत्नी** दासस्य धर्मराजस्य पत्नी । **अस्य** धर्मराजस्य **धनं** च एतद्गृहस्थितधनानां मध्ये त्वमप्येकं धनम् । अस्यैव जीवद्धनमित्यर्थः । अत एव हीनेश्वरा त्वं दुर्योधनस्य दासी दासधनं च अभूः । सेवाकर्मण्यौचित्याद्दासीत्वम् । साक्षादेव उपभोगानर्हित्वाद्धनत्वं दासद्वारैवेति सूचनाय दासधनमित्युक्तम् ।

**[४]प्रविश्य चान्तः परिचारैर्भजस्व तत्ते कार्यं [५]शिष्टमावेश्य वेश्म ।**
**ईशाऽस्तु सर्वे तव राजपुत्रि भवन्ति वै धार्तराष्ट्रा न पार्थाः २०**

**प्रविश्य चान्तः परिचारै** इत्यत्र अन्तर्वेश्मेति सम्बन्धः । परिचारैः सहेति योग्यपदाध्याहारः ।

**अन्यं वृणीष्व पतिमाशु भामिनि**
**यस्माद्दास्यं न लभसि देवनेन ।**

---

१. कुं. पाठानुसारेण पूर्वाध्याय एवानुसरति ।
२. $N_1$,$T_1$ ; BORI पृ. ३१५; **'दासस्य पत्नी त्वधनस्य'** इति कुं.पाठः ।
३. BORI पृ.३१५ ; **'सर्वम्'** इति कुं.पाठः ।
४. $G_1$,M, BORI पृ. ३१५;**'प्रविश्य राज्ञः परिवारं भजस्व'** इति कुं.पाठः ।
५. BORI पृ.३१५ ; **'शिष्टमादिश्यतेऽत्र'** इति कुं.पाठः ।

अवाच्या वै पतिषु कामवृत्ति-
नित्यं दास्ये [१]विहिता तत्तवास्तु ॥ २१ ॥

**नित्यं दास्य** इत्यत्र विहिता वृत्तिः ।

**पराजितो नकुलो भीमसेनो युधिष्ठिरः सहदेवार्जुनौ च ।**
**दासीभूता त्वं हि वै याज्ञसेनि पराजितास्ते पतयो नैव सन्ति २२**

**दासीभूता** इत्यत्र भवतीति योग्यपदाध्याहारः ।

**विदुर उवाच –**

परं भयं [२]पश्यति भीमसेनात्
तद्बुध्यध्वं पार्थिवाः प्रातिपेयाः ।
दैवेरितो नूनमयं पुरस्तात्
परोऽनयो भरतेषूदपादि ॥ ३४ ॥

**परं भयं पश्यति** इत्यत्र पश्यति दुर्योधनः ।

[३]इदं धर्मं कुरवोजानताशु [४]
दुर्दृष्टेऽस्मिन् परिषत्सम्प्रदुष्येत् ।
[५]इमां च पूर्वं कितवोऽ[६]ग्रहीष्य-
द्दोषोऽभविष्यदपराजितात्मा ॥ ३६ ॥

---

१. '**विदितं**' इति कुं. पाठः । ; २. BORI पृ. ३१८; '**पश्यत**' इति कुं. पाठः ।
३. $Ś_1$ ; BORI पृ. ३१८; '**इमं**' इति कुं. पाठः ।
४. BORI पृ.३१८ ; '**-ध्वस्ते धर्मे**' इति कुं. पाठः ।
५. $B_1$,$G_{1.2.4}$ ; BORI पृ. ३१८; '**इमां चेत्पूर्वं**' इति कुं. पाठः ।
६. $G_2$ ; BORI पृ. ३१८; '**-ग्लहीष्यदीशो**' इति कुं. पाठः ।

**इदं धर्मम्** इत्यत्र अजानतेति लङात्मनेपदे प्रथमपुरुषबहुवचनम् । ज्ञातवन्त इत्यर्थः । **दुर्दृष्टे** दुःखेन दृष्टे अन्यबलात्कारेणापि दृष्ट इत्यर्थः । **इमां च पूर्वम्** इत्यत्र **इमां** द्यूतलीलां **कितवः** दुर्योधनः यस्मादग्रहीष्यत् तस्माद्दोषोऽप्यभविष्यत् । अत एव **अपराजितात्मा न** पराजित **आत्मा** मनो येन स तथोक्तः, जितमनस्को नेत्यर्थः ।

**स्वप्ने यथैतद्विजितं धनं**
**स्यादेवं मन्ये यस्य दीव्यत्यनीशः ।**
**[१]गान्धारपुत्रस्य वचो निशम्य**
**धर्मादस्मात् कुरवो माऽपयात** ॥ ३७ ॥

**गान्धारपुत्रस्य** इत्यत्र हे कुरव इति सम्बोधनम् ।

**भीमस्य वाक्ये तद्वदेवार्जुनस्य**
**स्थितोऽहं वै यमयोश्चैवमेव ।**
**[२]युधिष्ठिरश्चेद्विवदत्यनीश-**
**मथो दास्यान्मोक्ष्यसे याज्ञसेनि** ॥ ३८ ॥

**युधिष्ठिरश्चेत्** इत्यत्र **विवदति** विशेषेण वदति ।

**विदुर उवाच –**
**शृणोमि वाक्यं तव राजपुत्रि**
**नेमे पार्थाः किञ्चिदपि ब्रुवन्ति ।**

---

१. $K_3$,$D_{1-6}$,$G_1$ ; BORI पृ. ३१८; '**-राजस्य**' इति कुं.पाठः ।
२. '**युधिष्ठिरं ते प्रवदन्त्वनीश**' इति कुं. पाठः ।

सा त्वं प्रियार्थं कुरु[१] वाक्यमेत-
यदुच्यते पापमतिः कृतघ्नः ॥ ५० ॥

सुयोधनः सानुचरः सुदुष्टः
सहैव राज्ञा[२] धिक्कृतः सूनुना च ।
तदेव[३] वाक्यं महदुच्यमानं
न श्रोष्यते पापमतिः कृतघ्नः[४] ॥ ५१ ॥

**यदुच्यते पापमतिः कृतघ्न** इत्यत्र **धिक्कृतः** सद्भिर्धिक्कृतः सूनुर्यस्य तेन **राज्ञा** धृतराष्ट्रेण **सहैव पापमतिः** सुयोधनः त्वया उच्यमानं महत् **वाक्यं** आक्रन्दनरूपवचनं यदि न श्रोष्यते, तर्हि तेन यदुच्यते तदेव वाक्यं प्रियार्थं दुर्योधनप्रियार्थं कुर्विति योजना ।

इत्येवमुक्त्वा द्रुपदस्य पुत्रीं
क्षत्ताऽब्रवीद्धृतराष्ट्रस्य पुत्रम् ।
मा क्लिश्यतां वै द्रुपदस्य पुत्री
मा त्वं चरीं द्रक्ष्यसि राजपुत्र ॥ ५२ ॥

**मा क्लिश्यताम्** इत्यत्र तथा सतीति योग्यपदाध्याहारः ।

द्रौपद्युवाच–

यस्माच्चोरुं दर्शयसे यस्माच्चोरुं निरीक्षसे ।
तस्मात्[५] तद्धाऽप्यधर्मिष्ठ उरौ मृत्युर्भविष्यति ॥ ७९ ॥

---

१. $G_2$ ; BORI पृ. ३१९; **'शृणु'** इति कुं. पाठः ।
२. **'राजा निकृतः'** इति कुं.पाठः । ; ३. **'यद्येष वाचं'** इति कुं.पाठः ।
४. **'सुदुष्टः'** इति कुं.पाठः ।; ५. **'तस्मात् तव ह्यधर्मिष्ठ ऊरौ'** इति कुं. पाठः ।

**तस्मात्तद्वाऽप्यधर्मिष्ठ** इत्यत्र [1]'वा विकल्पोपमानयोः' इत्यभिधानात्, **तद्वा** तत् ऊरुदर्शनमिव मृत्युर्भविष्यति । मृत्योर्दर्शनमपि तव भविष्यतीत्यर्थः ।

**[2]क्षुद्रकर्मन्नैकृतिकं शकुनिं पापचेतसम् ।**
**सहदेवो रणे क्रुद्धो हनिष्यति सबान्धवम् ॥ ८२ ॥**

**क्षुद्रकर्मन्** दुर्योधन ! ।

**[3]मनस्विनमजानन्तो मैवं ब्रूयुः कुमारकाः ।**
**[4]एष वै दासपुत्रेति प्रतिविन्ध्यं ममात्मजम् ॥ २८ ॥**

**एष वै दासपुत्रेति** इत्यत्र **एषः** दुर्योधनः ते कुमारकाश्च दासपुत्रेति मा ब्रूयुरिति सम्बन्धः ।

**पापीयांस इमे भूत्वा सन्तीर्णाः पतयो मम ।**
**वेत्स्यन्ति चैव भद्राणि राजन् पुण्येन कर्मणा ॥ ३५ ॥**

**पापीयांस इमे भूत्वा** इत्यत्र **पापो** दुर्योधनः तस्य **इमे** पापिनः अतिशयेन पापिनः **पापीयांसः**, सम्यग्दुर्योधनदासतां प्राप्ता इत्यर्थः ।

**॥ इति पञ्चाधिकशततमोऽध्यायः ॥**

* * *

---

१. ह.को. ५-८७३
२. **'क्षुद्रकर्मं नैकृतिकं'** इति कुं.पाठः ।
३. कुं. ९३ **अध्यायः** ।
४. BORI पृ. ३२०; **'एतं वै दासपुत्रेति'** इति कुं. पाठः ।

## ।। अथ षडधिकशततमोऽध्यायः ।।

**युद्धेऽपराङ्मुखत्वं च आहूतस्यानिवर्तनम् ।**
**दाराणां[1] वर्तनं[2] चैव इति तज्ज्योतिषां त्रयम् ।।**

**दाराणां वर्तनम्** इत्यत्र दाराणां सकाशात् औपासनाग्नौ अग्नि-होत्रादिसद्धर्मप्रवर्तनम् ।

**[3]अमेध्ये वै गतप्राणे शून्ये [4]जातिभिरुज्झिते ।**
**देहे [5]तृतीयमेवैतत्पुरुषस्योपजायते[6] ।। ६ ।।**

**अमेध्ये वै गतप्राण** इत्यत्र (द्वा)दाराख्ये तृतीयज्योतिस्साधने **अमेध्ये** अपवित्रे **गतप्राणे** मृते **शून्ये** सद्धर्मशून्ये **जातिभिरुज्झिते** जातिरहिते च जाते सति एतत् तृतीयं ज्योतिः पुरुषस्यैव देहे उप-जायते । कुण्डरहिते तज्ज्योतिः देहान्तस्समारोप्य ध्यानार्चनादिना तत्रैव सेवां कुर्यात् । न तु बहिरित्यर्थः ।

**न चैवोक्ता न चानुक्ता हीनतः परुषा गिरः ।**
**[7]भारताः प्रतिजल्पन्ति सदा[8]ऽनुत्तमपूरुषाः ।। ८ ।।**

**न चैवोक्ता** इत्यत्र **हीनतः** हीनेष्वपि जनेषु **न चैवोक्ताः** प्राक्केनाप्यनुक्ताः, **न चानुक्ताः** कैश्चिदुक्ताश्च वाच्यावाच्यरूपा इत्यर्थः ।

---

१. BORI पृ.३२२ ; २. **'रक्षणं'** इति BORI पाठः ।
३. कुं. ९४ **अध्यायः** ।; ४. **'ज्ञातिभिरुज्झिते'** इति कुं. पाठः ।
५. **'त्रितय-'** इति कुं. पाठः ।
६. **'-युज्यते'** इति कुं.पाठः । BORI पृ.३२२
७. BORI पृ. ३२३;**'भारत'** इति कुं.पाठः ।
८. $B_{1.3.5}$ ; BORI पृ. ३२३; **'तूत्तमपुरुषाः'** इति कुं.पाठः ।

**परुषा गिरः** निष्ठुरोक्तीः । उत्तमपूरुषा न भवन्तीति **अनुत्तमपूरुषाः** । **भारताः** भरतकुलोत्पन्ना दुर्योधनादयः सदा प्रतिजल्पन्तीति योजना ।

**स्मरन्ति सुकृतान्येव न वैराणि कृतान्यपि ।**
**सन्तः प्रतिविजानन्तो लब्ध्वा प्रत्ययमात्मनः** [1] ॥ ९ ॥

**सन्तः प्रति** इत्यत्र **प्रतिविजानन्तः** प्रतिकर्तुं जानन्तोऽपि सन्तः **आत्मनः** परमात्मनः **प्रत्ययं** ज्ञानम् ।

**इत्युक्त्वा भीमसेनस्तु कनिष्ठैर्भ्रातृभिः सह ।**
**मृगमध्ये यथा सिंहो मुहुः परिघमैक्षत** [2] ॥ १२ ॥

**परिघं** परितो घातयतीति परिघः स्थूलस्तम्भः ।

**॥ इति षडधिकशततमोऽध्यायः ॥**

## ॥ अथ सप्ताधिकशततमोऽध्यायः ॥

[3] **यतोऽनुबुद्धितः शान्तिः प्रशमं गच्छ भारत ।**
[4] **नादारौ क्रमते शस्त्रं दारुण्येतन्निपात्यये** ॥ ५ ॥

**यतोऽनुबुद्धित** इत्यत्र 'यती प्रयत्ने' इति धातोः **यतः** प्रयत्नवान् । **नादारौ क्रमते शस्त्रम्** इत्यत्र **अदारौ** दारुव्यतिरिक्ते शिलादौ **शस्त्रं** परशुम् ।

---

१. BORI पृ. ३२३; **'लब्धसम्भावनाः स्वयम्'** इति कुं.पाठः ।
२. BORI ; **'मुहुर्मुहुरुदैक्षत'** इति कुं.पाठः ।
३. **'यतो बुद्धिस्ततः'** इति कुं.पाठः । **कुं.९५ अध्यायः।**
४. **'नादारुणि पतेच्छस्त्रं'** इति कुं.पाठः ।

[1] **यथाऽऽचरितमार्येण त्वयाऽस्मिन् सत्समागमे ।**
**दुर्योधनस्य पारुष्यं तत्तात हृदि मा कृथाः ॥ १२ ॥**

**यथाऽऽचरितमार्येण** इत्यत्र **आर्येण** उत्तमपुरुषेण यथा **आचरितं** पूर्वमाचरितं, तथा अस्मिन् सत्समागमे त्वयाऽप्याचरितम् ।

॥ इति सप्ताधिकशततमोऽध्यायः ॥

॥ द्यूतपर्व समाप्तम् ॥

* * *

# अनुद्यूतपर्व

## ॥ अथ नवाधिकशततमोऽध्यायः ॥

[2] **दुःखेनैतत्समानीतं स्थविरो नाशयत्यसौ ।**
[3] **शत्रुसाद्गमयम् द्रव्यं तद्बुध्यध्वं महारथाः ॥ ४ ॥**

**शत्रुसाद्गमयन्** इत्यत्र 'तदधीनकात्स्न्र्ययोर्वा सात्' इति वचनात् **शत्रुसात्** शत्र्वधीनं **गमयन्** प्रापयन् ।

**सर्वोपायैर्निहन्तव्याः शत्रवः शत्रुसूदन ।**
**पुरा युद्धाद्बलाद्वापि प्रकुर्वन्ति तवाहितम् ॥ ८ ॥**

---

१. $B_{1m.}$; BORI पृ. ३२५; '**तथा चरि-**' इति कुं.पाठः ।

२. कुं. ९६ अध्यायः ।

३. $K_{1.2}$, $B_{2.3.5.6}$,$D_{2.4}$,$M_1$ ; BORI पृ. ३२७; '**शत्रुसाद्गमयद्द्रव्यं**' इति कुं.पाठः ।

**पुरा** युद्धात्पुरा, उपायैरित्यर्थः । हितं यथा भवति तथा न कुर्वन्तीति योजना ।

**ते वयं पाण्डवधनैः सर्वान् सम्पूज्य पार्थिवान् ।**
**यदि तान् योधयिष्यामः किं वै नः परिहास्यति ॥ ९ ॥**

**परिहास्यति** 'ओहाक् त्यागे'इति धातोर्लृट् । नङ्क्ष्यतीत्यर्थः ।

**सन्नद्धो ह्यर्जुनो याति [१]विवर्त्य परमेषुधी ।**
**गाण्डीवं मुहुरादत्ते निःश्वसंश्च निरीक्षते ॥ १२ ॥**

**विवर्त्य** विशेषेण वर्तयित्वा अलङ्कृत्येत्यर्थः । 'विभज्य' इति पाठे भुजद्वये विभक्तौ कृत्वेत्यर्थः ।

**[२]त्रयोदशं च स्वजनैरज्ञाता परिवत्सरम् ।**
**ज्ञाताश्च पुनरन्यानि वने वर्षाणि द्वादश ॥ ८२ ॥**
**निवसेम वयं ते वा तथा द्यूतं प्रवर्तताम् ।**
**[३]अज्ञातसात्पुनर्द्यूतमिदं कुर्वन्तु पाण्डवाः ॥ ८३ ॥**

**अज्ञातसात्पुनर्द्यूतम्** इत्यत्र **तथा** पूर्वोक्तप्रकारेण एकं वर्षं **अज्ञातसात्** सर्वे अज्ञाता भूत्वा निवसेम । अतः पुनर्द्यूतं प्रवर्ततामिति योजना ।

**त्वन्नेत्राः सन्तु ते पुत्रा मा त्वां [४]जीर्णाः प्रहासिषुः ।**
**तस्मादयं मद्वचनात्त्यज्यतां कुलपांसनः ॥ ९८ ॥**

---

१. **'विधृत्य'** इति कुं. पाठः । ; २. कुं. ९७ **अध्यायः** ।
३. **'अक्षानुप्त्वा'** इति कुं.पाठः ।; ४. **'दीर्णाः'** इति कुं. पाठः ।

**त्वन्नेत्रा** इत्यत्र **त्वन्नेत्राः**[१] त्वमेव **नेता** प्रेरको येषां ते तथोक्ताः **जीर्णाः** नष्टाः ते पुत्राः त्वां **मा प्रहासिषुः** 'ओहाक् त्यागे'इति धातोः लुङि बहुवचनम् मा त्यजन्त्विव्यर्थः ।

**शमेन धर्मेण नयेन युक्ता**
**या ते बुद्धिः साऽस्तु ते मा प्रमादीः ।**
**प्रध्वंसिनी क्रूरसमाश्रिता श्रीः**
**मृदुप्रौढा गच्छति पुत्रपौत्रान् ॥१००॥**

**प्रध्वंसिनी** इत्यत्र **क्रूरसमाश्रिता** क्रूरेषु मर्त्येषु समाश्रिता **श्रीः** सम्पत् **प्रध्वंसिनी** तस्यैव नाशकरी । **मृदुप्रौढा मृदुभिः** शान्तैः प्रकर्षेण **ऊढा** अङ्गीकृता **श्रीः** सम्पत् पुत्रपौत्रपर्यन्तं स्थिरीभवतीत्यर्थः ।

**॥ इति नवाधिकशततमोऽध्यायः ॥**

## ॥ अथ दशाधिकशततमोऽध्यायः ॥

**वैशम्पायन उवाच–**

**ततो व्यध्वगतं पार्थं प्रातिकामी युधिष्ठिरम् ।**[२]
**उवाच वचनाद्राज्ञो धृतराष्ट्रस्य धीमतः ॥ १ ॥**

**ततो व्यध्वगतम्** इत्यत्र विशेषेणाध्वगतं **व्यध्वगतं** बहुदूरगतमित्यर्थः ।

---

१. 'नेत्रं मथिगुणे वस्त्रे तरुमूले विलोचने । नेत्रं रथे च नाड्यां च नेत्रो नेतरि भेद्यवत्' इति विश्वः । (अ.को. पृ. ४२८)
२. कुं. ९८ अध्यायः ।

सभ्या ऊचुः –

अहो धिग्बान्धवानेतान्[1] बोधयन्ति महद्भयम् ।
बुद्ध्याऽवबुद्ध्यन्त[2] बुद्ध्यन्ते वयं च भरतर्षभाः ॥ १७ ॥

**अहो धिग्बान्धवान्** इत्यत्र महद्भयं यथा भवति तथा, **एतान्** पाण्डवान् **बुद्ध्या** कुबुद्ध्या बोधयन्ति धिक् । भरतर्षभा वयं च **बुद्ध्यन्ते** कुबुद्धेरवसाने **अबुध्यन्त** तैरज्ञायन्त । वयं सर्वे एतेषां दुर्जनानां दृष्टिगोचरा जाताः । न तु पूर्वमिति भावः । यद्वा एतद्दुर्वाक्यफलं एते दुर्योधनादयः प्राक् **अवबुध्यन्त** अजानन्, अन्वभवन्नित्यर्थः । उपरि **बुद्ध्यन्ते** अनुभविष्यन्ति । भरतर्षभा वयं च बुध्यामहे परिपाकसमये द्रक्ष्याम इत्यर्थः ।

[3]एष वै ग्लह एवैको वनवासाय पाण्डवाः ।
यूयं वयं वा विजिता वसेम वनमाश्रिताः ॥ २२ ॥

त्रयोदशं च वै वर्षमज्ञाता स्वजनैस्तथा ।
अनेन व्यवसायेन दीव्याव[4] भरतर्षभ ॥ २३ ॥

**एष वै ग्लह एवैक** इत्यत्र **एषः** गजाश्वादीनां त्याग एको ग्लहः । एकः वनवासाय गमनम् । एकेन सर्वक्षयेण एकेन वनवासाय गमनेन इति पणद्वयेन दीव्यावेति पूर्वेणान्वयः ।

---

१. S; BORI पृ. ३३२; **'-नैनं'** इति कुं.पाठः ।
२. **'बुद्ध्या बुद्ध्येन्न वा बुद्ध्येदयं वै भरतर्षभ'** इति कुं. पाठः ।
३. $N_1$,S ; BORI पृ. ३३२; **'हित्वा नो ग्लह'** इति कुं. पाठः ।
४. $D_6$,$G_{2.6}$,$M_2$; BORI पृ. ३३३; **'दीव्याम'** इति कुं.पाठः ।

वैशम्पायन उवाच –

एवं दैवबलाविष्टो धर्मराजो युधिष्ठिरः ।
[१]भीष्मद्रोणौ वार्यमाणो विदुरेण च धीमता ॥ २४ ॥

**भीष्मद्रोणौ वार्यमाण** इत्यत्र यौ भीष्मद्रोणौ ताभ्यां वार्यमाणः ।

[२]वार्यतेऽतीव सततं न च [३]राजा नियच्छति ।
एवं संवार्यमाणोऽपि कौन्तेयो हितकाम्यया ॥ २७ ॥

देवकार्यार्थासिद्ध्यर्थं मुहूर्तं कलिराविशत् ।
आविष्टः कलिना राजन् शकुनिं प्रत्यभाषत ॥ २८ ॥

एवं भवत्विति तदा वनवासाय दीव्यते ।
प्रतिजग्राह [४]तत्पार्थो ग्लहं जग्राह सौबलः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २९ ॥

**वार्यतेऽतीव सततम्** इत्यत्र पूर्वोक्तैर्विदुरादिभिः धर्मराजः अतीव वार्यते । हितकाम्यया एवं संवार्यमाणोऽपि कौन्तेयो राजा देवकार्यार्थ-सिद्ध्यर्थं **न नियच्छति** द्यूतगतं मनो न नियमयति । वनवासाय दीव्यते शकुनये **तत्** वनवासाय गमनमेव पार्थः प्रतिजग्राह । तदा शकुनिः **ग्लहं** ग्लाह्यते अनेनेति ग्लहमक्षं जग्राह ।

॥ इति दशाधिकशततमोऽध्यायः ॥

---

१. **'भीष्मद्रोणाऽऽवार्यमाणो'** इति कुं. पाठः ।
२. **'वार्यमाणोपि'** इति कुं. पाठः ।
३. BORI पृ. ४४८ ; **'राजन् निय..'** इति कुं.पाठः ।
४. $S_1$,$K_{1.3}$,$V_1$,$D_6$; BORI पृ. ३३४; **'तं पार्थो'** इति कुं.पाठः ।

## ।। अथ द्वादशाधिकशततमोऽध्यायः ।।

**[1]धनेन मत्ता ये ते स्म धार्तराष्ट्रान् प्रहासिषुः ।**
**ते निर्जिता हृतधना वनमेष्यन्ति पाण्डवाः ।। ६ ।।**

**धार्तराष्ट्रान् प्रहासिषुः** इत्यत्र '[2]हसे हसने' इति धातोः प्रकर्षेण हासिषुः **प्रहासिषुः** अहसन्नित्यर्थः । 'बहुलं च्छन्दस्यमाङ्योगेऽपि' इति सूत्रात् अडागमाभावः ।

**न सन्ति लोकेषु पुमांस ईदृशा**
**इत्येव ये भावितबुद्धयः सदा ।**
**ज्ञास्यन्ति तेऽऽत्मानमिमेऽद्य पाण्डवा**
**विपर्यये [3]षण्डतिला इवाफलाः ।। ८ ।।**

**षण्डतिलाः** स्नेहरहिततिलाः ।

**महाप्राज्ञः सौमकिर्यज्ञसेनः**
**कन्यां पाञ्चालीं पाण्डवेभ्यः प्रदाय ।**
**[4]स चाकर्षीदुष्कृतं ते हसन्ति**
**क्लीबाः पार्थाः पतयो याज्ञसेन्याः ।। १० ।।**

**स चाकार्षीद्दुष्कृतम्** इत्यत्र **दुष्कृतं** कर्तुमयोग्यं अकार्यमित्यर्थः । याज्ञसेन्याः पतयः क्लीबा इति ते येषां द्रौपदी दत्ता त इमे जना हसन्ति ।

---

१. कुं. ९९ अध्यायः । ; २. हसन् हसने सो.मु.पा. ।
३. 'पण्ढ' इति कुं.पाठः ।; ४. 'अकार्षीद्धि सुकृतं नेह किञ्चित्' इति कुं. पाठः

**सूक्ष्मप्रावारानजिनानि[1] तोपितान्[2]**
**दृष्ट्वाऽरण्ये निर्धनानप्रतिष्ठान् ।**
**कां त्वं प्रीतिं लप्स्यसे याज्ञसेनि**
**पतिं वृणीष्वेह यमन्यमिच्छसि ॥ ११ ॥**

**अजिनानि तोपितान्** इत्यत्र **उपितान्** देशान्तरं गतान् भिक्षुकानिव **अजिनान्** 'अर्श आदिभ्योऽच्' इति वचनात् **अजिनं** रौरवाजिनं, तद्वत इत्यर्थः ।

**यथाऽफला पण्ढतिला यथा चर्ममया मृगाः ।**
**तथैव पाण्डवाः सर्वे यथा काकयवा अपि ॥ १३ ॥**

**यथा काकयवा** इत्यत्र **काकयवाः** काकभाजनीभूतयवाः, यवाकार-तृणविशेषा वा ।

**वैशम्पायन उवाच –**

**एवं ब्रुवाणमजिनैर्विवासितं**
**दुःशासनस्तं परिनृत्यति स्म ।**
**मध्ये कुरूणां धर्मनिबद्धमार्गं**
**गौर्गौरिति स्माह्वयन् मुक्तलज्जः ॥ १९ ॥**

**गौर्गौरिति स्माह्वयन्** इत्यत्र **गौः** गोरूपपशुः । गोपालैः क्रियमाण-शब्दविशेषो वा **गौः** ।

---

१. $K_{1\ 3}$,$G_1$,$M_2$ ; BORI पृ. ३३६; **'सूक्ष्मप्रवारानजिनोत्तरीयान्'** इति कुं. पाठः ।
२. BORI पृ. ३३६.

[१] मा ह स्म सुकृतां लोकान् गच्छेत् पार्थो वृकोदरः ।
यदि वक्षो हि ते भित्त्वा न पिबेच्छोणितं रणे ॥ २१ ॥

मा ह स्म सुकृतां लोकान् इत्यत्र सुष्ठु कुर्वन्तीति सुकृतः पुण्यकृतः तेषाम् ।

[२] ततः स राजा सिंहगतेः सखेलं
दुर्योधनो भीमसेनस्य [३] रोषात् ।
गतिं स्वगत्याऽनुचकारमन्दो-
र्निर्गच्छतां पाण्डवानां सभायाः ॥ २३ ॥

ततः स राजा इत्यत्र भीमसेनस्य रोषात् रोषं दृष्टान्तीकृत्य सरोषात् तद्रोषसमानरोषं स्वयमप्यनुकृत्य पाण्डवानां निर्गच्छतां सताम् ।

इदं च भूयो वक्ष्यामि सभामध्ये बृहद्वचः ।
सत्यं देवाः करिष्यन्ति [४] यन्नो बुद्धं भविष्यति ॥ २७ ॥

यन्नो बुद्धम् इत्यत्र बुद्धं बुद्धिस्थम् ।

वाक्यशूरस्य चैवास्य परुषस्य दुरात्मनः ।
दुःशासनस्य रुधिरं पाताऽस्मि मृगराडिव ॥ २९ ॥

अस्य निरस्य ।

---

१. 'मैव' इति कुं.पाठः ।
२. S ; BORI पृ. ३३८; 'तस्य' इति कुं. पाठः ।
३. S except MI; BORI पृ. ३३८; 'हर्षात्' इति कुं. पाठः ।
४. 'यन्नो युद्धं' इति कुं. पाठः ।

अर्जुन उवाच –

**भीमसेन न ते सन्ति येषां वैरं [1] त्वया सह ।**
**मत्वा गृहेषु सुखिनो न बुद्ध्यन्ते महद्भयम्  ॥ ३० ॥**

गृहेषु स्वान् सुखिनः मत्वा ।

**[2] न वै वाच्यं व्यवसितं भीम [3] विज्ञायतां सताम् ।**
**इतश्चतुर्दशे वर्षे द्रष्टारो यद्भविष्यति  ॥ ३१ ॥**

**न वै वाच्यम्** इत्यत्र **सतां** सज्जनानां **व्यवसितं** स्वमनसि निर्णीतं प्रमेयं वाच्यं न वै । किन्तु स्वयमेव **विज्ञायतां** फलकाले दृश्यताम् ।

अर्जुन उवाच –

**[4] असूनृतानां वक्तारं संहृष्टानां दुरात्मनाम् ।**
**भीमसेन नियोगात्ते हन्ताहं कर्णमाहवे  ॥ ३३ ॥**

**असूनृतानां वक्तारम्** इत्यत्र [5] 'अश्लीलं सूनृतं प्रिये' इत्यभिधानात् **असूनृतानां** न विद्यते सूनृतं येषां ते तथोक्ताः । **संहृष्टानां दुरात्मनां वक्तारं** कुमार्गवक्तारम् ।

सहदेव उवाच –

---

१. **'त्वयात्विह । मत्ता मृगेषु - '** इति कुं. पाठः ।
२. $D_3$ ; BORI पृ. ३३९; **'नैवं वाचा'** इति कुं. पाठः ।
३. S; BORI पृ. ३३९; **'विज्ञायते'** इति कुं. पाठः ।
४. **'असूयितारं द्रष्टारं प्रवक्तारं विकत्थनम्'** इति कुं. पाठः ।
५. अ.को. १-६-१९

[1]अक्षाणि मूढ दुर्बुद्धे गान्धाराणां यशोहर ।
[2]न प्रयुक्ता मया बाणास्त्वयैते समरे वृताः ॥ ४० ॥

**अक्षाणि मूढ** इत्यत्र ते तव एतान्यक्षाणि अक्षाणि न । किन्तु समरे त्वया वृताः एते मया प्रयुक्ता बाणा एव अक्षाणीति योजना ।

निदेशाद्धर्मराजस्य द्रौपद्याः पदवीं चरन् ।
निर्धार्तराष्ट्रां पृथिवीं कर्ताऽस्मि नचिरादिव ॥ ४७ ॥

**द्रौपद्याः पदवीं चरन्** इत्यत्र द्रौपद्याः **पदवीं** केशाभिमर्शकरस्पर्श-कर्षणादिपदवीं **चरन्** उलूकेऽप्याचरन् ।

[3]अन्योन्यं सम्प्रियाः सर्वे तथैव प्रियदर्शनाः ।
परैरभेद्याः सन्तुष्टाः [4]को वा न स्पृहयेदिह ॥ १३ ॥

**सन्तुष्टाः** सम्भवत वर्तध्वम् । **इह** भवत्सु को वा अन्योन्यं, **न स्पृहयेत्** स्पृहामिच्छां न कुर्यात् । सर्वेऽप्यन्योन्यमनोनुकूला इति भावः । **इह** भवत्सु न **स्पृहयेत्** इच्छां न कुर्यादिति सम्बन्धः ।

हिमवत्यनुशिष्टोऽसि मेरुसावर्णिना पुरा ।
द्वैपायनेन कृष्णेन नगरे वारणावते ॥ १५ ॥
भृगुतुङ्गे च रामेण दृषद्वत्यां च शम्भुना ।
अश्रौषीरसितस्यापि महर्षेरञ्जनं प्रति ॥ १६ ॥

---

१. $G_{2,6}$,$M_1$ ; BORI पृ. ३४०; **'अक्षान्यान्मन्यसे मूढ'** इति कुं. पाठः ।
२. **'नैतेऽक्षा निशिता'** इति कुं. पाठः ।
३. BORI पृ. ३४३; **'अन्योन्यस्य प्रियाः'** इति कुं. पाठः । कुं. १०० अध्यायः
४. $K_{2,4}$,$D_6$,$G_{2,4}$,$M_1$ ; BORI पृ. ३४३; **'को वो'** इति कुं. पाठः ।

**हिमवति** इत्यत्र **हिमवति** शतशृङ्गे **पुरा** बाल्ये **मेरुसावर्णिना** मेरु-सावर्ण्याख्यमनुना । **असितस्य** असिताख्यमहर्षेः सकाशादपि ।

**द्रष्टा सदा नारदस्ते धौम्यस्तेऽयं पुरोहितः ।**
**[१]महर्षिः साम्पराये त्वं बुद्धिं तामृषिपूजिताम् ॥ १८ ॥**

**महर्षिः साम्पराय** इत्यत्र 'साम्परायस्तु सङ्ग्राम आपदागामिकालयोः' इत्यभिधानात् **साम्पराये** आपदि धौम्यः ते बुद्धिं वक्ष्यतीति योग्य-क्रियया सम्बन्धः ।

**तथा विसर्गे कौबेरे वारुणे चैव संयमे ।**
**[२]आत्मप्रदाने सौम्ये त्वं अद्भ्यश्चैवात्मजीवने ॥ २० ॥**

**भूमेः क्षमा च तेजश्च [३]सामग्र्यं सूर्यमण्डलात् ।**
**वायोर्बलं प्राप्नुहि त्वं भूतेभ्यश्चात्मसम्पदम् ॥ २१ ॥**

**अगदं वोऽस्तु भद्रं वो द्रष्टाऽसि पुनरागतान् ।**
**आपद्धर्मार्थ कृच्छ्रेषु सर्वकार्येषु वा पुनः ॥ २२ ॥**

**यथावत्प्रतिपद्येथाः काले काले युधिष्ठिर ।**
**आपृष्टोऽसीह कौन्तेय स्वस्ति प्राप्नुहि भारत ॥ २३ ॥**

**आत्मप्रदान** इत्यत्र **सौम्ये** सोमसम्बन्धिनि, **आत्मप्रदाने** स्वकला-दानवत् स्वस्यैव दाने । **आत्मजीवने** प्राणिनां जीवने । **सामग्र्यं,**

---

१. $G_1$,$M_{1m.2}$ ; BORI पृ. ३४४; **'माहासीः'** इति कुं. पाठः ।
२. **'आत्मप्रदानं सौम्यत्वं अद्भ्यश्चैवोपजीवनम्'** इति कुं. पाठः ।
३. $K_1$,$T_1$,$G_{2.3.5.6}$, $M_2$ ; BORI पृ. ३४४; **'समग्रं'** इति कुं. पाठः ।

**समग्रस्य** पूर्णस्य भावः सामग्र्यं, सदा एकप्रकारेण स्थितिः । **भूतेभ्यः** पृथिव्यादिपञ्चमहाभूतेभ्यः । **अगदं** आरोग्यम् । **आपृष्टः** आ समन्तात् पृष्टं प्रश्नो यस्य स तथोक्तः ।

॥ इति द्वादशाधिकशततमोऽध्यायः ॥

## ॥ अथ त्रयोदशाधिकशततमोऽध्यायः ॥

**अथाधिरुह्य[१] सस्त्रीका उदासीना व्यलोकयन् ।**
**न हि रथ्यास्ततः[२] शक्या गन्तुं ताश्च जनाकुलाः ।**
**आरुह्य तेन[३] तेऽन्यत्र दीनाः पश्यन्ति पाण्डवान्** ॥ ३ ॥

**सस्त्रीकाः** स्त्रीभिः सहिताः बाला वृद्धाश्च । **उदासीना व्यलोकयन्** इत्यत्र **उदासीनाः** उच्चस्थानेष्वासीनाः । **न हि रथ्यास्ततः शक्या** इत्यत्र यतः **ताः रथ्याः** रथवीत्यः स्वजनैर्बन्धुजनैः आकुलाः, ततः स्त्रीबालवृद्धानां गन्तुं शक्या न । **तेन** कारणेन **ते** सर्वे आरुह्य पाण्ड-(वं)वान् पश्यन्ति । अन्यत्र न ।

**चत्वारो भ्रातरश्चैव पुरोधाश्च[४] विशाम्पते ।**
**भीमार्जुनौ वारयित्वा निकृत्या बद्धकार्मुकौ** ॥ ७ ॥

**निकृत्या** नितरां **कृतिः** कार्यं तया उपरि बहुकार्यमस्तीत्युक्त्वा, बद्धकार्मुकौ भीमार्जुनौ **वारयिता** इदानीं किमपि न कार्यमिति वारयिता पुरोधाश्चेति सम्बन्धः ।

---

१. कुं. १०१ अध्यायः । ; २. **'रथ्यास्तदा'** इति कुं. पाठः ।
३. **'स्मानतास्तत्र'** इति कुं. पाठः ।
४. G₃; BORI पृ. ३४३; **'धौम्यश्चैव पुरोहितः'** इति कुं. पाठः ।

**मूषकैः परिधावद्भिरुद्धलैरावृतानि च ।**
**[१]सर्वतोदकधूमानि हीनसम्मार्जनानि च ॥ २० ॥**

**सर्वतोदकधूमानि** इत्यत्र 'तुद व्यथने' इति धातोः सर्वान् तुदतीति सर्वतोदको धूमो येषां तानि ।

**त्यजन्त्वस्मद्भयाद्भीता गजाः सिंहा वनान्यपि ।**
**अनाक्रान्तं प्रपद्यन्तः सेवमानं त्यजन्तु च ॥ २४ ॥**

**अनाक्रान्तम्** अस्माभिरनाक्रान्तम् ।

**गत्वा [२]प्रासादजालानि उत्पाट्यावरणानि च ।**
**ददृशुः पाण्डवान् दीनान् वल्कलाजिनवाससः ॥ २८ ॥**

**प्रासादजालानि** प्रासादगवाक्षान् ।

**भाविन्यर्थे हि सत्स्त्रीणां वैकृतं नोपजायते ।**
**गुरुधर्माभिगुप्ता च श्रेयः क्षिप्रमवाप्स्यसि ॥ ३८ ॥**

**गुरुधर्माभिगुप्ता गुरुः** श्रेष्ठः धर्मः तेन अभिगुप्ता ।

**रुरुचर्मावृततनून् ह्रिया किञ्चिदवाङ्मुखान् ।**
**परैः परीतान् संहृष्टैः सुहृद्भिश्चानुशोचतः ॥ ४२ ॥**

सुहृद्भिः सह अनुशोचतः ।

---

१. **'अपतोदकधूमानि'** इति कुं. पाठः ।
२. BORI पृ. ४५०; **'स्वगृहजालानि'** इति कुं. पाठः ।
३. $T_1, G_{2.3.5.6}$ ; BORI पृ. ३४६; **'-नुशोचितान्'** इति कुं. पाठः ।

**यद्येवमहमज्ञास्यं वने वासं हि वो ध्रुवम् ।**
**शतशृङ्गान्मृते पाण्डौ नागमिष्यं गजाह्वयम्** ॥ ४८ ॥

शतशृङ्गात् गजाह्वयं नागमिष्यम् ।

**धन्यं वः पितरं मन्ये तपोमेधान्वितं तथा ।**
**यमपुत्राऽऽधिमप्राप्य[1] स्वर्गेच्छामकरोत्प्रियम्** ॥ ४९ ॥

**यमपुत्राऽऽधिमप्राप्य** इत्यत्र **यमौ** यमलौ नकुलसहदेवौ पुत्रौ यस्याः सा माद्री ।

**रत्या मत्या च गत्या च ययाऽहमभिसन्धिता ।**
**जीवितप्रियतां [2]मे तां [3]धिङ्गाश्च क्लेशभागिनीम्** ॥ ५१ ॥

मे जीवितमेव प्रियं यस्याः सा जीवितप्रिया तस्याः भावः **जीवित-प्रियता** तां धिक् । क्लेशभागिनीं मां च धिक् ।

**एवं विलपतीं कुन्तीमभि[4]सान्त्व्य प्रणम्य च ।**
**पाण्डवा विगतानन्दा वनायैव प्रवव्रजुः** ॥ ६१ ॥

**अभिसान्त्व्य** अन्तर्णीतो णिच्, अभिसान्त्वय्य ।

**[5]विदुरादयश्च तामार्तां कुन्तीमाश्वास्य हेतुभिः ।**
**प्रावेशयद् गृहं क्षत्ता [6]स्वयमार्तातुरा शनैः** ॥ ६२ ॥

---

१. **'यः पुत्राधिमसम्प्राप्य'** इति कुं. पाठः ।
२. N$_1$; BORI पृ. ३४८; **'मह्यं'** इति कुं.पाठः ।
३. **'धिङ्गां सङ्क्लेशभागिनीम्'** इति कुं. पाठः ।
४. BORI पृ. ३४८; **'-त्राय'** इति कुं.पाठः ।
५. **'विदुरश्चापि'** इति कुं.पाठः । ; ६. **'स्वयमार्ततरः'** इति कुं. पाठः ।

**आर्तातुराः शनैः** इत्यत्र '[1]आतुरो भ्रमितो भ्रान्तः' इत्यभिधानात् आर्ताश्च ते **आतुरा** भ्रान्ताश्च आर्तातुराः ।

॥ इति त्रयोदशाधिकशततमोऽध्यायः ॥

## ॥ अथ चतुर्दशाधिकशततमोऽध्यायः ॥

**धृतराष्ट्र[2] उवाच –**

**विविधानीह रूपाणि कृत्वा गच्छन्ति पाण्डवाः ।**
**तन्ममाचक्ष्व विदुर [3]एवं कस्मात् व्रजन्ति ते ॥ ९ ॥**

**एवं कस्मात्** इत्यत्र अहं ते ब्रवीमि । तन्निमित्तं ममाचक्ष्वेति योजना ।

**विदुर उवाच–**

**निकृतस्यापि ते पुत्रैर्हृते राज्ये धनेपु च ।**
**न धर्माचलते बुद्धिर्धर्मराजस्य धीमतः ॥ १० ॥**

**निकृतस्यापि** इत्यत्र निकृतविषयतया कृतः **निकृतः** तस्यापि ।

**सिकता वपन्सव्यसाची राजानमनुगच्छति ।**
**असक्ताः सिकतास्तस्य यथा सम्प्रति भारत ।**
**[4]असक्ताः शरवर्षाणि तथा मोक्ष्यति शत्रुषु ॥ १६ ॥**

**असक्ताः, शरवर्षाणि** इत्यत्र स्वमुक्तशराः **असक्ताः** अन्योन्यमसक्ताः यथा स्युस्तथा । इदं चोपलक्षणम् । असङ्ख्याताश्चेत्यपि द्रष्टव्यम् ।

---

१. अ.को. २-६-५८ । '-अभ्यमितोऽभ्यान्तः' इति प्र. पाठः ।
२. कुं. १०२ अध्यायः ।; ३. '**कस्मादेवं व्रजन्ति**' इति कुं. पाठः ।
४. '**असक्तं**' इति कुं. पाठः ।

यत्कृतेऽहमिदं प्राप्ता तेषां वर्षे चतुर्दशे ।
[१]हता पत्या हतसुता हतबन्धुजनप्रिया: ॥ २० ॥

**हता पत्या** इत्यत्र पत्या जात्येकवचनम् । स्वस्वपतिभिः वैधव्यं प्रापयित्वा मृतप्रायाः कृताः ।

बन्धुशोणितदिग्धाङ्ग्यो मुक्तकेश्यो रजस्वलाः ।
एवं कृतोदका भार्याः प्रवेक्ष्यन्ति गजाह्वयम् ॥ २१ ॥

**रजस्वलाः** रणभूमौ स्वस्वपतिशवालिङ्गनेन धूलीधूसरिताङ्ग्यः ।

हतेषु भरतेष्वाजौ कुरूणां [२]कुरवस्तदा ।
एवं सामानि गायन्तीत्युक्त्वा धौम्योऽपि गच्छति ॥ २३ ॥

**कुरूणां कुरव** इत्यत्र **कुरवः** प्रेतकर्मकरणशीलाः पुरोहिताः ।

प्रस्थाप्य पाण्डवान् शेषान्निःशेषस्ते भविष्यति ।
इति धौम्यो व्यवसितो [३]रौद्रान् याम्यानि गायति ॥ २४ ॥

**निश्शेषस्ते भविष्यति** इत्यत्र ते वंशः । **रौद्रान् याम्यानि गायति** इत्यत्र **रौद्रान्** भयङ्करमन्त्रान्, **याम्यानि** सूक्तानि ।

[४]प्रव्याहरन्तः क्रव्यादा गृध्रगोमायुवायसाः ।
देवायतनचैत्येषु प्राकाराट्टालकेषु च ॥ ३३ ॥

---

१. **'हतपत्यो'** इति कुं. पाठः ।
२. $T_1, G_{2,3,5}$ ; BORI पृ. ३५८; **'गुरवस्तदा'** इति कुं. पाठः ।
३. $G_{1,2}$,M ; BORI पृ. ३५२; **'रौद्रसामानि'** इति कुं. पाठः ।
४. $G_2$ ; BORI पृ. ३५३; **'प्रत्याहरन्ति'** इति कुं.पाठः ।

**प्रव्याहरन्त** इत्यत्र प्रकर्षेण **व्याहरन्तः** स्वस्वध्वनिं कुर्वन्तः। 'व्याहारोदीरणकथनादयश्च तद्भेदाः'[१] इति हलः।

**ततो दुर्योधनः कर्णः शकुनिश्चापि सौबलः।**
**द्रोणं [२]दीपममन्यन्त राज्यं चास्मै न्यवेदयन् ॥ ३९ ॥**

**द्रोणं दीपम्** इत्यत्र भयान्धकारपरिहाराय दीपस्थानीयं दीपं द्रोणम्।

**ज्वालावर्णो देवदत्तो धनुष्मान् कवची शरी।**
**[३]मर्त्यधर्मतयाऽस्माकमद्य मे साध्वसो महान् ॥ ४८ ॥**

**मर्त्यधर्मतया** इत्यत्र अस्माकं मृत्युभूतादिति योग्यपदाध्याहारः।

**सृष्टप्राणो भृशतरं तेन चेत्सङ्गमो मम।**
**किमन्यद्दुःखमधिकं परमं भुवि कौरवाः ॥ ५० ॥**

**सृष्टप्राण** इत्यत्र **भृशतरं** सम्यक् यस्मात् **सृष्टप्राणः** त्वत्तः धनदानेन सृष्टः **प्राणः** प्राणनं जीवनं यस्य।

**सोऽयं नूनमनुप्राप्तस्त्वत्कृते कालपर्ययः।**
**त्वरितं कुरुत श्रेयो नैनदेतावता कृतम् ॥ ५२ ॥**

**पर्ययो** विपर्ययः।

**वैशम्पायन उवाच –**

**सम्यगाह गुरुः क्षत्तरुपावर्तय पाण्डवान्।**
**यदि ते न निवर्तन्ते सत्कृता यान्तु पाण्डवाः।**

---

१. ह.को. १-१३८ ; २. M ; BORI पृ. ३५३; **'द्वीप-'** इति कुं.पाठः।
३. $G_1$; BORI पृ. ३५४; **'मर्त्यधर्मतया तस्मादद्य'** इति कुं. पाठः।

**सशस्त्ररथपादाता भोगवन्तश्च पुत्रकाः ॥ ५६ ॥**

**गुरुः** द्रोणः ।

॥ इति चतुर्दशाधिकशततमोऽध्यायः ॥

## ॥ अथ पञ्चदशाधिकशततमोऽध्यायः ॥

**सञ्जय उवाच –**

**तवेदं[१] सुकृतं राजन् महद्वैरमुपस्थितम् ।**
**विनाशो येन लोकस्य सानुबन्धो भविष्यति ॥ ५ ॥**

**सानुबन्धः अनु** अनन्तरं नाशानन्तरमित्यर्थः **बन्धः** याम्यपाशै-र्बन्धनादिनिर्बन्धः, तेन सहितः सानुबन्धः ।

**यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।**
**बुद्धिं तस्यापकर्षन्ति [२]सोऽपनीतानि पश्यति ॥ ८ ॥**

**अपनीतानि** इत्यत्र **अपनीतानि** नीतिविरुद्धानि कर्माणि ।

**अयोनिजां रूपवतीं [३]कुलजां तां विभावरीम् ।**
**को नु तां सर्वधर्मज्ञां [४]परिहूय यशस्विनीम् ॥ १३ ॥**

**कुलजां तां विभावरीम्** इत्यत्र **विभावरीं, विभावः** विरुद्धं भावयन् भावः **रीयते** नाशं प्राप्नोति यस्याः सकाशात् सा विभावरी । 'भा दीप्तौ' इति धातोः विशेषेण प्रभावती वा, तां **परिहूय** परितः आह्वानं कृत्वा ।

---

१. कुं. १०३ अध्यायः । ; २. **'सोऽवाचीनानि'** इति कुं. पाठः ।
३. 'कुले जातां विभावसोः' इति कुं. पाठः ।; ४. **'परिभूय'** इति कुं. पाठः ।

**पर्यानयेत् सभामध्ये विना दुर्द्यूतदेविनः[१] ।**
**स्त्रीधर्माणि वरारोहा शोणितेन परिप्लुता ॥ १४ ॥**

**दुर्द्यूतदेविनः** शकुनेर्द्यूते ।

**धृतराष्ट्र उवाच –**
**अविशेषं[२] भवेदद्य पुत्राणां मम सञ्जय ।**
**भरतानां स्त्रियः सर्वा गान्धार्या सह सङ्गताः ॥ १९ ॥**

**अविशेषं भवेत्** इत्यत्र **अविशेषं** विशेषेण शेषरहितं कुलम् ।

**ब्राह्मणाः कुपिताश्चासन् द्रौपद्याः परिकर्षणे ।**
**आसीन्निष्ठातपो[३] घोरो निर्घातश्च महानभूत् ॥ २२ ॥**

**आसीन्निष्ठातप** इत्यत्र नितरां स्थितः आ समन्तात् **तपः** तपनं यस्य स सूर्यस्तथोक्तः ।

**अवृणोत्तत्र पाञ्चाली पाण्डवानामदासताम् ।**
**सरथान्[४] सधनुष्कांश्चाप्यन्वज्ञासिपमप्यहम् ॥ २८ ॥**

**अन्वज्ञासिषम्** आज्ञामकरवम् ।

**॥ इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां सभापर्वणि कविकुलतिलकभाविसमीरश्रीमद्वादिराजतीर्थपूज्यचरणविरचितलक्षालङ्काराख्यटीकायां पञ्चदशाधिकशततमोऽध्यायः ॥**

---

१. **'दुर्द्यूतदेविनम्'** इति कुं. पाठः ।
२. $T_1$,$G_{3,4}$,M; BORI पृ. ३५९; **'अपि शेषं'** इति कुं. पाठः ।
३. $G_{2\ om}$; BORI पृ. ३५९; **'आसीन्निष्ठानकः'** इति कुं. पाठः ।
४. **'सरथान् सधनुष्कांश्चाप्यनुज्ञासिपमप्यहम्'** इति कुं. पाठः ।

**ग्रन्थाग्रं सप्तके याते व्याप्तौ चाष्टसमाख्यया।**
**श्लोकानां द्वे सहस्रे तु पञ्चश्लोकशतानि च॥**

**ग्रन्थाग्रं सप्तके याते व्याप्तौ चाष्टसमाख्यया। श्लोकानां द्वे सहस्रे तु पञ्चश्लोकशतानि च** इत्यत्र **व्याप्तौ** श्लोकानां सम्पूर्तौ विचार्यमाणायां सत्यां **अष्टसमाख्यया** शतानामष्टसमाख्यया सह **सप्तके याते** सति पञ्चदशात्मकशतश्लोकेषु गतेषु सत्स्वित्यर्थः। उपरि श्लोकानां द्वे सहस्रे द्वे द्वित्वसङ्ख्यायुक्ते यथा भवतः तथा गणितानि **पञ्चश्लोकशतानि** पञ्चशतद्विकं चेति यावत्। मिलित्वा 'चतुस्सहस्रं श्लोकानां पञ्चश्लोकशतानि च' इति प्रागनुक्रमणिकाध्यायोक्तप्रकारेण पञ्चशतसहिता श्लोकानां चतुस्सहस्री **ग्रन्थाग्रं** 'अग्रं पुरःशिखामानश्रेष्ठादिषु फलादिषु' इत्यभिधानात् श्लोकप्रमाणं ज्ञातव्यमित्यर्थः।

**॥ इति सङ्ख्याकथ(न)कश्लोकस्यार्थः॥**

**॥ सभापर्व समाप्तम्॥**

**॥ श्री वादिराजगुर्वन्तर्गतमध्वेशार्पणमस्तु॥**

* * *

# ।। अथ वनपर्व ।।

## ।। अथ प्रथमोऽध्यायः ।।

**न तत्कुलं न चाचारो न धर्मोऽर्थः कुतः सुखम् ।**
**यत्र पापसहायोऽयं राज्यमेव[1] बुभूषते ।। १९ ।।**

**राज्यमेव बुभूषत** इत्यत्र 'भू प्राप्तावात्मनेपदी वा' इति वचनात् प्राप्तुमिच्छतीत्यर्थः ।।

**येषां त्रीण्यवदातानि विद्या योनिश्च कर्म च ।**
**ते सेव्यास्तैः समास्या हि शास्त्रेभ्योऽपि गरीयसी ।। २७ ।।**

**ते सेव्यास्तैः समास्या हि** इत्यत्र **समास्या** समागमः । 'आस उपवेशने' इति धातोः स्वार्थे यत्प्रत्यये कृते तप एव तपस्येतिवत्, समसनमेव समस्येतिवच्च सहोपवेशनमेव समास्या ।।

**तेषां प्रादुष्कृताग्नीनां मुहूर्ते रम्यदारुणे ।**
**ब्रह्मघोषपुरस्कारः सञ्जल्पः समजायत ।। ४९ ।।**

**रम्यदारुण** इत्यत्र साधूनां रम्ये दैत्यानां दारुणे ब्राह्मे मुहूर्त इत्यर्थः ।।

**राजानं तु कुरुश्रेष्ठं ते हंसमधुरस्वराः ।**
**अश्वासयन्तो विप्राग्र्याः क्षपा[2] सर्वामनोदयन् ।। ४६ ।।**

---

१. 'पापो राज्यं चिकीर्षति' इति कुं पाठः ।
२. 'सर्वां व्यनोदयन्' इति कुं. पाठः ।

**क्षपां सर्वामनोदयन्** इत्यत्र अनोदयन् 'नुद प्रेरणे' इति धातोः गन्तुं प्रेरितवन्त इत्यर्थः ॥

॥ इति प्रथमोऽध्यायः ॥

## ॥ अथ द्वितीयोऽध्यायः ॥

**ममापि परमा भक्तिः ब्राह्मणेषु सदा द्विजाः ।**
**सहायविपरिभ्रंशस्त्वयं सादयतीव माम् ॥ ७ ॥**

**सहायविपरिभ्रंश** इत्यत्र सहायभूतधनधान्यादिद्रव्याभावः ।

**एवमेतन्न सन्देहो रमेयं ब्राह्मणैः सह ।**
**न्यूनभावात्तु पश्यामि प्रत्यादेशमिवात्मनः ॥ १२ ॥**

**न्यूनभावात्तु पश्यामि** इत्यत्र **न्यूनभावात्** द्रव्यन्यूनत्वात् वक्ष्यमाणं वः स्वयमाहृत्य भोजनं **आत्मनः** मम **प्रत्यादेशमिव** 'प्रत्यादिष्टो[१] निरस्तः स्यात्' इति वचनात् निरसनमिव सङ्कटमिव पश्यामि ।

**न हि [२]ज्ञाननिरुद्धेषु बहुदोषेषु कर्मसु ।**
**श्रेयोघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ १७ ॥**

**न हि ज्ञाननिरुद्धेषु** इत्यत्र **ज्ञाननिरुद्धेषु** ज्ञानं निरुद्धं यैस्तानि तथोक्तानि ।

**अष्टाङ्गां बुद्धिमाहुः [३]हि [४]सर्वश्रेयोविघातिनीम् ।**
**श्रुतिस्मृतिसमायुक्तां राजन् सा त्वय्यवस्थिता ॥ १८ ॥**

---

१. अ.को. ३-१-४०; २. 'ज्ञानविरुद्धेषु' इति कुं.पाठः ।
३. S; BORI पृ. ८; 'यां' इति कुं.पाठः ।
४. $T_1$,$G_4$; BORI पृ. ८; 'सर्वाश्रेयोभिघातिनीम्' इति कुं पाठः ।

**अष्टाङ्गां बुद्धिमाहुः** हि इत्यत्र 'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा। ऊहाऽपोहोऽर्थविज्ञानं तत्वज्ञानं च धीगुणा' इति कामन्दीये प्रोक्तान्यष्टाङ्गानि। ग्रहणं मननं, धारणं ध्यानं, ऊहा उत्प्रेक्षा, अपोहः मिथ्याज्ञाननिरसनं, अर्थविज्ञानं अर्थानां विशेषेण ज्ञानं, तत्वज्ञानं सामान्यज्ञानमिति विवेकः। **सर्वश्रेयोविघातिनीं** सर्वश्रेयसां अविघातिनीम्।

**अर्थकृच्छ्रेषु दुर्गेषु व्यापत्सु स्वजनेष्वपि।**
**शरीरमानसैर्दुःखैर्न सीदन्ति भवद्विधाः ॥ २० ॥**

**व्यापत्सु** विविधापत्सु।

[1]**तदाशु प्रतिकाराच्च सततं चाविचिन्तनात्।**
**आधिव्याधिप्रशमनं क्रियायोगबलेन तु ॥ २४ ॥**

**मतिमन्तो व्यथोपेताः शमं प्रागेव कुर्वते।**
**मानसस्य प्रियाख्यानैः सम्भोगोपनयैर्नृणाम् ॥ २५ ॥**

**तदाशुप्रतिकारात्** इत्यत्र अतः कारणात् मतिमन्तो **वैद्याः** विदाख्यवैद्यः **तस्य** दुःखस्य **आशुप्रतिकारात्** परिहाररूपात् सततं **चिन्तनात्** कर्मसाक्षिणः श्रीहरेः चिन्तनात् **फलेन** क्रियायोगसन्तुष्टहरिप्रसादाख्यफलेन च आधिव्याधिप्रशमनं **क्रियायोगं** हर्यर्पणबुद्ध्या क्रियमाणनित्य नैमित्तिककर्मकौशलं प्रायेण **शमं** शमयतीति शमः प्रागुक्तशरीरदुःखश मनौषधं कुर्वते। **मानसस्य** चित्तस्य, प्रियया सह **आख्यानं** सल्लापः **सम्भोगाश्च** सहभोजनक्रीडाविलासाद्याः तेषाम् **उपनये** समागमे सतीत्यर्थः।

---

१. $K_2$,$D_M$,$D_{4.6}$; BORI पृ. ८; **'तदा तत्'** इति कुं पाठः।

**मानसं शामयेत् तस्माज्ज्ञानेनाग्निमिवाम्बुनाः ।**
**प्रशान्ते मानसे दुःखे शारीरमुपाशम्यति** ॥ २७ ॥

यत् **मानसं** मनस्सम्बन्धि दुःखं तेन **ज्ञानेन** ज्ञानयोगेन । क्रिया-योगेन शारीरं दुःखं, ज्ञानयोगेन मानसं दुःखं शमयेदिति भावः ।

**स्नेहात्कारुण्यरागौ च प्रजास्वीर्षादयस्तथा ।**
**अश्रेयस्कावुभावेतौ पूर्वस्तत्र गुरुः स्मृतः** ॥ ३० ॥

**उभौ** ईर्ष्यानयौ ।

**कोटराग्निर्यथाऽशेषं समूलं पादपं दहेत् ।**
**धमार्थिनं तथाऽल्पोपि रागद्वेषो[१] विनाशयेत्** ॥ ३१ ॥

रागसहितो द्वेषः **रागद्वेषः** ।

**[२]विप्रयोगेन तु त्यागी दोषदर्शी समागमात् ।**
**विरागं भजते जन्तुः निर्वैरो निष्परिग्रहः** ॥ ३२ ॥

**विप्रयोगेन** विषयवियोगेन **त्यागी** दोषत्यागी **समागमात्** विषयस-मागमात् ।

**ज्ञानान्वितेषु दुःखेषु[३] शास्त्रज्ञेषु कृतात्मसु ।**
**न तेषु सज्जते स्नेहः पद्मपत्रेष्विवोदकम्** ॥ ३४ ॥

**ज्ञानान्वितेषु दुःखेषु** इत्यत्र दुःखेषु जातेषु सत्सु ज्ञानान्वितेष्विति सम्बन्धः ।

---

१. $T_1$, $G_{2.4}$ ; BORI पृ. ९; **'रागदोषः'** इति कुं पाठः ।
२. **'निप्रयोगे न'** इति कुं पाठः ।; ३. **'युक्तेषु'** इति कुं पाठः ।

**रागाभिभूतः पुरुषः कामेन परिकृष्यते ।**
**इच्छा सञ्जायते तस्य ततस्तृष्णा विवर्धते ॥ ३५ ॥**

**रागाभिभूतः पुरुष** इत्यत्र **रागो** विषयेषु स्नेहः, **कामः** स्त्रीसम्भोगासक्तिः, **इच्छा** अशनायापिपासादिरूपा, **तृष्णा** अलम्बुद्धिरहिता [1]'यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः । नालमेकस्य तत्सर्वम्' इति वाक्योक्तप्रकारेण अर्थाकाङ्क्षा ।

**अर्थश्रेयसि चासक्तो न श्रेयो विन्दते नरः ।**
**तस्मादर्थागमाः सर्वे मनोमोहविवर्धनाः ॥ ४२ ॥**

**अर्थश्रेयसि** द्रव्यरूपे **श्रेयसि** पुरुषार्थे, **श्रेयः** मोक्षम् ।

**अर्था दुःखं [2]परित्यक्तुः पालितश्चैव शत्रवः ।**
**दुःखेन चाधिगम्यन्ते तेषां नाशं न चिन्तयेत् ॥ ४५ ॥**

**अर्था दुःखं परित्यक्तुः** इत्यत्र परित्यक्तुः पुरुषस्य अर्थाः दुःखं दिशन्तीति योग्यक्रियाध्याहारः । अतः कारणात् **विवित्सायाः** 'विद्लृ लाभे' इति धातोः धनलाभेच्छायाः सुखं नास्ति ।

**युधिष्ठिरैवमर्थेषु न स्पृहां कर्तुमर्हसि ।**
**धर्मेण यदि ते कार्यं [3]विमुक्तेप्सुः भवार्थतः ॥ ५० ॥**

**विमुक्तेप्सुः** 'भावे क्तः' इति वचनात् **विमुक्तं** विमोक्षं प्राप्तुमिच्छुः **विमुक्तेप्सुः** ।

---

१. आदि ७९-१३ ; २. 'परित्यक्तुं' इति कुं पाठः ।
३. 'विमुक्तेच्छो' इति कुं पाठः ।

**देयमार्तस्य शयनं सति[१] श्रान्तस्य चासनम् ।**
**तृषितस्य च पानीयं क्षुधितस्य च भोजनम्** ॥ ५५ ॥

**सति श्रान्तस्य** इत्यत्र **सति** देयवस्तुनि विद्यमाने सति ।

**अग्निहोत्रमनड्वांश्च ज्ञायतोऽतिथिबान्धवाः ।**
**पुत्रा दाराश्च भृत्याश्च निर्दहेयुरपूजिताः** ॥ ५७ ॥

**अग्निहोत्रमनड्वांश्च** इत्यत्र योऽनड्वान् ये ज्ञातयः तान् । **अतिथिबान्धवा** इत्यत्र **अतिथिः** पूर्वेद्युः पूजितः, अपूजिता अतिथयः निर्दहेयुरिति सम्बन्धः ।

**आत्मार्थं पाचयेन्नान्नं न वृथा घातयेत्पशून् ।**
**न चैकः स्वयमश्नीयात् विधिवद्यन्न[२] निर्वपेत्** ॥ ५८ ॥

विधिवत् यन्न **निर्वपेत्** न जुहुयात् तच्च नाश्नीयात् ।

**शिश्नोदरकृते चाज्ञः[३] करोति विघसं बहु ।**
**मोहरागवशाक्रान्त इन्द्रियार्थवशानुगः** ॥ ६५ ॥

**शिश्नोदरकृते चाज्ञ** इत्यत्र **विघसं** यथेष्टमन्नं भृत्यानां दिने दिने दत्त्वा अवशिष्टं यथा भवति तथा । वैराग्यादिमहाभाग्यं त्यक्त्वा अन्यायार्जितवित्तेन भृत्यान् पुष्णंस्तिष्ठतीति भावः ।

**ततो दारैर्विहारैश्च मोहितश्च महेप्सया[४] ।**
**महामोहमुखे मग्नो नात्मानमवबुध्यते** ॥ ७० ॥

---

१. **'स्थितश्रान्तस्य'** इति कुं पाठः ।; २. **'विधिवर्जं न'** इति कुं. पाठः ।
३. $M_1$; BORI पृ. ११; **'कृतेऽप्राज्ञः'** इति कुं पाठः ।
४. $K_3$,$D_{1\ 3}$ ; BORI पृ. १२; **'यथेप्सया'** इति कुं पाठः ।

**महेप्सया** महत्या प्राप्तुमिच्छया ।

**तदिदं वेदवचनं कुरुकर्म त्यजेति च ।**
**तस्माद्धर्मानिमान् सर्वान्नाभिमानात् समाचरेत् ॥ ७४ ॥**

**कुरु कर्म त्यजेति च** इत्यत्र निवृत्तिकर्म कुरु, प्रवृत्तिकर्म त्यज इति वेदवचनमिति सम्बन्धः ।

**इज्याध्ययनदानानि तपः सत्यं क्षमा दमः ।**
**अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥ ७५ ॥**

**सत्यं** यथार्थविज्ञानम् ।

**सम्यक्सङ्कल्पसम्बन्धात् सम्यक्चेन्द्रियगोचरात्[1] ।**
**सम्यग्व्रतविशेषाच्च सम्यक्च गुरुसेवनात् ॥ ७८ ॥**

**सम्यक् चेन्द्रियगोचरात्** इत्यत्र सम्यक् इन्द्रियाणां **गोषु** विद्यासु **चरात्** सञ्चारणादित्यर्थः ।

**सम्यगाहारयोगाच्च सम्यक्चाध्ययनागमात् ।**
**सम्यक्कर्मोपसन्न्यासात् सम्यक्चित्तनिरोधनात् ॥ ७९ ॥**

**सम्यक् कर्मोपसन्नासात्** इत्यत्र कर्मणां हरिपादारविन्दे **उपसन्न्यासात्** समर्पणात् ।

**एवं कर्माणि कुर्वन्ति संसारविजिगीषवः ।**
**रागद्वेषविनिर्मुक्ता ऐश्वर्यवशतां[2] गताः ॥ ८० ॥**

---

१. **'निग्रहात्'** इति कुं पाठः ।; २. **'वशमागताः'** इति कुं पाठः ।

**एश्वर्यवशतां** ऐश्वर्तं **वशं** स्वाधीनं येषां तेषां भावस्ताम् ।

**पितृमातृमयी सिद्धिः प्राप्ता कर्ममयी च ते ।**
**तपसा सिद्धिमन्विच्छ द्विजानां भरणाय वै** ॥ ८३ ॥

**पितृमातृमयी सिद्धिः** समीचीनपितृमातृसम्पत्तिः ।

॥ इति द्वितीयोऽध्यायः ॥

## ॥ अथ तृतीयोऽध्यायः ॥

**गत्वोत्तरायणं तेजो रसानुद्धृत्य रश्मिभिः ।**
**दक्षिणायनमावृत्तो महीं वर्षति वारिणा** ॥ ६ ॥

**गत्वोत्तरायणम्** इत्यत्र **रश्मिभिः** उग्ररश्मिभिः **लोकात्** जनात् **तेजः** सामर्थ्यं उद्धृत्य, निदाघकाले सन्तप्तानां बहुतरसामर्थ्याभावादिति भावः ।

**निषिक्तश्चन्द्रतेजोभिः सूयते जगतो दिवः[१] ।**
**ओषध्यः षड्रसा मेध्याः तदन्नं प्राणिनां भुवि** ॥ ८ ॥

**दिवः** स्वकिरणात् तत्तेजः जगतः **सूयते** सूते । वर्षाकाले श्रमाभावात् सर्वप्राणिनां सामर्थ्यातिशयो भवतीति भावः ।

**भौमेन कार्तवीर्येण वैन्येन नहुषेण च ।**
**तपोयोगसमाधिस्थैः उद्धृता ह्यापदः प्रजाः** ॥ ११ ॥

**भौमेन कार्तवीर्येण** इत्यत्र **भौमेन** सार्वभौमेन ।

॥ इति तृतीयोऽध्यायः ॥

---

१. 'रविः' इति कुं पाठः ।

## ।। अथ पञ्चमोऽध्यायः ।।

[१]**पुत्रं त्यजेममहितं कुलस्य हितं परं न च तत्त्वं चकर्थ ।**
**इदानीं ते हितमुक्तं न चेत्त्वमेवं कर्ता परितप्ताऽसि पश्चात् ।।१५।।**

**चकर्थ, इदानीम्** इत्यत्र प्रश्नं चकर्थेति योग्यपदाध्याहारः ।

**धृतराष्ट्र उवाच–**

**एतद्वाक्यं [२]विदुरोक्तं सभायामिह प्रोक्तं पाण्डवान्प्राप्य मां च ।**
**हितं तेषामहितं मामकानामेतत्सर्वं मम नावैति चेतः ।।२२।।**

**एतद्वाक्यं विदुरोक्तम्** इत्यत्र हे विदुर एतद्वाक्यं **सभायां** द्यूतसभायां उक्तं, मां प्राप्य पाण्डवानुद्दिश्य **इह** रहसि **प्रोक्तं** तदेव वाक्यं प्रोक्तं मम चेतः **नावैति** न प्राप्नोति ।

**इदं त्विदानीं [३]कृतमेव निश्चितं**
**तेषामर्थे पाण्डवानां [४]यथार्थम् ।**
**तेनाद्य मन्ये [५]ह्यहितो ममेति**
**कथं [६]च पुत्रं पाण्डवार्थे त्यजेयम् ।। २३ ।।**

**इदं त्विदानीं कृतम्** इत्यत्र येन कारणेन तेषां पाण्डवानामर्थे **यथार्थम्** अर्थं पाण्डवप्रयोजनं यथा अनतिक्रम्य **इदं**

---

१. कुं. ४ अध्यायः ।  २. **'विदुर यत्ते'** इति कुं.पाठः ।
३. $T_1, G_{2.4}, M_1$ ; BORI पृ. २०; **'गत एव'** इति कुं पाठः ।
४. **'यदात्थ'** इति कुं पाठः ।
५. $M_2$ ; BORI पृ. २०; **'नासि हितो'** इति कुं पाठः ।
६. **'हि'** इति कुं पाठः ।

पाण्डवानामर्धराज्यदानं त्वया इदानीं निश्चितमेव कृतम् । **तेन** कारणेन त्वं मम अहित इति मन्ये । पाण्डवार्थे पुत्रं त्यजेयमित्येतत् कथं हि, न कथञ्चिदिति पदयोजना ।

**वैशम्पायन उवाच–**

**एतावदुक्त्वा धृतराष्ट्रोऽन्वपद्य-**
**दन्तर्वेश्म सहसोत्थाय राजन् ।**
**नेदमस्तीत्यथ विदुरो भाषमाणः**
**सम्प्राद्रवद्यत्र पार्था बभूवुः ॥ २६ ॥**

**नेदमस्ति** इत्यत्र इदं सन्धिकार्यं नास्तीति भाषमाण इत्यर्थः ।

[१] **समाहूतः केनचिदाहवाय नाहं शक्तो भीमसेनापयातुम् ।**
**गाण्डीवे च संशयिते [२] कथञ्चित् राज्यप्राप्तिः संशयिता भवेन्नः ॥ ९ ॥**

**आहवाय** द्यूतयुद्धाय । **गाण्डीवे संशयित** इत्यत्र **गाण्डीवे कथञ्चित् संशयिते** सं सम्यक् शयिते ग्लहार्थं तेषां गृहे शयनं प्रापिते सति नः राज्यप्राप्तिः **संशयिता** सन्दिग्धा **भवेत्** । तस्मादायुधानां ग्लहं सर्वथा न करोमीति भावः ।

**यस्याविभक्तं वसु राजन् सहायै-**
**स्तस्य दुःखस्यांशभाजः सहायाः ।**

---

१. कुं. ५ अध्यायः
२. BORI पृ. २१; 'कथं नु' इति कुं पाठः ।

**सहायानामेष सङ्ग्रहणेऽभ्युपायः**
**सहायाप्तौ पृथिवीप्राप्तिमाहुः ॥ २० ॥**

**यस्याविभक्तम्** इत्यत्र आ समन्तात् विभक्तमिति पदच्छेदः ।

**सत्यं श्रेष्ठं पाण्डवा निष्प्रलापाः[1]**
**तस्मिन् चान्नं सह भोज्यं सहायैः ।**
**आत्मा चैषामग्रतो नातिवर्ते-**
**देवं वृत्तिर्वर्धते भूमिपाल ॥ २१ ॥**

**निष्प्रलापाः** 'प्रलापोऽनर्थकं वच'[2] इत्यभिधानात् व्यर्थवाक्यरहिताः हे पाण्डवाः **तस्मिन्** सत्ये सत्यपि एवं प्रवृत्तिर्यस्य स राजा ।

॥ इति पञ्चमोऽध्यायः ॥

## ॥ अथ षष्ठोऽध्यायः ॥

**स सभाद्वारमागम्य विदुरस्मारमोहितः ।**
**समक्षं पार्थिवेन्द्राणां विसञ्ज्ञः प्रापतद्भुवि ॥ ३ ॥**

**विदुरस्मारमोहित** इत्यत्र **स्मारः** स्मरणम् ।

**गच्छ सञ्जय जानीहि भ्रातरं विदुरं मम ।**
**[3]मया मूढेन निकृतः कच्चिज्जीवति वा न वा ॥ ८ ॥**

---

१. **'निष्प्रलापं तुल्यं'** इति कुं पाठः । ; २. अ.को. १-६-१५
३. $G_{1.2}$, $T_1$,M; BORI पृ. २४; **'यदि जीवति रोषेण मया पापेन निर्धुतः'** इति कुं पाठः ।

**निकृतः** 'निकृतः स्याद्विप्रकृतः'[१] इत्यभिधानात् अपकृतः, निरस्त इति यावत्।

**न हि तेन मम भ्रात्रा सुसूक्ष्ममपि किञ्चन।**
**व्यलीकं कृतपूर्वं वै प्राज्ञेनामितबुद्धिना ॥ ९ ॥**

**व्यलीकं कृतपूर्वम्** इत्यत्र 'अलीकं त्वप्रियेऽनृतम्'[२] इत्यभिधानात् **व्यलीकं** अप्रियम्।

**राज्ञा पृष्टः स कुशलं सुखासीनश्च सञ्जयः।**
**शशंसागमने हेतुमिदं चैवाब्रवीद्वचः ॥ १५ ॥**

**शशंसागमने हेतुम्** इत्यत्र **आगमने हेतुं** धृतराष्ट्रं पाण्डवदर्शनाख्य-महाफललभात् **शशंस** 'शंस स्तुतौ' इति धातोः अस्तौषीत्।

**भवन्ति हि नरव्याघ्र पुरुषा [३]धर्मवेतनाः।**
**[४]दीनानुपातिनो राजन्नात्र कार्या विचारणा ॥ २३ ॥**

धर्म एव **वेतनं** जीवनोपायो येषां ते **धर्मवेतनाः**। **दीनानुपातिन** इत्यत्र दीनाननुसृत्य पतन्तीति दीनानुपातिनः।

॥ इति षष्ठोऽध्यायः ॥

* * *

---

१. अ.को. ३-१-४१
२. अ.को. ३-३-१२
३. **'धर्मचेतनाः'** इति कुं पाठः।
४. S; BORI पृ. २५; **'दीनानुकम्पिनो'** इति कुं पाठः।

## ।। अथ सप्तमोऽध्यायः ।।

**अथ पश्याम्यहं पार्थान् प्राप्तानिह कथञ्चन ।**
**पुनः शोषं गमिष्यामि निरासून्निष्परिग्रहान्[1]** ।। ५ ।।

**निरासून्निष्परिग्रहान्** इत्यत्र **निरासून्** 'असु निरसने' इति धातोः शत्रुनिरसनशीलान् ।

**विषमुद्बन्धनं चैव शस्त्रमग्निप्रवेशनम् ।**
**करिष्ये न हि तान्[2] वृद्धान् पुनर्द्रष्टुमिहोत्सहे** ।। ६ ।।

**उद्बन्धनं** रज्ज्वा ऊर्ध्वं बन्धनम् । **वृद्धान्** अभिवृद्धान् ।

।। इति सप्तमोऽध्यायः ।।

## ।। अथ अष्टमोऽध्यायः ।।

**अथवा जायमानस्य यच्छीलमनुजायते ।**
**[3]तवैतद्भूय मा राजन् नामृतस्यापसर्पति** ।। ११ ।।

**अथवा जायमानस्य** इत्यत्र **जायमानस्य** क्षणे क्षणे उत्पद्यमानस्य त्वत्पुत्रशीलस्य **अनु** अनुसारेण यच्छीलं तव जायते, हे राजन् भूयः एतत् मा, **एतत्** त्वत्पुत्रशीलं **अमृतस्य** मरणरहितस्य पुरुषस्य **नापसर्पति** न गच्छति । तव पुत्राणामेतद्दुश्शीलं मरणपर्यन्तं न गच्छतीति भावः ।

---

१. **'निरसुर्निष्परिग्रहः'** इति कुं पाठः ।
२. $S_1, K_3, T_1, G_{2.4}$; BORI पृ. २८; **'तानृद्धान्'** इति कुं पाठः ।
३. **'श्रूयते तन्महाराज'** इति कुं पाठः ।

**कथं वा मन्यते भीष्मो द्रोणोऽथ विदुरोऽपि वा ।**
**भवान्वाऽत्र परं कार्यं पुराऽपार्थो[1] निवर्तते ॥ १२ ॥**

**पुराऽपार्थो निवर्तत** इत्यत्र **अपार्थः** पार्थविरोधी, **अपार्थः** अपगत-प्रयोजनश्च अयं दुर्योधनः **पुरा** पाण्डवद्रोहार्थं गमनात्पूर्वमेव येन कार्येण निवर्तते, तत्कार्यं भीष्मः कथं वा मन्यत इत्यादियोजना ।

**व्यास[2] उवाच–**

**वैचित्रवीर्य नृपते सत्यमाह यथा भवान् ।**
**[3]दृढं वेद्मि परं पुत्र परं पुत्रान्न विद्यते ॥ ४ ॥**

हे पुत्र परं सम्यक् वेद्मि ॥

**॥ इति अष्टमोऽध्यायः ॥**

## ॥ अथ नवमोऽध्यायः ॥

**सुरभिरुवाच–**

**विनिपातो न वः कश्चिद्दृश्यते त्रिदशाधिप ।**
**अहं तु पुत्रं शोचामि तेन रोदिमि कौशिक ॥ ९ ॥**

**कौशिक** हे इन्द्र ।

**॥ इति नवमोऽध्यायः ॥**

---

१. **'पुरा चार्थो** इति कुं.पाठः ।
२. **कुं. ९ अध्यायः**
३. D4 6; BORI पृ. २९; **'दृढं विद्मः परं पुत्रं परं'** इति कुं पाठः ।

## ॥ अथ दशमोऽध्यायः ॥

**नैतदौपयिकं राजंस्त्वयि भीष्मे च जीवति ।**
**यदन्योन्येन ते पुत्रा विरुध्यन्ते कथञ्चन ॥ १५ ॥**

'युक्तमौपयिकं लभ्यम्'[१] इत्यभिधानात् **औपयिकं** युक्तम् ।

**मेढीभूतः स्वयं राजन्निग्रहे प्रग्रहे भवान् ।**
**किमर्थमनयं घोरमुत्पतन्तमुपेक्षसे ॥ १६ ॥**

**मेढीभूतः स्वयं राजन्** इत्यत्र धान्यनिष्पत्त्यर्थं परिभ्रमतां वृषभाणां बन्धनाय मध्ये स्थितः स्तम्भविशेषो **मेढी**, तद्वत् पाण्डुपुत्राणां त्वत्पुत्राणां च त्वमेव आधारभूत इति भावः ।

**तं भीमः समरश्लाघी बलेन बलिनां वरः ।**
**जघान पशुमारेण व्याघ्रः क्षुद्रमृगं यथा ॥ २२ ॥**

**जघान पशुमारेण** इत्यत्र पशून्मारयतीति पशुमारं दंष्ट्राग्रवदनं तेन ।

**मैत्रेय उवाच –**

**नाहं वक्ष्याम्यसूया ते न ते शुश्रूषते सुतः ।**
**एष ते विदुरः सर्वमाख्यास्यति गते मयि ॥ ३८ ॥**

**नाहं वक्ष्यामि** इत्यत्र अहं वक्ष्यामि मे असूया न । ते सुतः न शुश्रूषत इति योजना ।

॥ इति दशमोऽध्यायः ॥

---

१. अ.को. २-८-२४

## ॥ अथ एकादशोऽध्यायः ॥

**विदुर उवाच –**

**शृणु भीमस्य कर्मेदमतिमानुषकर्मणः ।**
**श्रुतपूर्वं मया तेषां कथान्तेषु पुनः पुनः ॥ २ ॥**

**श्रुणु भीमस्य** इत्यत्र **तेषां** पाण्डवानां कथान्ते कथामध्ये पुनः पुनः मया श्रुतपूर्वं इदं भीमस्य कर्म अथ शृण्विति सम्बन्धः ।

**रात्रौ निशीथे स्वालीढे[१] गतेऽर्धसमये नृप ।**
**प्रचारे पुरुषादानां रक्षसां घोरकर्मणाम् ॥ ४ ॥**

**रात्रौ निशीथ** इत्यत्र रात्रौ अर्धसमये गते सति **स्वालीढे स्वैः** स्वीयैः निशीथकालसम्बन्धिभिः रक्षःपिशाचादिभिः **आलीढे** रम्योऽयं काल इत्यास्वादिते निशीथे सति तद्वनं तापसादयो दूरात्परिहरिष्यन्ति ।

**दष्टोष्ठदंष्ट्रं ताम्राक्षं प्रदीप्तोर्ध्वशिरोरुहम् ।**
**सार्करश्मि तटिच्चक्रं[२] सबलाकमिवाम्बुदम् ॥ ८ ॥**

**सार्करश्मि** इत्यत्र अर्करश्मिवत् ऊर्ध्वीभूतजटा, तटिच्चक्रवत् क्षणे क्षणे ज्वलदुल्मुकं बालार्कवत् नेत्रं, नीलाम्बुदवत् स्वयं, बलाकमालावत् दंष्ट्रेति सूचनाय इयमुपमा ।

**ततो भीमो महाबाहुरारुज्य तरसा द्रुमम् ।**

---

१. **'त्वाभीले'** इति कुं पाठः ।
२. **'तडिच्चक्रं'** इति कुं पाठः ।

**शतव्याम[1]मिवो[2]द्विद्धं निष्पत्रमकरोत्तदा ।। ३९ ।।**

**शतव्याममिवोद्विद्धं** इत्यत्र 'व्यामो वटश्च न्यग्रोध उत्सेधः काय उन्नतिः' इत्यभिधानात् शतधारारूपेण **व्यामः** काये उन्नतिर्यस्य तत् वज्रमिव **उद्विद्धं** ऊर्ध्वमभिवृद्धं तरुम् ।

**इत्युक्त्वैनमतिक्रुद्धः कक्ष्यामुत्पीड्य पाण्डवः ।**
**निष्पिष्य पाणिना पाणिं सन्दष्टौष्ठपुटो बली ।**
**तमभ्यधावद्वेगेन भीमो वृक्षायुधस्तदा ।। ४२ ।।**

**कक्ष्यामुत्पीड्य पाण्डव** इत्यत्र कक्षो वनं, तत्सम्बन्धिनीं लता-गुल्मादिस्थावरश्रेणीम् ।

**असम्भ्रान्तं तु तद्रक्षः समरे प्रत्यदृश्यत ।**
**[3]दीप्तान्तमुल्मुकं चिक्षेपाशनिं ज्वलितामिव ।। ४४ ।।**

**दीप्तान्तं** दीप्तः अन्तः अग्रं यस्य सः तं उल्कं उल्मुकम् ।

**मूर्ध्नि जर्झरभूतास्तु बहवस्तत्र पादपाः ।**
**चीराणीव व्युदस्तानि रेजुस्तत्र महावने ।। ४९ ।।**

**झर्झरभूताः** चूर्णीभूता ।

**दुर्योधननिकाराच्च बाहुवीर्याच्च दर्पितः ।**
**कृष्णानयन[4]दृप्तश्च व्यवर्धत वृकोदरः ।। ५५ ।।**

---

१. S ; BORI पृ. ३७; **'दश'** इति कुं पाठः ।
२. $T_2$,$G_3$ ; BORI पृ. ३७; **'मथो'** इति कुं पाठः ।
३. **'चिक्षेप चोल्मुकं दीप्तमशनिं ज्वलितामिव'** इति कुं पाठः ।
४. **'दृष्टश्च'** इति कुं पाठः ।

**दुर्योधननिकारात्** इत्यत्र दुष्टं योधनं युद्धं यस्य सः **दुर्योधनः** किर्मीरः तस्य **निकारात्** न्यक्कारात्, कृष्णायाः **नयनेन** नेत्रावलोकनेन दृप्तः ।

**तयोर्भुजविनिष्पेषादुभयोर्बलिनोस्तदा ।**
**शब्दः समभवद्घोरो वेणुस्फोटसमो युधि** ॥ ५८ ॥

**बलिना** हस्तेन ।

**तत एनं परिश्रान्तमुपलक्ष्य वृकोदरः ।**
**योक्त्रयामास बाहुभ्यां पशुं रशनया यथा** ॥ ६१ ॥

**योक्त्रयामास** इत्यत्र 'योक्त्रं योक्त्रमथो हलम्'[१] इत्यभिधानात् लाङ्गलस्थानीयं कृतवान् । लाङ्गलमिव चकर्षेति भावः । **रशनया** रज्वा।

**स मया गच्छता मार्गे विनिकीर्णो भयावहः ।**
**वने महति दुष्टात्मा दृष्टो भीमबलाद्धतः** ॥ ७३ ॥

**विनिकीर्णः** विस्तृतसर्वाङ्गः ।

॥ इति एकादशोऽध्यायः ॥

## ॥ अथ द्वादशोऽध्यायः ॥

**सङ्क्रुद्धं केशवं दृष्ट्वा पूर्वदेवेषु[२] भारत ।**
**कीर्तयामास कर्माणि सत्यकीर्तेर्महात्मनः** ॥ ९ ॥

---

१. अ.को. २-९-१३
२. T,G,M1; BORI पृ. ४०; **'फल्गुनः'** इति कुं पाठः ।

**पूर्वदेवेषु भारत** इत्यत्र पूर्वं देवो देवनं अक्षक्रीडा यैः कृता ते **पूर्वदेवाः** दुर्योधनादयः, दैत्या वा तेषु ।

नानावतारेष्वप्यभेदाद्बदरीनारायणादिरूपैः कृतकर्माणि कृष्णकर्मतया स्तौति– **दशवर्षसहस्राणी** इत्यादिना ।

**अर्जुन उवाच –**

**दशवर्षसहस्राणि यत्र सायंगृहो मुनिः ।**
**व्यचरस्त्वं पुरा कृष्ण पर्वते गन्धमादने** ।। ११ ।।

**जारूथ्यामाहुतिः क्रुद्धः[१] शिशुपालो नृपैः सह ।**
**जरासन्धश्च शैब्यश्च शतधन्वा च निर्जितः** ।। ३१ ।।

**जारूथ्यामाहुतिः क्रुद्ध** इत्यत्र 'जॄ वयोहानौ' इति धातोः **जारुः** जराशीलो वृद्धः, तस्मिन्नेव **थ्या** स्थिरीकर्तुं योग्या **जारूथ्या** अग्रपूजेत्यर्थः । तां, आवृणोत्याच्छादयतीत्यावृतिः ।

**आसीनं चैत्यमध्ये त्वां दीप्यमानं स्वतेजसा ।**
**आगम्य मुनयः[२] सर्वेऽयाचन्ताभयमच्युत** ।। ३७ ।।

**आगम्य मुनय** इत्यत्र **आगम्य** ज्ञात्वा ।

**वैशम्पायन उवाच –**

**एवमुक्त्वा[३] स्वमात्मानामात्मा कृष्णस्य पाण्डवः ।**
**तूष्णीमासीत् ततः पार्थमित्युवाच जनार्दनः** ।। ४५ ।।

---

१. **'क्राथः'** इति कुं पाठः ।; २. $S_1$; BORI पृ. ४३; **'ऋषयः'** इति कुं पाठः ।
३. $K_{2.3}$,Dc,$D_5$,T,$G_{1\ 3}$,M ; BORI पृ. ४३; **'महा'** इति कुं पाठः ।

**स्वं** स्वकीयम्, **आत्मानं** परमात्मानम्, **आत्मा** प्रियः ।

**अनन्यः पार्थ मत्तस्त्वमहं[1] त्वत्तश्च भारत ।**
**नावयोरन्तरं शक्यं वेदितुं भरतर्षभ ॥ ४८ ॥**

**अनन्यः पार्थ मत्तस्त्वम्** इत्यत्र हे **भारत** पार्थ ! **मत्तः** मन्मूलरूपात् **अनन्यः** अभिन्नः अहमेव । **त्वं** च त्वमेव । हे भरतर्षभ **आवयोः** मूलरूपावताररूपयोरावयोः **अन्तरं** देशतः कालतो गुणतश्चावधिं वेदितुं न शक्यम् । **आवयोः** तव च मम चेत्यावयोः **अन्तरं** तारतम्यं च वेदितुं न शक्यम् ।

**स्त्रीधर्मिणी वेपमाना शोणितेन समुक्षिता ।**
**एकवस्त्रा विकृष्टाऽस्मि दुःखिता कुरुसंसदि ॥ ६५ ॥**

**स्त्रीधर्मिणी वेपमान** इत्यत्र 'स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि'[2] इत्याभिधानात् **स्त्रीधर्मिणी** रजस्वला ।

**धिग्बलं भीमसेनस्य धिक्पार्थस्य च गाण्डिवम् ।**
**यौ मां विप्रकृतां छिद्रैर्मर्षयेतां[3] जनार्दन ॥ ७० ॥**

**विप्रकृतां छिद्रै** इत्यत्र [4]'छिद्रं निर्व्यथनं रोको रन्ध्रं श्वभ्रं वपा सुषिः' इत्याभिधानात् **छिद्रैः** तुच्छैरित्यर्थः । छिदि च्छेत्तरि सति रीयन्ते श्रीयन्ते इति **च्छिद्रा** दुर्बलाः तैर्वा ।

---

१. **'त्वत्तश्चाहं तथैव च'** इति कुं पाठः ।
२. अ.को. २-६-२०
३. **'क्षुद्रै'** इति कुं.पाठः ।
४. अ.को. १-८-२

**आत्मा हि जायते तस्यां तस्माज्जाया भवत्युत ।**
**भर्ता च भार्यया रक्ष्यः कथं जायेन्ममोदरे[१]** ॥ ७३ ॥

**कथं जायेत्** इत्यत्र न चेदिति योग्यपदाध्याहारः । **जायेत्** जायेत ।

**नन्विमे शरणं प्राप्तं न त्यजन्ति कदाचन ।**
**ते मां शरणमापन्नां नान्वपद्यन्[२] कथं परान्** ॥ ७४ ॥

**ते मां शरणमापन्नां** इत्यत्र **परान्** शत्रून् कथं **अन्वपद्यन्** अन्वपादयन् । अन्तर्णीतो णिच् । प्रापयन्नित्यर्थः ।

**तज्जीर्णमविकारेण सहान्नेन जनार्दन ।**
**सशेषत्वान्महाबाहो भीमस्य पुरुषोत्तम** ॥ ८४ ॥

**सशेषत्वात्** इत्यत्र शेषो विशेषः, सामर्थ्यविशेष इत्यर्थः । तेन (सं) सहितत्वात् ।

**प्रमाणकोट्यां विश्वस्तं यथासुप्तं वृकोदरम् ।**
**बद्ध्वैनं कृष्ण गङ्गायां प्राक्षिप्यपुरमाव्रजेत्** ॥ ८५ ॥

**विश्वस्तं** विशेषेण श्वासवन्तं, सुप्तमित्यर्थः । **प्राक्षिप्य** प्रकर्षेण आक्षिप्य दुरुक्तीरुक्त्वा ।

**पुनः सुप्तानुपाधाक्षीद्बालकान् वारणावते ।**
**शयानानार्यया सार्धं को नु तत्कर्तुमर्हति** ॥ ८९ ॥

---

१. K3,D2 3,S ; BORI पृ. ४५; **'कथं जायान्ममोदरे'** इति कुं पाठः ।
२. **'नान्वपद्यन्त पाण्डवाः'** इति कुं पाठः ।

उपाधाक्षीत् 'दह भस्मीकरणे' इति धातोः लुङ् । **आर्यया** मात्रा कुन्त्या ।

**भीमस्य पादौ कृत्वा तु स्वउत्सङ्गे ततोऽबला ।**
**[१]पर्यष्वजत संहृष्टा कल्याणी मृदुपाणिना ॥ ९९ ॥**

**पर्यष्वजत परिष्वङ्गम्** आलिङ्गनमकरोत् ।

॥ इति द्वादशोऽध्यायः ॥

## ॥ अथ त्रयोदशोऽध्यायः ॥

**आगच्छेयमहं द्यूतमनाहूतोऽपि कौरवैः ।**
**आम्बिकेयेन दुर्धर्ष राज्ञा दुर्योधनेन च ।**
**वारयेयमहं द्यूतं बहून् दोषान् प्रदर्शयन् ॥ २ ॥**

**आम्बिकेयेन दुर्धर्ष** इत्यत्र **दुर्धर्ष** धर्षयितुमशक्य ! धर्मराजेत्यर्थः ।

**पुत्राणां तव राजेन्द्र त्वन्निमित्तमिति प्रभो ।**
**तत्राचक्षमहं दोषान्यै[२]र्दोषैरवरोपितः ॥ ४ ॥**

**यैर्दोषैरवरोपितः**, राज्याद्भ्रंशितः ॥

**[३]स्वातन्त्र्यं द्यूतसङ्गस्य वर्णयेयं यथातयम् ॥ ६ ॥**

**द्यूतसङ्गस्य** द्यूतप्रसङ्गस्य **स्वातन्त्र्यं** सर्वान् स्ववशीकृत्य स्थापनम् ।

---

१. T,G3.4,M1; BORI पृ. ४७; **'पर्यमर्दत'** इति कुं पाठः ।
२. **'-र्भत्रान्न्यतिरोपितः'** इति कुं पाठः ।
३. S; BORI पृ. ५१; **'सातत्यं च प्रसङ्गस्य'** इति कुं पाठः ।

**तत्र सर्वत्र वक्तव्यं मन्यन्ते शास्त्रकोविदाः ।**
**विशेषतश्च वक्तव्यं द्यूते पश्यन्ति तद्विदः ॥ ८ ॥**

**तत्र सर्वत्र** इत्यत्र **वक्तव्यं** दोषजालं **मन्यन्ते** जानन्ति ।

**अथैनानपनीयैवं सुहृदो नाम दुर्हृदः ।**[1]
**सभासदश्च तान्सर्वान् भेदयेयं दुरोदरात् ॥ १३ ॥**[2]

**अथैनान्** इत्यत्र **एनान्** दुर्योधनादीन् **अपनीय** अपसार्य, 'टापं चैव हलन्तानाम्' इति वचनात् दुष्टा हृदा हृदयं येषां ते **दुर्हृदाः** तेषां दुर्योधनादीनां मध्ये अदुर्हृदं न विद्यते दुर्हृत् यस्य तं शान्तं तान् सभासदश्च दुरोदराद्भेदयेयम् ।

॥ इति त्रयोदशोऽध्यायः ॥

## ॥ अथ चतुर्दशोऽध्यायः ॥

**तस्य युद्धार्थिनो दर्पं युद्धे विनयिताऽस्म्यहम् ।**[3]
**आनर्ताः सत्यमाख्यात तत्र गन्ताऽस्मि यत्र सः ॥ ९ ॥**

**विनयिताऽस्मयहम्** इत्यत्र **वि** विनाशं **नयिता** प्रापयिता ।

**तमश्रौषमहं गत्वा यथा वृत्तः स दुर्मतिः ।**
**मयि कौरव्य दुष्टात्मा मार्तिकावतको नृपः ॥ १६ ॥**

मार्तिकावताख्यदेशसम्बन्धी **मार्तिकावतको नृपः** साल्वः ।

---

१. **'अथैनमवनीतेन'** इति कुं.पाठः ।
२. S;BORI पृ. ५१; **'सभासदोऽनुवर्तेरंस्तांश्च हन्यां दुरोदरान्'** इति कुं.पाठः
३. S; BORI पृ. ५३; **'नाशयिताऽस्मयहम्'** इति कुं पाठः ।

एतत्कार्यं महाबाहो येनाहं नागमं तदा ।
श्रुत्वैव हास्तिनपुरे द्यूतं चाविनयोत्थितम् ॥ २२ ॥

श्रुत्वैव आगत इति पूर्वक्रियाया आवृत्तिः ।

॥ इति चतुर्दशोऽध्यायः ॥

## ॥ अथ पञ्चदशोऽध्यायः ॥

वासुदेव उवाच –

हतं श्रुत्वा महाबाहो मया श्रौतश्रवो[१] नृप ।
उपायाद्भरतश्रेष्ठ साल्वो द्वारवतीं पुरीम् ॥ २ ॥

**श्रौतश्रवः** श्रुतश्रवा नाम दमघोषपत्नी, तस्याः सुतः **श्रौतश्रवः** शिशुपालः ।

तत्रस्थोऽथ महीपालो योधयामास तां पुरीम् ।
अभिसारेण सर्वेण तत्र युद्धमवर्तत ॥ ४ ॥

**अभिसारेण** अभितः सरतीत्यभिसारेण सौभेन करणेन ।

॥ इति पञ्चदशोऽध्यायः ॥

## ॥ अथ एकोनविंशोऽध्यायः ॥

ते तदस्त्रं विधूयाशु विव्यधू रुधिराशनाः ।
शिरस्युरसि वक्त्रे च स मुमोह पपात च ॥ १८ ॥

**रुधिराशनाः** शराः । ॥ इति एकोनविंशोऽध्यायः ॥

१. 'श्रौतश्रवं' इति कुं पाठः ।

## ॥ अथ विंशोऽध्यायः ॥

वासुदेव उवाच –

[1]आनर्तनगरीं मुक्तां [2]ततस्तेनागमन् तदा ।
महाक्रतौ राजसूये निवृत्ते नृपते तव ॥ १ ॥

ततस्तेनागमन् इत्यत्र तेन साल्वेन मुक्ताम् ।

तैः प्रहृष्टात्मभिर्वीरैराशीर्भिरभिनन्दितः ।
वाचयित्वा द्विजश्रेष्ठान् प्रणम्य शिरसा भवम् ॥ १२ ॥

शैब्यसुग्रीवयुक्तेन रथेनानादयन् दिशः ।
प्रध्माय शङ्खप्रवरं पाञ्चजन्यमहं नृप ॥ १३ ॥

वाचयित्वा द्विजश्रेष्ठान् इत्यत्र दिशः आनादयन् अभवमिति सम्बन्धः ।

प्रयातोस्मि नरव्याघ्र बलेन महता वृतः ।
क्लृप्तेन चतुरङ्गेण यत्तेन जितकाशिना ॥ १४ ॥

जितकाशिना जितं जयः, तत्काशिना इच्छुना ।

ततो हलहलाशब्दः सौभमध्ये व्यवर्धत ।
वध्यतां विशिखैस्तीक्ष्णैः पततां च महार्णवे ॥ ३० ॥

वध्यतां विशिखै इत्यत्र वध्यतां वध्यमानानाम् ।

---

१. S; BORI पृ. ६६; 'आनर्तनगरं मुक्तं' इति कुं पाठः ।
२. 'ततोऽहमगमं' इति कुं पाठः ।

**ततो नाज्ञायत तदा दिवारात्रं तथा दिशः ।**
**ततोऽहं मोहमापन्नः प्रज्ञास्त्रं समयोजयम्** ॥ ४१ ॥

**ततोऽहं मोहमापन्न** इत्यत्र 'माङ् माने' इति धातोः **मा** विज्ञानास्त्रं, तस्य ऊहः मोहः तं मोहम् ।

**तदस्त्रमस्तमस्त्रेण विधूतं शरजालवत्[1] ।**
**तथा तदभवद्युद्धं तुमुलं रोमहर्षणम् ।**
**लब्धालोकस्तु राजेन्द्र पुनः शत्रुमयोधयम्** ॥ ४२ ॥

**शरजालवत्** इत्यत्र शरजालमस्य वर्तत इति शरजालवत् ।

॥ इति विंशोऽध्यायः ॥

## ॥ अथ एक विंशोऽध्यायः ॥

**न तस्योरसि नो मूर्ध्नि न काये न भुजद्वये ।**
**अन्तरं पाण्डवश्रेष्ठ पश्यामि[2] निचितं शरैः** ॥ ७ ॥

**शरैर्निचितम्** । 'चिञ् चयने' इति धातोः पूरितम् **अन्तरम्** अवकाशं न पश्यामि । हेतुगर्भं विशेषणम् । शरपूरितत्वान्न पश्यामीति भावः ।

**अथ मां पुरुषः कश्चिद्द्वारकानिलयोऽब्रवीत् ।**
**त्वरितो रथमारोप्य सौहृदादिव भारत** ॥ १० ॥

---

१. **'शरतूलवत्'** इति कुं पाठः ।
२. $K_2$,B,$D_n$,$D_{4.6}$; BORI पृ. ७०; **'पश्याम्यनिचितं शरैः'** इति कुं पाठः

**आहुकस्य वचो वीर तस्यैव परिचारकः ।**
**विषण्णः सन्नकण्ठेन तान्निबोध युधिष्ठिर ॥ ११ ॥**

पुनरपि साल्वस्य मायाकौशलमाह– **अथ मां पुरुषः कश्चित्** इत्यादिना । द्वारकानिलयः तस्य आहुकस्यैव परिचारकः कश्चित्पुरुष इव विषण्णः सन्नकण्ठेन आहुकस्यैव वच इति मामब्रवीत् । **हे वीर** युधिष्ठिर तन्निबोधेति योजना ।

**उपयात्वा तु साल्वेन द्वारकां वृष्णिनन्दन ।**
**विषक्ते त्वयि दुर्धर्ष हतः शूरसुतो बलात् ॥ १३ ॥**

**विषक्ते त्वयि** इत्यत्र **त्वयि विषक्ते** सैन्येन सह सम्बद्धे ।

॥ इति एकविंशोऽध्यायः ॥ ॥ सौभवधः समाप्तः ॥

## ॥ अथ त्रयोविंशोऽध्यायः ॥

**प्रेष्याः पुरो विंशतिरात्तशस्त्रा धनूंषि शस्त्राणि शरांश्च दीप्तान् ।**
**मौर्वीश्च यन्त्राणि च सायकांश्च सर्वे समादाय जघन्यमीयुः ॥३॥**

**समादाय जघन्यमीयुः** इत्यत्र **जघने** समीपे विद्यमानाः जघन्याः यथा भवन्ति तथा जघन्यं ईयुः ।

॥ इति त्रयोविंशोऽध्यायः ॥

## ॥ अथ पञ्चविंशोऽध्यायः ॥

**सहस्रनेत्रप्रतिमो महात्मा यमस्य [1]जेता नमुचेश्च हन्ता ।**
**पितुर्निदेशात्[2]अनयत् स्वधर्मं चरन्वने दाशरथिश्चकार ॥१०॥**

---

१. BORI पृ. ८१; 'नेता' इति कुं पाठः ।; २. 'अनघः' इति कुं पाठः ।

**सहस्रनेत्रप्रतिम** इत्यत्र यः यमस्य **जेता** नेता, नमुचेश्च हन्ता, तस्य सहस्रनेत्रस्य प्रतिमा यस्य स इति योजना। स्वधर्मं **अनयत्** आचरत्।

**अलर्कमाहुर्नरवर्य सन्तं सत्यव्रतं काशिकरूशराजम्।**
**विहाय राज्यानि वसूनि चैव नेशो[१] बलस्येति चरेदधर्मम् ॥१३॥**

**ईशो बलस्य** इत्यत्र **बलस्य** सेनायाः ईश इति कृत्वा अधर्मं न चरेत्। अतः समर्थोऽपि रामः वने विचरन् आसेति योजना।

**सत्येन धर्मेण यथानुवृत्त्या[२] यथाश्रिया सर्वभूतान्यतीत्य।**
**यशश्च तेजश्च तवापि दीप्तं विभावसोर्भास्करस्येव पार्थ ॥ १७ ॥**

**यथानुवृत्त्या** यथोक्तवृद्धसेवया। यथाश्रिया यथोक्तवैराग्यादिसम्पदा।

॥ इति पञ्चविंशोऽध्यायः ॥

## ॥ अथ षड्विंशोऽध्यायः ॥

**अथाब्रवीद्बको दाल्भ्यो धर्मराजं युधिष्ठिरम्।**
**सन्ध्यां कौन्तेयमासीनमृषिभिः परिवारितम् ॥ ५ ॥**

**बको** नाम कश्चिदृषिः।

**चरन्नैःश्रेयसं धर्मं प्रजापालनकारितम्।**
**[३]नाभ्यगच्छद्बलिर्लोके तीर्थमन्यत्र वै द्विजात् ॥ १२ ॥**

---

१. MSS; BORI पृ. ८१; **'नेशो'** इति कुं पाठः।
२. S; BORI पृ. ८१; **'यथार्हवृत्त्या ह्रिया तथा'** इति कुं पाठः।
३. $B_1$,$D_2$,T,G; BORI पृ. ८३; **'नाध्यगच्छत'** इति कुं पाठः।

**नाभ्यगच्छद्बलिर्लोक** इत्यत्र **बलिः** महाबलिः **तीर्थं** तीर्थवत्पवित्रीकरणशक्तम् ।

**नानूनमासीदसुरस्य[1] कामैर्वैरोचनेः[2] श्रीरभिकाङ्क्षिताऽसीत् ।**
**लब्ध्वा महीं ब्राह्मणसम्प्रयोगात्[3] तेपां चरन्दुःखमनु व्यनश्यत्** ॥ १३ ॥

**नानूनमासीत्** इत्यत्र या श्रीरभिकाङ्क्षिता आसीत्, तत्सर्वं च ब्राह्मणसम्प्रयोगात् **अनु** अनन्तरं महीं लब्ध्वा ऊनं नासीत् । तेषां ब्राह्मणानां दुःखं चरन् ।

**नाब्राह्मणं भूमिरियं सभूति[4] वर्णद्वितीयं भजते चिराय ।**
**समुद्रनेमिर्नमते तु तस्मै यं ब्राह्मणः शास्ति नयैर्विनीतम्** ॥१४॥

**वर्णद्वितीयं** क्षत्रियम् ।

**कुञ्जरस्येव सङ्ग्रामे परिगृह्याङ्कुशग्रहम् ।**
**ब्राह्मणैर्विप्रहीनस्य क्षत्रस्य क्षीयते बलम्** ॥ १५ ॥

**अङ्कुशग्रहं** यन्तारं परिगृह्य स्वशुण्डया बलात्कारेण गृहीत्वा समरे कुञ्जरस्य बलमिव ।

**ब्राह्मण्यनुपमा दृष्टिः क्षात्रमप्रतिमं बलम् ।**
**तौ यदा चरतः सार्धं तदा लोकः प्रसीदति** ॥ १६ ॥

---

१. **'अनूनमासीद'** इति कुं पाठः ।
२. $T_{1,2}$,G,$M_1$; BORI पृ. ८३; **'श्रीरपि चाक्षयाऽऽसीत्'** इति कुं पाठः ।
३. S; BORI पृ. ८३; **'तेप्वाचरन्दुष्टमथो'** इति कुं पाठः ।
४. **'-र्वर्णं द्वितीयं'** इति कुं पाठः ।

**ब्राह्मण्यनुपमा दृष्टिः** इत्यत्र **दृष्टि**र्ज्ञानम् ।

**ब्राह्मणेष्वेव मेधावी बुद्धिपर्येषणं चरेत् ।**
**अलब्धस्य च लाभाय लब्धस्य परिवृद्धये ॥ १८ ॥**

**बुद्धिपर्येषणं** बुद्ध्या **पर्येषणम्** अन्वेषणं विचारमित्यर्थः ।

**अलब्धलाभाय च लब्धवृद्धये यथार्हतीर्थप्रतिपादनाय ।**
**यशस्विनं वेदविदं विपश्चितं बहुश्रुतं ब्राह्मणमेव वासयेत् ॥१९॥**

**यथार्हतीर्थप्रतिपादनाय** इत्यत्र **तीर्थं** धर्मशास्त्रम् ।

**वैशम्पायन उवाच –**

**ततस्ते ब्राह्मणाः सर्वे बकं दाल्भ्यमपूजयन् ।**
**युधिष्ठिरे स्तूयमाने भूयः सुमनसोऽभवन् ॥ २२ ॥**

**दाल्भ्यं** दाल्भ्यपुत्रं **बकं** ऋषिम् ।

**॥ इति षड्विंशोध्यायः ॥**

## ॥ अथ सप्तविंशोऽध्यायः ॥

[१] **श्रुत्वैवानाशितं तदा** इत्यत्र नाशितं न भवतीति **अनाशितं** क्षेममित्यर्थः ।

**इदं च शयनं दृष्ट्वा यच्चासीत्ते पुरातनम् ।**
**शोचामि त्वां महाराज स्मृत्वा[२] भूतलशायितम् ॥ १० ॥**

१. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
२. **'दुःखानर्हं सखोचितम्'** इति कुं पाठः ।

**दान्तं यच्च सभामध्य आसनं रत्नभूषितम् ।**
**[1]मां कुशप्रस्तरे दृष्ट्वा शोको दारयते भृशम् ॥ ११ ॥**

**इदं च शयनं** इत्यत्र यदिदं शयनं, एतद्दृष्ट्वा पुरातनं **दान्तं** दन्तमयं रत्नभूषितं सभामध्ये यदासनं, तच्च दृष्ट्वा स्मृत्वा भूतलशायितं त्वां शोचामीति योजना । कदाचित् **कुशप्रस्तरे** दर्भासने त्वां दृष्ट्वा मां शोकः भृशं दारयते ।

**या त्वाऽहं कौशिकैर्वस्त्रैः शुभ्रैराच्छादितं पुरा ।**
**दृष्टवत्यस्मि राजेन्द्र साऽद्य पश्यामि चीरिणम् ॥ १४ ॥**

**चीरिणं** वल्कलिनम् ।

**यत्ते भ्रातॄन्महाराज युवानो मृष्टकुण्डलाः ।**
**अभोजयन्त [2]निष्टान्नैः सूदाः परमसंस्कृतैः ॥ १८ ॥**

**निष्टान्नैः** [3]'निष्ठोत्कर्षे व्यवस्थायाम्' इति वचनात् उत्कृष्टान्नैः ।

**यस्य शस्त्रप्रतापेन [4]प्रणीताः सर्वपार्थिवाः ।**
**यज्ञे तव महाराज ब्राह्मणानुपतस्थिरे ॥ २५ ॥**

**प्रणीताः** प्रकर्षेण वशं नीताः ।

**[5]यो नागैरद्भुताकारैः हयैर्यानैश्च संवृतम् ।**

---

१. 'दृष्ट्वा कुशबृसीं चेमां शोको मां दारयत्ययम्' इति कुं पाठः ।
२. $T_1$,M ; BORI पृ. ८६; 'मृष्टान्नैः' इति कुं पाठः ।
३. अ.को. १-७-१५ ; ४. 'प्रणताः' इति कुं पाठः ।
५. 'यो यानैरद्भुताकारैर्हयैर्नागैश्च संवृतः' इति कुं पाठः ।

**प्रसह्य वित्तमगृह्णात्[1] पार्थिवानां[2] परन्तप ॥ २९ ॥**

**यो नागैरद्भुताकारैः** इत्यत्र यातीति **यः** दिग्विजयार्थं गच्छन् **यः** अर्जुनः हयनागैः संवृतं पार्थिवानां वित्तं प्रसह्य अद्भुताकारैर्नागैः अगृह्णात् , गजानां स्कन्धानारोप्य आनयदित्यर्थः ।

**॥ इति सप्तविंशोऽध्यायः ॥**

## ॥ अथ अष्टविंशोऽध्यायः ॥

**असुरेन्द्रं महाप्राज्ञं धर्माणामागतागमम् ।**
**बलिः पप्रच्छ दैत्येन्द्रं प्रह्लादं पितरं पितुः ॥ २ ॥**

**धर्माणामागतागमम्** इत्यत्र **आ** सम्यक् **गतः** अवगतः **आगमः** शास्त्रं येन तम् ।

**क्षमा स्विच्छ्रेयसी तात उताहो तैजसीत्युत[3] ।**
**एतन्मे संशयं तात यथावद्ब्रूहि पृच्छते ॥ ३ ॥**

**तैजसी** सामर्थ्यवती ।

**तस्मै प्रोवाच तत्सर्वमेवं पृष्टः पितामहः ।**
**सर्वनिश्चयवित्प्राज्ञः संशयं परिपृच्छते ॥ ५ ॥**

**पितामहः** प्रह्लादः ।

---

१. **'वित्तान्यादत्त'** इति कुं पाठः ।
२. T2,G,M1 ; BORI पृ. ८६; **'पार्थिवेभ्यः'** इति कुं पाठः ।
३. **'तेज इत्युत'** इति कुं पाठः ।

**पूर्वोपकारी यस्ते स्यादपराधे गरीयसि ।**
**उपकारेण तत्तस्य क्षन्तव्यमपराधिनः ॥ २७ ॥**

**उपकारेण तत्तस्य** इत्यत्र अपराधिनः तत् कर्म ।

**अथ चेद्बुद्धिजं कुर्युः[1] पापास्तानित्यबुद्धितः ।**
**प्राहुश्चेत्तेऽपि हन्तव्या अपराधे तथानुजून् ॥ २९ ॥**

**अथ चेद्बुद्धिजम्** इत्यत्र अथ बुद्धिजं कुर्युः, अबुद्धित इति प्राहुश्चेत्तेऽपि हन्तव्याः ।

॥ इति अष्टविंशोऽध्यायः ॥

## ॥ अथ एकोनत्रिंशोऽध्यायः ॥

**यो हि संहरते क्रोधं भावस्तस्य सुशोभने ।**
**यो न संहरते क्रोधं तस्याभावो भवत्युत ।**
**अभावकारणं तस्मात्क्रोधो भवति शोभने ॥ ४ ॥**

**भावस्तस्य** इत्यत्र **भावः** अविनाशः ।

**आत्मानं च परंश्चैव त्रायते महतो भयात् ।**
**क्रुध्यन्तमप्रतिक्रुध्यन्द्वयोरेष चिकित्सकः ॥ १२ ॥**

**द्वयोः** क्रुध्यतः परस्य स्वस्य च **चिकित्सकः** क्रोधाख्यरोगपरिहारकः । स्वशान्तिं दृष्ट्वा सोऽपि शान्तो गमिष्यतीति भावः ।

---

१. **'कृत्वा ब्रूयुस्ते तदबुद्धिजम् । पापान्स्वल्पेऽपि तान्हन्यात्'** इति कुं पाठः ।

**क्रुद्धः पापं नरः कुर्यात् क्रुद्धो हन्याद्गुरूनपि ।**
**क्रुद्धः परुषया वाचा श्रेयसोऽप्यवमन्यते ॥ ७ ॥**

[१] 'श्रेयाञ्छ्रेष्ठः पुष्कलः स्यात्' इत्यभिधानात् **श्रेयसः** श्रेष्ठान् ।

**मूढो यदि क्लिश्यमानः क्रुध्यतेऽशक्तिमान्नरः ।**
**बलीयसां मनुष्याणां त्यजत्यात्मानमन्ततः ॥ १३ ॥**

**बलीयसां मनुष्याणाम्** इत्यत्र बलीयसां मनुष्याणां आत्मानं त्यजति ददाति । ते बध्नन्तीत्यर्थः ।

**तस्यात्मानं सन्त्यजतो लोका नश्यन्त्यनात्मनः ।**
**तस्माद्द्रौपद्यशक्तस्य मन्योर्नियमनं स्मृतम् ॥ १४ ॥**

**अनात्मनः** मनोजयरहितस्य ॥

**क्रोधस्तत्पण्डितैः शश्वत्तेज इत्यभिनिश्चितम् ।**
**रजस्तु लोकनाशाय विहितं मानुषान् प्रति ॥ २५ ॥**

**तत् क्रोधाख्यं वस्तु रजः** रजोगुण एव ।

**तस्माच्छश्वत्यजेत्क्रोधं पुरुषः सम्यगाचरन् ।**
**श्रेयान्स्वधर्मानपगो न क्रुद्ध इति निश्चितम् ॥ २६ ॥**

क्रुद्धः श्रेयान् नेति सम्बन्धः ।

**[२] अतिक्रान्तमबुद्धानां यदि सर्वमचेतसाम् ।**
**अतिक्रमो मद्विधस्य कथं स्वित्स्यादनिन्दिते ॥ २७ ॥**

---

१. अ.को. ३-१-५८; २. 'यदि सर्वमबुद्धीनां अतिक्रान्तमचेतसाम्' इति कुं.

**अतिक्रान्तमबुद्धानाम्** इत्यत्र **अतिक्रान्तम्** अतिक्रमणं **यदि** यद्यप्यस्ति।

**अभिषक्तो ह्यभिषजेत् आहन्युर्गुरूणाऽऽहताः[1] ।**
**एवं विनाशो भूतानामधर्मः प्रथितो भवेत् ॥ २९ ॥**

**अभिषक्तो ह्यभिषजत्** इत्यत्र यदा **अभिषक्तः** वनितादिविषयैः सक्तः सङ्गवान् पुरुषः **अभिषजेत्** अभितः तेष्वेव सङ्गं कुर्यात्, यदा गुरुणा आहताः पुरुषाः, तानेव आहन्युः।

**एवं सङ्कुपिते लोके जन्म कृष्णे न विद्यते ।**
**प्रजानां वृद्धिमूलं[2] हि जन्मसिद्धिः[3] शुभानने ॥ ३२ ॥**

**जन्मसिद्धिः** कर्मभूमौ जन्मनिष्पत्तिः प्रजानां **वृद्धिमूलम्** अभिवृद्धेर्मूलं हि।

**ताः क्षीयेरन् प्रजाः सर्वाः क्षिप्रं द्रौपदि तादृशाः ।**
**तस्मान्मन्युर्विनाशाय प्रजानामभवाय च ॥ ३३ ॥**

**अभवाय** अजननाय। **भवाय** शोभनाय।

**क्षन्तव्यं पुरुषेणेह सर्वापत्सु सुशोभने ।**
**क्षमा भावो[4] हि भूतानां जन्म चैव प्रकीर्तितम् ॥ ३९ ॥**

**क्षमा भावो हि भूतानाम्** इत्यत्र **भावः** सद्भावः।

---

१. **'आहन्याद्गुरुणा हतः'** इति कुं पाठः।
२. $T_2$,$G_{2-4}$,$M_1$ ; BORI पृ. ९३; **'सन्धिमूलं'** इति कुं पाठः।
३. **'जन्म विद्धि'** इति कुं पाठः।
४. BORI पृ. ९३; **'क्षमावतो'** इति कुं पाठः।

**आक्रुष्टस्ताडितः क्रुद्धः क्षमते यो बलीयसा ।**
**यश्च नित्यं जितक्रोधो विद्वानुत्तमपूरुषः ।**
**[1]प्रतापवानपि नरस्तस्य लोकाः सनातनाः ॥ ३६ ॥**

**प्रतापवानपि** प्रकृष्टतापवानपि यः जितक्रोध इति पूर्वेण सम्बन्धः ।

**एतैर्हि राजा नियतं चोद्यमानः शमं प्रति ।**
**[2]आदास्यामीति ते बुद्धिः नेयं लोभान्नशिष्यति ॥ ५२ ॥**

**एतैर्हि राजा** इत्यत्र एतैः श्लोकैः शमं प्रति चोद्यमानः अहं शममेव आदास्यामि, न तु क्रोधम् । इयं च बुद्धिः ते **लोभात्** राज्यलोभात् न नशिष्यति ।

**सुयोधनो नार्हतीति [3]क्षमामेवं न विन्दति ।**
**[4]अर्हस्तस्याहमित्येव तस्मान्मां विन्दते क्षमा ॥ ५४ ॥**

**सुयोधनो नार्हति** इत्यत्र **नार्हति** अनुजत्वाद्राज्यं नार्हतीति हेतोः सुयोधनः **एवं** मद्वत् क्षमाम् न विन्दति । **तस्य** राज्यस्य ।

॥ इति एकोनत्रिंशोऽध्यायः ॥

## ॥ अथ त्रिंशोऽध्यायः ॥

**द्रौपद्युवाच –**

**नमो धात्रे विधात्रे च यौ मोहं चक्रतुस्तव ।**
**पितृपैतामहे राज्ये वोढव्ये तेऽन्यथा मतिः ॥ १ ॥**

---

१. **'प्रभाववानपि'** इति कुं पाठः ।
२. **'राज्यं दातेति मे बुद्धिर्न चेल्लोभान्नशिष्यति'** इति कुं पाठः ।
३. BORI पृ. ९४; **'क्षमा मामेव विन्दति'** इति कुं पाठः ।
४. BORI पृ. ९५; **'अर्हस्तत्राहमित्येवं'** इति कुं पाठः ।

'डुधाञ् धारणपोषणयोः' इति धातोः पालयिता नारायणो **धाता**। **विधाता** ब्रह्मा।

**नावमंस्था हि सदृशान्नावराञ्श्रेयसः कुतः।**
**अवाप्य पृथिवीं सर्वां[1] न ते शृङ्गमवर्धत ॥ १० ॥**

**न ते शृङ्गमवर्धत** इत्यत्र सर्वां पृथिवीमवाप्यापि ते शिरसि शृङ्गं नावर्धतेति लौकिकमाभाणकम्। तस्मादैश्वर्येऽपि धर्ममेवाचरेति भावः।

**राजन् परीतया बुद्ध्या विषमेऽक्षपराजये।**
**पार्थ मित्राणि चास्मांश्च वसूनि च पराजितः ॥ १८ ॥**

**राजन् परीतया बुद्ध्या** इत्यत्र **परीतया** विपरीतया, वसूनि च उद्दिश्य पराजितोऽसीति योजना।

**अत्राप्युदाहरन्तीममितिहासं पुरातनम्।**
**ईश्वरस्य वशे लोकस्तिष्ठते नात्मनो यथा ॥ २१ ॥**

**अत्राप्युदाहरन्तीमम्** इत्यत्र ईश्वरस्य वशे यथा, तथा **आत्मनः** स्वस्य वशे न।

**[2]धातेव खलु भूतानां सुखदुःखे प्रियाप्रिये।**
**ददाति सर्वमीशानः पुरस्ताच्छुक्रमुच्चरन् ॥ २२ ॥**

**पुरस्ताच्छुक्रमुच्चरन्** इत्यत्र **पुरस्तात्** सृष्टेरादिकाले **शुक्रम्** शुचा.

---

१. S; BORI पृ. ९६; **'कृत्स्नां'** इति कुं पाठः।
२. **'धातैव'** इति कुं पाठः।

रहितो यथा भवति तथा **उच्चरन्** उदयन् **ईशानः** नारायणः **धातेव** सूर्य इव ।

**यथा दारुमयीं योषां नरो धीरः समाहितः ।**
**इङ्गयत्यङ्गमङ्गानि तथा राजन्निमाः प्रजाः** ॥ २३ ॥

**यथा दारुमयीम्** इत्यत्र **अङ्गम्** एकैकमङ्गम्, **अङ्गानि** सर्वाङ्गानि **इङ्गयति** 'इङ्ग चेष्टायाम्' इति धातोः चेष्टयति ।

**शकुनिस्तन्तुबद्धो वा नीयतेऽयमनीश्वरः ।**
**ईश्वरस्य वशे तिष्ठन्नान्येषामात्मनः प्रभुः** ॥ २५ ॥

**शकुनिस्तन्तुबद्धो वा** इत्यत्र तन्तुबद्धः **शकुनिः** पक्षी **वा** इव 'वा विकल्पोपमानयोः' इति वचनात् । ईश्वरस्य वशे तिष्ठन् **प्रभुः** गमनागमनादौ समर्थः । **आत्मनः** परमात्मनः । अन्येषां वशे तिष्ठन् न ।

**मणिः सूत्र इव प्रोतो नस्योत इव गोवृषः ।**
**धातुरादेशमन्वेति तन्मयो हि तदर्पितः**[१] ॥ २६ ॥

**तन्मयः** तत्प्रधानकः, **तदर्पितः** तदाधारः ।

**अन्यथैव हि वर्तन्ते पुरुषास्तानि तानि च ।**
**अन्यथैव प्रभुस्तानि करोति विकरोति च** ॥ ३४ ॥

**अन्यथैव हि वर्तन्त** इत्यत्र **तानि** तेषां ज्ञानेन्द्रियाणि, **तानि** कर्मेन्द्रियाणि वा ।

---

१. **'तदर्पणः'** इति कुं पाठः ।

**सम्प्रयोज्य वियोज्यायं कर्मकारकरः[१] प्रभुः ।**
**क्रीडते भगवान् भूतैर्बालः क्रीडनकैरिव ॥ ३७ ॥**

**कर्मकारकर** इत्यत्र **कर्मकारं** कर्मकर्तारं करोतीति **कर्मकारकरः** ।

**न मातृपितृवद्राजन्धाता भूतेषु वर्तते ।**
**रोषादिव प्रवृत्तोऽयं यथाऽयमितरो जनः ॥ ३८ ॥**

**अयं इतरः** 'क्षुल्लकश्चेतरश्च स'[२] इत्यभिधानात् **इतरः** पामरो जनः यथा, तथा **अयं** परमात्मा रोषादिव प्रवृत्तः ।

**आर्यशास्त्रातिगे क्रूरे लुब्धे धर्मापचायिनि ।**
**धार्तराष्ट्रे श्रियं दत्त्वा धाता किं फलमश्नुते ॥ ४१ ॥**

**कर्म चेत्कृतमन्वेति कर्तारं नान्यमृच्छति ।**
**कर्मणा तेन पापेन लिप्यते नूनमीश्वरः ॥ ४२ ॥**

**अथकर्मकृतं पापं न चेत्कर्तारमृच्छति ।**
**कारणं बलमेवेह जनान् शोचामि दुर्बलान् ॥ ४३ ॥**

**धार्तराष्ट्रे श्रियं दत्त्वा धाता किं फलमश्नुत** इत्यत्र तेन स्वदत्तश्रिया तेन दुर्योधनेन स्वपूजादेरकरणात् निष्फलमेव तस्य सम्पद्दानमिति भावः । अधुना अनादिकर्मपरम्परामपेक्ष्य जीवानां सुखदुःखदानान्न भगवतो वैषम्यादिदोषलेप इत्येतदाक्षिप्य समादधाति – **कर्म चेत्कृत-मन्वेति** इत्यादिना । **चेत्** यदि ईश्वरः **कृतं** तत्तज्जीवेन जन्मान्तरे कृतं कर्म **अन्वेति** अनुसृत्य प्रवर्तते । अतो न वैषम्यादिः दोष इति मतम् ।

१. **'कामकारकरः'** इति कुं पाठः ।; २. अ.को. २-१०-१६

तथापि प्राग्भवीयकर्मण्यपि **अन्यं** स्वतोऽन्यं **कर्तारं** स्वतन्त्रकर्तारं न ऋच्छति, तदपि कर्म स्वयमेव कारयति । एवमनादिकर्मपरम्परायामपि भगवत एव स्वातन्त्र्यात् तेन जीवेन कृतकर्मणा जनितपापेन असाधारणहेतुरीश्वरः लिप्यते नूनं लिप्यते कच्चित् । एवमपि लोक-मर्यादया वैषम्यादेः परिहारो नाभूदिति भावः । तर्हि कथं परिहार इत्यत आह **नूनमिति** । चेतनाचेतनात्मकं जगत् ईश्वरात् **ऊनं नु** स्वातन्त्र्य-सर्वेश्वरत्वादिधर्मैरूनं नु । अतः पापपरिहारासमर्थत्वात् स्यादेव तस्य लेपः । ईश्वरस्य तु पापलेपे ईश्वरत्वमेव (न्यू) ऊनं नु । अस्मात्कारणात् चेत् यदि कर्मकृतः जीवस्य पापं **कर्तारं** स्वत(न्त्रं)न्त्रकर्तारं ईश्वरं न ऋच्छति, तर्हि इह ईश्वरस्य कर्मालेपे **बलमेव** स्वातन्त्र्याख्यसामर्थ्यमेव कारणम् । लेप्तुमुद्यतपापस्यापि स्वतन्त्रहर्यधीनत्वात् दोषरूपं जडतया स्वतोऽसमर्थ तत्पापं स्वस्पर्शाय प्रेक्षावान् स एव हरिर्न प्रेरयेत् । तथाच स्वप्रेरितजडस्वलगुडो मर्त्यमिव जडं तत्पापं भगवन्तमीश्वरं न स्पृशे-देव । अतः स्वतन्त्रस्य पापलेपो न युक्तिसह इति भावः । **दुर्बलान्** स्वप्रारब्धपापलेपेन स्वातन्त्र्याभावादसमर्थान्, अत एव हृतराज्यान् **जनान्** भगवद्भक्तजनान् युष्मान् शोचामि । इति श्लोकद्वयस्य योजना ।

॥ इति त्रिंशोऽध्यायः ॥

## ॥ अथ एकत्रिंशोऽध्यायः ॥

**नाहं धर्मफलाकाङ्क्षी राजपुत्रि चराम्युत ।**
**ददामि देयमित्येव यजे यष्टव्यमित्युत** ॥ २ ॥

**राजपुत्रि चरामि** इत्यत्र **न चरामि** धर्मं नाचरामीत्यर्थः ।

**धर्मो यस्यातिशङ्क्य स्यात् आर्षं वा दुर्बलात्मनः ।**
**वेदाच्छूद्र इवापायात्[1] स लोकादजरामरात्** ॥ ८ ॥

**अपायात्** निवृत्तो भवेत् ।

**आत्मप्रमाण उन्नद्धः श्रेयसो ह्यवमन्यते ।**
**इन्द्रियप्रतिसम्बद्धं[2] यदिदं लोकसाक्षिकम् ।**
**एतावन्मन्यते बालो मोहमन्यत्र गच्छति** ॥ १७ ॥

**इन्द्रियप्रतिसम्बद्धम्** इत्यत्र यदिदं **लोकसाक्षिकं** लोकस्य साक्षिभूतं धर्मप्रदर्शकमित्यर्थः । एतादृशम् **इदम्** ऋष्यादिजगत् **इन्द्रियप्रतिसम्बद्धं** इन्द्रियलम्पटमिति एतावदेव बालः मन्यते, न तेषु बहुमानं मन्यते । तेन दोषेण स्वयमपि **अन्यत्र** स्रक्चन्दनवनितादिविषयेषु मोहं गच्छति ।

**आर्षं प्रमाणमुत्क्राम्य धर्मं न प्रतिपालयन् ।**
**सर्वशास्त्रातिगो मूढः आजन्म[3] सु न विन्दति** ॥ २१ ॥

**आजन्म सु न विन्दति** इत्यत्र **आजन्म** जन्मारभ्य **सु** शोभनं **न विन्दति** न प्राप्नोति ।

**धर्म एव प्लवो नान्यः स्वर्गं द्रौपदि गच्छताम् ।**
**सैव नौः सागरस्येव वणिजः पारमिच्छतः** ॥ २४ ॥

---

१. **'इवापेयात्'** इति कुं. पाठः ।
२. $B_3, D_2, T_2, G_{1-3}$ ; BORI पृ. १००; **'इन्द्रियप्रीति'** इति कुं पाठः ।
३. $M_1$ ; BORI पृ. १००; **'शं जन्मसु न विन्दति'** इति कुं पाठः ।

**प्लवः** नौः ।

[1]**अचलो यदि धर्मः स्याच्चरितो(अ)धर्मचारिभिः ।**
**अप्रतिष्ठे तम स्येतज्जगन्मज्जेदनिन्दिते ॥ २५ ॥**

**अचलो यदि धर्मः स्यात्** इत्यत्र अधर्मचारिभिः **चरितः** 'चर गति-भक्षणयोः' इति धातोः भक्षितः, अतिवादेन नाशित इत्यर्थः । **एतज्जगत्** धर्मनिन्दकजगत् ।

**नाचरिष्यन्परे धर्मं परे परतरेऽपि च[2] ।**
**विप्रलम्भोऽयमत्यन्तं यदि स्युरफलाः क्रियाः ॥ २८ ॥**

**नाचरिष्यन् परे धर्मम्** इत्यत्र **परे** अन्यस्मिन् पुरुषे अन्नदानादिधर्मं, **परे** स्वर्गादिपरलोकविषये यज्ञादिधर्मं, **परतरे** परमात्मनि विषये पूजादि**धर्मं** नाचरिष्यन् यः भवति, अत्यन्तम् अयं विप्रलम्भः परान् प्रति धर्मवचनं च यदि भवति, तर्हि तस्य सर्वाः क्रियाः अफलाः स्युः ।

**॥ इति एकत्रिंशोऽध्यायः ॥**

## ॥ अथ द्वात्रिंशोऽध्यायः ॥

**द्रौपद्युवाच –**

**नावमन्ये न गर्हे च धर्मं पार्थ कथञ्चन ।**
**ईश्वरं कुत एवाहं [3]अवमन्ये प्रजापतिम् ॥ १ ॥**

---

१. **'अफलो'** इति कुं पाठः ।
२. **'च यः'** इति कुं पाठः ।
३. **'अवमंस्ये'** इति कुं.पाठः ।

**ईश्वरं कुत एवाहम्** इत्यत्र **कुतः** कुत्सितवचनात् नैवावमन्य इति सम्बन्धः ।

**आर्ताऽहं प्रलपामीदमिति मां विद्धि भारत ।**
**भूयश्च विलपिष्यामि सुमनास्तन्निबोध मे[1] ॥ २ ॥**

**भूयश्च विलपिष्यामि सुमनास्तन्निबोध म** इत्यत्र सुमनाः सती प्रलपिष्यामीति द्रौपद्यैवोक्तत्वात् 'लिप्यते नूनमीश्वरे' इत्यत्र 'कुत एवाहम्' इत्यत्र च अस्मादुक्तोऽर्थः द्रौपद्याः मानस एवेति ज्ञातव्यम् ।

**आमातृस्तन्यपानाच्च यावच्चैत्योपसर्पणात्[2] ।**
**जङ्गमाः कर्मणा वृत्तिमाप्नुवन्ति युधिष्ठिर ॥ ४ ॥**

**यावच्चैत्योपसर्पणात्** इत्यत्र चिता शवदाहकाष्ठानि, तत्सम्बन्धी अग्निः चैत्यः, तत्प्राप्तिपर्यन्तम् । शवदाहजनितपुण्यस्यापि स एव देही पात्रमिति सूचनायेत्थमुक्तम् । अन्यथा आमरणमित्यवक्ष्यत् ।

**उत्थानमभिजानन्ति सर्वभूतानि भारत ।**
**प्रत्यक्षं फलमश्नन्ति कर्मणां लोकसाक्षिकम् ॥ ६ ॥**

**पश्यन्तः स्वं समुत्थानमुपजीवन्ति जन्तवः ।**
**अपि धाता विधाता च यथाऽयमुदके बकः ॥ ७ ॥**

**अकर्मणां वै भूतानां वृत्तिः स्यान्न हि काचन ।**
**तदेवाभिप्रपद्येत न विहन्यात् कदाचन ॥ ८ ॥**

---

१. BORI पृ. १०३; **'सुमनास्त्वं निबोध मे'** इति कुं पाठः ।
२. **'यावच्छय्योपसर्पणम्'** इति कुं पाठः ।

**स्वकर्म कुरु मा [१]ग्लासीः कर्मणा भव दंशितः ।**
**कृत्यं हि योऽभिजानाति सहस्रे सोऽस्ति नास्ति वा ॥ ९ ॥**

**उत्थानमभिजानन्ति** इत्यत्र **उत्थानं** कर्मोत्थितेरादिकारणं लोकसाक्षिकं नारायणमिति सम्बन्धः । यो **धाता** कर्मरक्षको नारायणः, यो **विधाता** कर्मविद्योपदेष्टा गुरुर्ब्रह्मा तं च तं च अस्य कर्मणः उत्थानं पश्यन्ति । उत्थितं च तत्कर्म जन्तवः उपजीवन्ति । **अयं** मीनग्राही बकः उदके उत्थितं मीनं यथा तथेति सम्बन्धः । मीनवत् कर्म, मीनोत्थापकजलवत् धातृविधाताराविति विवेकः । काम्यकर्मणि निन्दां सूचयितुं बकदृष्टान्तः । 'ग्लै म्लै हर्षक्षये' इति धातोः **ग्लासीः** अग्लासीः आलस्यं कुर्वित्यर्थः । **दंशितः** सन्नद्धः ।

**तस्य चापि भवेत्कार्यं विवृद्धौ रक्षणे तथा ।**
**भक्ष्यमाणो ह्यनावापः क्षीयेत हिमवानपि ॥ १० ॥**

**तस्य चापि भवेत्कार्यम्** इत्यत्र **कार्यं** कर्मफलनाशनाख्यं कार्यम् ।

**यश्च [२]दिष्टफलो लोके यश्चापि हठवादकः ।**
**[३]उभावपशदावेतौ कर्मबुद्धिः प्रशस्यते ॥ १३ ॥**

**यश्च दिष्टफलो लोक** इत्यत्र **दिष्टफलः** दिष्टाद्दैवादेव फलं यस्य स तथोक्तः, **हठवादकः** हठो योग्यता, तत एव फलं भवतीति वादि हठवादकः, दैवाद्वा फलं भविष्यति, मम फलयोग्यताबलाद्वा भविष्यति, किं प्रयत्नेनेति वदन्नित्यर्थः । [४]'निहीनोऽपशदो जाल्मः' इत्यभिधानात्

---

१. **'हासीः'** इति कुं पाठः ।; २. **'दिष्टपरो'** इति कुं पाठः ।
३. **'शठावेतौ'** इति कुं पाठः । ; ४. अ.को. २-१०-१६

**अपशदौ** नीचौ । **कर्मबुद्धिः** कर्मणि राज्यमोक्षादिफलसाधकयुद्धे शास्त्रश्रवणादिकर्मणि बुद्धिर्यस्य स तथोक्तः ।

**यो हि दिष्टमुपासीत निर्विचेष्टः सुखं स्वपन् ।**
**अवसीदेत्सुदुर्बुद्धिरामो घट इवोदके ॥ १४ ॥**

**निर्विचेष्टः** निष्प्रयत्नः । **आमो घटः** आर्द्रमृत्तिकामयो घटः ।

**अकस्मात्[1] अपि यः कश्चिदर्थं प्राप्नोति पूरुषः ।**
**तं हठेनेति मन्यन्ते स हि यत्नो न कस्यचित् ॥ १६ ॥**

**अकस्मादपि यः कश्चित्** इत्यत्र **अकस्मात्** धनार्जकवाणिज्याद्युपायं विना, स्वपूजादिना प्रसन्नदैवं च विनेत्यर्थः । तं हठेनेति मन्यन्ते तात्कालिकदर्शिनो जनाः । 'प्रत्यक्षं चक्षुषा दृष्ट'मिति वक्ष्यमाणत्वात् तात्कालिकदर्शिन इत्युक्तम् । एवमन्यत्राप्यूह्यम् । सर्वोत्पत्तिमन्निमित्त कारणस्य दैवस्य कर्मरूपादृष्टस्य च क्वापि त्यागायोगात् सः हठः कस्यचिद्यत्नो न । उपलक्षणं चैतत् । दैवं च नेति ग्राह्यम् ।

**यश्चापि कश्चित्पुरुषो दिष्टं नाम भजत्युत ।**
**दैवेन विधिना पार्थ तद्दैवमिति निश्चितम् ॥ १७ ॥**

**यच्चापि कश्चित्पुरुष** इत्यत्र **दैवेन** देवसम्बन्धिना **विधिना** आज्ञया, अस्मिन्नेव जन्मनि कृतात्युत्कटदेवपूजनेन वा वाणिज्यादिधनार्ज(न)-कयत्नशून्यानां राजपदायोग्यकीटादीनां व्यासादिभिर्यद्राज्यादिकं दत्तं, तद्दैवमिति **निश्चितं** तात्कालिकदर्शिभिर्जनैर्निश्चितमिति योजना ।

---

१. BORI पृ. १०३; 'इह' इति कुं पाठः ।

**यत्त्वयं[1] कर्मणा किञ्चित् किञ्चित्फलमाप्नोति पूरुषः।**
**प्रत्यक्षं चक्षुषा दृष्टं तत्पौरुषमिति स्मृतम्[2] ॥ १८ ॥**

**यत्त्वयं कर्मणा किञ्चित्** इत्यत्र **कर्मणा** कृषिवाणिज्यादिरूप-धनार्जककर्मणा प्रत्यक्षं चक्षुषा दृष्टं **अर्थं** साधनसहितमर्थम्। अस्मिन् जन्मनि अकृतदेवता(दि)भक्तीनां विप्राणां वैश्यवृत्तित्वात् स्वायोग्य-वाणिज्यादिना यद्धनं प्राप्यते, तत्पौरुषम्। केवलपुरुषप्रयत्नसिद्धत्वात् पौरुषमिति तात्कालिकदर्शिभिर्जनैः स्मृतमिति योजना।

**स्वभावतः प्रवृत्तोऽन्यः[3] प्राप्नोत्यर्थं न कारणात्।**
**तत्स्वभावात्मकं विद्धि फलं पुरुषसत्तम ॥ १९ ॥**

**स्वभावतः प्रवृत्तोऽन्य** इत्यत्र हठस्यैव स्वभाव इति नामान्तरं दातुं उक्तस्यैव प्रमेयस्य पुनरारम्भः।

**एवं हठाच्च दैवाच्च स्वभावात्कर्मणस्तथा।**
**यानि प्राप्नोति पुरुषस्तत्फलं पूर्वकर्मणः[4] ॥ २० ॥**

**एवं हठाच्च दैवाच्च** इत्यत्र **स्वभावात्** स्वभावाख्यात् हठात्। अन्यथा 'त्रैधमेतत्प्रशस्यते', 'चतुर्थं नात्र कारण' मिति च वक्ष्यमाण-विरोधः। ननु हठादेव कचिदर्थप्राप्तौ दैवप्रयत्नयोः अर्थरूपकार्ये व्यभि-चारादकारणता वा, व्रीहियववद्वैकल्पिककारणत्वे प्रयत्नस्याना-वश्यकत्वापत्त्या प्रकृतानुपयोगो वा इति चेत्तत्राह– **तत्फलं पूर्वकर्मण**

---

१. B₃ ; '**यत्तावत्कर्मणा**' इति कुं पाठः।
२. BORI पृ. १०४; '**श्रुतम्**' इति कुं पाठः।
३. BORI पृ. १०४; '**प्रवृत्तो यः**' इति कुं पाठः।
४. BORI पृ. १०४; '**पूर्वकर्मणाम्**' इति कुं पाठः।

इति । केवलहठात् केवलप्रयत्नात् केवलं दैवाच्च यत्फलं जायत इति तात्कालिकदर्शिनो मन्यन्ते, तदपि फलं पूर्वकर्मणः जन्मान्तरे धनाकाङ्क्षया कृतवायव्ययागादिप्रयत्नरूपपुण्यकर्मणः । इदं चोपलक्षणम् । कर्मप्रसन्नदैवात् कर्मकर्तृयोग्यतायाश्चेत्यपि ग्राह्यम् । एवञ्चास्मिन् जन्मनि दैवप्रयत्नयोग्यतानां उक्तविधया क्वचित्क्वचिद्दर्शनेऽपि अदृष्टद्वारकजन्मान्तरीयप्रयत्नात् तत्प्रसन्नदैवात् आधुनिकदेहमादाय योग्यताभावेऽपि देहस्थजीवस्य अनादिकालीनयोग्यताभावे तत्तत्फलसम्पत्तेरेवासम्भवेन अनादिकालीनयोग्यतायाश्च सर्वत्र फलस्य जायमानत्वान्न क्वापि व्यभिचारः । नापि वैकल्पिककारणतेति भावः ।

**धाताऽपीति[१] स्वकर्मैव तैस्तैर्हेतुभिरीश्वरः ।**
**विदधाति विभज्येह फलं पूर्वकृतं नृणाम्** ॥ २१ ॥

एतदेव विशदयति–**धाताऽपीति** । अपिपदेन हठो गृह्यते ।

**कारणं तस्य देहोऽयं धातुः कर्मणि कर्मणि ।**
**स यथा प्रेरयत्येनं तथाऽयं कुरुतेऽवशः** ॥ २३ ॥

**अयम्** एतज्जीवसम्बन्धी देहः । **धातुः कर्मणि कर्मणि** इत्यत्र धातुः प्रेरणात् क्रियमाणे कर्मणि कर्मणि ।

**मनसा[२] तद्विनिश्चित्य पश्चात्प्राप्नोति कर्मणा ।**
**बुद्धिपूर्वं स्वयं वीर पुरुषस्तत्र कारणम्** ॥ २५ ॥

**मनसा तद्विनिश्चित्य** इत्यत्र **तत्** भाविफलम् ।

---

१. **'धातापि हि'** इति कुं पाठः ।; २. **'मनसाऽर्थान्विनिश्चित्य'** इति कुं पाठः ।

**सङ्ख्यातुं नैव शक्यानि कर्माणि पुरुषर्षभ ।**
**अगारनगराणां हि सिद्धिः पुरुषहैतुकी ॥ २६ ॥**

तर्हि प्राचीनपुण्यकर्माख्यप्रयत्नादेव राज्यं भविष्यति; किमधुना युद्धादिप्रयत्नेनेम इत्यत आह– **अगारनगराणां** इति । **पुरुषहैतुकी** आधुनिकपुरुषप्रयत्नाख्यहेतुमती । अदृष्टस्यापि दृष्टकारणमेलकतया कारणत्वात् दृष्टप्रयत्नोऽप्यपेक्षितः । अत एव हठात् दैवाच्च प्राप्तराज्यादिसम्पद्यपि निधेर्निक्षेपाद्वा प्रकृतधनलाभः । पश्चाद्धननिमित्तगजतुरगादिसेनाप्राप्तिः । सेनया च परितः शत्रुषु निर्जितेषु सत्सु निष्कण्टकराज्यप्राप्तिरिति आधुनिकपुरुषप्रयत्नमन्तर्भाव्यैव सर्वत्र राज्यलाभ इति भावः । अगारनगरादिषु काष्ठकार्वादिविषयकपुरुषप्रयत्नः ।

**तिले तैलं गवि क्षीरं काष्ठे पावकमन्ततः ।**
**एवं धीरो[1] विजानीयादुपायं चास्य सिद्धये ॥ २७ ॥**

**तिले** तैलयन्त्रादिपुरुषप्रयत्नः । **गवि** गोदोहनाख्यपुरुषप्रयत्नः । **काष्ठे** अरणीमथनाख्यपुरुषप्रयत्नः ।

**इष्टापूर्तफलं न स्यान्न शिष्यो न गुरुर्भवेत् ।**
**पुरुषः कर्मसाध्येषु स्याच्चेदयमकारणम् ॥ ३० ॥**

**पुरुषः कर्मसाध्येषु** इत्यत्र **अयम्** इदानीन्तनप्रयत्नकर्ता पुरुष इति सम्बन्धः । **कर्मसाध्येषु** कर्मफलेषु ।

**कर्तृत्वादेव पुरुषः कर्मसिद्धौ प्रशस्यते ।**
**असिद्धौ निन्द्यते चापि कर्मनाशः कथं त्विह ॥ ३१ ॥**

१. 'भीरो' इति कुं.पाठः ।

**सर्वमेव हठेनैके दैवेनैके वदन्त्युत ।**
**पुरुषप्रयत्नजं[१] केचिद्दैवमेतद्विशिष्यते ॥ ३२ ॥**

इह कर्मनाशः कथं त्विति विचारे कर्तुरकौशलादिति निन्द्यते इति योजना । एवञ्च उक्तविधया सर्वत्र पुरुषाभ्यां जीवपराभ्यां प्रयत्नाच्च जातं **पुरुपप्रयत्नजं किञ्चित्** किञ्चन, सर्वं कार्यमित्यर्थः । **एके** अकुशलबुद्धयः कर्मणा केवलपुरुषप्रयत्नेनेति वदन्ति । एके **हठेन** केवलहठेनेति वदन्ति । एके दिष्टेन केवलदिष्टेनेति वदन्ति । एतत्त्रैधं त्रिप्रकारककारणमेलनं **प्रशस्यते** प्रौढपुरुषैः कथ्यते ।

**न चैवैतावता कार्यं मन्यन्त इति चापरे ॥ ३३ ॥**

**न चैवैतावता कार्यं** इत्यत्र **अपरे** निरीश्वरवादिनश्च **एतावता** त्रित्व-नियतकारणसमुदायेन कार्यं नैवेति च मन्यन्ते । ईश्वराख्यतृतीयकारण-स्यासम्मतत्वात् कारणद्वितयमेवालमिति वदन्तीति भावः ।

**अस्ति सर्वमदृश्यं तद्दैवाद्दृश्यं[२] तथा हठः ॥ ३३ ॥**

**अस्ति सर्वमदृश्यं तत्** इत्यत्र **तत्सर्वं** स्वभाव-कर्म-दैवाख्य-कारणत्रितयं अस्ति । तर्हि त्रयमपि कुतो न दृश्यत इत्यत उक्तं— **अदृश्यं चेति** । चशब्देन दृश्यं च गृह्यते । जीवो दृश्यः, अदृष्टेश्वरा-वदृश्यौ । अदर्शनादीश्वरानङ्गीकारे त्वदभिलषितमदृष्टमपि कारणं न स्यात् । श्रुत्या दर्शनं तु उभयोरपि सममिति च सूचयितुं चशब्दः । पूर्वानवगतत्वात् अपूर्वता चोभयोः समेति सूचनायादृश्यपदम् । किञ्च

१. **'पुंसः प्रयत्नजं'** इति कुं पाठः ।
२. $T_1$,$G_1$,M ; BORI पृ. १०५; **'तु दिष्टं चैव'** इति कुं.पाठः ।

सर्वथा अदृष्टमेव शशशृङ्गादिकं नास्ति, ईश्वरस्तु न तथेत्याशयेनोक्तं– **दैवाद्दृश्यं** इति । **दैवात्** दैवप्रसादात् योगिभिर्दृश्यं च, **तथा हठः** (वि)त्रिविधपुरुषस्वभावोऽपि दृश्यः ।

**पुरुषः फलमाप्नोति चतुर्थं नात्र कारणम् ।**
**कुशलाः प्रतिजानन्ति [१]ते तत्त्वविदुषो जनाः ॥ ३५ ॥**

**कुशलाः प्रतिजानन्ति** इत्यत्र कुशलाः **प्रति** कार्यं कार्यं प्रति **जानन्ति** कारणत्रितयमपि जानन्ति, ते तत्वविदुष इति सम्बन्धः ।

**तथैव धाता भूतानामिष्टानिष्टफलप्रदः ।**
**यदि न स्यान्न भूतानां कृपणो नाम कश्चन ॥ ३६ ॥**

अधुना प्रकारान्तरेण निरीश्वरवादं निराकरोति –**तथैव धाता भूतानां** इति । **भूतानां** प्राणिनां मध्ये कश्चन **कृपणः** दरिद्रः न स्यात् । जीवस्य, धनार्जनप्रयत्नस्य च सत्त्वेऽपि एकस्य दारिद्र्यं देवताप्रसादा-भावनिमित्तमेव । अत ईशोऽप्यस्त्येवेति भावः ।

**त्रिद्वारामर्थसिद्धिं तु नानुपश्यन्ति ये नराः ।**
**तथैवानर्थसिद्धिं च यथा लोकास्तथैव ते ॥ ३८ ॥**

**यथा लोका** इत्यत्र **लोकाः** पामरजनाः ।

**[२]कर्तव्यं कर्म चास्यैव मनोरेष विनिश्चयः ।**
**एकान्तेन ह्यनीहोऽयं वर्ततेऽस्मासु सम्प्रति ॥ ३९ ॥**

---

१. BORI पृ. १०५; **'ये वै तत्त्वविदो'** इति कुं.पाठः ।
२. $D_2$ ; BORI पृ. १०५; **'कर्तव्यमेव कर्मेति'** इति कुं पाठः ।

**एकान्तेन** नियमेन ॥ **कर्म चास्य** इत्यत्र **अस्य** जीवस्य ।

**असम्भवे तत्र[१] हेतुः प्रायश्चित्तं तु लक्ष्यते ।**
**कृते कर्मणि राजेन्द्र तथाऽनृण्यमवाप्नुते ॥ ४१ ॥**

**असम्भवे तत्र हेतुः** इत्यत्र **तत्र** तस्मिन् अलसस्य फलासंम्भवे प्रायः हेतुः **चित्तं तु** चित्तमेव लक्ष्यते ।

**अनर्थं संशयावस्थं वृण्वते[२] मुक्तसंशयाः ।**
**धीरा नराः कर्मरता न तु निःसंशयाः क्वचित् ॥ ४३ ॥**

**अनर्थं संशयावस्थम्** इत्यत्र **वृण्वते** आवृण्वते स्ववशे कुर्वन्तीत्यर्थः । **कर्मरताः** प्रयत्नवन्तः ।

**एकान्ते नह्यनर्थोऽयं वर्ततेऽस्मासु साम्प्रतम् ।**
**स तु निःसंशयं न स्यात्त्वयि कर्मण्यवस्थिते ॥ ४४ ॥**

**स तु निस्संशयं न स्यात्** इत्यत्र त्वयि **कर्मणि** युद्धकर्मण्यवस्थिते सति सः अनर्थः निस्संशयं न स्यात् । अथवा राज्यलाभाख्यकार्यसिद्धिश्च स्यात् ।

**अथवाऽसिद्धिरेव स्यान्महिमा तु तदेव ते ।**
**वृकोदरस्य बीभत्सोर्भ्रात्रोश्च यमयोरपि ॥ ४५ ॥**
**अन्येषां कर्म सफलमस्माकमपि वा पुनः ।**
**विप्रकर्षेण बुद्ध्येत कृतकर्मा यथाफलम् ॥ ४६ ॥**

---

१. $K_2$,$T_1$,$G_1$ ; BORI पृ. १०५; **'त्वस्य'** इति कुं पाठः ।
२. BORI पृ. १०६; **'गृणन्त्यामुक्तसंशयाः'** इति कुं पाठः ।

**ते** तव वृकोदरस्य बीभत्सोर्यमयोरपि महिमानं भवान् **तदैव** कर्मण्यवस्थितिकाल एव **बुद्ध्येत** जानीयात् । अन्येषां कर्म वा सफलं, अस्माकं कर्म वा सफलमिति च **कृतकर्मा** कृतप्रयत्नः भवान् **विप्रकर्षेण** त्रयोदशवर्षानन्तरं **बुद्ध्येत** जानीयात् इति योजना ।

**वृष्टिश्चेन्नानुगृह्णीयादनेनास्तत्र कर्षकः ।**
**यदन्यः पुरुषः कुर्यात्तत्कृतं सफलं मया ॥ ४८ ॥**

**यदन्यः पुरुष** इत्यत्र **अन्यः** कृषीवलपुरुषः ।

**कुर्वतो नार्थसिद्धिर्मे भवतीति ह भारत ।**
**निर्वेदो नात्र गन्तव्यो [१] द्वावेतौ ह्यस्य कर्मणः ॥ ५० ॥**

**द्वावेतौ ह्यस्य कर्मण** इत्यत्र **अस्य** जीवकृतस्य **कर्मणः** प्रयत्नस्य द्वौ स्वतन्त्रः परमात्मा, तदधीनो जीवश्चेति द्वौ कर्तारौ । तस्मात्कुर्वतो मे अर्थसिद्धिर्नेति निर्वेदो न कर्तव्य इति पूर्वेणान्वयः ।

**सिद्धिर्वाऽप्यथवाऽसिद्धिरप्रवृत्तिरतोऽन्यथा ।**
**बहूनां समवाये हि [२] भावना कर्म सिध्यति ॥ ५१ ॥**

अतोऽन्यथा अप्रवृत्तिः । **बहूनां** चतुर्णां प्रकाराणाम् । यस्य **भावना** प्रयत्नः, तस्य कर्म सिध्यतीति योजना ।

**[३] गुणभावे फलं न्यूनं भवत्यफलमेव च ।**
**अनारम्भे हि न फलं न गुणो दृश्यते क्वचित् ॥ ५२ ॥**

---

१. BORI पृ. १०६; **'द्वावन्तौ यस्य कर्मणः'** इति कुं पाठः ।
२. **'भावानां'** इति कुं पाठः । ; ३. **'गुणाभाव'** इति कुं पाठः ।

**गुणभावे** प्रयत्नाख्यजैवगुणसद्भावे उत्तमानां हर्यनुग्रहात् फलत्येव। मध्यमानां न्यूनं फलम्। अधमानामफलमेव। **गुणः** प्रयत्नचमत्कारः।

**अप्युपायेन तत्कार्यमुपदेष्टा पराक्रमः।**
**भूयिष्ठं कर्म योगेषु सर्व एव पराक्रमाः[1] ॥ ५४ ॥**

**अप्युपायेन** इत्यत्र **तत्** परपराभावनं **उपायेन** मकरव्यूहाद्युपायेन वा कार्यम्। **उपदेष्टा** अर्जुनस्य कृष्णवत् उपायोपदेष्टा। साम वा कार्यं, पराक्रमो वा कार्यः। **योगेषु** एतेषु त्रिविधेषूपायेषु **कर्म** पराक्रमाख्यं कर्म **भूयिष्ठं** श्रेष्ठम्। सर्व एव **पराक्रमाः** परानाक्रमन्तीति पराक्रमाः। **कर्म** सामर्थ्यम्।

**व्यसनं नाभिकाङ्क्षेत विनाशं वा युधिष्ठिर।**
**अपि सिन्धोर्गिरेर्वाऽपि किं पुनर्मर्त्यधर्मिणः ॥ ५६ ॥**

**व्यसनं नाभिकाङ्क्षेत** इत्यत्र अपारतया दृढतया च व्यसनविनाशा-योग्यस्य सिन्धोर्गिरेर्वाऽपि व्यसनं विनाशं च नाभिकाङ्क्षेत; मर्त्यधर्मिणः किं पुनरिति लोकधर्मः। इमं धर्ममुल्लङ्घ्य अस्मद्व्यसनविनाशकारिणो दुर्योधनस्य तावुभावप्यवश्यं कर्तव्याविति भावः॥

**उत्थानयुक्तः सततं परेषामन्तरेक्षणी[2]।**
**आनृण्यमाप्नोति नरः परस्यात्मन एवच ॥ ५७ ॥**

**उत्थानयुक्तः सततम्** इत्यत्र **उत्थानं** प्रयत्नः। **अन्तरेक्षणी** अव-काशदर्शीम्। **परस्य** परमात्मनः। **आत्मनः** स्वस्य।

---

१. $B_1$,$M_2$; BORI पृ. १०७; **'पराक्रमः'** इति कुं पाठः।
२. $K_3$ ; BORI पृ. १०७; **'परेषामन्तरैपणे'** इति कुं पाठः।

**न त्वेवात्माऽवमन्तव्यः पुरुषेण कदाचन ।**
**न ह्यात्मपरिभूतस्य भूतिर्भवति शोभना ॥ ५८ ॥**

**आत्मा** परमात्मा ।

**नीतिं बृहस्पतिप्रोक्तां भ्रातॄन्मेऽ(अ)ग्राहयत्पुरा ।**
**तेपां[1] सङ्कथमश्रौषमहमेतां तदा गृहे ॥ ६१ ॥**

**तेपां सङ्कथम्** इत्यत्र सम्यक्कथा यस्मिन् तं **सङ्कथं** विद्याप्रसङ्गम् ।

॥ इति द्वात्रिंशोऽध्यायः ॥

॥ द्रौपदीमतं समाप्तम् ॥

## ॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

**गोमायुनेव सिंहानां दुर्बलेन बलीयसाम् ।**
**आमिषं विघसाशेन तद्वद्राज्यं हि नो मतम् ॥ ४ ॥**

**आमिषं विघसाशेन** इत्यत्र [2]'विघसं भुक्तशेषं स्यात्' इति वचनात् भाण्डस्थमुर्वरितमन्नं, पत्रस्थमुच्छिष्टं चेति द्विविधमपि विघसमित्युच्यते । तत्राद्यं यजमानयोग्यम् । द्वितीयं शुनो योग्यम् । अतोऽत्र **विघसाशः** श्वा । **आमिषं** यज्ञयोग्यं मांसरूपं हविः ।

**धर्मलेशप्रतिच्छन्नः प्रभवं धर्मकामयोः ।**
**अर्थमुत्सृज्य किं राजन् दुःखेन परितप्यसे ॥ ५ ॥**

---

१. S; BORI पृ. १०७; **'तेपां सकाशादश्रौपं'** इति कुं पाठः ।
२. अ.को. २-७-२८

**धर्मलेशप्रतिच्छन्न** इत्यत्र धर्मलेशेन प्रतिच्छन्नाः तिरस्कृताः महाऽ-धर्माः येन त्वम् ।

**भवतोऽनवधानेन[१] राज्यं नः पश्यतां हृतम् ।**
**अहार्यमपि शक्रेण गुप्तं गाण्डीवधन्वना ॥ ६ ॥**

**भवतोऽनवधानेन** इत्यत्र 'प्रमादोऽनवधानता'[२] इत्यभिधानात् **अन-वधानेन** प्रमादेन, अविचारेणेत्यर्थः ।

**कुणीनामिव बिल्वानि पङ्गूनामिव धेनवः ।**
**हृतमैश्वर्यमस्माकं जीवतां भवतः कृते ॥ ७ ॥**

**कुणीनामिव बिल्वानि** इत्यत्र [३]'स्यादेडे बधिरः कुब्जे जडुलः कुकरे कुणिः' इत्यभिधानात् **कुणिः** कुत्सितकरः ।

**भवतः प्रियमित्येवं महद्व्यसनमीदृशम् ।**
**[४]धर्मकामप्रतीतस्य प्रतिपन्नाः स्म भारत ॥ ८ ॥**

**धर्मकामप्रतीतस्य** इत्यत्र धर्मस्य **कामः** कामना तेन **प्रतीतस्य** प्रसि-द्धस्य ।

**कर्शयामः स्वमित्राणि नन्दयामश्च शात्रवान् ।**
**आत्मानं भवतः शास्त्रे[५] नियम्य भरतर्षभ ॥ ९ ॥**

---

१. N,(K4,D1.3 missing); BORI पृ. १०८; **'नुविधानेन'** इति कुं.पाठः ।
२. अ.को. १-७-३०; ३. अ.को. २-६-४८
४. K7,B1,D2,S ; BORI पृ. १०८; **'धर्मकामे प्रतीतस्य'** इति कुं पाठः ।
५. BORI पृ. १०८; **'शास्त्रैर्नियम्य'** इति कुं पाठः ।

**आत्मानं भवतः शास्त्र** इत्यत्र भवतः **शास्त्रे** शासने ।

**यद्वयं हि तदैवैतान्धार्तराष्ट्रान्निहन्म हि ।**[१]
**भवतः शास्त्रमादाय तन्नस्तपति दुष्कृतम्** ॥ १० ॥

**तद्वयं हि तदैवैतान् धार्तराष्ट्रान्निहन्म हि** इत्यत्र **तदैव** अक्षक्रीडा-काल एव **एतान्** धार्तराष्ट्रान् **तत्** द्यूतं च निहन्म हि । भवतः **शास्त्रं** शासनं आज्ञामास्थाय **यद्दुष्कृतं** कर्तव्यस्याकरणं, तत् नः तपतीति योजना ।

**अथैनामन्ववेक्षस्व मृगचर्यामिवात्मनः ।**
**अवीराचरितां राजन्नबलस्थैर्निषेविताम्** ॥ ११ ॥

**अथैनाम्** इत्यत्र मृगचर्यामिव विद्यमानां **एनां** वनसञ्चाररूप-प्रवृत्तिम् ।

**भवान्धर्मो धर्म इति सततं व्रतकर्शितः ।**
**कच्चिद्राजन्न निर्वेदादापन्नः क्लीबजीविकाम्** ॥ १३ ॥

**कच्चिद्राजन्** इत्यत्र **निर्वेदात्** राज्ये वैराग्यात् तामिमां क्लीबजीविकां आपन्नः कच्चिदिति योजना ।

**दुर्मनुष्या हि निर्वेदमफलं सर्वघातकम् ।**
**अशक्ताः श्रियमाहर्तुमात्मनः कुर्वते प्रियम्** ॥ १४ ॥

**अशक्ताः श्रियम्** इत्यत्र आत्मनः श्रियमाहर्तुमशक्ताः परस्यैव प्रियं कुर्वन्ति ।

---

१. K$_1$,D$_2$,D$_c$,S(except T3,G3) ; BORI पृ. १०८; **'न'** इति कुं पाठः ।

**अस्मानमी धार्तराष्ट्राः क्षममाणानहिंसतः ।**
**अशक्तानेव मन्यन्ते तद्दुःखं नाहवे वधः ॥ १६ ॥**

**तद्दुःखं नाहवे वध** इत्यत्र **नाहवे** युद्धाभावेऽपि ।

**तत्रचेद्युध्यमानानामजिह्ममनिवर्तिनाम् ।**
**सर्वशो हि वधः श्रेयान्प्रेत्य लोकां ल्लभेमहि ॥ १७ ॥**

**तत्र चेत्** इत्यत्र **तत्र** युद्धे **अजिह्मं** अकुटिलं यथा भवति तथा युध्यमानानां वधश्चेदिति सम्बन्धः ।

**सर्वथा कार्यमेतन्नः स्वधर्ममनुतिष्ठताम् ।**
**काङ्क्षतां विपुलां कीर्तिं वैरं प्रतिचिकीर्षताम् ॥ १९ ॥**

**सर्वथा कार्यम्** इत्यत्र एवं **प्रतिचिकीर्षतां** प्रतिकर्तुं विपरीतं कर्तुमिच्छतां दुर्योधनादीनां विषये वैरं सर्वथा नः कार्यमिति सम्बन्धः ।

**आत्मार्थं युध्यमानानां जीविते कृत्यलक्षणे ।**
**अन्यैरपि हृते राज्ये प्रशंसैव न गर्हणा ॥ २० ॥**

**आत्मार्थं युध्यमानानाम्** इत्यत्र **कृत्यलक्षणे** कर्तुं योग्यस्य युद्धस्य लक्षणे विदिते सति, आत्मार्थं **युध्यमानानां** पुरुषाणां राज्ये अन्यैः हत्वा हृतेऽपि प्रशंसैव; गर्हणा नेति योजना ।

**कर्शितार्थो[१] हि यो धर्मो विप्राणामात्मनस्तथा ।**
**व्यसनं नाम तद्राजन्नधर्मः स कुवर्त्म तत् ॥ २१ ॥**

---

१. **'कर्शनार्थो'** इति कुं पाठः ।

**कर्शितार्थो हि** इत्यत्र **कर्शितः** नाशितः अर्थो येन स तथोक्तः ।

**यस्य धर्मो हि धर्मार्थक्लेशभाक्[1] न स पण्डितः ।**
**न स धर्मस्य वेदार्थं सूर्यस्यान्धः प्रभामिव ॥ २३ ॥**

**यस्य धर्मो हि** इत्यत्र **धर्मः** अल्पो धर्मः **धर्मार्थक्लेशभाक्** बहुतर-धर्मार्थक्लेशभाक् । **धर्मस्य** धर्मशास्त्रस्य ।

**यस्य चार्थार्थ एवार्थः स च नार्थस्य कोविदः ।**
**रक्ष्यते भृतकः पुण्यं यथा स्यात्तादृगेव सः ॥ २४ ॥**

**यस्य च** इत्यत्र यस्य अर्थः अर्थार्थ एव वृद्ध्यादिना **पुनः** पुनरर्थ-सम्पत्त्यर्थ एव । **भृतकः** 'भृतको भृतिभुक्'[2] इति वचनात् धर्मक्रयेण भोजनं कुर्वन् आर्जकः पुण्यं यथा रक्षते, **सः** अर्थनार्थार्जकोऽपि तादृगेव स्यात् ।

**अतिवेलं हि योऽर्थार्थी नेतरावनुतिष्ठति ।**
**स वध्यः सर्वभूतानां ब्रह्महेव जुगुप्सितः ॥ २५ ॥**

**अतिवेलम्** इत्यत्र **अतिवेलम्** अत्यन्तम् । **इतरौ** धर्मकामौ ।

**तस्य धर्मार्थहीनस्य कामान्ते निधनं ध्रुवम् ।**
**[3]क्रीडतो रममाणस्य मीनस्येवाम्भसः क्षये ॥ २७ ॥**

**क्रीडतो रममाणस्य** इत्यत्र **क्रीडतः** इतस्ततश्चेष्टां कुर्वतः ।

---

१. **'धर्मार्थ क्लेशभाङ्'** इति कुं पाठः ।

२. अ.को. २-१०-२५

३. S ; BORI पृ. ११०; **'कामतो'** इति कुं पाठः ।

**तस्माद्धर्मार्थयोर्नित्यं न प्रमान्यन्ति पण्डिताः ।**
**प्रकृतिस्थो[१] हि कामस्य पावकस्यारणिर्यथा ॥ २८ ॥**

**प्रकृतिस्थो हि** इत्यत्र प्रकृतितया स्थितः **प्रकृतिस्थः** पुरुषः ।

**सर्वथा धर्ममूलोऽर्थो धर्मश्चार्थपरिग्रहः ।**
**इतरेतरयोर्नीतौ विद्धि मेघोदधी यथा ॥ २९ ॥**

धर्मः मूलं यस्य **धर्ममूलः** । अर्थात् **ग्रहः** ग्रहणं यस्य स तथोक्तः । **इतरेतरयोर्नीतौ** इतरेतरयोः सकाशान्नीतौ प्राप्तौ ।

**द्रव्यार्थस्पर्शसंयोगे या प्रीतिरुपजायते ।**
**स कामश्चित्तसङ्कल्पः शरीरं नास्य दृश्यते ॥ ३० ॥**

**द्रव्यार्थस्पर्शसंयोग** इत्यत्र **द्रव्यं** परिमलादिद्रव्यम् । **अर्थः** धनम् । स्पृश्यत इति **स्पर्शो** वस्त्रवनितादिकम् । **सः** मनःप्रसादः चित्तस्य सङ्कल्पो यस्मिन् असौ काम्यत इति **कामः** पुरुषार्थः । **अस्य** द्रव्याख्य-पुरुषार्थकामस्य शरीरं न दृश्यत इति योजना ।

**न हि कामेन कामोऽन्यः सिध्यते फलमेव तत् ।**
**उपयोगात्फलस्यैव काष्ठाद्भस्मेव पण्डितः ॥ ३२ ॥**

**उपयोगात्फलस्यैव** इत्यत्र फलस्य **उपयोगात्** भक्षणादिव । एक-फलभक्षणानन्तरं तस्मात्फलात् फलान्तरं यथा नास्ति तथेत्यर्थः । काष्ठात् **भस्मेव** भस्मनि जाते पुनस्तस्मादेव काष्ठात् यथा काष्ठान्तरं न ।

**इमाञ्शकुनकान् राजन् हन्ति वैतंसिको यथा ।**
**एतद्रूपमधर्मस्य भूतेषु च विहिंसनम् ॥ ३३ ॥**

---

१. $T_1$; BORI पृ. ११०; **'प्रकृतिः सा हि'** इति कुं पाठः ।

'वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयम्'[१] इत्यमरः । मांसोपजीवी वैतंसिकः **शकुनान्** पक्षिणः यथा हन्ति, तथा तस्मिन्मांसे भुक्ते क्रीते वा पुनस्तस्मादेव मांसात् मांसान्तरं यथा न लभते, तथा पण्डितः कामात् कामान्तरं न लभते । **अधर्मस्य** अधर्मकरणस्यापि **एतत्** विहितकामकरणमेव **रूपं** रूपकमुपमा । स्वस्त्रीगमनादिव परस्त्रीगमनादपि तात्कालिकमेव सुखम्, न तु पुनः सुखान्तरसाधकमिति भावः ।

**कामाल्लोभाच्च धर्मस्य प्रवृत्तिं यो न पश्यति ।**
**स वध्यः सर्वभूतानां प्रेत्य चेह च दुर्मतिः** ॥ ३४ ॥

**व्यक्तं ते विदितो राजन्नर्थो द्रव्यपरिग्रहः ।**
**प्रकृतिं चापि वेत्थास्य विकृतिं चापि भूयसीम्** ॥ ३५ ॥

**व्यक्तं ते विदितो राजन्** इत्यत्र **द्रव्यपरिग्रहः** गजतुरगादिद्रव्यान्तरपरिग्रहवान् । **अस्य** अर्थस्य **प्रकृतिं** मूलकारणम्, स्वपित्रार्जितभूमिमित्यर्थः । **भूयसीं** भूयोऽपि विद्यमानां प्रकृतिं प्र प्रकर्षस्य, अभिवर्धनस्येत्यर्थः । **कृतिं** करणम् ।

**तस्य नाशं विनाशं वा जरया मरणेन वा ।**
**अनर्थं**[२] **इति मन्यन्ते सोयमस्मासु वर्तते** ॥ ३६ ॥

**तस्य** अर्थस्य **नाशम्** आशाया अप्यभावः, नसमासोऽयं, नैराश्यमित्यर्थः । जरया मरणेन वा विनाशं च अनर्थमिति मन्यन्ते ।

---

१. अ.को. २-१०-१४
२. BORI पृ. १११; 'अनर्थ' इति कुं पाठः ।

**धर्मं पूर्वे धनं मध्ये जघन्ये काममाचरेत् ।**
**अहन्यनुचरेदेवमेष शास्त्रकृतो विधिः ॥ ४० ॥**

**धर्मं पूर्वे** इत्यत्र **पूर्वे** दिवसस्य पूर्वभागे, अरुणोदयमारभ्य मध्याह्न पर्यन्तं धर्मं **अनु** अनुसृत्य चरेत् । **मध्ये** मध्याह्नमारभ्य रात्रेः प्रथम-यामपर्यन्तं **धनं अनु** अनुसृत्य चरेत् । **जघन्ये** तदुपरितनकाले काममिति विवेकः ।

**मोक्षो वा परमं श्रेय एषराजन्सुखार्थिनाम् ।**
**प्राप्तं[1] वा बुद्धिमास्थाय सोपायं[2] कुरुनन्दन ॥ ४३ ॥**
**तद्वाऽऽशु क्रियतां राजन् प्राप्तिर्वाप्यधिगम्यताम् ।**
**जीवितं ह्यातुरस्यैव[3] दुःखमन्तरवर्तिनः ॥ ४४ ॥**

**प्राप्तं** स्वस्वकाले प्राप्तं **सोपायं** तत्तदुपायेन सहितं **तत्** धर्मादिकं आशु क्रियतामिति सम्बन्धः। **जीवितं ह्यातुरस्यैव** इत्यत्र **अन्तरवर्तिनः** धर्मादीन् विना वर्तिनः ।

**न चार्थो भैक्ष्यचर्येण नापि क्लैब्येन कर्हिचित् ।**
**वेत्तुं शक्यस्तथा राजन्केवलं धर्मबुद्धिना ॥ ४९ ॥**

**न चार्थो भैक्षचर्येण** इत्यत्र **क्लैब्येन** क्लीबवत्तूष्णीमवस्थानेन 'विद्ट लाभे' इति धातोः **वेत्तुं** लब्धुम् ।

---

१. S,(except M2); BORI पृ. १११; **'प्राप्तिः'** इति कुं पाठः ।
२. BORI पृ. १११; **'सोपायां'** इति कुं पाठः ।
३. **'इव'** इति कुं पाठः ।

**उदारमेव विद्वांसो धर्मं प्राहुर्मनीषिणः ।**
**उदारं प्रतिपद्यस्व नावरे स्थातुमर्हसि ॥ ५३ ॥**

**उदारमेव** इत्यत्र **उदारम्** उत्कृष्टं स्वस्वविहितवर्तनम् । **अवरे** अविहितवर्तने ।

**अनुबुध्यस्व राजेन्द्र वेत्थ धर्मान्सनातनान् ।**
**क्रूरकर्माऽभिजातोऽसि यस्मादुद्विजते जनः ॥ ५४ ॥**

**क्रूरकर्माभिजातोऽसि** इत्यत्र **क्रूरं** दुष्टनिग्रहाख्यं कर्म यस्मिन् तद्राजकुलं **क्रूरकर्म** इत्युच्यते, तस्मिन् जातः असि ।

**न हि केवल[१]धर्मार्थं पृथिवीं जातु कश्चन ।**
**पार्थिवो व्यजयद्राजन्न भूतिं न पुनः श्रियम् ॥ ५८ ॥**

**न हि केवलधर्मार्थम्** इत्यत्र यः पार्थिवः केवलधर्मेण **अभूतिं** अमङ्गलमजयत् । पुनः श्रियं नाजयत् शत्रुकरादपहृत्य स्ववशां नाकरोत्, सोऽपि पृथिवीं न शास्ति ।

**[२]जिह्मं दत्वा बहूनां हि क्षुद्राणां लुब्धचेतसाम् ।**
**निकृत्या लभते राज्यमाहारमिव शल्यकः ॥ ५९ ॥**

**जिह्मं दत्वा** इत्यत्र लुब्धचेतसां **क्षुद्राणां** नीचानां **जिह्मं** कपटवचनं दत्वा निकृत्याऽपि राज्यं यो राजा लभते, स एव पृथिवीं शास्तीति पूर्वेण सम्बन्धः । **शल्यकः** शतसूचीभिराच्छादितसर्वाङ्गत्वात् शतसूचिसंज्ञितः पक्षिविशेषः ।

---

१. **'धर्मात्मा'** इति कुं पाठः ।; २. S: BORI पृ.११२; **'जिह्मां'** इति कुं पाठः

**एवं बलवतां[1] सर्वमतिबुद्ध्या[2] महीपते ।**
**जहि शत्रून्महाबाहो परां निकृतिमास्थितान् ॥ ६१ ॥**

**एवं बलवताम्** इत्यत्र **अतिबुद्ध्या** अतिशयितबुद्ध्या **सर्वं** कार्यं भवति ।

**सत्वेन कुरुते युद्धं राजन् सुबलवानपि ।**
**न प्रमाणे[3] तु नोत्साहात्सत्वस्थो भव पाण्डव ॥ ६३ ॥**

**सत्वेन कुरुते युद्धम्** इत्यत्र सुबलवान् **प्रमाणे** धर्मशास्त्रे उत्साहादपि दुष्टान् प्रति युद्धं न कुरुते । गजतुरगादिसेनासन्नाहादपि उत्साहात् युद्धं न कुरुते, किन्तु सत्वेनैव युद्धं कुरुते । अतस्त्वमपि सत्वस्थो भव ।

**सत्वं हि मूलमर्थस्य वितथं यदतोऽन्यथा ।**
**न तु प्रसक्तं भवति वृक्षच्छायेव हैमनी ॥ ६४ ॥**

**सत्वं हि मूलमर्थस्य** इत्यत्र **प्रसक्तं** प्रकर्षेण सक्तं स्थिरम् । सत्वाभावे अर्थार्जनमेव न । कथञ्चिदार्जने वृक्षच्छायावत् नित्यदा स्थिरं न भवेदिति भावः ।

**अर्थत्यागोऽपि कार्यः स्यादर्थं श्रेयांसमिच्छता ।**
**बीजौपम्येन कौन्तेय मा ते भूदत्र संशयः ॥ ६५ ॥**

**अर्थत्याग** इत्यत्र **श्रेयांसं** भूयांसम् । बहुतरव्रीहिलाभाय भूमावल्पबीजावापवत् बहुधनलाभाय अल्पार्थत्यागोऽपि कार्य इत्यर्थः ।

---

१. $Ś_1, K_1, D_c, D_2$; BORI पृ. ११३; **'बलवतः'** इति कुं पाठः ।
२. **'-मिति बुद्ध्वा'** इति कुं पाठः । ; ३. **'प्रमाणेन'** इति कुं पाठः ।

**अर्थेन तु समोऽनर्थो यत्र लब्धो धनोदयः[१] ।**
**न तत्र विपणं[२] कार्यं करकण्डूयनं[३] हि तत् ॥ ६६ ॥**

**अर्थेन तु सम** इत्यत्र **यत्र** द्यूतादौ सकृत् धनोदयो लब्धः । पुनरर्थेन समः, सम इत्युपलक्षणम् । अधिकोऽप्यस्ति । **विपणं** अक्षग्लहं **करकण्डूयनं** सकृत्सुखदायकं, पश्चात् महादुःखकारणम् इत्यर्थः ।

**एवमेव मनुष्येन्द्र धर्मं त्यक्त्वाऽल्पकं नरः ।**
**बृहन्तं धर्ममाप्नोति स बुद्ध इति निश्चितम् ॥ ६७ ॥**

**एवमेव** इत्यत्र **एवं** बीजावापवत् ।

**अमित्रं मित्रसम्पन्नं मित्रैर्भिन्दन्ति पण्डिताः ।**
**भिन्नैर्मित्रैः परित्यक्तं दुर्बलं कुरुते वशे ॥ ६८ ॥**

**मित्रैर्भिन्दन्ति** तैर्मित्रैः सह भेदं कुर्वन्ति ।

**सत्वे[४] न कुरुते युद्धं राजन्सुबलवानपि ।**
**नोद्यमेन स[५] मात्राभिः सर्वाः स्वीकुरुते प्रजाः ॥ ६९ ॥**

**सत्वे न कुरुते युद्धम्** इत्यत्र यः सत्वे सत्यपि । सः **मात्राभिः** अंशैर्दत्तैरित्यर्थः । नञः प्रत्येकं सम्बन्धः ।

**यथा राजन् प्रजाः सर्वाः सूर्यः पाति गभस्तिभिः ।**
**हन्ति चैव तथैव त्वं सदृशः सवितुर्भव ॥ ७१ ॥**

---

१. T1,G1,M; BORI पृ. ११३; **'महोदयः'** इति कुं. पाठः ।
२. **'त्रिपणः कार्यः'** इति कुं पाठः ।; ३. **'खर'** इति कुं पाठः ।
४. **'सत्वेन'** इति कुं पाठः ।; ४. **'न होत्राभिः'** इति कुं पाठः ।

**यथा राजन्** इत्यत्र सायं प्रातः पाति । मध्याह्ने औष्ण्याद्धन्ति ।

**अपेयात्किल भा सूर्याल्लक्ष्मीश्चन्द्रमसस्तथा ।**
**इति लोको व्यवसितो दृष्ट्वेमां भवतो व्यथाम्** ॥ ७४ ॥

**अपेयात्** गच्छेत् ।

**श्वदृतौ क्षीरमासक्तं ब्रह्म वा वृपले यथा ।**
**सत्यं स्तेने बलं नार्यां राज्यं दुर्योधने तथा** ॥ ८१ ॥

**श्वदृतौ** शुनश्चर्मकृतपात्रविशेषे ।

**आशीविषसमैर्वीरैर्मरुद्भिरिव वृत्रहा ।**
**अमित्रांस्तेजसा मृद्नन् असुरेभ्य[१] इवारिहा ।**
**श्रियमादत्स्व कौन्तेय धार्तराष्ट्रान् महाबल** ॥ ८६ ॥

**अरिहा अरिणा** चक्रेण **अरीन्** शत्रून् हन्तीति **अरिहा** नारायणः, स इव ।

**सृञ्जयैः सह कौन्तेयैः[२] वृष्णीनां वृषभेण च ।**
**कथंस्विद्युधि कौन्तेय न राज्यं प्राप्नुयामहे** ॥ ८९ ॥

**सृञ्जयैः सह कौन्तेयैः** इत्यत्र **कौन्तेयैः** कुन्त्याः सम्बन्धिभिः कुन्तिभोजविषयस्थैरित्यर्थः ।

॥ इति त्रयस्त्रिंशोऽध्यायः ॥

---

१. '**असुरानिव वृत्रहा**' इति कुं पाठः ।
२. '**कैकेयैः**' इति कुं पाठः ।

## ॥ अथ चतुस्त्रिंशोऽध्यायः ॥

[1]**क्षरंस्तु दृष्ट्वा शकुनेर्यथावत्**
**[2]कामानुलोमानयुजो युजश्च ।**
**शक्यो नियन्तुमभविष्यदात्मा**
**मन्युस्तु हन्यात्पुरुषस्य धैर्यम्** ॥ ५ ॥

**क्षरंस्तु दृष्ट्वा** इत्यत्र यथावत् शकुनेः **कामानुलोमान्** कामानुकूलान् **युजः** क्रीडास्थाने सम्बन्धं कुर्वाणान् **अयुजः** ममानुकूलतया सम्बन्धमकुर्वाणांश्च अक्षान् दृष्ट्वा **क्षरन्** हर्षक्षयं प्राप्नुवन् ।

**त्वं चापि तद्वेत्थ धनञ्जयश्च**
**पुनर्द्यूतायागतास्तां सभां नः ।**
**यन्माऽब्रवीद्धृतराष्ट्रस्य पुत्र**
**एकग्लहार्थं भरतानां समक्षम्** ॥ ८ ॥

तत् भविष्यत् द्यूतम् । **नः** सभामागतानां सताम् ।

**त्वां चेच्छुत्वा तात तथा चरन्तं**
**[3]आबुद्ध्यन्ते भारतानां चराश्च ।**
**अन्यांश्चरेथास्तावतोऽब्दांस्तथा त्वं**
**निश्चित्य तत्प्रतिजानीहि पार्थ** ॥ १० ॥

**आबुध्यन्ते** यदि आबुध्यन्ते ।

---

१. '**अक्षांश्च**' इति कुं पाठः ।
२. BORI पृ. ११६; '**कामानुकूलानयुजो**' इति कुं पाठः ।
३. '**अवभोत्स्यन्ते**' इति कुं पाठः ।

**[1]चरैश्च नोऽनाविदितः कालमेतं**
**युक्तो राजन् मोहयित्वा मदीयान् ।**
**ब्रवीमि सत्यं कुरुसंसदीह**
**तवैव ता भारत पञ्च नद्यः ॥ ११ ॥**

**चरैश्च नोऽनाविदित** इत्यत्र **मदीयान्** चरान् **मोहयित्वा** वञ्चयित्वा नः चरैः **अनाविदितः** अज्ञातः **युक्तः** भ्रातृभिर्युक्तः **एतम्** अज्ञातवासकालं यदि चरेथाः । **पञ्चनद्यः** परशुरामकृतस्यमन्तपञ्चकाख्यपञ्चनदसम्बन्धिन्यः ।

**तदैव चेद्वीरकर्माकरिष्यो**
**यदा द्यूते परिघं पर्यमृक्षः ।**
**बाहू दिधक्षन्वारितः फल्गुनेन**
**किं दुष्कृतं भीम तदाऽभविष्यत् ॥ १६ ॥**

**तदैव चेद्वीर तथा करिष्य** इत्यत्र यदा त्वं द्यूते परिघं **पर्यमृक्षः** परामर्शमकरोः, 'मृश परामर्शे' इति धातोः लुङीदं रूपम् । यदा बाहू दिधक्षन् फल्गुनेन वारितः । हे वीर तदैव चेत् यथा त्वमात्थ तथा करिष्ये । तदा इदानीं क्रियमाणसत्वे तदैव द्यूतकाले कृते सति **दुष्कृतं** अक्षक्रीडाख्यं दुष्कर्म करिष्यन् कः । अस्मासु दुष्कृतमपराधं च करिष्यन् कः, न कोऽपि ।

**भूयोपि दुःखं मम भीमसेन**
**दूये विषस्येव रसं [2]विदित्वा ।**

---

१. K1.2; BORI पृ. ११७; **'चरैश्चेन्नो विदितः'** इति कुं पाठः ।
२. T2,G3,K2.3,D; BORI पृ. ११८; **'हि पीत्वा'** इति कुं पाठः ।

**यद्याज्ञसेनीं परिक्लिश्यमानां**
**सन्दृश्य तत्क्षान्तमिति स्म भीम ॥ १८ ॥**

**विपस्येव रसम्** इत्यत्र **विदित्वेव** लब्ध्वेवेत्यर्थः । याज्ञसेनीं प्रति यत् क्षान्तं, तद्दुःखं स्मृत्वा भूयोऽपि दूये ।

**न त्वद्य शक्यं भरतप्रवीर**
**कृत्वा यदुक्तं कुरुवीरमध्ये ।**
**कालं प्रतीक्षस्व सुखोदयाय**
**पाकं फलानामिव बीजवापः ॥ १९ ॥**

**न त्वद्य शक्यम्** इत्यत्र **शक्यं** त्यक्तुं शक्यम् । **कृत्वा** समयं कृत्वा ।

**[१]तथापि पूर्वं निकृतो हि क्षुद्रैः वैरं सपुष्पं सफलं विदित्वा ।**
**महागुणं हरति हि पौरुषेण तदा वीरो जीवति जीवलोके ॥२०॥**

**तथापि पूर्वं निकृतो हि क्षुद्रैः** इत्यत्र **सपुष्पं** प्राग्वाग्विवादादिपुष्पसहितं **सफलं** अन्ते प्राणापहाराख्यफलसहितं वैरं पूर्वमेव विवेकेन विदित्वा यो वीरः पौरुषेण विद्यमानेनापि **महागुणं** क्षमाख्यमहागुणं **हरति** आहरति ।

**मम प्रतिज्ञां च निबोध सत्यां[२]**
**मुनेर्धर्मादमृतात् जीविताच्च ।**
**राज्यं च पुत्राश्च यशो धनं च**
**सर्वं न सत्यस्य कलामुपैति ॥ २२ ॥**

१. 'यदाहि पूर्वं निकृतो निकृन्ते द्वैरं' इति कुं पाठः ।
२. 'वृणे सत्यममृतात्' इति कुं पाठः ।

**मम प्रतिज्ञाम्** इत्यत्र मुनेर्धर्मात्, **अमृतात्** मोक्षात्, जीविताच्च कारणात्, मुनिधर्मत्वात् मोक्षदत्वात् जीवनसाफल्यहेतुत्वाच्चेति यावत्। मम प्रतिज्ञां सत्यां निबोध।

**॥ इति चतुस्त्रिंशोऽध्यायः ॥**

## ॥ अथ पञ्चत्रिंशोऽध्यायः ॥

**भीमसेन उवाच –**

**सन्धिं कृत्वैव कालेन ह्यन्तकेन पतत्रिणा।**
**अनन्तेनाप्रमेयेण स्त्रोतसा सर्वहारिणा** ॥ १ ॥

**सन्धिं कृत्वा** इत्यत्र **पतत्रिणा** पक्षिवत् सर्वत्र भ्रमता, **स्त्रोतसा** नदीप्रवाहवत् शीघ्रगामिना, प्रत्यक्षं **सर्वहारिणा** नरतुरगादिसर्वप्राणिनां प्राणहारिणा **कालेन** कालनामकेन **अन्तकेन** मृत्युना **सन्धिं कृत्वा** तद्वशो भूत्वेत्यर्थः।

**प्रत्यक्षं मन्यसे कालं मर्त्यः सन्कालबन्धनः।**
**फेनधर्मा महाराज फलधर्मा तथैव च** ॥ २ ॥

**कालं** बहुकालं जीवामीति मन्यसे। **फेनधर्मा** फेनवच्छीघ्रं मरणशीलः, फलवत्कालान्तरे मरणशीलः **फलधर्मा** कालं मन्यसे इति पूर्वेणान्वयः।

**निमेषादपि कौन्तेय यस्यायुरपचीयते।**
**सूच्येवाञ्जनचूर्णानि किमिति प्रतिपालयेत्** ॥ ३ ॥

सूच्या अञ्जनचूर्णानि वेति क्षणलवादिषु ईषदीषदायुःक्षयस्योपमा । **प्रतिपालयेत्** कालं प्रतिपालयेत् ।

**प्रतीक्ष्यमाणः कालो नः समा राजंस्त्रयोदश ।**
**आयुषोपचयं कृत्वा मरणायोपनेष्यति ॥ ५ ॥**

**कालः** मृत्युः ।

**यो न याति प्रसङ्ख्यानमस्पष्टोऽभूतिवर्धनः ।**[1]
**अयातयित्वा वैराणि सोऽवसीदति गौरिव ॥ ७ ॥**

**यो न याति** इत्यत्र प्रकृष्टेषु सङ्ख्यानं प्रसङ्ख्यानम् । अभूतिवर्धन इति पदच्छेदः ।

**यो न यातयते वैरमल्पसत्वोद्यमः पुमान् ।**
**अफलं जन्म तस्याहं मन्ये दुर्जातजीविनः ॥ ८ ॥**

**यो न यातयत** इत्यत्र **न यातयते** स्ववैरिषु न प्रापयति ।

**हैरण्यौ भवतो बाहू श्रुतिर्भवति पार्थिवी ।**
**हत्वा द्विषन्तं सङ्ग्रामे भुङ्क्ष्व बाहुजितं वसु ॥ ९ ॥**

**हैरण्यो भवत** इत्यत्र **हैरण्यः** हिरण्यसम्बन्धी बहुसुवर्णदातेत्यर्थः । **श्रुतिः** कीर्तिः भवतीति उभयत्रापि सम्बन्धः ।

**हत्वा चेत्[2] पुरुषो राजन्निकर्तारमरिंदम ।**
**अह्नाय नरकं गच्छेत् स्वर्गेणास्य स सम्मितः ॥ १० ॥**

---

१. 'भूमिवर्धनः' इति कुं पाठः ।; २. BORI पृ. ११९; 'वै' इति कुं पाठः ।

**हत्वा चेत्** इत्यत्र **निकर्तारं** वैरिणं हत्वा चेत् स्वर्गेण प्राप्तेन **वसु-सम्मितः** वसूनां सम्मितो भवति । नो चेत् **अह्नाय** शीघ्रं नरकं गच्छेत् ।

**अयं च पार्थो बीभत्सुर्वरिष्ठो ज्याविकर्षणे ।**
**आस्ते परमसन्तप्तो [१]नुन्नः सिंह इवाशये** ॥ १२ ॥

**आस्ते परमसन्तप्त** इत्यत्र [२]'नुत्तनुन्नास्तनिष्ठ्यूतविद्धक्षिप्तेरिताः समा' इत्यभिधानात् **नुन्नः** शरेण विद्धः ।

**[३]योग्यमेकोऽनुमीयेतत्सर्वाँल्लोके राजन्धनुर्भृतः ।**
**सोऽयमात्मजमूष्माणं महाहस्तीव यच्छति** ॥ १३ ॥

**योऽयमेक** इत्यत्र सर्वान् धनुर्भृतः **अनु** प्रति एक एव **मीयेत** 'माङ्माने' इति धातोः प्रमाणीक्रियेत, प्रमणीकर्तुमलमित्यर्थः । **ऊष्माणं** उष्णश्वासम् ।

**सर्वे तेऽप्रियमिच्छन्ति बान्धवाः सह सृञ्जयैः ।**
**[४]इयमेका च सन्तप्ता माता च प्रतिविन्ध्यतः** ॥ १५ ॥

**इयमेका च** इत्यत्र **प्रतिविन्ध्यतः** प्रतिविन्ध्यस्य **माता** द्रौपदी ।

**शीलदोषाद्घृणाविष्ट आनृशंस्यात्परन्तप ।**
**क्लेशांस्तितिक्षसे राजन्नान्यः कश्चित्प्रशंसति** ॥ १८ ॥

**शीलदोषान्** मार्दवाख्यस्वभावदोषान् । यां तितिक्षाम् ।

---

१. $S_1$,$K_{1\text{-}4m}$; BORI पृ. ११९; **'नूनं'** इति कुं पाठः ।
२. अ.को. ३-१-८७ ; २. **'योऽयमेको नुदे'** इति कुं पाठः ।
४. **'अहमेकश्च सन्तप्तो'** इति कुं पाठः ।

**घृणी ब्राह्मणरूपोऽसि कथं क्षत्रेष्वजायथाः ।**
**अस्यां हि योनौ जायन्ते प्रायशः क्रूरबुद्धयः ॥ २० ॥**

**अस्यां** क्षत्रसम्बन्धिन्याम् ।

**अश्रौषीस्त्वं राजधर्मान्यथा वै मनुरब्रवीत् ।**
**क्रूरान्निकृतिसंपन्ना[१] अभितो नाशमात्मकान् ॥ २१ ॥**

**अभितो नाशमात्मकान्** इत्यत्र **आ** समन्ताच्छमात्मका न भवन्तीति **नाशमात्मकाः** तान् राजधर्मानिति पूर्वेण सम्बन्धः ।

**धार्तराष्ट्रान् महाराज क्षमसे किं दुरात्मनः ।**
**कर्तव्ये पुरुषव्याघ्र किमास्से पीठसर्पवत् ॥ २२ ॥**

**पीठसर्पवत्** पीठाकारसर्पवत् ।

**तृणानां मुष्टिनैकेन हिमवन्तं च पर्वतम् ।**
**छन्नमिच्छसि कौन्तेय योऽस्मान्[२]सम्मर्तुमिच्छसि ॥ २३ ॥**

**छन्नमिच्छसि** इत्यत्र **छन्नं** छन्नं कर्तुम् । **मर्तुं** मारयितुम् ।

**अज्ञातचर्यागूढेन पृथिव्यां विश्रुतेन च ।**
**दिवीव पार्थ सूर्येण न शक्याऽऽचरितुं त्वया ॥ २४ ॥**

**अज्ञातचर्यागूढेन** अज्ञातचर्यया गूढेन ।

**बृहत्साल [३]इवावापे शाखापुष्पपलाशवान् ।**
**हस्ती श्वेत इवाज्ञातः कथं जिष्णुश्चरिष्यति ॥ २५ ॥**

---

१. **'न्विहितानशमात्मकान्'** इति कुं पाठः ।; २. **'सम्वर्तुमिच्छसि'** इति कुं.पा
३. **'इवानूपे'** इति कुं पाठः ।

**बृहत्साल इवावाप** इत्यत्र [१] 'अवाल आलवालः स्यादावापः स्थानकं तथा' इत्यभिधानात् **आवापे** आलवाले **श्वेतः हस्ती** ऐरावतः ।

**न हि तेऽप्युपशाम्यन्ति [२] निकृतीनां निराकृताः ।**
**अवश्यं तैर्निकर्तव्यमस्माकं तत्प्रियैषिभिः** ॥ ३० ॥

**न हि तेऽप्युपशाम्यन्ति** इत्यत्र निकृतीनां दर्शनेन न निराकृताः । **तत्प्रियैषिभिः** दुर्योधनप्रियैषिभिः अस्माकं कर्तव्यं अपकर्तव्यम् ।

**अस्ति मासः प्रतिनिधिर्यथा प्राहुर्मनीषिणः ।**
**[३] पूतिकामिव सोमस्य तथेदं क्रियतामिति** ॥ ३३ ॥

**पूतिकामिव** इत्यत्र **पूतिकां** पूतिकाख्यलतां अमृतवल्लीमित्यर्थः । **सोमस्य** सोमलतायाः । 'सोमाभावे पूतीकाग्रहणम्' इति वचनात् सोमलतायाः प्रतिनिधिभूतां पूतिकामिवेत्यर्थः ।

**अथवाऽनडुहे राजन्साधवे साधुवाहिने ।**
**सौहित्यदानादेतस्मादेनसः प्रतिमुच्यते** ॥३४॥३५॥

**अथवा** इत्यत्र साधवेऽपि साधुवाहिन इति सम्बन्धः ।

**॥ इति पञ्चत्रिंशोऽध्यायः ॥**

## ॥ अथ षट्त्रिंशोऽध्यायः ॥

**श्रुता मे राजधर्माश्च वर्णानां च पृथक्पृथक् ।**
**आयत्यां च [४] तदात्ये च यः पश्यति स पश्यति** ॥ २ ॥

---

१. अ.को. १-१०-२९ ; २. **'निकृता वा'** इति कुं पाठः ।
३. $B_{2,3}$;BORI पृ. १२१; **'पूतिकानिव'** इति कुं पाठः ।
४. **'तदात्वे'** इति कुं पाठः ।

**आयत्यां च तदात्ये च** इत्यत्र **आयत्याम्** आये अतिरतिक्रमः तत्सम्बन्धी अत्ययः आयतिः । **तस्याः** आयतेः **आत्ये** अत्यये नाश इत्यर्थः । तं राजधर्मं यः पश्यति स एव पश्यति ।

**स मुहूर्तमिव ध्यात्वा विनिश्चित्येतिकृत्यताम् ।**
**भीमसेनमिदं वाक्यमपदान्तरमब्रवीत्** ॥ ४ ॥

**अपदान्तरमब्रवीत्** इत्यत्र **अपदान्तरं** प्रत्युत्तररहितम् ।

**नारब्धव्यानि इत्यत्रापि त्वरान्वितैः इत्यावर्तनीयम् ।**
**अवश्यं राजपिण्डस्तैर्निवेश्य इति मे मतिः ।**
**तस्मात्त्यक्ष्यन्ति सङ्ग्रामे प्राणानपि सुदुस्त्यजान्** ॥ १६ ॥

**अवश्यं राजपिण्ड** इत्यत्र राज्ञा दत्तवेतनरूपान्नपिण्डः **निवेश्यः** प्रत्युपकारेण निवेदनीयः ।

**न निद्रामधिगच्छामि चिन्तयानो वृकोदरः ।**
**अति सर्वान् धनुर्ग्राहान् सूतपुत्रस्य लाघवम्** ॥ २० ॥

**अति सर्वान्** इत्यत्र **अति** अत्येति ।

**युधिष्ठिर महाबाहो वेद्मि ते हृदि[1] मानसम् ।**
**मनीषया ततः क्षिप्रमागतोऽस्मि नरर्षभ** ॥ २४ ॥

**मानसम्** मनसि विद्यमानम् ।

॥ इति षट्त्रिंशोऽध्यायः ॥

---

१. BORI पृ. १२३; **'हृदयस्थितम्'** इति कुं पाठः ।

## ।। अथ सप्तत्रिंशोऽध्यायः ।।

**ते सर्वे धृतराष्ट्रस्य पुत्रेण परिसान्त्विताः ।**
**संविभक्ताश्च तुष्टाश्च गुरुवच्चैपु[१] वर्तते ।**
**सर्वयोधेषु चैवास्य सदा प्रीतिरनुत्तमा ।। ६ ।।**

**गुरुवच्चैपु वर्तत** इत्यत्र वर्तते दुर्योधनः ।

**[२]त्वयि व्यपाश्रयोऽस्माकं त्वयि भारः समहितः ।। ९ ।।**

**त्वयि व्यपाश्रय** इत्यत्र व्यपगतः इतोऽन्यः आश्रयो यस्य स तथोक्तः।

**दया शमश्च धर्मश्च गुरुपूजा कृतज्ञता ।**
**मैत्रता द्विजभक्तिश्च वसन्ति त्वयि फल्गुन ।**
**व्यपेक्षा सर्वभूतेषु कृपा दानं मतिः स्मृतिः ।। ३७ ।।**

**व्यपेक्षा सर्वभूतेषु** इत्यत्र विशेषेण अन्येषामुपकारापेक्षा **व्यपेक्षा,** अन्येभ्यः विगता तद्धनाद्यपेक्षाऽपि **व्यपेक्षा** सैव कृपा दानं चेति स्मृतिरस्तीत्यर्थः ।

**स पार्थ पितरं गच्छ सहस्राक्षमरिन्दम ।**
**मुष्टिग्रहणमादत्स्व सर्वाण्यस्त्राणि वासवात् ।। ४१ ।।**

**मुष्टिग्रहणमादत्स्व** इत्यत्र मुष्टौ ग्रहणं यस्य **तन्मुष्टिग्रहणं** हस्तगतमित्यर्थः ।

---

१. $G_{2.4}$,$M_2$ ; BORI पृ. १२५; **'गुरुवत्तेषु'** इति कुं पाठः ।
२. BORI पृ. १२५; **'भवानेव प्रियोऽस्माकं'** इति कुं पाठः ।

**अवरोधाद्वने वासात्सर्वस्वहरणादपि ।**
**इदं दुःखतरं मन्ये पुत्रेभ्यश्च विवासनात् ॥ ५३ ॥**

**इदं दुःखतरं मन्य** इत्यत्र विवासनात् इदं यदिदं दुःखं तत् **दुःखेभ्यः** नानादुःखेभ्योऽपि दुःखतरं मन्य इति योजना ।

**मास्माहं[1] क्षत्रियकुले जातुचित्पुनराभवम्[2] ।**
**ब्राह्मणेभ्यो नमस्यामि येषां नायुधजीविका ॥ ५४ ॥**

**पुनराभवं** इत्यत्र अहं क्षत्रियकुले **आ** समन्तात् माऽभवमिति सम्बन्धः ।

**ध्वंसिता[3] स्वगृहेभ्यश्च राष्ट्राच्च भरतर्षभ ।**
**वने प्रतिष्ठितो भूत्वा सौहार्दादवतिष्ठसे ॥ ५७ ॥**

**ध्वंसिता** इत्यत्र ध्वंसिता वयम् । अवतिष्ठते दुर्योधन इति योग्यपदाध्याहारः ।

**यत्ते कुन्ती महाबाहो जातस्यैच्छद्धनञ्जय ।**
**तत्तेऽस्तु सर्वं कौन्तेय यथा च स्वयमिच्छसि ॥ ६० ॥**

**यत्** एतत् भाग्यमाह, तदिति सम्बन्धः ।

**वसुदेवस्वसा देवी त्वामार्या पुनरागतम् ।**
**पश्यतु त्वां पृथा पार्थ सहस्राक्षमिवादितिः ॥ ६१ ॥**

---

१. BORI पृ. १२७; **'मास्माकं'** इति कुं पाठः ।
२. **'जातुचित्पुनरुद्भवः'** इति कुं पाठः ।
३. **'ध्वंसितः'** इति कुं पाठः ।

**सहस्राक्षं** त्वाम् अदितिरिवेति सम्बन्धः ।

**तस्य मार्गादपाक्रामन्सर्वभूतानि गच्छतः ।**
**युक्तस्यैन्द्रेण योगेन पराक्रान्तस्य शुष्मिणः ॥ ७१ ॥**

**शुष्मिणः** वीर्यवतः ।

**हिमवन्तमतिक्रम्य गन्धमादनमेव च ।**
**अत्यक्रामत्स दुर्गाणि दिवारात्रमतन्द्रितः ॥ ७४ ॥**

**हिमवन्तमतिक्रम्य** इत्यत्र गन्धेन **मादयति** हर्षयतीति **गन्धमादनो** हिमवत एव शृङ्गविशेषः ।

**नेह शस्त्रेण कर्तव्यं शान्तानामेष आलयः ।**
**विनीतक्रोदहर्षाणां ब्राह्मणानां तपस्विनाम् ॥ ८१ ॥**

**विनीतक्रोधहर्षाणां** इत्यत्र विशेषेण **नीतौ** स्वतोऽन्यत्र प्रापितौ क्रोधहर्षौ येभ्यस्ते **विनीतक्रोधहर्षाः** तेषाम् ।

**॥ इति सप्तत्रिंशोऽध्यायः ॥**

## ॥ अथ अष्टत्रिंशोऽध्यायः ॥

**यच्छ्रुत्वा नरसिंहानां दैन्यहर्षातिविस्मयात् ।**
**शूराणामपि पार्थानां हृदयानि चकम्पिरे ॥ ६ ॥**

**यच्छुत्वा नरसिंहानाम्** इत्यत्र **नरसिंहानां** नरश्रेष्ठानाम् । स्वेषां तादृशशौर्याभावाद्दैन्यम् । **पार्थानां** पृथ्वीसम्बन्धिनां राज्ञाम् ।

**तत्र तत्र द्रुमान्फुल्लान्विहगैर्वल्गुनादितान् ।**
**[1]दीर्घां च विपुलावर्तां वैदूर्यनीलसंनिभाः ॥ १९ ॥**

**दीर्घां च विपुलावर्ताम्** इत्यत्र **दीर्घां** दीर्घिकाम् ।

**सदोपस्पर्शनाच्चास्य बभूवुरमितौजसः ।**
**विद्युदम्भोरुहनिभा जटास्तस्य महात्मनः ॥ २७ ॥**

**सदोपस्पर्शनात्** इत्यत्र **उपस्पर्शनम्** उदकस्पर्शनम् ।

**एकः पार्थो महातेजा हिमवत्पृष्ठमाश्रितः ।**
**उग्रे तपसि दुष्पारे स्थितो धूमापयन्दिशः ॥ ३० ॥**

**धूमापयन् दिश** इत्यत्र धूमं **आपयन्** प्रापयन् धूमापयन् ।

**वैशम्पायन उवाच –**

**तच्छ्रुत्वा शर्ववचनमृषयः सत्यवादिनः ।**
**प्रहृष्टमनसो जग्मुः यथास्वं पुनराश्रमम् ॥ ३५ ॥**

**यथास्वं** स्वमाश्रममनतिक्रम्य यथास्वम् ।

**॥ इति अष्टत्रिंशोऽध्यायः ॥**

## ॥ एकोनचत्वारिंशोऽध्यायः ॥

**स विद्धो बहुभिर्बाणैः दीप्तास्यैः पन्नगैरिव ।**
**ममार राक्षसं रूपं भूयः कृत्वा सुदारुणम् ॥ १६ ॥**

**ममार राक्षसं रूपम्** इत्यत्र मृतिसमये राक्षसं **रूपं** मूलरूपं कृत्वा ममार।

---

१. **'नदीश्च विपुलावर्ता'** इति कुं पाठः ।

**मयाऽभिपन्नः पूर्वं हि राक्षसोऽयमिहागतः ।**
**कामात्परिभवाद्वाऽपि न मे जीवन्विमोक्ष्यसे ॥ २० ॥**

**कामात्परिभवाच्चापि** इत्यत्र **परिभवात्** मम परिभवं प्रापय्य ।

॥ इति एकोनत्रिंशोऽध्यायः ॥

## ॥ अथ चत्वारिंशोऽध्यायः ॥

**शक्राभिषेके सुमहद्धनुर्जलदनिःस्वनम् ।**
**प्रगृह्य दानवाः शस्तास्त्वया कृष्णेन च प्रभो ॥ ३ ॥**

**शक्राभिषेके सुमहत्** इत्यत्र खाण्डववनदाहसमये शक्रेण अभिषेके मेघजलैः सेचने कृते सतीत्यर्थः । **शस्ताः** हिंसिताः ।

**न त्वया सदृशः कश्चित्पुमान्मर्त्येषु भारत ।**
**दिवि वा वर्तते क्षत्रं त्वत्प्रधानमरिन्दम ॥ ७ ॥**

**त्वत्प्रधानमरिन्दम** इत्यत्र त्वत्तः **प्रधानं** श्रेष्ठमित्यर्थः ।

**एष मे प्रथमः कामो भगवन्भगनेत्रहन् ।**
**त्वत्प्रसादाद्विनिर्वर्ते[१] समर्थः स्यामहं यथा ॥ १४ ॥**

**त्वत्प्रसादाद्विनिर्वर्त** इत्यत्र **विनिर्वर्ते** विशेषेण निर्वृ(तः)त्तः सुखी भवामि ।

**अवध्यो नाम नास्त्यस्य त्रैलोक्ये सचराचरे ।**
**मनसा चक्षुषा वाचा धनुषा च निपात्यते ॥ १८ ॥**

---

१. **'विनिर्वृत्तः'** इति कुं. पाठः ।

**मनसा चक्षुषा वाचा** इत्यत्र मन्त्रं स्मृत्वा नष्टो भवत्विति ध्याने मनसा, मन्त्री भूत्वा दर्शने चक्षुषा, नष्टो भवेति कथने वाचा।

**उपतस्थे महात्मानं यथा त्र्यक्षमुमापतिम्।**
**प्रतिजग्राह तच्चापि प्रीतिमानर्जुनस्तदा ॥ २१ ॥**

**यथा त्र्यक्षमुमापतिम्** इत्यत्र **यथा** यथावत्।

**स्पृष्टेन[१] त्र्यंबकेणाथ फल्गुनस्यामितौजसः।**
**यत्किञ्चिदशुभं देहे तत्सर्वं नाशमीयिवत् ॥ २५ ॥**

**स्पृष्टं** स्पर्शनं तेन।

॥ इति चत्वारिंशो अध्यायः ॥

## ॥ अथ एकचत्वारिंशोऽध्यायः ॥

**क्षत्रं चाग्निसमस्पर्शं भारद्वाजेन रक्षितम्।**
**दानवाश्च महावीर्या ये मनुष्यत्वमागताः।**
**निवातकवचाश्चैव सम्साध्याः कुरुनन्दन ॥ २० ॥**

**क्षात्रं चाग्निसमस्पर्शम्** इत्यत्र **क्षात्रं** क्षत्रसम्बन्धि तेजश्च सुसम्भूतम्।

**लघ्वी वसुमती चापि कर्तव्या विष्णुना सह ॥ २४ ॥**

**लघ्वी वसुमती** इत्यत्र **वसुमती** भूमिः **लघ्वी** गतभारा।

**एभिस्तदा मया वीर सङ्ग्रामे तारकामये।**
**दैतेयानां सहस्राणि संयतानि महात्मनाम् ॥ ३० ॥**

---

१. **'स्पृष्टस्य'** इति कुं पाठः।

**तारकामये** द्रष्टृचक्षुस्तारकाणामामयो यस्मात्तस्मिन् ।

**कुन्तीमातर्महाबाहो त्वमीशानः पुरातनः ।**
**परां सिद्धिमनुप्राप्तः साक्षाद्देवगतिं गतः ॥ ४४ ॥**

**कुन्तीमातः** इत्यत्र कुन्ती माता यस्य स तथोक्तः ।

**॥ इति एकचत्वारिंशोऽध्यायः ॥**

## ॥ अथ द्विचत्वारिंशोऽध्यायः ॥

[१] **एतद्ब्रह्मशिरोनाम रौद्रं भीमपराक्रमम्** इत्यत्र पाशुपतास्त्रस्य ब्रह्मशिरोनामेति कथनात् पशुपतिना साधितं गायत्र्यर्थभूतनारायणास्त्रमेव पाशुपतास्त्रम् ।

**ततः पितॄन्यथान्यायं तर्पयित्वा यथाविधि ।**
**मन्दरं शैलराजं तमाप्रष्टुमुपचक्रमे ॥ २१ ॥**

**मन्दरं शैलराजम्** इत्यत्र **मन्देन** पुण्यजलेन रमयति ऋष्यादीनिति **मन्दरः**, **मन्देन** वायुना राति वृक्षादीनिति **मन्दरः**, **मन्दान्** पशुपक्ष्यादीनपि रमयतीति वा **मन्दर** इन्द्रकीलः ।

**शिशुर्यथा पितुश्चाङ्के सुखं शेते तटे तथा ।**
**मया तवाङ्के [२] च प्रभो ललितं नगसत्तम ॥ २७ ॥**

**ललितं नगसत्तम्** इत्यत्र ललितं यथा भवति तथा ।

**॥ इति द्विचत्वारिंशोऽध्यायः ॥**

---

१. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
२. '**ललितं शैलराज महाप्रभो**' इति कुं. पाठः ।

## ।। अथ त्रिचत्वारिंशोऽध्यायः ।।

**तत्र स्म गाथा गायान्ति साम्ना[1] परमफल्गुना ।**
**गन्धर्वास्तुम्बुरुश्रेष्ठाः कुशला गीतसामसु ।। २८ ।।**

**साम्ना परमफल्गुना** इत्यत्र **परं** केवलं **अफल्गुना** श्रेष्ठेन साम्नैव गाथा गायन्ति, तुम्बुरुः श्रेष्ठो येषां ते ।

।। इति त्रिचत्वारिंशोऽध्यायः ।।

## ।। अथ चतुश्चत्वारिंशोऽध्यायः ।।

**तां[2] दृष्ट्वाऽविदिते हृष्टः स्वागतेनार्चितस्तया ।**
**सुखासीनः सुखासीनां स्मितपूर्वं वचोऽब्रवीत् ।। ५ ।।**

**तां दृष्ट्वाऽविदिते हृष्ट** इत्यत्र **अविदिते** एकान्ते ।

**विदितस्तेऽर्जुनो वीरः स स्वर्गफलमाप्तवान् ।**
**तव शक्राभ्यनुज्ञातः पादावद्य प्रपद्यताम् ।**
**तदेवं कुरु कल्याणि प्रपन्नस्त्वां धनञ्जयः ।। १३ ।।**

**पादावद्य प्रपद्यतां** इत्यत्र भवती तस्य पादौ **प्रपाद्यतां** गच्छतु ।

**स्नानालङ्कार[3]नैपथ्यैर्गन्धमाल्यैश्च शोभनैः ।**
**धनंजयस्य रूपेण शरैर्मन्मथचोदितैः ।। १८ ।।**

---

१. **'परमवल्गुना'** इति कुं पाठः ।
२. **'विदितो'** इति कुं पाठः ।
३. **'नेपथ्यै'** इति कुं.पाठः ।

**स्नानालङ्कारनैपथ्यैः** इत्यत्र [१] 'आकल्पवेषौ नैपथ्यम्' इत्यभिधानात् **अलङ्कारैः** वस्त्रालङ्कारैः **नैपथ्यैः** भूषणैः ।

**दिव्याङ्गरागौ सुमुखौ दिव्यचन्दनरूषितौ ।**
**गच्छन्त्या हाररुचिरौ स्तनौ तस्या ववल्गतुः ॥ २४ ॥**

**ववल्गतुः** चकम्पाते ।

**[२] गूढगुल्फशिरौ पादौ ताम्रायततलाङ्गुली ।**
**कूर्मपृष्ठोन्नतौ चास्याः शोभेते किङ्किणीकिणौ ॥ २८ ॥**

**गूढगुल्फशिरौ पादौ** इत्यत्र [३] 'नाडी तु धमनिः शिरा' इत्यभिधानात् गूढा गुल्फयोः **शिरा** नाडी ययोस्तौ । **किङ्किणीकिणौ** इत्यत्र किङ्किणीनां सङ्घर्षणात् व्रणाकाररक्तरेखावन्तौ ।

**शीधुपानेन चाल्पेन तुष्टा च मदनेन च ।**
**विलासितैश्च विविधैः प्रेक्षणीयतराऽभवत् ॥ २९ ॥**

**शीधुपानेन** इत्यत्र [४] 'मैरेयमासवः शीधुः' इत्यभिधानात् अल्पेन **शीधुपानेन** मद्यपानेन ।

**[५] सर्वाप्सरस्समस्यासु प्रनृत्तासु कुरूद्वह ।**
**त्वं किलानिमिषः पार्थ मामेकां तत्र दृष्टवान् ॥ ४४ ॥**

**सर्वाप्सरस्समस्यासु** इत्यत्र [६] 'समस्या तु समासार्था' इति वचनात् **सर्वाप्सरसां** गूढार्थकमिथोवार्तासु ।

---

१. अ.को. २-६-९९ ; २. **'गूढगुल्फधरौ'** इति कुं पाठः ।
३. अ.को. २-६-६५; ४. अ.को. २-१०-४१
५. **'सर्वाप्सरःसु मुख्यासु'** इति कुं पाठः ।; ६. अ.को. १-६-७

**दुःश्रुतं मेऽस्तु सुभगे यन्मां वदसि भामिनि ।**
**गुरुदारैः समाना मे [१] देववारा वरानने ॥ ५३ ॥**

**देववारा वरानने** इत्यत्र देवानां वाराः चन्द्रादित्यादयः वाराः सङ्केतिता याभिस्ता **देववाराः**, देवानां वाराङ्गना इत्यर्थः ।

**पितरः सोदराः पुत्रा नप्तारो वा त्विहागताः ।**
**तपसा रमयन्त्यस्मान्न च तेषां व्यतिक्रमः ॥ ५९ ॥**

**पितरः सोदरा** इत्यत्र तपसा इह स्वर्गे आगता इति सम्बन्धः ।

**सुपुत्राद्य पृथा तात त्वया पुत्रेण सत्तम ।**
**ऋषयोपि हि धैर्येण जिता वै ते महाभुज ॥ ७२ ॥**

**सुपुत्राऽद्य पृथा तात** इत्यत्र त्वया **पृथा** कुन्ती **सुपुत्रा** शोभनपुत्रवती ।

**तेन नर्तकवेषेण [२] अपुंसाऽऽत्म्येन वै भव ।**
**वर्षमेकं विहृत्यैव ततः पुंस्त्वमवाप्स्यसि ॥ ७५ ॥**

**अपुंसाऽऽत्म्येन वै भव** इत्यत्र **आत्म्येन** आत्मनः सम्बन्धी आत्म्यः पुमान्न भवतीत्यपुमान् तेन **अपुंसा** वेषेण भव ।

[३] **कृतवान् शक्रसदन** इत्यत्र **कृतं** सुकृतं तद्वान् ।

**इदममरवरात्मजस्य घोरं**
**शुचि चरितं विनिशाम्य फल्गुनस्य ।**

---

१. **'निश्चयेन'** इति कुं पाठः ।
२. **'अपुंस्त्वेन तथैव च'** इति कुं पाठः ।
३. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

**व्यपगतमददम्भरागदोषा-**
**स्त्रिदिवगताऽभिरमन्ति मानवेन्द्राः ॥ ७८ ॥**

**य इदममरवरात्मजस्य** इत्यत्र इदं शापाशङ्कनं धृतिं कामजयं च ।

॥ इति चतुश्चत्वारिंशोऽध्यायः ॥

## ॥ अथ पञ्चचत्वारिंशोऽध्यायः ॥

**पाद्यमाचमनीयं च प्रतिगृह्य[१] नृपात्मजम् ।**
**प्रवेशयामासुरथो पुरन्दरनिवेशनम् ॥ २ ॥**

**प्रतिगृह्य** प्रतिग्राह्य ।

**तेन कार्यं महद्[२]ब्रह्मन्नमस्माकं द्विजसत्तम ।**
**पार्थेन च महायुद्धे समेताभ्यामसंशयम् ॥ २८ ॥**

**तेन कार्यं महद्ब्रह्मन्** इत्यत्र **तेन** कपिलात्मककृष्णेन ।

॥ इति पञ्चचत्वारिंशोऽध्यायः ॥

## ॥ अथ षट्चत्वारिंशोऽध्यायः ॥

**यस्य नित्यमृता वाचः स्वैरेष्वपि महात्मनः ।**
**त्रैलोक्यमपि तस्य स्याद्योद्धा यस्य धनञ्जयः ॥ ५ ॥**

**यस्य** धर्मराजस्य ।

---

१. K,$D_{1.3}$,$TG_{2.3}$,$M_1$ ; BORI पृ. १४९; **'प्रतिग्राह्य'** इति कुं पाठः ।
२. **'महत्कार्यम्'** इति कुं पाठः ।

**अस्यतः कर्णिनाराचांस्तीक्ष्णाग्रांश्च शिलाशितान् ।**
**नार्जुनस्याग्रतस्तिष्ठेदपि मृत्युर्जरातिगः ॥ ६ ॥**

**अस्यतः कर्णिनाराचान्** इत्यत्र कर्ण एषां वर्तत इति **कर्णिनः** आकर्णान्ताकृष्टा इत्यर्थः । ते च ते नाराचाश्च ।

**तस्यैव च न पश्यामि युधि योधिनमर्जुनम्[1] ।**
**अनिशं चिन्तयानोऽपि य एनमुदियाद्युधि ॥ ८ ॥**

**तस्य** गाण्डीवधन्वनः युधि योधिनं अर्जुनं यः अभियात्, तं न पश्यामि ।

**भवेत्सुतुमुलं युद्धं सर्वस्याप्यपराजितम् ।**
**सर्वे ह्यस्त्रविदः शूराः सर्वे प्राप्ता महद्यशः ॥ ११ ॥**

**अपि सर्वेश्वरत्वं हि न वाञ्छेरन्पराजिताः ।**
**वधे नूनं भवेच्छान्तिरेतेषां फल्गुनस्य वा ॥ १२ ॥**

सर्वेऽपि अस्त्रविदः, सर्वे महद्यशः प्राप्ताः, सर्वेऽपि परैः शत्रुभिरजिताश्च । अत एव ते सर्वे एकैकस्य सर्वेभ्यः ईश्वरत्वं न वाञ्छेरन् । समानस्कन्धत्वादिति भावः ।

**शेषं कुर्याद्गिरेर्वज्रो निपतन्मूर्ध्नि सञ्जय ।**
**न तु कुर्युः शराः शेषं अस्तास्तात[2] किरीटिना ॥ १५ ॥**

**अस्ताः** 'असु क्षेपणे' इति धातोः प्रयुक्ताः ।

---

१. **'गाण्डीवधन्वनः'** इति कुं.पाठः । ; २. **'क्षिप्ता'** इति कुं पाठः ।

**यथा हि किरणा भानोस्तपन्तीह चराचरम् ।**
**तथा पार्थभुजोत्सृष्टाः शरा [1]स्तप्यन्ति मे सुतान् ॥ १६ ॥**

**तप्यन्ति मे सुतान्** इत्यत्र मे सुतान् तप्यन्ति । तृप्यतीतिवत् तप्यतीत्यपि पदम् । तपन्तीत्यर्थः ।

**[2]अपीमां रथघोपेण भयार्ता सव्यसाचिनः ।**
**प्रतिभाति विदीर्णेव सर्वतो भारती चमूः ॥ १७ ॥**

**अपीमां रथघोषेण** इत्यत्र **इमां** महीं सर्वतः विदीर्णेवेति सम्बन्धः ॥

**[3]य उद्धरन्प्रवपंश्चैव बाणान् स्थाताऽऽततायी समरे किरीटी ।**
**सृष्टोन्तकः सर्वहरो विधात्रा भवेद्यथा तद्वदवारणीयः॥ १८ ॥**

**य उद्धरन् प्रवपन्न** इत्यत्र उद्धरन् बाणान् प्रवपंश्च, तथा **आततायी** 'आततायी वधोद्यत' इत्यभिधानात् शत्रुवधोद्यतो **यः** किरीटी ।

**सञ्जय उवाच –**

**यदेतत्कथितं राजंस्त्वया दुर्योधनं प्रति ।**
**सर्वमे[4]तद्यथातथ्यं न तु मिथ्या महीपिते ॥ १९ ॥**

**दुर्योधनं प्रति** दुर्योधनमुद्दिश्येत्यर्थः । तथ्यमनतिक्रम्य वर्तमानं **यथा तथ्यम्** ।

---

१. $S_1, K_3, G_4$ ; BORI पृ. १५४; **'तप्स्यन्ति स्तमत्सुतान्'** इति कुं पाठः ।
२. **'अपि तद्रथघोपेण'** इति कुं पाठः ।
३. **'समुद्धरन्प्रवपंश्चैव'** इति कुं पाठः ।
४. S; BORI पृ. १५४; **'तद्यथातत्त्वं'** इति कुं पाठः ।

**श्रुतं हि ते महाराज यथा पार्थेन संयुगे ।**
**एकादशतनुः स्थाणुर्धनुषा परितोषितः ॥ २२ ॥**

**एकादशतनुः स्थाणुः** इत्यत्र रुद्राणामेकादशत्वात् एकादश तनवो यस्य स तथोक्तः ।

॥ इति षट्चत्वारिंशोऽध्यायः ॥

## ॥ अथ सप्तचत्वारिंशोऽध्यायः ॥

**किमासीत्पाण्डुपुत्राणां वने भोजनमुच्यताम् ।**
**वन्यं वाऽप्यथवा कृष्टमेतदाख्यातु नो भवान् ॥ ३ ॥**

**कृष्टं** कृषिसम्बन्धि कलमादिधान्यम् ।

॥ इति सप्तचत्वारिंशोऽध्यायः ॥

## ॥ अथ अष्टचत्वारिंशोऽध्यायः ॥

**तेषां मध्ये महेष्वासो भीमो भीमपराक्रमः ।**
**शैक्यया वीरघातिन्या गदया विचरिष्यति ॥ १२ ॥**

**शैक्यया वीरघातिन्या** इत्यत्र **शैक्यया** शिक्यसम्बन्धिन्या शिक्योपरि बद्ध्वा स्थापितयेत्यर्थः । 'भारयष्टिस्तदालम्बः शिक्यं काच'[1] इत्यभिधानात् ।

**श्रुत्वाऽयं निर्जितान्द्यूते पाण्डवान्मधुसूदनः ।**
**त्वरितः काम्यके पार्थान्समभावयदच्युतः ॥ १६ ॥**

---

१. अ.को. २-१०-३०

**समभावयदच्युत** इत्यत्र **समभावयत्** सम्भावयामास ।

**एतान् सर्वाँल्लोकवीरानजेयान्**
**महात्मनः सानुबन्धान् ससैन्यान् ।**
**को जीवितार्थी समरेऽभ्युदीयात्**
**क्रुद्धान् सिंहान् केसरिणो यथैव** ॥ ४४ ॥

**केसरिणः** कोपादुन्नम्रकेसरवतः सिंहानित्यर्थः ।

॥ इति अष्टचत्वारिंशोध्यायः ॥

## ॥ अथ एकोनपञ्चाशोऽध्यायः ॥

**यस्य प्रभावान्न मया सभामध्ये महाबलाः ।**
**नीता लोकममुं सर्वे धार्तराष्ट्राः ससौबलाः** ॥ ११ ॥

**यस्य प्रभावान्न मय** इत्यत्र **प्रभावात्** सामवचनसामर्थ्यात् अमुं **लोकं** परलोकम् ।

**ते वयं बाहुबलिनः क्रोधमुत्थितमात्मनः ।**
**सहामहे भवन्मूलं वासुदेवेन पालिताः** ॥ १२ ॥

**सहामहे भवन्मूलम्** इत्यत्र **भवन्मूलं** भवानेव मूलं यथा भवति तथा ।

**भवतो द्यूतदोषेण सर्वे वयमवप्लुताः[१] ।**
**अहीनपौरुषा राजन्बलिभिर्बलवत्तराः** ॥ १४ ॥

**अवप्लुताः** अधः पातिताः ।

---

१. **'उपप्लुताः'** इति कुं पाठः ।

**राज्यमेव परं धर्मं क्षत्रियस्य विदुर्बुधाः ।**
**स क्षत्रधर्मविद्राजन्माऽस्मान्विनशनः पथः[१] ॥ १६ ॥**

**माऽस्मान्विनशनः पथ** इत्यत्र **विनशनः** विशेषेण **नशनं** नाशो यस्मात् स विनशनः मा भूरिति सम्बन्धः ।

**एवमेतद्भवेद्राजन्यदि राजा न बालिशः ।**
**अस्माकं दीर्घसूत्रः स्याद्भवान्धर्मपरायणः ॥ २२ ॥**

'दीर्घसूत्रश्चिरक्रिय'[२] इत्यभिधानात् **दीर्घसूत्रः** चिरेण कार्यकारी ।

**आश्वस्तं चैनमासीनमुपासीनो युधिष्ठिरः ।**
**अभिप्रेक्ष्य महाबाहुः कृपणं बह्वभाषत ॥ ४१ ॥**

**कृपणं बह्वभाषत** इत्यत्र कृपणं यथा भवति तथा ।

**नास्ति राजा मया कश्चिदल्पभाग्यतरो भुवि ।**
**भवता दृष्टपूर्वो वा श्रुतपूर्वोपि वा क्वचित् ।**
**न मत्तो दुःखिततरः पुमानस्तीति मे मतिः ॥ ५३ ॥**

**नास्ति राजा मया कश्चित्** इत्यत्र मया समः अल्पभाग्यतरः कश्चिन्नास्तीति सम्बन्धः ।

**स निकृत्या जितो राजा पुष्करेणेति नः श्रुतम् ।**
**वनवासं सुदुःखार्तो भार्यया न्यवसत् सह ॥ ६१ ॥**

---

१. T.G; BORI पृ. १६२; 'क्षत्रधर्मविद्राजन्माधर्म्यान्नीनशः पथः' इति कुं पाठः ।

२. अ.को. ३-१-१७

**पुष्करेण** पुष्कराख्यराज्ञा ।

॥ इति एकोनपञ्चाशोऽध्यायः ॥

## ॥ अथ चतुःपञ्चाशोऽध्यायः ॥

**अग्निरात्मभवं प्रादाद्यत्र वाञ्छति नैषधः ।**
**लोकानात्मप्रभांश्चैव ददौ तस्मै हुताशनः ॥ ३७ ॥**

**अग्निरात्मभवम्** इत्यत्र आत्मनः **भवः** सत्ता तम् ।

**यमस्त्वन्नरसं प्रादाद्धर्मे च परमां स्थितिम् ॥ ३८ ॥**

**यमस्त्वन्नरसम्** इत्यत्र यमः **अन्नरसम्** अन्नाभावेऽपि अन्नास्वादनाज्ज्ञातसत्वम्, रसवदन्नरचनासामर्थ्यं वा ।

**अपांपतिरपां भावं यत्र वाञ्छति नैषधः ।**
**स्रजश्चोत्तमगन्धाढ्याः सर्वे च मिथुनं ददुः ॥ ३८ ॥**

**अपांपतिरपां भावम्** इत्यत्र अपां भावं यत्र गिरिगाह्वरादौ **नैषधः** नलः अतितृषावशादुदकं वाञ्छति तत्र अकस्मात् **अपाम्** उदकानां **भावं** स्थितिम् ।

॥ इति चतुःपञ्चाशोऽध्यायः ॥

## ॥ अथ षट्पञ्चाशोऽध्यायः ॥

**स समाविश्य च नलं समीपं पुष्करस्य च ।**
**एहि[१] दिव्य नलेनेति गवां पुष्करमब्रवीत् ॥ ४ ॥**

---

१. '**गत्वा पुष्करमाहेदमेहि दीव्य नलेन वै**' इति कुं पाठः ।

**गवां पुष्करमब्रवीत्** इत्यत्र गवाम् अधिपं **पुष्करं** पुष्कराख्यं द्वापरम् ।

॥ इति षट्पञ्चाशोध्यायः ॥

## ॥ अथ सप्तपञ्चाशोऽध्यायः ॥

**बृहत्सेने पुनर्गच्छ वार्ष्णेयं नलशासनात् ।**
**सूतमानय कल्याणि महत्कार्यमुपस्थितम्** ॥ ११ ॥

**वार्ष्णेयं नलशासनात्** इत्यत्र **वार्ष्णेयं** वृष्णिकुलोत्पन्नं **सूतं** सारथिम् ।

**नलस्य दयितानश्वान्योजयित्वा मनोजवान् ।**
**रथमारोप्य मिथुनं कुण्डिनं यातुमर्हसि** ॥ २० ॥

**रथमारोप्य मिथुनम्** इत्यत्र **मिथुनं** स्त्रीपुंसरूपं पुत्रद्वयम् ।

**तैः समेत्य विनिश्चित्य सोऽनुज्ञातो महीपते ।**
**ययौ मिथुनमारोप्य विदर्भांस्तेन वाहिना** ॥ २३ ॥

**वाहिना** वाहवता रथेन ।

॥ इति सप्तपञ्चाशोऽध्यायः ॥

## ॥ अथ अष्टपञ्चाशोऽध्यायः ॥

**शिष्टा ते दमयन्त्येका सर्वमन्यद्धृतं मया ।**
**दमयन्त्याः साधुपाणः[१] वर्ततां यदि मन्यसे** ॥ ३ ॥

**पाणः** पणः ।

---

१. **'पणः साधु'** इति कुं पाठः ।

**स चिन्तयामास तदा निपधाधिपतिर्बली ।**
**अस्ति भक्षो[१] ममाद्यापि वसु चेदं भविष्यति ॥ १४ ॥**

**अस्ति भक्ष** इत्यत्र अद्य पक्षिणाम् मांसस्य भक्ष्यत्वात् **भक्षोऽ-**प्यस्ति । हिरण्यपक्षत्वात् इदमेव वसु च भविष्यतीति योजना ।

**[२]ततस्तानुत्तरीयेण वाससा च समावृणोत् ।**
**[३]तस्योत्तरीयमादाय सर्वे जग्मुर्विहायसा ॥ १५ ॥**

**ततस्तानुत्तरीयेण** इत्यत्र **उत्तरीयेण** स्वधृतैकवस्त्रोत्तरभागेन । **तस्योत्तरीयमादाय** इत्यत्र उत्तरभागसहितस्वधृतवस्त्रं बलादादाय । अन्यथा प्रागुक्तैकवस्त्रत्वायोगाद्वक्ष्यमाणनग्नत्वायोगाच्च ।

**वयमक्षाः सुदुर्बुद्धे तव वासो जिहीर्षवः ।**
**आगता न हि नः प्रीतिः सवाससि गते त्वयि ॥ १७ ॥**

**आगता न हि** इत्यत्र सवाससि त्वयि गते सति नः प्रीतिर्न हि ।

**॥ इति अष्टपञ्चाशोऽध्यायः ॥**

## ॥ अथ एकोनषष्टितमोऽध्यायः ॥

**[४]सालवेणुधराश्वत्थतिन्दुकेङ्गुदिकिंशुकैः ।**
**अर्जुनारिष्टसञ्छन्नं स्यन्दनैश्च सशाल्मलैः ॥ ३ ॥**

---

१. **'भक्ष्य'** इति कुं. पाठः ।

२. $S_1$,$K_{1\text{-}3.4}$,$T_{2(\text{by corr})}$,$G_{1.3(\text{except G2})}$,$M_2$ ; BORI पृ. १८५; **'ततस्तानन्तरीयेण'** इति कुं पाठः ।

३. $S_1$,$K_{1.3.4}$,$D_{1\text{-}2}$,$T_2$,G,$M_2$ ; BORI पृ. १८५; **'तस्य तद्वस्त्रमादाय'** इति कुं पाठः ।

४. कुं. ६१ अध्यायः । **'सालवेणुधवाश्व'** इति कुं पाठः ।

**सालवेणुधर** इत्यत्र धरानामकः कश्चिद्वृक्षः ।

**उदर्कस्तव कल्याणि कल्याणो भविताशुभे ।**
**वयं पश्याम तपसा क्षिप्रं द्रक्ष्यसि नैषधम्** ॥ ९१ ॥

**उदर्कः** महोत्कर्षः ।

॥ इति एकोनषष्टितमोऽध्यायः ॥

## ॥ अथ त्रिषष्टितमोऽध्यायः ॥

**असङ्ख्येयगुणो भर्ता मां च नित्यमनुव्रतः ।**
**भक्ताहमपि तं वीरं छायेवानपगा पथि**[1] ॥ ५७ ॥

[2]**तमेकवसनं छन्नं उन्मत्तमिव विह्वलम् ।**
**आश्वासयन्ती भर्तारमहमप्यगमं वनम्** ॥ ५९ ॥

**तमेकवसनम्** इत्यत्र द्वितीयाविभक्तेः अपहाय गच्छन्ती न भवतीत्यनपगेति पूर्वेण सम्बन्धः ।

॥ इति त्रिषष्टितमोऽध्यायः ॥

## ॥ अथ पञ्चषष्टितमोऽध्यायः ॥

[3]**अस्या नूनं पुनर्लाभान्नैषधः प्रीतिमेष्यति ।**
**राजा राज्यपरिभ्रष्टः पुनर्लब्धेव**[4] **मेदिनीम्** ॥ २८ ॥

१. **'छायेवानुगता इति'** कुं. पाठः ।

२. कुं. ६२ **अध्यायः** । $T_2$,$G_{2-4}$; BORI पृ.२१९; **'तमेकवसनच्छन्नं'** इति कुं पाठः ।

३. कुं. ६५ **अध्यायः**;     ४. **'पुनर्लब्ध्वेव'** इति कुं पाठः ।

**पुनर्लब्धेव** इत्यत्र मेदिनीं पुनर्लब्धा पुरुष इव ।

॥ इति पञ्चषष्टितमोऽध्यायः ॥

## ॥ अथ षट्षष्टितमोऽध्यायः ॥

**[१]अस्या रूपेण सदृशी मानुषी न हि विद्यते ।**
**अस्या ह्येष भ्रुवोर्मध्ये [२]सहजा विप्लुडुत्तमा ॥ ५ ॥**

**सहजा विप्लुडुत्तमा** इत्यत्र **विप्लुट्** बिन्द्वाकारेण वर्तुला रक्त-तिलकोपमा रेखा ।

**स मलेनापकृष्टेन विप्लुस्तस्या व्यरोचत ।**
**दमयन्त्या यथा व्यभ्रे नभसीव निशाकरः ॥ ११ ॥**

**व्यभ्रे** मेघरहिताकाशे ।

**[३]ततः परीक्षामश्वानां चक्रे राजन् स बाहुकः ।**
**अश्वशालामुपागम्य [४]भार्गस्वरिरुपस्थितः ॥ १३ ॥**

**भार्गस्वरिरुपस्थित** इत्यत्र भृगुस्वरस्यापत्यं पुमान् **भार्गस्वरिः** ऋतुपर्ण इत्यर्थः ।

**सत्कृताऽसत्कृता वापि दृष्ट्वा तथागतम् ।**
**भ्रष्टराज्यं श्रियाहीनं श्यामा न क्रोद्धुमर्हति ॥१२ ॥**

---

१. कुं. ६६ अध्यायः; २. **'सहजः पिप्लुरुत्तमः'** इति कुं पाठः ।
३. कुं. ६९ अध्यायः
४. **'भार्गस्वरिनृपाज्ञया'** इति कुं पाठः ।

**श्यामा न क्रोद्धुमर्हति** इत्यत्र **श्यामा** यौवनमध्यस्था ।

॥ इति षट्षष्टितमोऽध्यायः ॥

## ॥ अथ सप्तषष्टितमोऽध्यायः ॥

**तेजोनलसमायुक्तान् कुलशीलसमन्वितान् ।**
**वर्जितांल्लक्षणैर्हीनैः पृथुप्रोथान्महाहनून्** ॥ १५ ॥

**पृथुप्रोथान्महाहनून्** इत्यत्र [1]'स्त्रियां स्फिजौ कटिः प्रोथ उपस्थो वक्ष्यमाणयोः' इत्यभिधानात् **पृथुः** पुष्टः **प्रोथः** कटिप्रदेशः ।

**कथमल्पबलप्राणा वक्ष्यन्तीमे** [2]**हयोत्तमाः ।**
**महानध्वा स चैकान्हा गन्तव्यः कथमीदृशैः** ॥ १८ ॥

**वक्ष्यन्तीमे हयोत्तमा** इत्यत्र **वक्ष्यन्ति** वहिष्यन्ति ।

॥ इति सप्तषष्टितमोऽध्यायः ॥

## ॥ अथ सप्ततितमोऽध्यायः ॥

**एवमुक्ते नलेनाथ नातिप्रीतमना नृपः ।**
**आससाद वने राजन्फलवन्तं विभीतकम्** ॥ ६ ॥

**फलवन्तं विभीतकम्** इत्यत्र **विभीतकं** तारावृक्षम् । तारावृक्षदर्शनमात्रेण वृक्षस्थानां पतितानां च पत्रफलानां सङ्ख्यां ऋतुपर्णः सकृदेवोक्तवानिति ऋतुपर्णस्य सङ्ख्याकौशलमत्र वर्ण्यते । तत्रायं विवेकः–

---

१. अ.को. २-६-७४; २. '**हया रथम्** ' इति कुं पाठः ।

सकलशाखोपेतवृक्षस्य पतितपत्रफलाभ्यां सह एकपत्राधिका पत्राणं कोटिः, एकफलाधिका फलानं कोटिः शाखाद्वये स्थितपत्राणां फलनां च गणने क्रियमाणे पञ्चशतोत्तरे द्वे सहस्रे इति ।

॥ इति सप्ततितमोऽध्यायः ॥

## ॥ अथ त्रिसप्ततितमोऽध्यायः ॥

**यदा च किञ्चित्कुर्यात् स कारणं तत्र भामिनि ।**
**तत्र सञ्चेष्टमानस्य संलक्ष्यं[1] ते हि चेष्टितम् ॥ ३ ॥**

**सम्लक्ष्यं ते हि चेष्टितम्** इत्यत्र ते त्वया **चेष्टितं** नलचरित्रं **सम्लक्ष्यं** सम्यग्लक्षयितुं योग्यं हि ।

**छन्देन चोदकं तस्य वहत्यावर्जितं द्रुतम् ।**
**अतीव चान्यत्सुमहदाश्चर्यं दृष्टवत्यहम् ॥ १५ ॥**

**छन्देन चोदकं तस्य** इत्यत्र **आवर्जितम्** ईषदप्युदकेन वर्जितं पात्रं **उदकम्** उदकवत् ।

॥ इति त्रिसप्ततितमोऽध्यायः ॥

## ॥ अथ पञ्चसप्ततितमोऽध्यायः ॥

**बृहदश्व उवाच –**

**अथ तां व्युषितो रात्रिं नलो राजा स्वलङ्कृतः ।**
**वैदर्भ्या सहितः काल्यं ददर्श वसुधाधिपम् ॥ १ ॥**

**काल्यं** उषःकालः ।

॥ इति पञ्चसप्ततितमोऽध्यायः ॥

---

१. BORI पृ. २३९; **'सम्लक्षेथा विचेष्टितम्'** इति कुं पाठः ।

## ।। अथ एकोनाशीतितमोऽध्यायः ।।

[१] **तस्य जिष्णोर्बृसीं दृष्ट्वा शून्यामिव निवेशने ।**
**हृदयं मे महाराज न शाम्यति कदाचन ।। ३० ।।**

**तस्य जिष्णोर्बृसीम्** इत्यत्र 'व्रतिनामासनं बृसी'त्यभिधानात् दर्भमयासनं बृसि इत्युच्यते ।

।। इति एकोनाशीतितमोऽध्यायः ।।

## ।। अथ एकाशीतितमोऽध्यायः ।।

[२] **अकल्कको निरारम्भो लघ्वाहारो जितेन्द्रियः ।**
**विमुक्तः सर्वपापेभ्यः स तीर्थफलमश्नुते ।। ११ ।।**

**अकल्कको निरारम्भ** इत्यत्र **अकल्ककः** कल्को नाम पादश्रम-क्षुत्पिपासादिश्रमपरिहाराय कृतौषधविशेषः, तद्रहित इत्यर्थः ।

**अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्यच ।**
**अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते ।। १८ ।।**

**अनुपोष्य त्रिरात्राणि** इत्यत्र एकैकस्य मासस्य आदौ अन्ते मध्ये च एकादश्या रात्रित्रयं अनुपोष्येत्यर्थः ।

।। इति एकाशीतितमोऽध्यायः ।।

* * *

१. कुं. ७८ अध्यायः
२. कुं. ८० अध्यायः

## ।। अथ द्व्यशीतितमोऽध्यायः ।।

**[१] पुनाति गमनादेव [२] दण्डेनैकं नराधिप ।**
**केशानभ्युक्ष्य वै तस्मिन्पूतो भवति भारत ।। ६०।।**

**दण्डेनैकं नराधिप** इत्यत्र **दण्डो** दण्डप्रणामः ।

**[३] प्राणायामैर्निभा यान्ति स्वलोमानि द्विजोत्तमाः ।**
**पूतात्मानश्च राजेन्द्र प्रयान्ति परमां गतिम् ।। ६३ ।।**

**प्राणायामैर्निभा यान्ति** इत्यत्र **निभाः** नितरां **भा** प्रभा येषां ते निभाः ।

**उत्तमे सर्वतीर्थानां यस्त्यजेदात्मनस्तनुम् ।**
**पृथूदके जप्यपरो [४] नैनः श्वो मरणं तरेत् ।। १४६ ।।**

**नैनः श्वो मरणं तरेत्** इत्यत्र **ना** पृथूदके देहत्यागी पुरुषः श्वः मरणं यस्मात्तदेनस्तरेत् । पुनर्जन्माभावात् पुनर्मरणमपि नास्तीति भावः ।

।। इति द्व्यशीतितमोऽध्यायः ।।

## ।। अथ त्र्यशीतितमोऽध्यायः ।।

**[५] श्यामाकाः** 'सावे' इत्यपभ्रंशभाषा ।

**राजसूयाश्वमेधाभ्यां फलं विन्दन्ति मानवः ।**
**पृथिव्यां नैमिषं तीर्थं अन्तरिक्षे च पुष्करम् ।। २०२ ।।**

---

१. कुं. ८१ अध्यायः;  २. 'कुलमेकं' इति कुं पाठः ।
३. 'प्राणायामैर्निर्हरन्ति' इति कुं पाठः; ४. 'नैव श्वो मरणं तपेत्' इति कुं पाठः
५. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

**अन्तरिक्षे च पुष्करम्** इत्यत्र **अन्तरिक्षे** देवर्ष्यादिजनसङ्कुलान्तरिक्षे **पुष्करं** स्तूयत इत्यर्थः ।

॥ इति त्र्यशीतितमोऽध्यायः ॥

## ॥ अथ चतुरशीतितमोऽध्यायः ॥

**[1]तत्र कोटी तु तीर्थानां विश्रुता भरतर्षभ ।**
**कूर्मरूपेण राजेन्द्र [2]मह्यासुरेण दुरात्मना ॥ १२० ॥**
**ह्रियमा[3]णोद्धृता राजन् विष्णुना प्रभविष्णुना ॥ १२१ ॥**

**कूर्मरूपेण राजेन्द्र** इत्यत्र आसुरेण ह्रियमाणा **मही** मन्दरगिरिरूपा मही महात्मना कूर्मरूपेण विष्णुना उद्धृतेति योजना ।

**तत्राभिषेकं कुर्वीत तीर्थकोट्यां युधिष्ठिर ॥ १२१ ॥**

**तीर्थकोट्यां युधिष्ठिर** इत्यत्र **युधि** युद्धे **स्थिर** भीष्म ।

॥ इति चतुरशीतितमोऽध्यायः ॥

## ॥ अथ पञ्चाशीतितमोऽध्यायः ॥

**[4]यत्र कश्चिद्वयं कालं वसन्तः सत्यविक्रमम् ।**
**प्रतीक्षामोऽर्जुनं वीरं [5]वसुकाम इवाम्बुदम् ॥ १९ ॥**

---

१. कुं. ८२ अध्यायः; २. '**ह्यसुरेण**' इति कुं पाठः ।
३. K2,D5; BORI पृ. १९५; '**ह्रियमाणा हृता**' इति कुं पाठः ।
४. कुं. ८४ अध्यायः
५. '**वृष्टिकामा इवाम्बुदम्**' इति कुं.पाठः ।

**वप्तुकाम इवाम्बुदम्** इत्यत्र **वप्तुं** बीजावापं कर्तुं कामो यस्य स कृषीवल इत्यर्थः ।

**।। इति पञ्चाशीतितमोऽध्यायः ।।**

## ।। अथ षडशीतितमोऽध्यायः ।।

**यत्र[१] सा गोमती पुण्या रम्या देवर्षिसेविता ।**
**यज्ञभूतिश्च देवानां शामित्रं च विवस्वतः ।। ७ ।।**

**शामित्रं च विवस्वत** इत्यत्र शमितुः शान्तस्य भावः **शामित्रं**, **विवस्वतः** सूर्यस्य ।

**।। इति षडशीतितमोऽध्यायः ।।**

## ।। अथ सप्ताशीतितमोऽध्यायः ।।

**प्रियङ्ग्वाम्रवणोपेता [२]वानीरवनमालिनी ।**
**प्रत्यक्स्रोता नदी पुण्या नर्मदा तत्र भारत ।। २ ।।**

**वानीरवनमालिनी** इत्यत्र [३]'वानीरो वञ्जुलः शीत' इत्यभिधानात् **वानीरवनं** वेत्रवनम् ।

**।। इति सप्ताशीतितमोऽध्यायः ।।**

* * *

१. कुं. ८५ अध्यायः
२. BORI पृ.३१७; **'वानीरफलमालिनी'** इति कुं पाठः ।
३. अ.को. २-४-३०

## ।। अथ चतुर्नवतितमोऽध्यायः ।।

[१] **गयस्य यज्ञे के त्वद्य प्राणिनोऽ[२]भोक्तुमीप्सवः ।**
**तत्र भोजनशिष्टस्य पर्वताः पञ्चविंशतिः** ।। २७ ।।

**प्राणिनोऽभोक्तुमीप्सव** इत्यत्र अभोक्तुमीप्सवः के ।

**।। इति चतुर्नवतितमोऽध्यायः ।।**

## ।। अथ पञ्चनवतितमोऽध्यायः ।।

[३] **सचाह्वयति यं वाचा गतं वैवस्वतक्षयम् ।**
**स पुनर्देहमास्थाय जीवन्स्म प्रत्यदृश्यत** ।। ९ ।।

**समाह्वयति यं वाचा** इत्यत्र **यं** पक्वीकृत्य ब्राह्मणैर्भुक्तं अत एव **वैवस्वतक्षयं गतं** मृतं अनुजं वातापिम् ।

**सोऽपृच्छल्लम्बमानांस्तान् [४]गच्छन्त इव किङ्कराः ।**
**किमर्थं वेह लम्बध्वे गर्ते यूयमधोमुखाः ।**
**ससन्तानहेतोरिति ते प्रत्यूचुर्ब्रह्मवादिनः** ।। १५ ।।

**गच्छन्त इव किङ्करा** इत्यत्र आर्तं दृष्ट्वा किं करोमीति विचारयन्तः कृपालवः **किङ्कराः** ।

**ततः प्रसवसन्तानं चिन्तयन्भगवानृषिः ।**
**आत्मनः प्रसवस्यार्थे नापश्यत्सदृशीं स्त्रियम्** ।। १९ ।।

---

१. कुं. ९३ अध्यायः; २. 'भोक्तुं' इति कुं पाठः ।; ३. कुं. ९४ अध्यायः
४. 'भगवन्तश्च किम्पराः' इति कुं पाठः ।

**स चापि जनयामास** इत्यत्रोक्तमेव प्रमेयं विस्तरेणाह– ततः प्रसव-सन्तानमिति । **प्रसवस्य** सन्ततेः **सन्तानं** विस्तारम् ।

॥ इति पञ्चनवतितमोऽध्यायः ॥

## ॥ अथ शततमोऽध्यायः ॥

**ततो[१] वायुः प्रादुरभूदधस्तस्य महात्मनः ।**
**शब्देन महता तात गर्जन्निव यथा घनः** ॥ ११ ॥

**ततो वायुः प्रादुरभूत्** इत्यत्र **वायुः** अन्ने जीर्णे सति जायमानः फूत्कारवायुः ।

**लोपामुद्रोवाच –**

**सहस्रसम्मितः पुत्र एकोप्यस्तु तपोधन ।**
**एको हि बहुभिः श्रेयान्विद्वान्साधुरसाधुभिः** ॥ २८ ॥

**विद्वान् साधु** इत्यत्र तृतीया पञ्चम्यर्थे । असाधुभ्यः बहुभ्यः विद्वान् एकोऽपि श्रेयान् ।

॥ इति शततमोऽध्यायः ॥

## ॥ अथ अष्टाधिकशततमोऽध्यायः ॥

**मयूरैः शतपत्रैश्च कोकिलैर्जीवजीवकैः[२] ।**
**चकोरैरसितापङ्गैस्तथापुत्राप्रियैरपि** ॥ ८ ॥

---

१. कुं. ९७ अध्यायः
२. BORI पृ. ३६२; '**जीवजीवककोकिलैः ।**' इति कुं पाठः ।

कोकिलैर्जीवजीवकैः इत्यत्र **जीवजीवकैः** जीवञ्जीवकाख्यैश्चकोरैः ।

**किमिच्छसि महाराज मत्तः किञ्चद्[१] ददामि[२] ते ।**
**तद्ब्रवीहि नरश्रेष्ठ करिष्यामि वचस्तव ॥ १९ ॥**

**किञ्चिद्ददामि त** इत्यत्र **किञ्चित्** यत्किञ्चित् ।

**करिष्यामि महाराज वचस्ते नात्र संशयः ।**
**वेगन्तु मम दुर्धार्यं पतन्त्या गगनाच्च्युतम् ॥ २२ ॥**

**गगनाच्युतं** यथा भवति तथा पतन्त्याः ।

**॥ इति अष्टाधिकशततमोऽध्यायः ॥**

## ॥ अथ नवाधिकशततमोऽध्यायः ॥

**क्वचित् सा तोयनिनदैर्नदन्ती नादमुत्तमम् ।**
**क्वचिदाकाशमावर्तैः सङ्क्षिपन्तीव सर्वशः ॥ १३ ॥**

**क्वचिदाकाशम्** इत्यत्र **आकाशम्** आवर्तान्तस्स्थिताकाशं **सङ्क्षिपन्ती** [illegible]मेण सङ्कुचितं कुर्वन्ती ।

**॥ इति नवाधिकशततमोऽध्यायः ॥**

* * *

१. K2.3,T,G; BORI पृ. ३६३; 'किं च ' इति कुं पाठः ।
२. K,B2.3,Dc,D1-3.5,S(except M1); BORI पृ. ३६३; 'ददानि ते' इति [illegible] पाठः ।

## ॥ अथ दशाधिकशततमोऽध्यायः ॥

**वातं चाहूय मा शब्दमित्युवाच स तापसः ।**
**व्याहरंश्चेह पुरुषो मेघशब्देन वार्यते** ॥ ११ ॥

**मा शब्दमित्युवाच स तापस** इत्यत्र शब्दं मा कुरु ।

**एवमेतानि कर्माणि राजंस्तेन महर्षिणा ।**
**कृतानि कानिचित्क्रोधात्प्रतिषिद्धानि कानिचित्** ॥ १२ ॥

**कृतानि कानिचित्** इत्यत्र स्वतपोविघ्नकृतां निवारणाय **कानिचित्** अग्निवायुमेघादीनि **कृतानि** अङ्गीकृतानि । **कानिचित्** मेघवाय्वादीनां गर्जनादीनि प्रतिषिद्धानीति विवेकः ।

**नन्दां त्वभिगता देवाः पुरा राजन्निति श्रुतिः ।**
**अन्वपद्यन्त सहसा पुरुषा देवदर्शिनः** ॥ १३ ॥

निमित्तान्तरं चाह– **नन्दाम्** इत्यादिना ।

॥ इति दशाधिकशततमोऽध्यायः ॥

## ॥ अथ एकादशाधिकशततमोऽध्यायः ॥

**तेन कामात्[१] कृतो मिथ्या ब्राह्मणेभ्य इति श्रुतिः ।**
**दैवोपहतसत्त्वेन धर्मज्ञेनापि भारत ।**
**स ब्राह्मणैः परित्यक्तस्तदा भरतसत्तम** ॥ २० ॥

**तेन कामात्** इत्यत्र **कामात्** अर्थलोभात् ।

१. N,$G_1$ ; BORI पृ. ३६९; **'कामः'** इति कुं पाठः ।

ततश्चानाययामास चारमुख्यान्[1] महीपतिः ।
वेश्याः सर्वत्र निष्णातास्ता उवाच सपार्थिवः ॥ ३१ ॥

चारमुख्यान्महीपतिः इत्यत्र चारमुख्यान् चारश्रेष्ठान् ।

॥ इति एकादशाधिकशततमोऽध्यायः ॥

## ॥ अथ द्वादशाधिकशततमोऽध्यायः ॥

अतीव रमणीयं तदतीव च मनोहरम् ।
तास्तु[2] नाव्याश्रमं रम्यमद्भुतोपमदर्शनम् ॥ ३ ॥

तास्तु नाव्याश्रमम् इत्यत्र नाव्याश्रमं नावि आश्रमसमीपस्थे नदीप्रवाहे नौकायां आश्रमं चक्रुः ।

ऋश्यशृङ्ग उवाच –

ऋद्धो[3] भवान् ज्योतिरिव प्रकाशते
मन्ये चाहं त्वामभिवादनीयम् ।
पाद्यं वै ते सम्प्रदास्यामि कामा-
द्यथाधर्मं फलमूलानि चैव ॥ ९ ॥

ऋद्धो भवान् इत्यादिपुल्लिङ्गसम्पादनं स्त्रीत्वाज्ञानादिति ज्ञेयम् ।

कौश्यां बृस्यामास्स्व यथोपजोषं
कृष्णाजिनेनावृतायां सुखाय ।

१. 'वारमुख्या' इति कुं.पाठः ।; २. 'चक्रे' इति कुं पाठः ।
३. BORI पृ. ३७२; 'ऋद्ध्या' इति कुं पाठः ।

**क्वचाश्रमस्तव किं नाम चेदं**
**व्रतं ब्रह्मंश्चरसि हि देववत्त्वम्** ॥ १० ॥

**कौश्यां** कुशमय्याम् ।

॥ इति द्वादशाधिकशततमोऽध्यायः ॥

## ॥ अथ विंशत्यधिकशततमोऽध्यायः ॥

**ततः सहस्राणि गवां प्रदाय तीर्थेषु तेष्वम्बुधरोत्तमस्य ।**
**हृष्टः सह भ्रातृभिरर्जुनस्य सङ्कीर्तयामास गवां प्रदानम्** ॥७॥

**तीर्थेषु तेष्वम्बुधरोत्तमस्य** इत्यत्र **अम्बुधरोत्तमस्य** समुद्राम्बुधारिषु **उत्तमस्य** सकलसमुद्राम्बुपानकर्तुरित्यर्थः ।

**[१] यो दन्तकूपे व्यजयन्नृदेवान् समागतान् दक्षिणात्यान् महीपान् ।**
**तं पश्यतेमं सहदेवमद्य तरस्विनं तापसवेषरूपम्** ॥ १८ ॥

**यो दन्तकूप** इत्यत्र दन्तकूपे **दन्ताभ्यां** वराहदंष्ट्राभ्यां **कूपः** तुङ्गभद्रोत्पत्तिस्थानरूपः यत्र तस्मिन् दक्षिणदेशे ।

॥ इति विंशत्यधिकशततमोऽध्यायः ॥

## ॥ अथ द्वाविंशत्यधिकशततमोऽध्यायः ॥

**सप्तैकैकस्य यूपस्य [२] चषालाश्च प्रतिष्ठिताः ।**
**तस्य स्म यूपान्यज्ञेषु भ्राजमानान्हिरण्मयान् ।**

---

१. **'यः सिन्धुकाले'** इति कुं. पाठः ।

२. $G_4, M_{1,2}$; BORI पृ. ४०२; **'चषालाश्चोपरिस्थिताः'** इति कुं पाठः ।

**स्वयमुत्थापयामासुर्देवाः सेन्द्रा युधिष्ठिर ॥ ६ ॥**

**चपालाश्च प्रतिष्ठिता** इत्यत्र 'चषालो यूपकटक'[1] इत्यभिधानात् **चषालाः** यूपालङ्कारभूतसौवर्णकटकाः। 'यज्ञस्य' इति पाठे यज्ञसाधन-यूपस्य।

**॥ इतिद्वाविंशत्यधिकशततमोऽध्यायः ॥**

## ॥ अथ पञ्चविंशत्यधिकशततमोऽध्यायः ॥

**ग्रहीष्यन्तं तु तं सोममश्विनोरुत्तमं तदा।**
**समीक्ष्य बलभिद्देव इदं वचनमब्रवीत् ॥ १४ ॥**

**ग्रहीष्यन्तं तु तं सोमम्** इत्यत्र उपरि ग्राहयन् **ग्रहीष्यन्** तं ग्रहीष्य-न्तम्।

**॥ इति पञ्चविंशत्यधिकशततमोऽध्यायः ॥**

## ॥ अथ षड्विंशत्यधिकशततमोऽध्यायः ॥

**भयात्संस्तम्भितभुजः सृक्किणी लेलिहन्मुहुः।**
**ततोऽब्रवीद्देवराजश्च्यवनं भयपीडितः ॥ २ ॥**

**सृक्किणी लेलिहन्मुहुः** इत्यत्र 'प्रान्तावोष्ठस्य सृक्किणी' इत्यभिधानात् **सृक्किणी** उत्तराधरोष्ठयोः प्रान्तौ।

[2]**सौद्युम्निः** युवनाश्वः। **॥ इति षड्विंशत्यधिकशततमोऽध्यायः ॥**

---

१. अ.को. २-७-१८

२. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते।

## ।। अथ एकोनत्रिंशदधिकशततमोऽध्यायः ।।

**ततः स [१] कालं अगमत्सोमकस्य गुरुः परम् ।**
**अन्वक्षमेव पश्चात्तु सोमकोप्यगमत्परम् ।। १० ।।**

**ततः स कालमगमत्** इत्यत्र **कालं** मृत्युम् ।

।। इति एकोनत्रिंशदधिकशततमोऽध्यायः ।।

## ।। अथ त्रिंशदधिकशततमोऽध्यायः ।।

**[२] अत्रानुवंश्या पठतः शृणु मे कुरुनन्दन ।**
**उलूखलैराभरणैः पिशाची यदभापत ।। ८ ।।**

**अत्रानुवंश्या** इत्यत्र **आनुवंश्याः** वंशोचिताः कथाः । **उलूखलैराभरणै** इत्यत्र पिशाचीत्वात् कण्ठलग्नैरुलूखलाख्यैराभरणैः ।

**एकरात्रमुषित्वेह द्वितीयं यदि वत्स्यसि ।**
**[३] एतद्धि मे दिवावृत्तं रात्रौ वृत्त[४]मतोऽन्यथा ।। १० ।।**

**एतद्धि मे दिवावृत्तम्** इत्यत्र मे दिवावृत्तम् **एतत्** क्षमारूपम् । रात्रौ चेद्वत्स्यसि तर्हि वृत्तम् **अतः** क्षमातः **अन्यथा** क्रोधरूपं इति राज्ञो वचनम् ।

**अत्र सारस्वतैर्यज्ञैरीजानाः परमर्षयः ।**
**[५] यूपोलूखलिनस्तत्र गच्छन्त्यवभृथप्लवम् ।। १४ ।।**

---

१. K3,D5 ; BORI पृ. ४२०; **'लोकं'** इति कुं पाठः ।
२. कुं. १३१ अध्यायः । **'अत्रानुवंशं'** इति कुं पाठः ।
३. **'एतद्वै ते'** इति कुं पाठः ।; ४. BORI पृ. ४२३; **'इतो'** इति कुं पाठः ।
५. **'यूपोलूखलिकास्तात'** इति कुं पाठः ।

**यूपोलूखलिनस्तत्र** इत्यत्र यज्ञसाधनयूपेन यज्ञसाधनसौवर्णोलूखलेन च सहिताः युपोलूखलिनः ।

**।। इति त्रिंशदधिकशततमोऽध्यायः ।।**

## ।। अथ एकत्रिंशदधिकशततमोऽध्यायः ।।

**[१]एष उज्ज्ञानको नाम [२]यमकीर्यत्र शान्तवान् ।**
**अरुन्धतीसहायश्च वसिष्ठो भगवानृषिः ।। १७ ।।**

**यमकीर्यत्र शान्तवान्** इत्यत्र यमं प्रति **कीरीवत्** शुकीवत् आर्तस्वरं कुर्वन् वसिष्ठः यमकीः इत्युच्यते ।

**जलां चोपजलां चैव यमुनामभितो नदीम् ।**
**[३]औशीनरो वै यत्रेष्ट्वा वासवादत्यरिच्यत ।। २१ ।।**

**औशीनरो वै यत्र** इत्यत्र **औशीनरः** शिबिः ।

**।। इति एकत्रिंशदधिकशततमोऽध्यायः ।।**

## ।। अथ त्रयस्त्रिंशदधिकशततमोऽध्यायः ।।

**[४]ऐन्द्रद्युम्नेर्यज्ञदृशाविहावां विवक्षू वै जनकेन्द्रं दिदृक्षू ।**
**[५]न तैः क्रोधाद्व्याधिना वोत्तमेन सम्योजय द्वारपाल क्षणेन ।।५।।**

---

१. कुं. १३२ अध्यायः । ; २. **'पावकिर्यत्र'** इति कुं पाठः ।
३. $D_2$ ; BORI पृ. ४२६; **'उशीनरो'** इति कुं पाठः ।
४. कुं. १३५ अध्यायः
५. **'न वै क्रुध्यो वन्दिना चोत्तमेन'** इति कुं पाठः ।

**न तैः क्रोधाद्व्याधिना वोत्तमेन** इत्यत्र विशेषेण आधिः मनस्सन्तापो **व्याधिः** ।

द्वारपाल उवाच –

**सरस्वतीमीरय वेद जुष्टा-**
**मेकाक्षरां बहुरूपां विराजम् ।**
**अङ्गात्मानं समवेक्षस्व बालं**
**किं श्लाघसे दुर्लभा वादसिद्धिः ॥ ९ ॥**

**सरस्वतीमीरय** इत्यत्र **सरस्वतीं** ॐकाररूपामिति भावः ।

अष्टावक्र उवाच –

**न ज्ञायते कायवृद्ध्या विवृद्धि-**
**र्यथाऽष्ठीला शाल्मली[1] सम्प्रवृद्धा[2] ।**
**ह्रस्वोऽल्पकायः फलितो विवृद्धो**
**यश्चाफलस्तस्य न वृद्धभावः ॥ १० ॥**

**शाल्मली सम्प्रवृद्धा** इत्यत्र शाल्मलि इति कण्टकितः स्थूलो वृक्ष विशेषः ।

अष्टावक्र उवाच –

**विवादितोऽसौ न हि मादृशैर्हि**
**सिंहीकृतस्तेन वदत्यभीतः ।**

---

१. **'शाल्मलेः'** इति कुं पाठः ।
२. **'सम्प्रवृद्धाः'** इति कुं पाठः ।

समेत्य मां निहतः शेष्यतेऽद्य
मया[१] भग्नं शकटमिवाबलाक्षम् ॥ २५ ॥

**शेष्यतेऽद्य मया** इयत्र **शेष्यते** शयनं करिष्यति ।

राजोवाच –

षण्णाभेर्द्वादशाक्षस्य चतुर्विंशतिपर्वणः ।
यस्त्रिषष्टिशतारस्य वेदार्थं स परः कविः ॥ २६ ॥

**षण्णाभेर्द्वादशा(क्ष)रस्य** इति श्लोकस्यायमर्थः **षण्णाभेः** षड्ऋत्वाख्यनाभेः, **द्वादशा(क्ष)रस्य** द्वादशमासाख्या(क्ष)रसहितस्य, द्वादशामावास्याः द्वादश पौर्णमास्यश्चेति **चतुर्विंशतिपर्वणः**, **त्रिषष्टिशतारस्य** षष्टिसहितत्रिशतदिवसाख्यारसहितस्य कालचक्रस्येत्यर्थः ।

अष्टावक्र उवाच –

चतुर्विंशतिपर्व त्वां षण्णाभि द्वादशप्रधि ।
तत्त्रिषष्टिशतारं वै चक्रं पातु सदागति ॥ २७ ॥

**सदागति** सदा परिभ्रमणवत् ।

राजोवाच–

बडबे इव सम्पृक्ते[२] शैन्ये[३] पाते दिवौकसाम् ।
कस्तयोर्गर्भमाधत्ते गर्भं सुषुवतुश्च कम् ॥ २८ ॥

---

१. **'मार्गे'** इति कुं पाठः ।
२. $K_4$,$B_2$,$D_{2.3}$ ; BORI पृ. ४३७; **'संयुक्ते'** इति कुं पाठः ।
३. **'श्येनपाते'** इति कुं पाठः ।

**बडवे इव सम्पृक्त** इत्यत्र **शैन्ये** उत्तरायणदक्षिणायनाख्ये दिवौकसां **पाते** सन्निपते स्तः।

**अष्टावक्र उवाच –**

**मा स्म भूः स्वगृहे राजञ्शात्रवाणामपि ध्रुवम्।**
**वातसारथिः आहर्ता[1] गर्भं सुषुवतुश्च तम् ॥ २९ ॥**

**मा स्म भूः स्वगृह** इत्यत्र हे राजन् स्वगृह एव मा स्म भूः। किन्तु शात्रवाणामपि संहर्ताऽभूः इति राज्ञः स्तुतिः। उत्तरमाह– **वातसारथिः** निदाघकालीनोऽग्निः **आहर्ता** गर्भमाहर्ता। उत्तरायणनिदाघकाले सूर्य-किरणैः जलानां निदाघान्तर्निवेशनादिति भावः। उभे मिलित्वा **कं** वर्षधारारूपं जलं सुषुवतुः।

**राजोवाच –**

**किंस्वित्सुप्तं न निमिषति किंस्विज्जातं न चोत्पति[2]।**
**कस्यस्विद्धृदयं नास्ति किं स्विद्वेगेन वर्धते ॥ ३० ॥**

**किंस्वित्सुप्तम्** इत्यत्र **अण्डजातं** पक्षिकुलीनम् **उत्पति** ऊर्ध्वं पतनवत्।

**मत्स्यः सुप्तो न निमिषत्यण्डजातं[3] न चोपति।**
**अश्मनो हृदयं नास्ति नदी वेगेन वर्धते ॥ ३१ ॥**

**मत्स्यः सुप्त** इत्यत्र **अण्डजातम्** अण्डाकारेण विद्यमानम्।

॥ इति त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥

---

१. M; BORI पृ. ४३७; **'आधत्ते'** इति कुं पाठः।
२. **'चोपति'** इति कुं पाठः।; ३. **'निमिषत्यण्डं जातं'** इति कुं पाठः।

## ।। अथ चतुस्त्रिंशदधिकशततमोऽध्यायः ।।

**अष्टावक्र उवाच –**

**द्वाविन्द्राग्नी[1] चरतो वै सखायौ**
**द्वौ देवर्षी नारदपर्वतौ च ।**
**द्वावश्विनौ द्वे रथस्यापि चक्रे**
**भार्यापती द्वौ विहितौ विधात्रा ।। ९ ।।**

अग्न्यादिकं सर्वमेकमेवेति वन्दिना उक्ते सति ऐक्यवादिनं प्रति भेद-वादिवत् द्वावेवेत्युत्तरमाह– **द्वौ** इत्यादिना ।

**वन्द्युवाच –**

**त्रिः सूयते कर्मणा वै प्रजेयं**
**त्रयो युक्ता वाजपेयं वहन्ति ।**
**अध्वर्यवस्त्रिसवनानि तन्वते**
**त्रयो लोकास्त्रीणि ज्योतींषि चाहुः ।। १० ।।**

**त्रिः सूयत** इत्यत्र धान्यादौ पितरि मातरि चेति **त्रिः** इत्यर्थः । **त्रयो** वेदाः, **अध्वर्यवः** सूर्यचन्द्राग्न्याख्याः, **त्रिसवनानि** अहोरात्रे सन्ध्या-कालं चेति ।

**अष्टावक्र उवाच –**

**चतुष्टयं ब्राह्मणानां निकेतं चत्वारो वेदाः[2] यज्ञमिमं वहन्ति ।**
**दिशश्चतस्रो वर्णचतुष्टयश्च चतुष्पदा गौरपि शश्वदुक्ता ।।११।।**

---

१. कुं. १३६ अध्यायः ;   २. 'वर्णा' इति कुं पाठः ।

**चतुष्टयम्** इत्यत्र **चतुष्टयं** वेदचतुष्टयम् । चत्वारो वेदाः । तस्मात् त्रिरित्यादिकं 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति श्रुतेन सम्पूर्णं तत्त्वमिति भावः ।

**वन्द्युवाच –**

**नवैवोक्ताः सामिधेन्यः पितॄणां तथा प्राहुर्नवयोगं विसर्गम् ।**
**नवाक्षरा बृहती सम्प्रदिष्टा नवैव योगो गणनामेति शश्वत् ॥१६॥**

**नवैवोक्ताः सामिधेन्य** इत्यत्र **सामिधेन्यः** सन्निधानस्थानानि ।

**अष्टावक्र उवाच –**

**दिशो दशोक्ताः पुरुषस्य लोके सहस्रमाहुर्दशपूर्णं शतानि ।**
**दशैव मासान्बिभ्रति भर्गवत्यो दशैरका दशदाशा दशार्हाः॥१७॥**

**दशाः** अवस्थाः दश ।

**लोमश उवाच –**

**एतावदुक्त्वा विरराम वन्दी श्लोकस्यार्धं व्याजहाराष्टवक्त्रः ।**

**अष्टावक्र उवाच –**

**त्रयोदशाहानि ससार केशी त्रयोदशादीन्यतिच्छन्दांसि चाहुः२०**

**त्रयोदशाहानि** इत्यत्र **केशी** केशिनी दमयन्त्या दूती बाहुकनामतया स्थितनलस्वरूपविवेचनार्थं त्रयोदशाहानि ससार । **आदीनि** मुख्यानि च्छन्दांसि त्रयोदश आहुः ।

॥ इति चतुस्त्रिंशदधिक शततमोऽध्यायः ॥

## ।। अथ पञ्चत्रिंशदधिकशततमोऽध्यायः ।।

[१] श्लेष्मातकः क्षीणवर्चाः शृणोषि
उताहो त्वां स्तुतयो मादयन्ति ।
हस्तीव त्वं जनक विनुद्यमानो
न मामिकां वाचमिमां शृणोषि ।। २८ ।।

**श्लेष्मातक** इत्यत्र [२] 'शेलुः श्लेष्मातकः शीत' इत्यभिधानात् **श्लेष्मातकः** अपवित्रवृक्षविशेषः, तद्वत् स्थित इत्यर्थः ।

उताबलस्य बलवानुत बालस्य पण्डितः ।
उत वाऽविदुषो विद्वान्पुत्रो जनक जायते ।। ३४ ।।

**पुत्रो जनक जायत** इत्यत्र जनकेति राज्ञः सम्बुद्धिः । **पुत्रः** पितुरुद्धर्ता जायते ।

वन्द्युवाच –
[३] सितेन ते परशुना स्वयमेवान्तको नृप ।
शिरांस्यपाहरन्नाजौ रिपूणां भद्रमस्तु ते ।। ३५ ।।

**सितेन ते परशुना** इत्यत्र सितेन ते **परशुना** पुण्यकीर्त्याख्यपरशुना ।

महदौक्थ्यं गीयते साम चाग्र्यं
सम्यक्सोमः पीयते चात्र सत्रे ।

---

१. $K_3$,$D_5$,$G_2$,$T_1$ ; BORI पृ. ४४२; **'श्लेष्मातकी'** इति कुं पाठः ।
२. अ.को. २-४-३४
३. **'शितेन'** इति कुं पाठः ।

शुचीन्भागान्प्रतिजगृहुश्च हृष्टाः
साक्षाद्देवा जनकस्येह राज्ञः ॥ ३६ ॥

**उक्थ्यम्** उक्थनामक मुख्यप्राणसम्बन्धि ।

॥ इति पञ्चत्रिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ षट्त्रिंशदधिकशततमोऽध्यायः ॥

लोमश उवाच –

एषा[1] मधुविला नाम समङ्गा सम्प्रकाशते ।
एतत्कर्दमिलं नाम भरतस्याभिषेचनम् ॥ १ ॥

**समङ्गा सम्प्रकाशत** इत्यत्र **समङ्गा** समङ्गानाम्नी नदी ।

एष रैभ्याश्रमः श्रीमान्पाण्डवेय प्रकाशते ।
भारद्वाजो यत्र कविर्यवक्रीतो व्यनश्यत ॥ ९ ॥

**यवक्रीतो व्यनश्यत** इत्यत्र **भारद्वाजः** भरद्वाजपुत्रः **यवक्रीतः** यवक्रीतनामकः, यवक्रीरिति तस्यैव नाम ।

॥ इति षट्त्रिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ सप्तत्रिंशदधिकशततमोऽध्यायः ॥

निमित्तं[2] महिषैरस्य[3] भेदयामास पर्वतान् ।
स निमित्ते विनष्टे तु ममार सहसा शिशुः ॥ ५३ ॥

१. कुं. १३७ अध्यायः ; २. कुं. पाठानुसारेण अत्र पूर्वाध्याय एवानुसरति ।
३. BORI पृ. ४४८; 'अस्य महर्षिः' इति कुं.पाठः ।

**निमित्तं महिषैः** इत्यत्र **अस्य** ऋषिपुत्रस्य **निमित्तं** जीवननिमित्तं महीतलं महिषैर्भेदयामास । महीतलवत् पर्वतवत् मत्पुत्रः जीवतु इति खलु वरः । महीतलस्य भेदने पुत्रस्यापि मरणं न्याय्यमभूदिति भावः ।

**॥ इति सप्तत्रिंशदधिकशततमोऽध्यायः॥**

## ॥ अथ पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥

**मन्दीभूते[1] तु पवने तस्मिन् रजनि शाम्यति ।**
**महद्भिः पृषतैः[2] ओघैः वर्षमभ्याजगाम ह ॥ १७ ॥**

**महद्भिः पृषतैः** इत्यत्र 'पृषन्ति बिन्दुपृषतौ' इत्यभिधानात् **पृषतैः** जलबिन्दुभिः ।

**॥ इति पञ्चचत्वारिंशदधिकशततमोऽध्यायः॥**

## ॥ अथ एकपञ्चाशदधिकशततमोऽध्यायः ॥

**ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च कृतलक्षणाः ।**
**कृते युगे समभवन्स्वकर्मनिरताः प्रजाः ॥ १९ ॥**

**शूद्राश्च कृतलक्षणा** इत्यत्र **कृतलक्षणाः** कृततप्तचक्रशङ्खादिलाञ्छनाः।

**॥ इति एकपञ्चाशदधिकशततमोऽध्यायः ॥**

* * *

१. कुं. पाठानुसारेण अत्र पूर्वाध्याय एवानुसरति ।
२. BORI पृ. ४६३; **'जलधारौघैः'** इति कुं.पाठः ।

## ।। अथ द्विपञ्चाशदधिकशततमोऽध्यायः ।।

**[१]जिह्वानाममृतं धर्मो ह्येकश्चैवैकवर्णकः ।**
**यज्ञाध्ययनदानानि त्रयः साधारणाः स्मृताः** ।। ३५ ।।

**जिह्वानाममृतं धर्म** इत्यत्र 'अमृतं यदयाचितम्' इति वचनात् अयाचिता वृत्तिः **अमृतम्** ।

**।। इति द्विपञ्चाशदधिकशततमोऽध्यायः ।।**

## ।। अथ पञ्चपञ्चाशदधिकशततमोऽध्यायः ।।

**कदर्थीकृत्य तु स तान् राक्षसान् भीमविक्रमः ।**
**व्यगाहत महातेजास्ते तं सर्वे न्यवारयन्** ।। १६ ।।

**कदर्थीकृत्य** इत्यत्र **कदर्थीकृत्य** तुच्छीकृत्य ।

**।। इति पञ्चपञ्चाशदधिकशततमोऽध्यायः ।।**

## ।। अथ षट्पञ्चाशदधिकशततमोऽध्यायः ।।

**तमन्वियाम भवतां प्रभावाद्रजनीचराः ।**
**पुरा[२]ऽसौ नापराध्नोति सिद्धानां ब्रह्मवादिनाम्** ।। २० ।।

**पुराऽसौ नापराध्नोति** इत्यत्र **अपराध्नोति** अपराधं करोति ।

**।। इति षट्पञ्चाशदधिकशततमोऽध्यायः ।।**

---

१. **'द्विजानाममृतं'** इति कुं पाठः ।
२. K4,S(except T1); BORI पृ. ५०६; **'स'** इति कुं.पाठः ।

॥ अथ सप्तपञ्चाशदधिकशततमोऽध्यायः ॥

[१] ततो युधिष्ठिरस्तस्य भारिकः समपद्यत ।
स तु भाराभिभूतात्मा न तथा शीघ्रगोऽभवत् ॥ २६ ॥

**भारिकः समपद्यत** इत्यत्र [२] 'भारवाहस्तु भारिक' इत्यभिधानात् **भारिकः** दैत्यस्य शिरसि भारं दिशन् ।

विज्ञातोऽसि मया पूर्वं चेष्टञ्शास्त्रपरीक्षणे ।
[३] आस्थानं त्वयि मे नास्ति यतोसि न हतस्तदा ॥ ३९ ॥

**आस्थानं त्ययि मे नास्ति** इत्यत्र आस्थानम् आस्था विश्वास इत्यर्थः।

बडिशोऽयं त्वया ग्रस्तः कालसूत्रेण लम्बितः ।
मत्स्योऽम्भसीव स्यूतास्यः कथमद्यगमिष्यसि ॥ ४३ ॥

**बडिशोऽयं त्वया ग्रस्त** इत्यत्र 'बडिशो मत्स्यबन्धनम्'[४] इत्यभिधानात् **बडिशः** मत्स्यबन्धनमित्यर्थः ।

श्रुता मे राक्षसा ये ये त्वया विनिहता रणे ।
तेषामद्य करिष्यामि तवास्रेणोदकक्रियाम् ॥ ४७ ॥

**तवास्रेणोदकक्रियाम्** इत्यत्र [५] 'रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितं' इत्यभिधानात् **अस्रं** रक्तम् । ॥ इति सप्तपञ्चाशदधिकशततमोऽध्यायः ॥

---

१. कु. १५८ अध्यायः ।; २.अ.को. २-१०-१५; ३. **'आस्था तु'** इति कु पा
४. अ.को. १-१०-१६ बलिशं इति पृथक् पाठः ।
५. अ.को. २-६-६४

## ।। अथ एकोनषष्ट्यधिकशततमोऽध्यायः ।।

सुखोदर्कमिमं[1] क्लेशमचिराद्भरतर्षभ ।
क्षत्रधर्मेण धर्मज्ञ तीर्त्वा गां पालयिष्यसि ।। १२ ।।

**सुखोदर्कमिमं क्लेशम्** इत्यत्र सुखात् **उदर्कम्** उत्कृष्टं सुखोदर्कम् ।

एकैकशश्च तान्विप्रान्निवेद्य वृषपर्वणि ।
न्यासभूतान्यथाकालं बन्धूनिव सुसत्कृतान् ।
पारिबर्हं च तं शेषं परिदाय महात्मने ।। २४ ।।

**न्यासभूतान् यथाकालम्** इत्यत्र नितराम् **आसः** अस्मत्समीपे आसनं येषां ते **न्यासभूताः** ।

।। इति एकोनषष्ट्यधिकशततमोऽध्यायः ।।

## ।। अथ एकषष्ट्यधिकशततमोऽध्यायः ।।

रुक्मपट्टपिनद्धां[2] तां शत्रूणां भयवर्धिनीम् ।
प्रगृह्याथ नदन्भीमः सर्वशैक्यायसीं[3] गदाम् ।
तरसा चाभिदुद्राव मणिमन्तं महाबलम् ।। ७९ ।।

**सर्वशैक्यायसीं गदाम्** इत्यत्र **सर्वं** सर्वाङ्गं **शैक्ये** शिक्ये यस्याः, सा च सा आयसी च ।

---

१. कुं. १५९ अध्यायः ।
२. कुं. १६१ अध्यायः ।
३. BORI पृ. ५३३; 'शैक्यां सर्वायसीं गदाम्' इति कुं पाठः ।

[१] न्यष्ठीवताकाशगतो महर्षेस्तस्य मूर्धनि ।
ततः क्रुद्धः स भगवानुवाचेदं तपोधनः ॥ ६२ ॥

**न्यष्ठीवताकाशगत** इत्यत्र **न्यष्ठीवत** निष्ठीवनमकरोत् ।

॥ इति एकषष्ट्यधिकशततमोऽध्यायः ॥

## ॥ अथ त्रिषष्ट्यधिकशततमोऽध्यायः ॥

ततः शक्तिं गदां खड्गं धनुश्च भरतर्षभः ।
[२] अंसे प्राध्वत् नमश्चक्रे कुबेराय वृकोदरः ॥ २८ ॥

**अंसे प्राध्वत्** इत्यत्र प्रकर्षेण **आ** सम्यक् **ध्वत्** पातयन्, स्थापयन्नित्यर्थः ।

पक्षिणामिव निर्घोषः कुबेरसदनं प्रति ।
बभूव परमाश्वानां [३] ऐरावणपथे यताम् ॥ ३६ ॥

**ऐरावणपथे यताम्** इत्यत्र **ऐरावणाख्यः** कुबेरसखा, तस्य पथे **यतां** गच्छताम् ।

॥ इति त्रिषष्ट्यधिकशततमोऽध्यायः ॥

## ॥ अथ चतुःषष्ट्यधिकशततमोऽध्यायः ॥

वैशम्पायन उवाच –

ततः सूर्योदये धौम्यः पाञ्चालीसहितांश्च तान् ।
आर्ष्टिषेणेन सहितः पाण्डवानभ्यवर्तत ॥ १ ॥

---

१. कुं. १६२ अध्यायः । BORI पृ. ५३८; **'न्यष्ठीवदाकाशगतो'** इति कुं पाठः
२. **'प्राध्वं कृत्वा'** इति कुं.पाठः । ; ३. **'ऐरावतपथे यथा'** इति कुं.पाठः ।

**अभ्यवर्तत** अभिययौ ।

**यं पाप्य सविता राजन् सत्येन प्रतितिष्ठति ।**
**अस्तं पर्वतराजानमेतमाहुर्मनीषिणः ॥ ९ ॥**

**अस्तं पर्वतराजानम्** इत्यत्र मेरोः प्राचीदिशि स्थितानाम् अस्तमय-पर्वतम् ।

॥ इति चतुःषष्ट्यधिकशततमोऽध्यायः ॥

## ॥ अथ पञ्चषष्ट्यधिकशततमोऽध्यायः ॥

**[१]शक्रेण दत्तानि ददौ महात्मा**
**महाधनान्युत्तमरूपवन्ति ।**
**दिवाकराभाणि विभुषणानि**
**प्रीतः प्रियायै [२]श्रुतसोममात्रे ॥ ११ ॥**

**प्रियायै श्रुतसोममात्र** इत्यत्र पञ्चकुमारेष्वेकः श्रुतसोमाख्यः तस्य माता द्रौपदी तस्यै ।

॥ इति पञ्चषष्ट्यधिकशततमोऽध्यायः ॥

## ॥ अथ सप्तषष्ट्यधिकशततमोऽध्यायः ॥

**[३]एष ते निशितैर्बाणैर्दर्पं हन्मि स्थिरो भव ।**
**[४]स वर्षवान्महाकायस्ततो मामभ्यधावत ॥ २४ ॥**

---

१. कुं. १६६ अध्यायः । ; २. 'सुतसोममात्रे' इति कुं पाठः ।
३. कुं. १६८ अध्यायः ।; ४. 'सङ्कर्षवान् महाकाय' इति कुं पाठः ।

**स वर्पवान्महाकाय** इत्यत्र **वर्पवान्** शरवर्षवान् ।

**[१] स्थूणाकर्णमयो भाजं शरवर्षं शरोल्बणम् ।**
**शलभास्त्रमश्मवर्षं समास्थायाहमभ्ययाम् ॥ ३३ ॥**

**स्थूणाकर्णमयोभाजम्** इत्यत्र स्थूणावत् कर्णौ **अयसः** पार्श्वदेशौ यस्य तम् ।

**हित्वा [२] मृगतनुं तां च भगवांस्त्रिदशेष्वरः ।**
**स्वरूपं दिव्यमास्थाय तस्थौ तत्र महेश्वरः ॥ ४३ ॥**

**हित्वा मृगतनुम्** इत्यत्र **मुगयोः** लुब्धकस्य तनुम् ।

**तुष्टोऽस्मि तव कौन्तेय ब्रूहि किं करवाणि ते ।**
**मनोगतं वीर यत्ते तद्ब्रूहि वितराम्यहम् ।**
**अमरत्वमपाहाय ब्रूहि यत्ते मनोगतम् ॥ ४७ ॥**

**अमरत्वमपाहाय** इत्यत्र **अमरत्वं** मर्त्यदेहेन सहैव अमरत्वम् ।

**॥ इति सप्तषष्ट्यधिकशततमोऽध्यायः ॥**

## ॥ अथ द्विसप्तत्यधिकशततमोऽध्यायः ॥

**[३] हतेष्वसुरसङ्घेषु दारास्तेषां तु सर्वशः ।**
**प्राक्रोशन्नगरे तस्मिन् यथा शरदि [४] लक्षणा ॥ २१ ॥**

---

१. **'स्थूणाकर्णमथो जालं'** इति कुं पाठः । ; २. **'किरातरूपं'** इति कुं. पाठः ।
३. कुं. १७४ अध्यायः
४. **'लक्ष्मणाः'** इति कुं. पाठः ।

**यथा शरदि लक्षणा** इत्यत्र [१] 'हंसस्य योषिद्वरटा सारसस्य तु लक्षणा' इत्यभिधानात् **लक्षणाः** सारसपक्षिणां पत्न्यः, शरदि जलह्रासे सति रोदनं कुर्वन्ति, तद्वदित्यर्थः ।

॥ इति द्विसप्तत्यधिकशततमोऽध्यायः ॥

## ॥ अथ षट्सप्तत्यधिकशततमोऽध्यायः ॥

[२] **त्रिकूबरं समुद्रं च त्रिभिर्वंशैस्त्रिवेणुकम् ।**
**पार्थिवं रथमास्थाय शोभमानो धनञ्जयः** ॥ ५ ॥

**त्रिकूबरं समुद्रं च** इत्यत्र **मुद्रया** रथलक्षणेन सहितं **समुद्रम्** ।

**त्रिभिर्वंशैस्त्रिवेणुकम्** इत्यत्र **त्रिवेणुकं** त्रिध्वजसहितम् ।

॥ इति षट्सप्तत्यधिकशततमोऽध्यायः॥

## ॥ अथ सप्तसप्तत्यधिकशततमोऽध्यायः ॥

[३] **तवाज्ञया पार्थिव निर्विशङ्का**
**विहाय मानं विचरामो वनानि ।**
**समीपवासेन विलोभितास्ते**
**ज्ञास्यन्ति नास्मानपकृष्टदेशान्** ॥ ९ ॥

---

१. अ.को. २-५-२५

२. कुं. १७७ अध्यायः । G1,M; BORI पृ. ५८४; **'गिरिकूबरपादाक्षं शुभवेणुत्रिवेणुमत्'** इति कुं.पाठः ।

३. कुं. १७८ अध्यायः

**समीपवासेन विलोभितास्ते** इत्यत्र अज्ञातवासाय **अपकृष्टदेशान्** बहुदूरगतान्मत्वा समीपवासेन **विलोभिताः** वञ्चितास्ते अस्मान्न ज्ञास्यन्ति ।

॥ इति सप्तसप्तत्यधिकशततमोऽध्यायः ॥

## ॥ अथ अष्टसप्तत्यधिकशततमोऽध्यायः ॥

**[१] वनानि देवदारूणां मेघानामिव वागुराः ।**
**हरिचन्दनमिश्राणि तुङ्गकालीयकान्यपि ॥ १० ॥**

**मेघानामिव वागुरा** इत्यत्र [२] 'वागुरा मृगबन्धिनी' इत्यभिधानात् **वागुराः** बन्धनरज्जव इव स्थिताः ।

**स भीमं सहसाऽभ्येत्य [३] स्फिजा तं क्षुधितो भृशम् ।**
**जग्राहाजगरो ग्राहो भुजयोरुभयोर्बलात् ॥ २७ ॥**

**स्फिजा तं क्षुधितो भृशम्** इत्यत्र [४] 'स्त्रियां स्फिजौ कटिः प्रोथ' इत्यभिधानात् **स्फिजा** कट्या तं भीमसेनम् ।

**दशनागसहस्राणि धारयन्ति हि यद्बलम् ।**
**तद्बलं भीमसेनस्य [५] भुजयोर्न स मंसत ॥ २९ ॥**

**भुजयोर्न स मंसत** इत्यत्र **सः** सर्पः भमिसेनस्य भुजयोः तद्बलं **न मंसत** अमंसत, अमंस्तेत्यर्थः । वरादि बहुसत्वसूचनाय एकवचनस्थाने बहुवचनम् ।

॥ इति अष्टसप्तत्यधिकशततमोऽध्यायः ॥

---

१. कुं. १८० अध्यायः ; २. अ.को. २-१०-२६
३. 'पृदाकुः' इति कुं पाठः ।; ४. अ.को. २-६-७४; ५. 'भुजयोरसमं परैः' कुं

## ।। अथ त्र्यशीत्यधिकशततमोऽध्यायः ।।

**[१] कचिद्दानप्रयोगाद्धि सत्यमेव विशिष्यते ।**
**सत्यवाक्याच्च राजेन्द्र कचिद्दानं विशिष्यते ।। ५ ।।**

**कचिद्दानप्रयोगात्** इत्यत्र सत्यकथने सति कस्याप्यनिष्टं न भवति चेत् दानादपि सत्यमेव विशिष्यते । चोरेण हिंसार्थं ब्राह्मणान्वेषणे क्रियमाणे सत्यवचनेन हिंसाप्राप्तेः तादृशस्थले सत्यादपि दानमेव विशिष्यते ।

**तत्र ह्यगस्त्यः पादेन वहन् स्पृष्टो महामुनिः ।**
**[२] अदृष्टेन ततोस्म्युक्तो ध्वंस सर्पेति वै रुषा ।। ३७ ।।**

**अदृष्टेन तत** इत्यत्र **अदृष्टेन** अगस्त्यहृदयान्तस्स्थितेन अदृष्टेन ब्रह्मणा ।

।। इति त्र्यशीत्यधिकशततमोऽध्यायः ।।

## ।। अथ चतुरशीत्यधिकशततमोऽध्यायः ।।

**[३] भ्रमत्येव हि मे बुद्धि र्दृष्ट्वाऽऽत्मानं सुखाच्च्युतम् ।**
**धार्तराष्ट्रांश्च दुर्वृत्तान् [४] सर्वतः प्रेक्ष्य गृध्यतः ।। ४ ।।**

**सर्वतः प्रेक्ष्य गृध्यत** इत्यत्र **सर्वतः** सतः सर्वं **गृध्यतः** आकाङ्क्षमाणान् 'गृधु अभिकाङ्क्षायाम्' इति धातुः ।

---

१. कुं. १८३ अध्यायः
२. **'अगस्त्येन तत'** इति कुं.पाठः ।
३. कुं. १८६ अध्यायः ।
४. **'ऋद्ध्यतः प्रेक्ष्य सर्वशः'** इति कुं.पाठः ।

**दौष्कुल्या व्याधिबहुला दुरात्मानोऽपतापिनः[१] ।**
**भवन्त्यल्पायुषः पापा रौद्रकर्मफलोदयाः ।**
**नाथन्तः सर्वकामानां नास्तिका भिन्नचेतसः ॥ २१ ॥**

**दुरात्मानोऽपतापिन** इत्यत्र **अपतापिनः** पश्चात्तापरहिताः । **नाथन्तः** याचन्तः 'नाथृ याच्ञायाम् ' इति धातुः ।

॥ इति चतुरशीत्यधिकशततमोऽध्यायः ॥

## ॥ अथ सप्ताशीत्यधिकशततमोऽध्यायः ॥

[२]**सुभिक्षान्न्युचितोद्भव** इत्यत्र सुभिक्षं यथा भवति तथा **अन्नी** अन्नवान् सुभिक्षान्नी, **बभ्रुः** कामधेनुः ।

॥ इति सप्ताशीत्यधिकशततमोऽध्यायः ॥

## ॥ अथ अष्टाशीत्यधिकशततमोऽध्यायः ॥

[३]**यच्चापि [४]वाक्यमुपयुज्यते ह वानस्पत्यं [५]पायसं पार्थिवं वा ।**
**दिव्येन रूपेण च प्रज्ञया च तेनैव सिद्धिरिति विद्धि विद्वन् ॥२५**

**यच्चापि वाक्यम्** इत्यत्र **वाक्यं** यज्ञे विनियुक्तमन्त्ररूपम्, **वानस्पत्यं** समिदादिरूपम्, **पायसं** पयस्सम्बन्धि दधिघृतादिरूपम्, **पार्थिवं** व्रीहियवादिरूपम् ।

---

१. $S_1, K_{1.2}, D_1, G_4$,M ; BORI पृ. ६१९; **'-ऽभितापिनः'** इति कुं पाठः
२. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
३. **कुं. १८९ अध्यायः ।** ; ४. **'पात्रं'** इति कुं. पाठः ।
५. **'आयसं'** इति कुं. पाठः ।

ताक्ष्यं उवाच –

इदं श्रेयः प्रत्ययात्(न्)[1] मन्यमाना
व्यायच्छन्ते मुनयः सम्प्रतीताः ।
आचक्ष्व मे तं परमं विशोकं
मोक्षं परं यं प्रविशन्ति धीराः ।
साङ्ख्या योगाः परमं यं विदन्ति
परं पुराणं तमहं न वेद्मि ॥ २६ ॥

प्रत्ययात्(न्) श्रद्धारूपविश्वासाच्च व्यायच्छन्ते उपदिशन्ति ।

सरस्वत्युवाच –

तं वै परं वेदविदः प्रपन्नाः
परं परेभ्यः प्रथितं पुराणम् ।
स्वाध्याय दान व्रतपुण्ययोगैः
तपोधना वीतशोका विमुक्ताः ॥ २७ ॥

तं वै परम् इत्यत्र स्वाध्यायदानव्रतपुण्ययोगैः तं मोक्षं प्रपन्ना भवन्ति ।

तस्याथ मध्ये वेतसः पुण्यगन्धः
सहस्रशाखो विपुलो विभाति ।
तस्य मूलात्सरितः प्रस्रवन्ति
मधूदकप्रस्रवणाः सुपुण्याः ॥ २८ ॥

तस्य मोक्षस्य, वेतसः ज्ञानानन्दमयः नदीकर्दमसम्भूतः तृणगुल्म-

१. 'परमं' इति कु पाठः ।

विशेषः । 'नादेयी चाम्बुवेतसा'[1] इत्यमरः । **सरितः** सूक्ष्मप्रकृत्यंशमया अनाद्यनन्तकालेऽपि विद्यमाना मुक्तोपभोग्यनद्यः **मधूदकप्रस्रवणाः** मध्वेव उदकं तस्य प्रस्रवणं यासु ताः ।

॥ इति अष्टाशीत्यधिकशततमोऽध्यायः ॥

## ॥ अथ एकोननवत्यधिकशततमोऽध्यायः ॥

**[2]उदकान्तमुपानीय मत्स्यं वैवस्वतो मनुः ।**
**[3]अरञ्जले प्राक्षिपत्तं चन्द्रांशुसदृशप्रभम् ॥ ११ ॥**

**अरञ्जले प्राक्षिपत्** इत्यत्र **अरम्** अलं जलं यस्मिन् पूर्यते तत् **अरञ्जलम्** । 'अरञ्जलः स्यान्मणिकः कर्कर्यालुः'[4] इत्यभिधानात् जलपूरणपात्रविशेषः । 'रञ्जणिगे' इत्यपभ्रंशभाषा ।

**एवमुक्तो मनुर्मत्स्यमनयद्भगवान्वशी ।**
**[5]समुद्रमहिषीं गङ्गां स्वयं प्राक्षिपदेव च ॥ २१ ॥**

**समुद्रमहिषीं गङ्गाम्** इत्यत्र **समुद्रमहिषीं** समुद्रपत्नीम् ।

**सुमहानपि मत्स्यस्तु स मनोर्नयतस्तदा ।**
**आसीद्यथेष्टहार्यश्च स्पर्शगन्धसुखश्च वै ॥ २५ ॥**

**आसीद्यथेष्टहार्य** इत्यत्र **यथेष्टहार्यः** सुखेन हर्तुं नेतुं शक्यः ।

---

१. अ.को. २-४-३० ; २. कुं. १९० अध्यायः ।
३. S; BORI पृ. ६३२; 'अलिञ्जरे' इति कुं पाठः ।
४. अ.को. २-९-३१
५. 'नदीं गङ्गां तत्र चैनं' इति कुं.पाठः ।

**सम्प्रक्षालनकालोऽयं लोकानां समुपस्थितः ।**
**तस्मात्त्वां बोधयाम्यद्य यत्ते हितमनुत्तमम्** ॥ २९ ॥

**सम्प्रक्षालनकालोऽयम्** इत्यत्र **लोकानां** पातालादिभूपर्यन्तलोकानां **सं** सम्यक् **प्रक्षालनं** जले निमज्जनम् । 'यच्चेङ्गं यच्च नेङ्गति । तस्य सर्वस्य सम्प्राप्तः कालः परमदारुण' इति वचनात् लोकस्थप्राणिनां नाशोऽस्ति । 'ततो हिमवतः शृङ्गं यत्परं' जलादुपरि विद्यमानं इति वचनात् उत्तङ्गहिमवदादिपर्वतशृङ्गात् अधो भाग एव समुद्रजलकल्लोल इति सूचितम् ।

**[१] चराणां स्थावराणां च यच्चेङ्गं यच्च नेङ्गति ।**
**तस्य सर्वस्य संप्राप्तः कालः परमदारुणः** ॥ ३० ॥

**चराणां स्थावराणाम्** इत्यत्र यत् **इङ्गम्** 'इङ्ग चेष्टायाम्' इति धातोः चेष्टावत् ।

**नौश्च कारयितव्या ते दृढा [२] युक्तवटाङ्कुरा ।**
**तत्र सप्तर्षिभिः सार्धमारुहेथा महामुने** ॥ ३१ ॥

**युक्तवटाङ्कुरा** इत्यत्र युक्तः **वटाङ्कुरः** दीर्घरज्ज्वाकारेण स्थिता वटशिफा यस्यां सा ।

**एवमेतत्वया कार्यं [३] आपृच्छास्मिन् व्रजाम्यहम् ।**
**ता न शक्या महत्यो वै आपस्तर्तुं मया विना ।**
**नातिशङ्क्यमिदं चापि वचनं मे त्वया विभो** ॥ ३४ ॥

---

१. $Ś_1$,$K_{2.4}$,$D_1$,$M_1$ ; BORI पृ. ६३४; **'त्रसानां'** इति कुं पाठः ।
२. **'युक्तवटारका'** इति कुं पाठः ।; ३. **'आपृष्टोऽसि'** इति कुं पाठः ।

**आपृच्छास्मिन् व्रजाम्यहम्** इत्यत्र **अस्मिन्** उडुपे माम् **आपृच्छ** तत्वानि विचारय।

**एवं बहून्वर्षगणांस्तां नावं सोऽथ मत्स्यकः।**
**[१]चकर्ष तन्त्रितो राजंस्तस्मिन्सलिलसञ्चये ॥ ४५ ॥**

**चकर्ष तन्त्रित** इत्यत्र **तन्त्रितः** नौकाधीनः सन्।

**[२]नैकं युगसहस्रान्तास्त्वया दृष्टा महामुने।**
**न चापीह समः कश्चिदायुष्मान्दृश्यते तव ॥ २ ॥**

**नैकं युगसहस्रान्ताः** इत्यत्र एकं न भवति यथा **नैकं** बहव इत्यर्थः।

**त्रीणि वर्षसहस्राणि त्रेतायुगमिहोच्यते।**
**तस्य तावच्छती सन्ध्या सन्ध्यांशश्च ततः परम् ॥ २३ ॥**

**तस्य तावच्छती सन्ध्या सन्ध्यांशश्च ततः परम्** इत्यत्र **तावच्छती** चतुःशती **सन्ध्या** सन्ध्याया मध्यमभागः। **ततः** सन्ध्यातः **परम्** उपरि पूर्वं च सन्ध्यांशोऽपि **तावच्छती** पूर्वं द्विशती पश्चात् द्विशती इत्यर्थः।

**त्रीणि वर्षसहस्राणि त्रेतायुगमिहोच्यते ॥**

**त्रीणि वर्षसहस्राणि** इत्यत्र **तावच्छती** त्रिशती सन्ध्यांशः,पूर्वं सार्धशतं पश्चात्सार्धशतमित्यर्थः।

---

१. **'चकर्षातन्द्रितो'** इति कुं पाठः।
२. कुं. १९१ अध्यायः। **'नैके'** इति कुं पाठः।

**तथा वर्षसहस्रे द्वे द्वापरं परिमाणतः।**
**तस्यापि द्विशती सन्ध्या सन्ध्यांशश्च तथाविधः ॥ २४ ॥**

**तस्यापि द्विशती** इत्यत्र पूर्वमेकशतं पश्चादेकशतं सन्ध्यांश इत्यर्थः।

**सहस्रमेकं वर्षाणां ततः कलियुगं स्मृतम्।**
**तस्य वर्षशतं सन्ध्या सन्ध्यांशश्च ततःपरम् ॥ २५ ॥**

**तस्य वर्षशतम्** इत्यत्र पूर्वं पश्चाशत् पश्चात्पश्चाशत् सन्ध्यांश इत्यर्थः।

**एषा द्वादशसाहस्री युगाख्या परिकीर्तिता।**
**एतत्सहस्रपर्यन्तमहो ब्राह्ममुदाहृतम् ॥ २७ ॥**

**एतत्सहस्रम्** इत्यत्र **एतत्सहस्रम्** एतेषां चतुर्युगाणां सहस्रम् **अहः** दिवा।

**अल्पावशिष्टे तु तदा युगान्ते भरतर्षभ।**
**सहस्रान्ते नराः सर्वे प्रायशोऽनृतवादिनः ॥ २९ ॥**

**सहस्रान्ते** कलियुगवर्षसहस्रान्ते।

**यज्ञप्रतिनिधिः पार्थ दानप्रतिनिधिस्तथा।**
**व्रतप्रतिनिधिश्चैव तस्मिन्काले प्रवर्तते ॥३०॥**

**यज्ञप्रतिनिधिः** इत्यत्र **यज्ञप्रतिनिधिः** अयज्ञः। एवमुत्तरत्रापि ज्ञातव्यम्।

**न तथा घ्राणयुक्ताश्च सर्वगन्धा विशाम्पते।**
**रसाश्च मनुजव्याघ्र न तथा स्वादुयोगिनः ॥ ४० ॥**

**न यथा गन्धयुक्ता** इत्यत्र **सर्वगन्धाः** कस्तूरीकर्पूरादिगन्धाः **तथा** द्वापरादियुगेष्विव न ।

**अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः ।**
**केशशूलाः स्त्रियो राजन् भविष्यन्ति युगक्षये ॥ ४१ ॥**

**अट्टशूला जनपदा** इत्यत्र 'अट्टमन्नमिति प्रोक्तं शूलो विक्रयणं स्मृतम् । केशो भग इति प्रक्तो ब्राह्मणास्तु चतुष्पथा' इति वचनात् **अट्टस्य** अन्नस्य **शूलं** विक्रयणं येषां ते अट्टशूलाः, चतुष्पथाः ब्राह्मणाः **शिवस्य** वेदस्य **शूलं** विक्रयणं येषां ते शिवशूलाः, द्रव्यकट्टलिकां कृत्वा वेदोपदेष्टार इत्यर्थः । स्त्रियः **केशस्य** भगस्य **शूलं** विक्रयणं यासां ताः केशशूलाः, पणे दत्ते तद्भोगाय स्वभगदात्र्य इत्यर्थः ।

**लोभमोहपरीताश्च मिथ्याधर्मध्वजावृताः ।**
**भिक्षार्थं पृथिवीपाल चञ्चूर्यन्ते[१] द्विजा दिशः ॥ ४५ ॥**

**चञ्चूर्यन्ते द्विजा** इत्यत्र इतस्ततो गर्हितं अतिशयेन चरन्ति **चञ्चूर्यन्ते** ।

**[२]करहारभयात्पुंसो गृहस्थाः परिमोपकाः ।**
**मुनिच्छद्मकृतिच्छन्ना वाणिज्यमुपभुञ्जते ॥ ४६ ॥**

**करहारभयात्** इत्यत्र **पुंसः** पुमांसः **करहारस्य** कररूपद्रव्यापहारस्य भयात् **गृहस्थाः** जानपदप्रच्छन्नाः **परिमो(क्ष)षकाः** करस्य परिमो(क्ष)षकाः ।

---

१. K,B1(m as in text),D1-3,T2(before corr),G,M ; BORI पृ. ६४०; **'द्विजैर्दिशः'** इति कुं पाठः ।
२. **'करभारभयाद्भीता'** इति कुं पाठः ।

**आश्रमेषु वृथाचारः पानपा गुरुतल्पगाः ।**
**इहलौकिकमीहन्ते[1] मांसशोणितवर्धनम् ॥ ४८ ॥**

**इहलौकिकम्** इत्यत्र **इहलौकिकम्** एतल्लोकसम्बन्धि, ऐहिकमात्रफलरूपमित्यर्थः । **मांसशोणितवर्धनं** यथेष्टान्नपानादिना स्वशरीरमांसशोणितवर्धनम् **ईहन्ते** कुर्वन्तीत्यर्थः ।

**भूयिष्ठं कूटमानैश्च पण्यं विक्रीणते जनाः ।**
**वणिजश्च नरव्याघ्र बहुमाया भवन्त्युत ॥ ५३ ॥**

**भूयिष्ठं कूटमानैः** इत्यत्र **कूटमानैः** कपटप्रस्थादिप्रमाणैः ॥

**ततो योजनविंशानां सहस्राणि शतानि च ।**
**निर्दहत्यशिवो वायुः स च संवर्तकोऽनलः ॥ ७२ ॥**

**ततो योजनविंशानां सहस्राणि शतानि च** इत्यत्र **योजनविंशानां सहस्राणि** द्विदशसहस्राणीत्यर्थः । योजनविंशानां शतानि द्वे सहस्रे । मिलित्वा द्वाविंशतिसहस्रयोजनपर्यन्तं ऊर्ध्वं ज्वालाभिर्निर्दहति । ततः तदुपर्यपि वायुवेगादिना सर्गपर्यन्तं दीप्तः ।

**ततः प्रविष्टस्तत्कुक्षिं सहसा मनुजाधिप ।**
**सराष्ट्रनगराकारं[2] कृत्स्नां पश्यामि मेदिनीम् ॥१०२॥**

**सराष्ट्रनगराकारां कृत्स्नां पश्यामि मेदिनीम्** इत्यादिग्रन्थस्यायं भावः । मार्कण्डेयेन महाप्रलयो दर्शनीय इति प्रार्थितो भगवान्नारायणस्तात्कालिकस्वाप्नमहीमहीधरादिसृष्टिप्रलयवत् स्वशक्त्या निर्मितं

---

१. 'ऐह' इति कुं पाठः । ; २. **'सराष्ट्रनगराकीर्णां'** इति कुं पाठः ।

महाप्रलयप्रतिनिधिं कश्चित्प्रलयं मार्कण्डेयाय प्रदर्श्य स्वोदरस्थम-विनष्टमेव सकलं प्रपञ्चं पुनः प्रदर्शयामास । सहजदैनन्दिनप्रलयत्वे ब्रह्मणो निद्रायां मार्कण्डेयस्य प्रबोधायोगादिति ज्ञातव्यम् ।

**[१]व्याजैर्धर्मं चरिष्यन्ति धर्मवैतंसिका [२]जनाः ।**
**सत्यं सङ्क्षेप्स्यते लोके नरैः पण्डितमानिभिः ॥ १४ ॥**

**धर्मवैतंसिका जना** इत्यत्र [३]'वैतंसिकः कौटिकश्च' इति वचनात् **वैतंसिकाः** कुटिलाः ।

**शूद्रतुल्या भविष्यन्ति तपः सत्यविवर्जिताः ।**
**अन्त्या मध्या भविष्यन्ति मध्याश्चान्त्या न सशंयः ॥ १८ ॥**

**अन्त्या मध्या भविष्यन्ति** इत्यत्र **अन्त्याः** मध्यस्य उभयभागे विद्यमाना उत्तमाधमाश्च एकवारं मध्या एव भवन्ति । अन्ततः **मध्याः** मध्यवदाचरमाणास्ते सर्वेऽपि **अन्त्याः** नीचा भविष्यन्ति ।

**ईदृशो भविता लोको युगान्ते पर्युपस्थिते ।**
**वस्त्राणां प्रवरा शाणी धान्यानां कोरदूषकाः ॥ १९ ॥**
**भार्यामित्राश्च पुरुषा भविष्यन्ति युगक्षये ।**
**मत्स्यामिषेण जीवन्तो दुहन्तश्चाप्यजैडकम् ॥ २० ॥**

**धान्यानां कोरदूषका** इत्यत्र [४]'कोरदूषस्तु कोद्रव' इत्यभिधानात् । **कोरदूषकाः** कोद्रवाख्यधान्यानि । 'हारक' इत्यपभ्रंशभाषा । भार्यैव मित्रं येषां ते **भार्यामित्राः** ।

---

१. कुं. १८३ **अध्यायः** । २. K4; BORI पृ. ६५६; **'नराः'** इति कुं पाठः ।
३. अ.को. २-१०-१४; ४. अ.को. २-९-१६

**पुत्रः पितृवधं कृत्वा पिता पुत्रवधं तथा ।**
**स्त्रियोपि पतिपुत्रादीन् वधिष्यन्ति युगक्षये ।**
**निरुद्वेगो बृहद्वादी न निन्दामुपलप्स्यते ॥ २८ ॥**

**निरुद्वेगो बृहद्वादी** इत्यत्र उद्वेगो भयं तद्रहितो **निरुद्वेगः** । **बृहत्** स्वशौर्यं वदतीति **बृहद्वादी** ।

**स्वल्पवीर्यबलाः स्तब्धा लोभमोहपरायणाः ।**
**तत्कथादानसन्तुष्टाः शिष्टानामपि बान्धवाः ॥ ३१ ॥**

**तत्कथादानसन्तुष्टा** इत्यत्र **तेषां** कामक्रोधादीनां कथया अदानेन च सन्तुष्टाः ।

**परिग्रहं करिष्यन्ति मायाचारपरिग्रहाः ।**
**सङ्घातयन्तः कौन्तेय राजानः पापबुद्धयः ॥ ३२ ॥**

**सङ्घातयन्त** इत्यत्र **सङ्घातं** समुदायं सम्पादयन्तः **सङ्घातयन्तः** ।

**म्लेच्छीभूतं जगत्सर्वं भविष्यति न संशयः ।**
**हस्ताद्धस्तं[१] परिमुपेयुगान्ते समुपस्थिते ॥ ३८ ॥**

**हस्ताद्धस्तं परिमुषेत्** इयत्र स्वहस्ताच्चौर्यं कृत्वा परहस्तं प्रापयित्वा **परिमषेत्** परितो मुष्णीयात् ।

**एकहार्यं[२] जगत्सर्वं लोभमोहव्यवस्थितम् ।**
**अधर्मो वर्धते तत्र न तु धर्मः प्रवर्तते ॥ ४१ ॥**

---

१. Ś1,K,B1-3,Dc2,D1; BORI पृ. ६५८; **'हस्तो हस्तं'** इति कुं पाठः ।
२. BORI पृ. ६५८; **'नैकभार्यं'** इति कुं पाठः ।

**एकहार्यं जगत्** इत्यत्र **एकम्** एकप्रकारं **हार्यम्** आहार्यम् अन्नादिकं यस्य तत् ।

**जालूकचिह्ना पृथिवी न देवगृहभूपिता ।**[1]
**भविष्यति युगे क्षीणे तद्युगान्तस्य लक्षणम्** ॥ ६७ ॥

**जालूकचिह्ना पृथिवी** इत्यत्र वनजलूकानां समूहो **जालूकं** तस्य चिह्नं यस्याः सा ।

**आचार्योपनिधिश्चैव भर्त्स्यते तदनन्तरम् ।**
**अर्थयुक्त्या प्रवात्स्यन्ति मित्रसम्बन्धि बान्धवाः** ॥ ७५ ॥

**आचार्योपनिधि** इत्यत्र आचार्यस्य **उपनिधिः** प्रतिनिधिः समान इत्यर्थः।

**पड्भिरन्यैश्च सहितो भास्करः प्रतपिष्यति ।**
**तुमुलाश्चापि निह्रादा दिग्दाहाश्चापि सर्वशः ।**
**कबन्धान्तर्हितो भानुरुदयास्तमने तदा** ॥ ७८ ॥

**कबन्धान्तर्हित** इत्यत्र **कं** जलं बध्नातीति **कबन्धो** मेघः तेन **अन्तर्हितः** आच्छादितः ।

**यदा सूर्यश्च चन्द्रश्च तथा तिष्यबृहस्पती ।**
**एकराशौ समेष्यन्ति प्रपत्स्यति तदा कृतम्** ॥ ९१ ॥

**तथा तिष्यबृहस्पती** इत्यत्र **तिष्यं** पुष्यनक्षत्रम् ।

---

१. S ; BORI पृ. ६६१; **'एडूकचिह्ना'** इति कुं पाठः ।

**सधर्मविजयी राजा चक्रवर्ती भविष्यति ।**
**स चेमं सङ्कुलं लोकं प्रसादमुपनेष्यति ॥ ९६ ॥**

**प्रसादमुपेनष्यति** इत्यत्र प्रकर्षेण **सादम्** अवसादनम् ।

**॥ इति एकोनवत्यधिकशततमोऽध्यायः ॥**

## ॥ अथ नवत्यधिकशततमोऽध्यायः ॥

**स्थापयित्वा[१] च मर्यादाः स्वयम्भुविहिताः शुभाः ।**
**वनं[२] पुण्ययशःकर्म जरया संश्रयिष्यति ॥ २ ॥**

**वनं पुण्ययशःकर्म** इत्यत्र जरया वनं संश्रयिष्यति । जनाभावात् प्राक्सर्वत्र पूर्णं वनं ब्राह्मणग्रामैः सम्पूर्य नाशयिष्यतीति भावः ।

**कृष्णाजिनानि शक्तीश्च त्रिशूलान्यायुधानि च ।**
**स्थापयन् विप्रशार्दूलो[३] देशेषु विजितेषु च ॥ ४ ॥**

**कृष्णाजिनानि शक्तीश्च** इत्यत्र विजितेषु देशेषु **विप्रशार्दूलान्** याज्ञिकान् ब्राह्मणान् तेषां कृष्णाजिनानि च **शक्तीः** त्रिशूलान्यायुधानि च स्थापयन् । यथा आयुधादिभ्यः चोरा भीता भवन्ति, तथा कल्क्याज्ञया याज्ञिकान् ब्राह्मणान् तेषां कृष्णाजिनानि च दृष्ट्वा भीता भवन्तीति भावः ।

---

१. कुं. १९४ अध्यायः ।
२. BORI पृ. ६६४ ; **'पुनः'** इति कुं पाठः ।
३. BORI पृ. ६६४; **'द्विज'** इति कुं पाठः ।

[१] आश्रमाश्चाविपाषण्डाः स्थिताः सत्ये जनास्तदा ।
जायन्ति सर्वभूतानि शुध्यमानानि चैव हि ॥ १० ॥

**आश्रमाश्चाविपाषण्डा** इत्यत्र विशेषेण पाषण्डरहिता **अविपाषण्डाः** ।

एष कालो महाबाहो अपि सर्वदिवौकसाम् ।
मुह्यन्ति हि प्रजास्तात कालेनापि प्रचोदिताः ॥ २९ ॥

**अपि सर्वदिवौकसाम्** इत्यत्र सर्वदिवौकसां प्रजा अपि मुह्यन्ते इति सम्बन्धः ।

जातोसि [२] पश्चिमे वंशे कुरूणां भरतर्षभ ।
कर्मणा मनसा वाचा सर्वमेतत्समाचर ॥ ३१ ॥

**जातोऽसि पश्चिमे वंश** इत्यत्र **पश्चिमे** चरमे ।

॥ इति नवत्यधिकशततमोऽध्यायः ॥

## ॥ अथ एकनवत्यधिकशततमोऽध्यायः ॥

[३] तां स मृगयमाणे राजा नापश्यद्वापीम् [४] अपि निःस्राव्य
मण्डूकं श्वभ्रमुखे दृष्ट्वा क्रुद्ध आज्ञापयामास स राजा ॥२३॥

**वापीमपि निस्स्राव्य** इत्यत्र **निस्स्राव्य** उदकस्रवणं कारयित्वा ।

---

१. **'आश्रमा हृतपापण्डाः'** इति कुं पाठः ।
२. S ; BORI पृ. ६६६; **'प्रथिते'** इति कुं पाठः ।
३. कुं. १९५ **अध्यायः** ।
४. **'अथ'** इति कुं पाठः ।

**प्रतिजानीहि नैतांस्त्वं पाप्य क्रोधं विमोक्ष्यसे ।**
**अलं कृत्वा तवाधर्मं मण्डूकैः किं हतैर्हि ते ॥ २९ ॥**

**प्रतिजानीहि नैतान्** इत्यत्र **एतान्** मण्डूकान् प्रतिहन्मीति न प्रतिजानीहि । **प्राप्य** तव प्रियामेव प्राप्य वृथा प्राणिहिंसाजनितं तव वधम् **अलं कृत्वा** भूषणं कृत्वा ।

**मा[१] क्रियतामनुबन्धो नैष शक्यस्त्वया मृगोऽयं ग्रहीतुं यद्यपि**
**ते रथे युक्तौ वाम्यौ स्यातामिति ततोऽब्रवीद्राजा सूत-**
**माचक्ष्व मे वाम्यौ वाजिनौ त्वा पृच्छामीति ॥ ४१ ॥**

**युक्तौ वाम्यौ स्याताम्** इत्यत्र वामदेवऋषिसम्बन्धिनौ अश्वौ ।

**मा क्रियतामनुबन्ध** इत्यत्र **अनुबन्धः** निर्बन्धः ।

वामदेव उवाच –

**प्रयच्छ वाम्यौ मम पार्थिव त्वं कृतं हि ते कार्यमाभ्यामशक्यम् ।**
**मा त्वा वधीद्वरुणो घोरपाशैः ब्रह्मक्षत्रस्यान्तरे वर्तमानः ॥४८॥**

**ब्रह्मक्षत्रस्यान्तरे वर्तमानः** इत्यत्र ब्रह्मक्षत्रस्येति द्वन्द्वैकवद्भावः । ब्रह्मक्षत्रयोः **अन्तरे** भेदे विरोध इति यावत् ।

राजोवाच –

**अनड्वाहौ सुव्रतौ साधु दान्ता-**
**वेतद्विप्राणां वाहनं वामदेव ।**

---

१. $G_3$,$M_1$; BORI पृ. ६७०; 'न' इति कुं पाठः ।

**ताभ्यां याहि त्वं यत्र कामो महर्षे-**
**च्छन्दांसि वै त्वादृशं संवहन्ति ॥ ४९ ॥**

**छन्दांसि वै त्वादृशं संवहन्ति** इतस्ततः प्रापयन्ति । दैवबलादेव भवतां सञ्चारः ; न तु यानबलादिति भावः ।

**वामदेव उवाच –**

**नानुयोगा ब्राह्मणानां भवन्ति**
**वाचा राजन्मनसा कर्मणा वा ।**
**[1] यस्त्वेतत् ब्रह्म तपसाऽन्वेति विद्वां-**
**स्तेन श्रेष्ठो भवति हि जीवमानः ॥ ५६ ॥**

**यस्त्वेतद्ब्रह्म** इत्यत्र **ब्रह्म** ब्राह्मणकुलं तपसा **अत्येति** सर्वेभ्योऽप्यतिशयितं वर्तते । एवं विद्वानिति सम्बन्धः ।

**[2] ऐक्ष्वाकवो यदि ब्रह्मन्दलो वा**
**विधेया मे यदि वान्ये विशोऽपि ।**
**नोत्स्रक्ष्येऽहं वामदेवस्य वाम्यौ**
**नैवं विधा धर्मशीला भवन्ति ॥ ५८ ॥**

ऐक्ष्वाकवो यदि **ब्रह्मन्** इत्यत्र हे ब्रह्मन् **ते** त्वया **दलः** अनुजः **ऐक्ष्वाकवः** इक्ष्वाकुराज्याधिपतिः **विधेयः** कार्यः । अन्ये विशोऽपि ऐक्ष्वाकवाः विधेयाः । **॥ इति एकनवत्यधिकशततमोऽध्यायः ॥**

---

१. **'यस्त्वेवं'** इति कुं पाठः ।
२. BORI पृ. ६७५; **'इक्ष्वाकवो वा यदि मां त्यजेयु र्ये ते विधेया भुवि चान्ये महीपाः'** इति कुं पाठः ।

## ।। अथ त्रिनवत्यधिकशततमोऽध्यायः ।।

[१] **तमहमब्रवं नाभिजानीमो भवन्तमिति कार्यचेष्टाः कुलत्वान्न वयं रासायनिका ग्रामैकरात्रवासिनो न प्रत्यभिजानीमोऽप्यात्मनोऽर्थानामनुष्ठानं न शरीरोपतापेनात्मनः समारभामहेऽर्थानामनुष्ठानम्** ।। ३ ।।

**वयं रासायनिका न शरीरोपतापेनात्मनः समारभामहे अर्थानामनुष्ठानम्** इत्यत्र 'रासायनिका' इति पाठे रसायामयनं आवासः तत्सम्बन्धिनो **रसायनिकाः** नानाक्लेशसहितभूलोकवासिन इत्यर्थः ।

**ततः सोऽस्माभिः पृष्टः कश्चिद्भवतोऽन्यश्चिरजाततरोऽस्तीति स नोऽब्रवीदस्ति[२] खलु भवान् सरस्यकूपारो नाम कच्छपः प्रतिवसति** ।। ४ ।।

**अस्ति खलु भवान्** इत्यत्र भवान् बहुकालमारभ्य अस्ति खलु ।

**स मुहूर्तं ध्यात्वा बाष्पसम्पूर्णनयन उद्विग्नहृदयो वेपमानो विसञ्ज्ञकल्पः प्राञ्जलिरब्रवीत् किमहमेनं न प्रत्यभिज्ञास्यामि [३]अहं ह्यनेन [४]असकृत्त्वत्र पूर्वमग्निचितिषूपहिताः** ।। १० ।।

**सरश्चेदमस्य दक्षिणोदकदत्ताभिर्गोभिरतिक्रममाणभिः कृतम् । अत्र चाहं प्रतिवसामीति** ।। ११ ।।

---

१. कुं. २०२ अध्यायः । ; २. **'खल्वस्मिन्नेव'** इति कुं पाठः ।

३. **'इह'** इति कुं.पाठः ।

४. T,G2.4; BORI पृ. ६८०; **'सहस्रकृत्वः'** इति कुं.पाठः ।

**अहं ह्यनेनासकृत्त्वत्र** इत्यत्र अग्निचितिषु विना अग्नेः काष्ठेषु पातितपूर्वः अहं **अनेन** राज्ञा, **अत्र** सरोवरे प्रतिवसामीति सम्बन्धः। **दक्षिणादत्ताभिः** दक्षिणारूपेण दत्ताभिः अस्य गोभिः **अतिक्रमणं** अतिशयेन पादविक्षेपः तेन अभिकृतम्। तथा दानशीलः कृपाशीलश्चेति राज्ञः कीर्तिर्वर्णिता।

**तस्मात्कल्याणवृत्तः [1]स्यादत्यन्ताय नरो भुवि।**
**विहाय वृत्तं पापिष्ठं धर्ममेव समाश्रयेत् ॥ १५ ॥**

**अत्यन्ताय नरो भुवि** इत्यत्र **अत्यन्ताय** अत्यन्तम्, चिरायेतिवदिदं पदम्।

**इत्येतच्छ्रुत्वा स राजाऽब्रवीत्तिष्ठ [2]तावद्यावदिदानीमिमौ वृद्धौ यथास्थानं प्रतिपादयामीति ॥ १६ ॥**

**तावदिदानीमिमौ** इत्यत्र **इमौ** स्वस्थानाच्च्युतौ उलूकमार्कण्डेयौ।

**॥ इति त्रिनवत्यधिकशततमोऽध्यायः ॥**

## ॥ अथ चतुर्नवत्यधिकशततमोऽध्यायः ॥

**[3]शशादस्य तु दायादः ककुत्स्थो नाम वीर्यवान्।**
**अनेनाश्चापि काकुत्स्थः पृथुश्चानेनसः सुतः ॥ २ ॥**

**अनेनाश्चापि काकुत्स्थ** इत्यत्र **काकुत्स्थः** ककुत्स्थपुत्रः।

**॥ इति चतुर्नवत्यधिकशततमोऽध्यायः ॥**

---

१. BORI पृ. ६८१; '**स्याद्दाता तावन्नरो भुवि**' इति कुं पाठः।
२. BORI पृ. ६८१; '**तावद्यावदिमौ**' इति कुं पाठः।
३. कुं. २०५ अध्यायः।

## ।। अथ पञ्चनवत्यधिकशततमोऽध्यायः ।।

[१] **पुत्रमभ्यवगच्छेताम्** इत्यत्र तव वरात् ।

।। इति पञ्चनवत्यधिकशततमोऽध्यायः ।।

## ।। अथ अष्टनवत्यधिकशततमोऽध्यायः ।।

[२] **दण्डके नोपशाम्यत्** इत्यत्र दण्डके दण्डकारण्ये । 'ब्रह्मशाप-हताशेषदण्डकारण्यपावन' इति रामनामसु पाठात् ।

।। इति अष्टाधिकनवतिशततमोऽध्यायः ।।

## ।। अथ एकोनद्विशततमोऽध्यायः ।।

[३] **धर्मव्याधमपृच्छच्च स चास्य कथितो द्विजैः ।**
**अपश्यत्तत्र गत्वा तं सूनामध्ये व्यवस्थितम्** ।। १० ।।

**सूनामध्ये व्यवस्थितम्** इत्यत्र परेण हिंसितमहिषादिमांसानां विक्रयाय शस्त्रेण च्छेदः सूना तस्याः मध्ये ।

**मार्गमाहिषमांसानि विक्रीणन्तं तपस्विनम् ।**
[४] **आकुलत्वात्तु सेतूनामेकान्ते संस्थितो द्विजः** ।। ११ ।।

**आकुलत्वात्तु सेतूनाम्** इत्यत्र **सेतूनां** धर्मसेतुनां ज्ञाने **आकुलत्वात्** व्याकुलचित्तत्वात् ।

---

१. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

२. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

३. कुं. २१० अध्यायः । ; ४. **'आकुलत्वाच्च क्रेतॄणामे'** इति कुं पाठः ।

[1]कुरुण्डा वामनाः कुब्जाः स्थूलशीर्षास्तथैवच ।
क्लीबाश्चान्धाश्च बधिरा जायन्ते [2]लम्बचूचुकाः ॥ ३७ ॥

**कुरुण्डा वामना** इत्यत्र **कुरुण्डाः** कुत्सितमस्तकाः । **लम्बचूचुका** इत्यत्र [3]'चूचुकं तु कुचाग्रं स्यान्न ना क्रोढं भुजान्तरम्' इत्यभिधानात् लम्बमानं चूचुकं येषां ते तथोक्ताः ।

ये चैव मां प्रशंसन्ति ये च निन्दन्ति मानवाः ।
सर्वासुपरिणीतेन कर्मणा तोषयाम्यहम् ॥ ४० ॥

**सर्वासु परिणीतेन** इत्यत्र सर्वासु अवस्थासु परितः **नीतेन** नीतियुक्तेन ।

न मुह्येदर्थकृच्छ्रेषु न च धर्मं परित्यजेत् ।
कर्म चेत्किञ्चिदन्यत्स्यादितरन्न तदाचरेत् ॥ ४५ ॥

**कर्म चेत्किञ्चित्** इत्यत्र **अन्यदपि कर्म** पुण्यं कर्म, चेत् अस्ति चेत्, **स्यात्** तदपि स्यात् । **इतरत्** पुण्यादितरत् ।

आत्मनैव हतः पापो यः पापं कर्तुमिच्छति ।
कर्म चैतदसाधूनां वृजिनानामसाधुकम् ॥ ४७ ॥

**कर्म चैतदसाधूनाम्** इत्यत्र असाधूनां वृजिनं नाम यत्कर्म एतदपि **साधुवदेव** सत्कर्मवदेव ।

---

१. $B_{1.4}, T_1$; BORI पृ. ७०५; **'भेरुण्डा'** इति कुं पाठः ।
२. BORI पृ. ७०५; **'अत्युच्चलोचनाः'** इति कुं.पाठः ।
३. अ.को. २-६-७७

**न धर्मोऽस्तीति मन्वानाः शुचीनवहसन्ति ये ।**
**अश्रद्दधन्तो[१] धर्मस्य ते नश्यन्ति न संशयः ॥ ४८ ॥**

**अश्रद्दधन्तो धर्मस्य** इत्यत्र 'धर्मस्य' इति पाठे धर्मस्य अश्रद्धां कुर्वन्तः ।

**महादृतिरिवाध्मातुः[२] पापो भवति नित्यदा ।**
**साधुः सन्नतिमानेव सर्वत्र द्विजसत्तम ॥ ४९ ॥**

**महाधृतिरिवाध्मातुः** इत्यत्र **आध्मातुः** युद्धे शङ्खनिनादं कुर्वतः वीरभटस्य महाधृतिर्यथा वर्धते, तथा **पापः** पापिष्ठोऽपि स्वकृत-कर्मश्लाघया **नित्यदा भवति** अभिवृद्धो भवति, अहङ्कारी भवतीत्यर्थः । **सन्नतिः** अवमानः **मानः** सन्मानः, तत्र सर्वत्र **भवति** समो भवति ।

**मूढानामवलिप्तानामसारं भाषितं भवेत् ।**
**दर्शयन्त्यन्तरात्मानं दिवा रूपमिवांशुमान् ॥ ५० ॥**

**दर्शयन्त्यन्तरात्मानम्** इत्यत्र **अन्तरात्मानम्** अन्तस्स्थितस्वदुस्स्व-भावम् ।

**न लोके राजते मूर्खः केवलात्मप्रशंसया ।**
**अपि चेह प्रजाहीनः[३] कृतविद्यः प्रकाशते ॥ ५१ ॥**

**अपि चेह प्रजाहीन** इत्यत्र **प्रजाहीनः** स्तोतृजनहीनोऽपि ।

---

१. **'अश्रद्दधाना'** इति कुं पाठः ।

२. **'अध्मातः'** इति कुं पाठः ।

३. $K_1$ ; BORI पृ. ७०७; **'मृजाहीनः'** इति कुं पाठः ।

**विकर्मणा तप्यमानः पापाद्विपरिमुच्यते ।**
**न तत्कुर्यां पुनरिति द्वितीयात्परिमुच्यते ॥ ५३ ॥**

**विकर्मणा** इत्यत्र विकर्मणा कृतेन कारणेन **तप्यमानः** पश्चात्तापं कुर्वाणः । **द्वितीयात्परिमुच्यत** इत्यत्र **द्वितीयात्** उपरि क्रियमाण-पापात् ।

**कर्मणा येन केनापि पापात्मा द्विजसत्तम ।**
**एवं श्रुतिरियं ब्रह्मन्धर्मेषु प्रतिदृश्यते ॥ ५४ ॥**

**कर्मणा येन केन** इत्यत्र **कर्मणा** दुष्कर्मणा ।

**पापं चेत्पुरुषः कृत्वा कल्याणमभिपद्यते ।**
**मुच्यते सर्वपापेभ्यो महाभ्रेणेव चन्द्रमाः ॥ ५९ ॥**

**पापं चेत्पुरुष** इत्यत्र **कल्याणं** पुण्यम् ।

**येषां पञ्च पवित्राणि प्रलापा धर्मसंश्रिताः ।**
**सर्वं हि विद्यते तेषु शिष्टाचारः सुदुर्लभः ॥ ६३ ॥**

**येषां पञ्च पवित्राणि** इत्यत्र **पञ्च**, यज्ञो दानं तपो वेदाः सत्यं चेति पञ्च धर्मसंश्रिताः **पवित्राणि** पवित्रीभूताः । **प्रलापाः** 'प्रलापोऽनर्थकं वच'[१] इत्यभिधानात् सदसि (ड)दम्भार्थं वचनानि । तेषु **सर्वं** जन-वञ्चनात्प्राप्तं धनकनकादिकम् ।

॥ इति एकोनद्विशततमोऽध्यायः ॥

---

१. अ.को. १-६-१५

## ।। अथ द्विशततमोऽध्यायः ।।

[१] **वेदस्योपनिपत्सत्यं सत्यस्योपनिषद्दमः ।**
**दमस्योपनिपत्त्यागः शिष्टाचारेषु नित्यदा ।। ८ ।।**

**वेदस्योपनिपत्** इत्यत्र **उपनिपत्** रहस्यम् ।

**अहिंसा सत्यवचनं सर्वभूतहितं परम् ।**
**अहिंसा परमो धर्मः स च सत्ये प्रतिष्ठितः**
**सत्यं कृत्वा प्रतिष्ठां तु प्रवर्तन्ते प्रवृत्तयः ।। १५ ।।**

**अहिंसा परमो धर्म** इत्यत्र उक्तत्रयाणां मध्ये अहिंसा परमो धर्मः ।

**सत्यमेव गरीयस्तु शिष्टाचारनिषेवितम् ।**
**आचारश्च सतां धर्मः सन्तो ह्याचारलक्षणाः ।। १६ ।।**

आचार एव लक्षणं येषां ते **आचारलक्षणाः** ।

**यो यथाप्रकृतिर्जन्तुः स स्वां प्रकृतिमश्नुते ।**
**पापात्मा क्रोधकामादीन् दोषानाप्नोत्यनात्मवान् ।। १७ ।।**

**यो यथाप्रकृतिः** इत्यत्र **प्रकृतिः** उत्तमा मध्यमा अधमा चेति त्रिविधा ।

**प्रेक्षन्ते लोकवृत्तानि विविधानि द्विजोत्तमाः ।**
**[२] अतिपुण्यान्नदानानि तानि द्विजवरोत्तम ।। ३९ ।।**

---

१. कुं. २११ अध्यायः ।
२. 'अतिपुण्यानि दानानि' इति कुं पाठः ।

**अतिपुण्यान्नदानानि तानि** इत्यत्र **तानि** पूर्वोक्तपुण्यानि **अतिपुण्यान्नदानानि** अतिपुण्यमन्नदानं येषां तानि भवेयुरिति सम्बन्धः ।

॥ इति द्विशततमोऽध्यायः ॥

## ॥ अथ एकाधिकद्विशततमोऽध्यायः ॥

**[१]दोषस्यैतस्य वै ब्रह्मन्विघाते यत्नवानहम् ।**
**[२]विधिना विहितं पूर्वं निमित्तं घातको भवेत् ॥ ३ ॥**

**विधिना विहितं पूर्वम्** इत्यत्र **पूर्वं विहितं**, यन्निमित्तं हीनयोनिप्राप्तौ कारणम्, तस्य **घातकः** हीनयोनावपि पुनः पुनः पुण्यकरणेन नाशकः भवेत् ।

**येषां हतानां मांसानि विक्रीणीमो वयं द्विज ।**
**तेषामपि [३]भवेत्कर्म उपयोगेन भक्षणात् ।**
**देवतातिथिभृत्यानां पितॄणां [४]प्रतिपूजनात् ॥ ५ ॥**

**तेषामपि भवेत्कर्म** इत्यत्र देवतातिथिभृत्यानां पितॄणां प्रतिपूजनात्, अनन्तरं तेषां विक्रीतमांसानां स्वयं भक्षणात्, **उपभोगेन उप** समीपस्थानां भार्यादीनां भोगेन च **कर्म** सत्कर्म भवेत् ।

**अमांसाशी भवत्येवमित्यपि श्रूयते श्रुतिः ।**
**भार्यां गच्छन् ब्रह्मचारी ऋतौ भवति ब्राह्मणः ॥ १५ ॥**

---

१. कुं. २१२ अध्यायः ।
२. $B_4$,$T_1$,$M_2$ ; BORI पृ. ७१२; **'विधिना हि हते'** इति कुं पाठः ।
३. $B_{1,3,4}$,$T_1$,$G_1$,M ; BORI पृ. ७१२; **'भवेद्धर्म'** इति कुं पाठः ।
४. BORI पृ. ७१२; **'चापि'** इति कुं पाठः ।

**अमांसाशी भवेदेवमित्यपि श्रूयते श्रुतिः । भार्यां गच्छन् ब्रह्मचारी ऋतौ भवति ब्राह्मण** इत्यत्र **यथा ऋतौ** ऋतावेव भार्यां गच्छन् ब्राह्मणः ब्रह्मचारी भवति, एवम् **अमांसाशी** अविहितमांसभक्षणादन्यत्र मांसं भक्षयन् अमांसाशीत्यपि **श्रुतिः** श्रूयते ।

**धान्यबीजानि यान्याहुर्व्रीह्यादीनि द्विजोत्तम ।**
**सर्वाण्येतानि जीवा हि तत्र किं प्रतिभाति ते ॥ २४ ॥**

**सर्वाण्येतानि बीजानि** इत्यत्र **बीजानि** भाव्यङ्कुरकारणानि ।

**चङ्क्रम्यमाणा जीवांश्च धरणीसंश्रितान्बहून् ।**
**पद्‍भ्यां घ्नन्ति नरा विप्र तत्र किं प्रतिभाति ते ॥ २९ ॥**

**चङ्क्रम्यमाणा जीवांश्च** इत्यत्र अतिशयेन पादक्रमं पादविक्षेपं कुर्वन्तः **चङ्क्रम्यमाणाः** ।

**अहिंसेति यदुक्तं हि पुरुषैर्विस्मृतैः[1] पुरा ।**
**के न हिंसन्ति जीवान्वै लोकेऽस्मिन्द्विजसत्तम ।**
**बहु संचिन्त्य इह वै नास्ति कश्चिदहिंसकः ॥ ३३ ॥**

**पुरुषैर्विस्मृतैः पुरा** इत्यत्र विगतं **स्मृतम्** उक्ततत्वस्मरणं येषां तैः ।

**सुहृदः सुहृदोऽन्यांश्च सुहृदश्चापि[2] दुर्हृदः ।**
**सम्यक्प्रवृत्तान्पुरुषान्न सम्यगनुपश्यति ॥ ३६ ॥**

**सुहृदश्चापि दुर्हृद** इत्यत्र अन्ये केचित् **सुहृदः** शोभनहृदययुक्तान् ।

---

१. $M_2$; BORI पृ. ७१४; '**विस्मितैः**' इति कुं पाठः ।
२. $K_2, B_2, D_5, T, G_2$ ; BORI पृ. ७१५; '**दुर्हृदश्चापि**' इति कुं.पाठः ।

[१] सुसमृद्धैर्न नन्दन्ति बान्धवा बान्धवैरपि ।
गुरूंश्चैव विनिन्दन्ति मूढा निश्चितमानिनः ॥ ३७ ॥

**सुसमृद्धैः** इत्यत्र सुसमृद्धैः बान्धवैर्निमित्तैः बान्धवा अपि न नन्दन्ति ।

॥ इति एकाधिकद्विशततमोऽध्यायः ॥

## ॥ अथ द्व्यधिकद्विशततमोऽध्यायः ॥

[२] सुखदुःखविपर्यासो यदा समुपपद्यते ।
नैनं प्रज्ञा सुनीतं वा त्रायते नैव पौरुषम् ॥ ८ ॥

**नैनं प्रज्ञा** इत्यत्र **सुनीतं** सुशिक्षितम् एनं प्रज्ञा न त्रातीति न इति उत्तरनञावृत्त्या योजना ।

भूतानामपरः कश्चिद्धिंसायां सततोत्थितः ।
वञ्चनायां च लोकस्य स सुखेनैव युज्यते ॥ ११ ॥

**हिंसायां सततोत्थित** इत्यत्र हिंसायां वञ्चनायां च यः पुरुषः **सततोत्थितः** सर्वदा उन्मुक्तः ।

देवानिष्ट्वा तपस्तप्त्वा कृपणैः पुत्रगृध्नुभिः ।
दशमासधृता गर्भा जायन्ते कुलपांसनाः ॥ १३ ॥
अपरे धनधान्यैश्च भोगैश्च पितृसञ्चितैः ।
विपुलैरभिजायन्ते लब्धास्तैरेव मङ्गलैः ॥ १४ ॥

---

१. $S_1$,K,$D_{1-3}$ ; BORI पृ. ७१५; **'समृद्धैश्च'** इति कुं.पाठः ।
२. कुं. २१३ अध्यायः ।

**देवानिष्ट्वा** इत्यत्र **कृपणैः** निर्भाग्यैः **पुत्रगृध्नुभिः** केवलं पुत्रेच्छुभिः, न तु देवताभक्तैः । **तैरेव मङ्गलैः** स्वमातापितृकृतदेवयागादिमङ्गलैः कारणैः लब्धाः, **अपरे** सभाग्यैः देवताभक्तैः दशमासधृता गर्भाः पितृ-सञ्चितैर्धनधान्यैर्भोगैश्च सह अभिजायन्ते । 'न देहजा मनुष्यानाम्' इति पाठे केवलदेहजा न, किन्तु कर्मजा एवेत्यर्थः ।

**आधिभिश्चैव बाध्यन्ते व्याधैः[१] क्षुद्रमृगा इव ।**
**ते चापि कुशलैर्वैद्यैर्निपुणैः सम्भृतौषधैः ।**
**व्याधयो विनिवार्यन्ते मृगा व्याधैरिव द्विज ॥ १६ ॥**

**ते चापि कुशलैः** इत्यत्र येषां भोक्तव्यं प्रारब्धं कर्म, ते च व्याधयोऽपि।

**येषामस्ति च भोक्तव्यं ग्रहणीरोगपीडिताः ।**
**न शक्नुवन्ति ते भोक्तुं चेष्टितं पूर्वकर्मया ॥ १७ ॥**

**ग्रहणीरोगपीडिता** इत्यत्र **ग्रहणीरोगः** सङ्ग्रहण्याख्यरोगः । **भोक्तुं** भोजनं कर्तुम् ।

**इति लोकमनाक्रन्दं देहशङ्कापरिप्लुतम् ।**
**स्रोतसाऽसकृदाक्षिप्तं ह्रियमाणं बलीयसा ॥ १९ ॥**

**इति लोकमनाक्रन्दम्** इत्यत्र **अनाक्रन्दं** आक्रन्दनेऽप्यशक्तम् । **स्रोतसा** कर्माख्यनदीप्रवाहेन ।

**न म्रियेयुर्न जीर्येयुः सर्वे स्युः सर्वकामिकाः ।**
**नाप्रियं प्रतिपश्येयुः वशं[२] च यदि वै भवेत् ॥ २० ॥**

---

१. 'व्यालैः' इति कुं पाठः ।; BORI पृ. ७१७; **'विधिश्च यदि नो भवेत्'** कुं.

**वशं च यदि वै भवत** इत्यत्र **यदि** यद्यपि **वशं** परिहर्तुं शक्यं भवेत्। तथापि जलान्तस्स्थितशिंशुमारमिव, विषदिग्धदुग्धमिव, अन्धःकूपमिव च तदप्रियं न प्रतिपश्येयुर्वै।

**न केचिदीशते ब्रह्मन् स्वयं ग्राह्यस्य सत्तम ।**
**कर्मणां प्रकृतानां वै इह सिद्धिः प्रदृश्यते ॥ २३ ॥**

**स्वयं ग्राह्यस्य सत्तम** इत्यत्र **ग्राह्यस्य** ग्रहीतुं योग्यस्य फलस्य **स्वयं** स्वयमेव **न दृश्यते** शक्तो न दृश्यते। **प्रकृतानां** प्रकर्षेण कृतानामत्युत्कटानामित्यर्थः।

**यथाश्रुतिरियं नित्या[१] जीवः किल सनातनः ।**
**शरीरमध्रुवं लोके सर्वेषां प्राणिनामिह ॥ २४ ॥**

**यथा श्रुतिरियम्** इत्यत्र इयं श्रुतिर्यथा **नित्या** आद्यन्तरहिता तथा।

**व्याध उवाच –**

**न जीवनाशोऽस्ति हि देहभेदे मिथ्यैतदाहुर्म्रियतीति मूढाः ।**
**जीवस्तु देहान्तरितः प्रयाति दशार्धतस्तस्य[२] शरीरभेदः ॥ २७ ॥**

**दशार्धतस्तस्य शरीरभेद** इत्यत्र **दश** दशेन्द्रियाणि, ततः **अर्धं** पञ्चमहाभूतानि, ततः **तस्य** जीवस्य **शरीरभेदः** पूर्वशरीरादागामिशरीरस्य भेदः। इन्द्रियवैलक्षण्यात् भूतपञ्चकवैलक्षण्याच्च नानादेहानां भेद इत्यर्थः।

---

१. **'ब्रह्मजीवः'** इति कुं पाठः।
२. **'दशार्धतैवास्य शरीरभेदः'** इति कुं पाठः।

**अन्यो हि नाश्नाति कृतं हि कर्म मनुष्यलोके मनुजस्य कश्चित् ।
यत्तेन किञ्चिद्धि कृतं हि कर्म तदश्नुते [१] नात्र कृतस्य नाशः ॥२८॥**

**तदश्नुते नात्र कृतस्य नाश** इत्यत्र तत् अत्रैव नाश्नुते; किन्तु परत्र । अतः कृतस्य कर्मणः नाशो नेति नञावृत्त्या योजना ।

**[२] अपुण्यशीला हि भवन्ति पुण्या
नराधमाः पापकृतो भवन्ति ।
नरोऽनुयातस्त्विह कर्मभिः स्वै-
स्ततः [३] समुत्पत्स्यति भावितस्तैः ॥ २९ ॥**

**अपुण्यशीला** इत्यत्र नराधमा इति वक्ष्यमाणत्वात् अत्र नरोत्तमा इति लभ्यते । ते अजामिलादयः स्वप्रारब्धकर्मणा किञ्चित्काल-मपुण्यशीला अपि अन्ततः **पुण्याः** पुण्यकृत एव भवन्ति । नराधमाः कदाचित् संसर्गवशात् पुण्यशीला अपि जटासुरादिवत् अन्ततः पाप-कृत एव भवन्ति । **नरोऽनुयात** इत्यत्र **नरः** मध्यमजीवः **ततः** देहनाशानन्तरं **स्वैः कर्मभिः** पुण्यैः पापैर्वा **अनु** अनुसृत्य **यातः** स्वर्गं नरकं वा प्राप्तः **तैः** कर्मभिर्भावितः **समुत्पत्स्यति** पुनर्भूलोक एव जननं प्राप्नोति ।

**॥ इति द्व्यधिकद्विशततमोऽध्यायः ॥**

* * *

---

१. $G_1, M_2$ ; BORI पृ. ७१८; **'नास्ति'** इति कुं पाठः ।

२. BORI पृ. ७१८; **'सुपुण्य'** इति कुं पाठः ।

३. $\acute{S}_1, K, B_1, D_{1\text{-}3,5}, T_2$ ; BORI पृ. ७१८; **'समुत्पद्यति'** इति कुं पाठः ।

## ।। अथ त्र्यधिकद्विशततमोऽध्यायः ।।

**ब्राह्मण उवाच –**

**कथं सम्भवते योनौ कथं वा पुण्यपापयोः ।**
**जातीः पुण्या ह्यपुण्याश्च कथं गच्छति सत्तम ।। ३० ।।**

**कथं सम्भवत** इत्यत्र पुण्यपापयोः सम्बन्धी मध्यमजीवः ।

**शुभैः प्रयोगैर्देवत्वं व्यामिश्रैर्मानुषो भवेत् ।**
**मोहनीयैर्वियोनीषु त्वधोगामी च किल्बिषैः ।। ३३ ।।**

**मोहनीयैर्वियोनीषु** इत्यत्र **अधोगामी** अन्धतमोयोग्यः अधमजीवः **मोहनीयैः** मिथ्याज्ञानयोग्यैः **प्रयोगैः** मनःप्रयोगैः **वियोनीषु** हरिविरुद्ध-दैत्यादियोनिषु भवेत् । कदाचिद्ब्रह्मक्षत्रादियोनावुत्पत्तावपि दीर्घकालं विरुद्धयोनिरेवेति सूचनाय वियोनीष्विति दीर्घप्रयोगः । अधमे अधो-गामित्वस्योक्तत्वात् मध्यमे मध्यमगतिः, उत्तमे ऊर्ध्वगतिश्चेति गतिभेदोऽपि द्रष्टव्यः । किल्बिषीत्युक्तत्वात् मध्यमे पुण्यपापे, उत्तमे केवलपुण्यं चेति साधनभेदोऽपि सूचितः ।

**जन्तुस्तु कर्मभिस्तैस्तैः स्वकृतैः प्रेत्य दुःखितः ।**
**तद्दुःखप्रतिघातार्थमपुण्यां योनिमाप्नुते ।। ३६ ।।**

**तद्दुःखप्रतिघातार्थम्** इत्यत्र तद्दुःखप्रतिघातो भवेदिति मनसो-द्दिशन्नपि अपुण्य इति कृत्वा योनयः तादृशयोनीः प्राप्नोति ।

**अजस्रमेव दुःखार्तोऽदुःखितः सुखसञ्ज्ञितः ।**[१]

१. **'सुखि'** इति कुं पाठः ।

**ततोऽनिवृत्तबन्धत्वात्कर्मणामुदयादपि ॥ ३८ ॥**

**दुःखितः सुखसञ्ज्ञित** इत्यत्र दुःखितोऽपि बहुदुःखभरितोऽपि **सुखसञ्ज्ञितः** कदाचित्सुखवानिति सञ्ज्ञितः दुःखव्यामिश्रसुखभोक्तेत्यर्थः । **ततोऽनिवृत्तबन्धत्वात्** इत्यत्र **अनिवृत्तबन्धत्वात्** केवलमिथ्याज्ञानिवत् केवलतत्त्वज्ञानिवच्च सर्वथा सुखदुःखात्मकसंसारबन्धनिवृत्तिरहितत्वात् ।

**परिक्रामति संसारे चक्रवद्बहुवेदनः ।**
**स चेन्निवृत्तबन्धस्तु विशुद्धश्चापि कर्मभिः ॥ ३९ ॥**

**स चेन्निवृत्तबन्ध** इत्यत्र **सः** त्रिविधजीवानां मध्ये विद्यमानः एको जीवः **निवृत्तबन्धश्चेत्** आत्यन्तिकबन्धनिवृत्तियोग्यश्चेत् । स चेन्निवृत्तबन्ध इति द्वितीयपद्ये **सः** उत्तमलोकानुभवी निवृत्तबन्धः **चेत्** नितरां **वृत्तः** वर्तितः **बन्धः** हरौ स्नेहानुबन्धो यस्य चेत् भक्तिपरिपाकवांश्चेदित्यर्थः ।

**पापकर्मा[१] पापवृत्तः पापस्यान्तं न गच्छति ।**
**पुण्यं कुर्वन्पुण्यवृत्तः पुण्यस्यान्तं न गच्छति ।**
**तस्मात्पुण्यं यतेत्कर्तुं वर्जयीत च पापकम् ॥ ४२ ॥**

**पापकर्मा पापवृत्त** इत्यत्र पूर्वपूर्वपापकर्मवशात् उपर्युपरि पापेष्वेव प्रवृत्तः अधमजीवस्तु **पापस्य** पापफलस्य अन्तं न गच्छति । संसारबन्धच्छेदानन्तरमपि केवलपापफलभूतं दुःखमेवान्धे तमसि भुङ्क्त इत्यर्थः ।

---

१. **'पापं कुर्वन्पापवृत्तः'** इति कुं पाठः ।

[१] **तत्कर्म यदि चेत्कर्तुः** इत्यत्र **तत्** तस्मात्कारणात् **कर्तुः** जीवस्य कर्म यदि न मुञ्चत्येव चेत्तथापि ।

**संस्कृतस्य च दान्तस्य नियतस्य यतात्मनः ।**
**प्राज्ञस्यानन्तरा वृत्तिरिह लोके परत्र च ॥ ४४ ॥**

**प्राज्ञस्यानन्तरा वृत्तिः** इत्यत्र अन्तरमवकाशावधीति वचनात् **अनन्तरा** निरवधिका ।

**तस्यैव सञ्चिते[२] मूलगुणं[३] पश्यति यत्र वै ।**
**धर्मात्मा भवति ह्येवं चित्तं चास्य प्रसीदति ।**
**स मित्रजनसन्तुष्ट इह प्रेत्य च नन्दति ॥ ४८ ॥**

**तस्यैव सञ्चित** इत्यत्र यत्र **तस्यैव** धनस्य **सञ्चिते** सञ्चये आर्जने सति **मूलगुणं** मूलीभूतं न्यायार्जनरूपगुणम् ।

**फलत्यागे च यतते दृष्ट्वा लोकं श्रियात्मकम्[४] ।**
**ततो मोक्षे प्रयतते नानुपायादुपायतः ॥ ५२ ॥**

**दृष्ट्वा लोकं श्रियात्मकम्** इत्यत्र **लोकं** हरेर्वैकुण्ठलोकं **श्रियात्मकं** लक्ष्म्यात्मकं दृष्ट्वा नानोपायात् भक्तरक्षणाय दैत्यशिक्षणाय च वामन-त्रिविक्रमत्वादिनानोपाया यस्य तस्मान्नारायणात् तत्प्रसादादिति यावत् । **उपायतः** श्रवणमननाद्युपायैः ।

**॥ इति त्र्यधिकद्विशततमोऽध्यायः ॥**

---

१. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
२. $T_2, G_{2.4}, M_1$ ; BORI पृ. ७२०; **'सिञ्चते'** इति कुं पाठः ।
३. **'मूलं गुणान्'** इति कुं पाठः ।; ४. **'क्रियात्मकम्'** इति कुं पाठः ।

## ॥ अथ चतुरधिकद्विशततमोऽध्यायः ॥

**व्याध उवाच –**

**विज्ञानार्थं[1] मनुष्याणां मतिः[2] पूर्वं प्रवर्तते ।**
**तां[3] प्राप्य कामं भजते क्रोधं च द्विजसत्तम ॥ २ ॥**

**ततस्तदर्थं यतते कर्म चारभते महत् ।**
**इष्टानां रूपगन्धानामभ्यासं च निषेवते ॥ ३ ॥**

**ततो रागः प्रभवति द्वेषश्च तदनन्तरम् ।**
**ततो लोभः प्रभवति मोहश्च तदनन्तरम् ॥ ४ ॥**

**उत्तमं[4] श्रुतिसम्बद्धं ब्रवीत्यश्रुतियोजितम् ।**
**अधर्मस्त्रिविधस्तस्य वर्तते रागदोषजः ॥ ८ ॥**

**पापं चिन्तयते चापि[5] ब्रवीति च करोति च ।**
**तस्याधर्मप्रवृत्तस्य गुणा नश्यन्ति साधवः ॥ ९ ॥**

**मतिः पूर्वं प्रवर्तत** इत्यत्र **मतिः** मनोवृत्तिः । सा च द्विविधा– सुमतिः कुमतिश्चेति । तत्राद्यायाः फलमाह– **तामिति । तां** सुमतिम् । द्वितीयायाः फलमाह– **तत इति । ततः** कुमतेः **तदर्थं** कामार्थम् । कुमतेः फलमुक्त्वा सुमतेरपि फलं सङ्कोचेनाह– **उत्तमेति ।** उत्तमेभ्यः

---

१. कुं. २१४ अध्यायः ।
२. $B_{1-3}$,$D_c$,$S_{except\ G3}$ ; BORI पृ. ७२१; **'मनः'** इति कुं पाठः ।
३. $B_{1-3}$,$D_c$,S ; BORI पृ. ७२१; **'तत्प्राप्य' इति कुं पाठः ।**
४. $S_{except\ G3}$ ; BORI पृ. ७२२; **'उत्तरं' इति कुं पाठः ।**
५. BORI पृ. ७२२ ; **'चैव'** इति कुं पाठः ।

**श्रुतस्य** शास्त्रस्य सम्बन्धो यस्य स तथोक्तः । ईदृशोऽपि **जितः** काम-क्रोधाद्यैर्जितः श्रुतयः श्रुतीः ब्रवीति; न तु श्रुत्युक्तमर्थमाचरतीति भावः । अधर्मस्त्रिविध इत्यत्रोक्तं त्रैविध्यं स्वयमेवाह– **पापं चिन्तयते चापि** इति ।

**इन्द्रियाणि च पञ्चात्मा रजः सत्त्वं तमस्तथा ।**
**इत्येष सप्तदशको राशिरव्यक्तसञ्ज्ञकः ॥ २० ॥**

**इत्येष सप्तदशक** इत्यत्र **अव्यक्तेन** मूलप्रकृत्या **सञ्ज्ञितः** सञ्ज्ञावान् तत्सञ्ज्ञया सहेत्यर्थः, सप्तदशको राशिः । रूपादिपञ्चकस्य गुणत्वान्न पृथग्गणना ।

**सर्वैरिहेन्द्रियार्थैस्तु व्यक्ताव्यक्तैः सुसंवृतैः ।**
**चतुर्विंशक इत्येष व्यक्ताव्यक्तमयो गुणः ।**
**एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ २१ ॥**

**सर्वैरिहेन्द्रियार्थैः** इत्यत्र **इन्द्रियार्थैः** रूपरसादिभिः पञ्चभिः, **व्यक्तेन** ब्रह्माण्डेन, **अव्यक्तेन** महत्तत्त्वेन । बहुवचनं बहुलोकभरितत्वात् महत्त्वाच्च ।

॥ इति चतुरधिकद्विशततमोऽध्यायः ॥

## ॥ अथ पञ्चाधिकद्विशततमोऽध्यायः ॥

**[१]अन्योन्यं नातिवर्तन्ते सम्यक्च भवति द्विज ।**
**यदा तु विषमं भावमाचरन्ति चराचरा ॥ ९ ॥**

१. कुं. २१५ अध्यायः ।

**अन्योन्यम्** इत्यत्र एकस्मिन् देहे यावद्यावत्पृथिव्यादिकम्, तावत्ता-वच्चेन्नातिवर्तन्ते, तदा सम्पच्च भवति । **चराचरा:** चराचरसम्बन्धिन: पञ्चपदार्था यदा विषमं **भावं** स्वभावमाचरन्ति । पृथिव्याधिक्ये देहो भारायते, जलाधिक्ये महोदरं जायते, आकाशस्याधिक्ये बहु-भोजनादिना अजीर्त्यादिकम्, एवमाकारिका विपद्भवतीति भाव: । तेन च मरणं भवतीत्याह– **तदा** इति ।

**तदा देही देहमन्यं व्यतिरोहति कालत: ।**
**प्रातिलोम्याद्विनश्यन्ति जायन्ते चानुपूर्वश: ॥ १० ॥**

**लोके विततमात्मानं लोकं चात्मनि पश्यति ।**
**परापरज्ञ: सक्त: सन्स तु भूतानि पश्यति ॥ १४ ॥**

**लोके विततमात्मानम्** इत्यत्र **आत्मानं** परमात्मानम् ।

**पश्यत: सर्वभूतानि सर्वावस्थासु सर्वदा ।**
**ब्रह्मभूतेन[१] संयोगो नाशुभेनोपपद्यते ॥ १५ ॥**

**ब्रह्मभूतेन** इत्यत्र ब्रह्मणो वेदाद्भूतेन प्रतिपादितेन सद्धर्मेण ।

**ज्ञानमूलात्मकं क्लेशमतिवृत्तस्य मोहजम् ।**
**लोकबुद्धिप्रकाशेन ज्ञेयमार्गेण गम्यते ॥ १६ ॥**

**ज्ञानमूलात्मकम्** इत्यत्र ज्ञानं **मूलयति** निर्मूलयतीति **ज्ञानमूलात्म-कम्** ।

---

१. $T_1$,$G_{1.2}$,M ; BORI पृ. ७२५; **'ब्रह्मभूतस्य'** इति कुं पाठ: ।

**अनादिनिधनं जन्तुमात्मयोनिं सदाव्ययम् ।**
**अनौपम्यममूर्तं च भगवानाह बुद्धिमान् ॥ १७ ॥**

**भगवानाह बुद्धिमान्** इत्यत्र पूर्वोक्तं वस्तु भगवानित्याह **बुद्धिमान्** जन्तुरिति सम्बन्धः ।

**इन्द्रियाण्येव तत्सर्वं यौ स्वर्गनरकावुभौ**[1] **।**
**निगृहीतविसृष्टानि स्वर्गाय नरकाय च ॥ १९ ॥**

**इन्द्रियाण्येव** इत्यत्र **यौ** स्वर्गनरकावुभौ, तत्सर्वं इन्द्रियाण्येव प्रापयन्तीति योग्यपदाध्याहारः । तत्कथमित्यत आह– **निगृहीतविसृष्टानि** इति । निगृहीतानीन्द्रियाणि स्वर्गाय, विसृष्टानि नरकायेति विभागः ।

**इन्द्रियाणां प्रसङ्गेन दोषमार्च्छत्यसंशयम् ।**
**सन्नियम्य तु तान्येव ततः सिद्धिं समाप्नुयात् ॥ २१ ॥**

**इन्द्रियाणां प्रसङ्गेन** इत्यत्र इन्द्रियाणां **प्रसङ्गेन** प्रकृष्टविषयसङ्गेन ॥

**रथं शरीरं पुरुषस्य दृष्टमात्मा नियन्तेन्द्रियाण्याहुरश्वान् ।**
**तैरप्रमत्तः कुशली सदश्वैर्दान्तः सुखं याति रथीव धीरः**
**॥ २३ ॥**

**रथं शरीरम्** इत्यत्र **आत्मा** परमात्मा ।

**येषु विप्रतिपद्यन्ते षट्स्वमोहात्फलागमम् ।**
[2]**ज्ञात्वैष्वध्यासितोध्यायी विन्दते ध्यानजं फलम् ॥ २७ ॥**

---

१. BORI पृ. ७२९; **'यत्स्वर्गनरकावुभौ'** इति कुं. पाठः ।
२. **'तेष्वध्यवसिताध्यायी'** इति कुं पाठः ।

**ज्ञात्वैष्वध्यासितो ध्यायी** इत्यत्र **अध्यासितः** अधिकतया आसितः आसनवान् स्थित इत्यर्थः । **ध्यायी** परमात्मध्यानवान् ।

॥ इति पञ्चाधिकद्विशततमोध्यायः ॥

## ॥ अथ नवाधिकद्विशततमोऽध्यायः ॥

**सत्त्वस्य रजसश्चैव तमसश्च यथातथम् ।**[१]
**गुणांस्तत्त्वेन मे ब्रूहि यथावदिह पृच्छतः** ॥ २ ॥

**गुणांस्तत्वेन** इत्यत्र **गुणान्** सत्त्वादिजन्यज्ञानादिगुणान् ।

**मोहात्मकं तमस्तेषां रज एषां प्रवर्तकम् ।**
**प्रकाशबहुलत्वाच्च सत्वं ज्याय इहोच्यते** ॥ ४ ॥

**रज एषां प्रवर्तकम्** इत्यत्र **प्रवर्तकं** विषयेषु प्रवर्तकम् ।

**प्रकाशबहुलो धीरो निर्विवित्सोऽनसूयकः ।**
**अक्रोधनो नरो धीमान् दान्तश्चैव स सात्विकः** ॥ ७ ॥

**निर्विवित्सोऽनसूयक** इत्यत्र **निर्विवित्सः** निस्संशयः ।

**वैराण्यस्य च रूपं तु पूर्वमेव प्रवर्तते ।**[२]
**मृदुर्भवत्यहङ्कारः प्रसीदत्यार्जवं च यत्** ॥ ९ ॥

**वैराण्यस्य** इत्यत्र **अस्य** लोकवृत्तस्य वैराण्येव रूपम्, तच्च **पूर्वं** प्रथममेव प्रवर्तते । **अहङ्कारः** अहङ्कारवान् ।

---

१. कुं. २१६ अध्यायः । ; २. 'वैराग्यस्य' इति कुं पाठः ।

**ततोऽस्य सर्वद्वन्द्वानि प्रशाम्यन्ति परस्परम् ।**
**न चास्यासंयमो नाम क्वचिद्भवति कश्चन ॥ १० ॥**

**ततोऽस्य सर्वद्वन्द्वानि** इत्यत्र सर्वद्वन्द्वानि अस्य निरस्य ।

**भूतं भव्यं भविष्यं च सर्वं प्राणे प्रतिष्ठितम् ।**
**श्रेष्ठं तदेव भूतानां ब्रह्मज्योतिरुपास्महे ॥ १६ ॥**

**ब्रह्म ज्योतिरुपास्मह** इत्यत्र **ब्रह्म** प्रत्यक्षं ब्रह्म ।

**प्राणानां सन्निपातात्तु सन्निपातः प्रजायते ।**
**सोष्मा सोग्निरिति ज्ञेयो योऽन्नं पचति देहिनाम् ॥ २६ ॥**

**प्राणानां सन्निपातात्** इत्यत्र **सन्निपातात्** सम्यक् **निपातात्** इतस्ततः सञ्चरणात् **सन्निपातः** सन्निपाताख्यो व्याधिः । **सोष्मा उष्मणा** उष्णेन सहितः **सः** वायुः अग्निरिति ज्ञेयः ।

**अपानोदानयोर्मध्ये प्राणव्यानौ समाहितौ ।**
**समन्वितस्त्वधिष्ठानं सम्यक् पचति पावकः ॥ २७ ॥**

**समन्वित** इत्यत्र सं सम्यक् अनु अनुकूलतया इतः प्राप्तः पावकः **अधिष्ठानं** देहम् ।

[१] **तस्यापि वायुपर्यन्तस्तथा स्याद्गुणसञ्ज्ञितः ।**
**स्रोतांसि तस्माज्जायन्ते सर्वप्राणेषु देहिनाम् ॥ २८ ॥**

**तस्यापि वायुपर्यन्त** इत्यत्र **तस्य** पावकस्य **गुणसञ्ज्ञितः** गुण इति

१. $B_{1.3}$,$D_c$,$G_4$ ; BORI पृ. ७२९; **'अस्यापि पायुपर्यन्तः'** इति कुं.पाठः ।

सञ्ज्ञितः उष्णस्पर्शः **वायुपर्यन्तः** यावति वायुः सञ्चरति तावत्पर्यन्तं विद्यमानः । **स्रोतांसि** स्वेदरूपस्रोतांसि ।

**पक्वाशयस्त्वधो नाभ्यां ऊर्ध्वमामाशयः स्थितः ।**
**नाभिमध्ये शरीरस्य प्राणाः सर्वे प्रतिष्ठिताः ॥ ३० ॥**

**पक्वाशयस्त्वधो नाभ्याम्** इत्यत्र **सः** अग्निः **नाभ्यामधः** नाभेरधश्च **पक्वस्य** अन्नस्य **आशयः** स्थानम् । **ऊर्ध्वं** नाभेरूर्ध्वं **आत्मानः** परमात्मनः **आशयः** आश्रयभूतः । 'तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः' इति श्रुतेः ।

**प्रवृत्ता हृदयात्सर्वे तिर्यगूर्ध्वमधस्तथा ।**
**वहन्त्यन्नरसान्नाड्यो दशप्राणप्रचोदिताः ॥ ३१ ॥**

**दशप्राणप्रचोदिता** इत्यत्र **दशप्राणैः** व्यानाख्यप्राणस्य दशरूपैः ।

**एवं सर्वेषु विततौ प्राणापानौ हि देहिषु ।**
**तौ तावदग्निसहितौ विद्धि वै प्राणमात्मनि ॥ ३३ ॥**

**विद्धि वै प्राणमात्मनि** इत्यत्र **आत्मनि** जीवे **प्राणम्** ऊर्ध्वाधः-श्वासम् ।

**एकादशविकारात्मा कलासम्भारसम्भृतः ।**
**मूर्तिमन्तं हि तं विद्धि नित्यं कर्म जितात्मकम् ॥ ३४ ॥**

**एकादशविकार** इत्यत्र **एकादशविकारात्मा** यो देहः, तं देहं आदाय **कर्मजितात्मकं** कर्मणा जितः **आत्मा** चित्तं यस्य तं जीवं मूर्तिमन्तं विद्धि ।

**तस्मिन्यः संस्थितो ह्यग्निर्नित्यं स्थाल्यामिवाहितः ।**
**आत्मानं तं विजानीहि नित्यं त्यागजितात्मकम् ॥ ३५ ॥**

**आत्मानं** परमात्मनः सन्निधानस्थानम् । एतदेव विशदयति– **देव** इति ।

**देवो यः संस्थितस्तस्मिन्नब्बिन्दुरिव पुष्करे ।**
**क्षेत्रज्ञं तं विजानीहि नित्यं त्यागजितात्मकम् ॥ ३६ ॥**
**[१]जीवात्मकानि जानीहि रजः सत्त्वं तमस्तथा ।**
**जीवमात्मगुणं विद्धि तथाऽऽत्मानं परात्मकम् ॥ ३७ ॥**

**जीवात्मकानि** इत्यत्र जीवस्वभावभूतानि । **जीवमात्मगुणं विद्धि** इत्यत्र **आत्मनः** अन्तर्यामिभगवद्रूपात् **गुणः** ज्ञानादिगुणो यस्य तम्, आत्मनः गुणम् अप्रधानरूपं वा । तथा **आत्मानम्** अन्तर्यामिभगवद्रूपं **परं** सर्वत्र परिपूर्णं यद्ब्रह्म, तदात्मकं विद्धि ।

**अचेतनं जीवगुणं वदन्ति स चेष्टते चेष्टयते च सर्वम् ।**
**ततः परं क्षेत्रविदो वदन्ति प्राकल्पयद्यो भुवनानि सप्त ॥३८॥**

**अचेतनम्** इत्यत्र **अचेतनं** देहादिकं **जीवगुणं** जीवस्य गुणभूतं अप्रधानमित्यर्थः । **स** जीवः स्वयं चेष्टते परमात्मप्रेरणया चेष्टते । सर्वं देहेन्द्रियादिकं चेष्टयते च । क्षेत्रविदः पुरुषाः **ततः** जीवादपि **परं** उत्तमं वस्तु अस्तीति ब्रुवन्ति । स क इत्यत उक्तं – **प्राकल्पयद्य** इति ।

**लक्षणं तु [२]प्रमाणस्य यथा वृत्तः सुखं स्वपेत् ।**

---

१. BORI पृ. ७२९; **'जीवात्मकं विजानीहि'** इति कुं पाठः ।
२. **'प्रसादस्य यथा तृप्तः'** इति कुं पाठः ।

**सुखदुःखे हि संत्यज्य निर्द्वन्द्वो निष्परिग्रहः ।**
**निवाते वा यथा दीपो दीप्येत्कुशलदीपितः ॥ ४१ ॥**

**लक्षणं तु प्रमाणस्य** इत्यत्र **यथावृत्तः** यथावृत्तिमान् उपरतसर्वेन्द्रियः जीवः यस्य प्रसादात्सुखं स्वपेत्, तदेव **प्रमाणस्य** प्रकृष्टपरिमाणस्य नारायणस्य लक्षणम् । **निद्रितस्य** बहिर्व्यापारशून्यस्य जीवस्य देहः यस्माज्जीवति, स परमात्मेति स्वातन्त्र्याख्यलक्षणमनेनोक्तं भवति ।

**प्रदीप्तेनेव दीपेन मनोदीपेन पश्यति ।**
**दृष्ट्वाऽऽत्मानं निरात्मानं स तदा विप्रमुच्यते ॥ ४३ ॥**

**दृष्ट्वाऽऽत्मानं निरात्मानम्** इत्यत्र निर्गतः **आत्मा** अन्यः परमात्मा यस्मात्तम् ।

**यदा न गुरुतां चैनं च्यावयेदुपपादयन् ।**
**तं विद्याद्ब्राह्मणो योगमयोगं योगसञ्ज्ञितम् ॥ ४९ ॥**

**योगमयोगं योगसञ्ज्ञितम्** इत्यत्र **अयोगं** विषययोगरहितं **तं** योगं योगसञ्ज्ञितं विद्यात् ।

**गुणागुणमनासङ्गमेककार्यमनन्तरम् ।**
**एतत्तद्ब्रह्मणो वृत्तमाहुरेकपदं सुखम् ॥ ५४ ॥**

**गुणागुणमनासङ्गम्** इत्यत्र **गुणेषु** भगवतः गुणेषु **आ** समन्तात् **गुणः** स्नेहाख्यगुणः । गुणागुणम् ।

* * *

[1] न तेऽन्यद्दैवतं किञ्चिद्दैवतेष्वपि वर्तते ।
प्रयतत्वाद्द्विजातीनां दमेनासि समन्वितः ॥ ११ ॥

प्रयतत्वाद्द्विजातीनाम् इत्यत्र **द्विजातीनां दमेन** ब्राह्मणयोग्यदमेन ।

पञ्चैव गुरवो ब्रह्मन्पुरुषस्य बुभूषतः ।
पिता माताऽग्निरात्मा च गुरुश्च द्विजसत्तम ॥ २८ ॥

**पिता माताऽग्निरात्मा च** इत्यत्र **आत्मा** परमात्मा ।

॥ इति नवाधिकद्विशततमोऽध्यायः ॥

## ॥ अथ एकादशाधिकद्विशततमोऽध्यायः ॥

[2] असन्तोषस्य नास्त्यन्तस्तुष्टिस्तु परमं सुखम् ।
न शोचन्ति गताध्वानः पश्यन्तः परमां गतिम् ॥ २४ ॥

**न शोचन्ति गताध्वान** इत्यत्र **अध्वानं** मार्गं गताः **गताध्वानः** ॥

अवश्यं क्रियमाणस्य कर्मणो दृश्यते फलम् ।
न हि निर्वेदमागम्य किञ्चित्प्राप्नोति शोभनम् ॥ २७ ॥

**न हि निर्वेदमागम्य** इत्यत्र **निर्वेदं** सत्कर्मण्येव वैराग्यम् ।

अथाप्युपायं पश्येत दुःखस्य परिमोक्षणे ।
[3] अशौचं नारभेतैव युक्तश्चाव्यसनी भवेत् ॥ २८ ॥

---

१. कुं. २१७ अध्यायः ।
२. कुं. २१९ अध्यायः ।
३. '**अशोचन्नारभेतैव**' इति कुं पाठः ।

**अशौचं नारभेत** इत्यत्र **अशौचं** मांसं भक्षयसि चेत्, त्वां न हन्मीति व्याधेनोक्ते सति स्वजीवनाशया तदशौचं मांसभक्षणं नारभेतेत्यर्थः ।

**भूतेष्वभावं संचिन्त्य ये तु बुद्धेः परं गताः ।**
**न शोचन्ति कृतप्रज्ञाः पश्यन्तः परमां गतिम् ॥ २९ ॥**

**भूतेष्वभावम्** इत्यत्र **अभावं** विनाशम् ।

**॥ इति एकादशाधिकद्विशततमोऽध्यायः ॥**

## ॥ अथ द्वादशाधिकद्विशततमोऽध्यायः ॥

[१] **वसिष्ठस्य पन्था उपदिश्यत** इत्यत्र **वसिष्ठस्य** बहुकालवासिनो वृद्धस्य ।

**अवयोवान्** इत्यत्र **अवयोवान्** बहुवयोवान्न भवतीत्यवयोवान् नीचः ।

**शिबिरहं मन्य** इत्यत्र **शिबिः** श्रेष्ठ इति मन्ये । कौरव्यो भवानपयातु ।

**समयादिति कश्चिद्ब्राह्मण** इत्यत्र इति **समयात्** एतावद्दास्यामीति सङ्केतात् ।

**कूप्यार्थितोऽयं ब्राह्मणस्य** इत्यत्र ब्राह्मणस्यार्थे **कूप्यं** रूप्य-हेमव्यतिरिक्तं द्रव्यं अर्थितं येन स तथोक्तः ।

**कंसेनाताडयद्** इत्यत्र 'कंसोऽस्त्री पानभाजनम्'[२] इत्यभिधानात् **कंसः** कांस्यकमण्डलुः ।

---

१. एतदध्यायस्थाः प्रतीकघटितश्लोकाः मुद्रितकोशेषु नोपलभ्यन्ते ।
२. अ.को. २-९-३२

**विप्र किं यो न ददाति तुभ्यम्** इत्यत्र हे विप्र यः तुभ्यं न ददाति तेन किम्।

**उताहोस्विद्ब्राह्मण मैतत्** इत्यत्र हे ब्राह्मण **एतत्** न ददामीति वदन्तं प्रति प्रार्थनं मा। उताहोस्वित् आश्चर्यमिदम्।

**राजाधिराजसमीपं** सेदुकाख्यराज्ञः समीपं भिक्षितुमागतः ब्राह्मणः अहं तेन प्रेक्षितश्च। **तेन** राज्ञा **अनुशिष्टेन** वृ(षा)षदर्भं प्रति गच्छेत्याज्ञप्तेन।

**योऽमोघबलिरागमिष्यति** इत्यत्र यः **अमोघबलिः** ब्राह्मणः। कशया हन्याच्च।

**अधिकस्य** ब्राह्मणस्य, यदश्वसहस्रस्य मौल्यं, **तामश्विकां** अश्वसम्बन्धिनीम् **उत्पत्तिं** धनोत्पत्तिम्।

**अङ्गैरङ्गानि प्रापुः** इत्यत्र श्येनस्य तुण्डपक्षचरणाद्यङ्गैः मे अङ्गानि प्राणाश्च **प्रापुः** गतप्राया आसन्। अतः मुनिः मौनी त्वां प्रपद्ये।

**श्रोत्रियस्य प्रमादं मा प्रदा** इत्यत्र **प्रमादम्** अनवधानम्। श्येनाद्भीतः कपोतः अस्मि।

**पर्यायेण वसतिः** इत्यत्र **भावेषु** पदार्थेषु **पर्यायेण** तत्तत्क्रमानुसारेण **वसतिः** आवासः कर्तव्या। तेन पूर्वं स्वर्गो जातः। **आस्माकमात्रं** अस्मद्भक्षणयोग्यांशभूतम् **एनं** कपोतं मम अददानः अदिशन्।

**उभौ विदित्वा** इत्यत्र उभौ धर्मचतुरौ वां विदित्वा **शस्ते** प्रशस्ते कर्मणि कथं नु **इयां** गच्छेयम्।

**नास्य देवा** इत्यत्र अस्य देवाः **न** सहायभूता न ।

**उक्षाणं** वृषभम्, **पक्का** पकानि ।

**तत्र मांसं वयसे वहन्तु** इत्यत्र **वयसे** पक्षिणे अस्मै **वहन्तु** मम भटाः प्रापयन्तु ।

**शकुनान्नभावात्** इत्यत्र **शकुनस्य** पक्षिणः मम **अन्नभावात्** अन्नत्वात् ।

**याहि तस्य दये** इत्यत्र **तस्य** कपोतस्य, **दये** दयारूप, मा हिंसीः ।

**स्वपुरुषं कपोतम्** इत्यत्र **स्वपुरुषं** मम भृत्यं शरणागतमित्यर्थः ।

**एतद्धोऽलक्षम्** इत्यत्र **अलक्षं** दर्शनायोग्यं क्रूरं रूपम् ।

**शिबिं** शिबिदेशाधिपतिं **ओद्भिदम्** आ समन्तात् **उद्भिदं** शत्रूणां संहर्तारम् । सुरथसम्बन्धिनः **सौरथाः** महारथा इत्यर्थः ।

**॥ इति द्वादशाधिकद्विशततमोऽध्यायः ॥**

## ॥ अथ त्रयोदशाधिकशततमोऽध्यायः ॥

[१] **वैश्वामित्रे** विश्वामित्रेण क्रियमाणे ।

**पुरं** स्वपुरम् । **गृह्णता** अनुगृह्णता रक्षतेत्यर्थः, **व्याहृतम्** उक्तम् ।

**एतेन द्रोहवाक्येन** इत्यत्र रथोपाधिना स्वस्तिवाचनं कृतम् , न तु निरुपाधिकतयेति ज्ञेयम् ।

---

१. एतदध्यायस्थाः बहवः प्रतीकघटितश्लोकाः मुद्रितकोशेषु नोपलभ्यन्ते ।

**शिरसा प्रगृह्य बहिर्मृगयत** इत्यत्र **सः** शिबिः **शिरसा** स्वपुत्रमांस-पात्रीमूढ्वा बहिर्ब्राह्मणं मृगयते ।

**कोष्ठम्** अन्तर्गृहम् ।

**जीवन्तीयकं कृतम्** इत्यत्र कं पश्यता **इयकं** इयन् स्वपुरहननादिकं **कं** पुरुषार्थं पश्यता कृतम् । एवं केऽपि मा जीवन्ति ।

**बकोऽट्टाल्प** इत्यत्र **अट्टेन** अन्नेन अल्पः **अट्टाल्पः** अल्पाहारी-त्यर्थः । **विशिष्टान्नानि** देवानां दत्त्वा अवशिष्टान्नानि ।

**मार्कण्डेय उवाच ।**

**ब्रह्मणो यस्तृतीयस्तु पुत्रः कुरुकुलोद्वह ।**[१]
**तस्यापवसुता भार्या प्रजास्तस्यां च मे शृणु** ॥ १ ॥[२]

**तस्यापवसुता भार्या** इत्यत्र **आपवः** वसिष्ठः ।

**॥ इति त्रयोदशाधिकद्विशततमोऽध्यायः ॥**

## ॥ अथ चतुर्दशाधिकद्विशततमोऽध्यायः ॥

**यां कपर्दिसुतामाहुर्दृश्यादृश्येति देहिनः ।**
**तनुत्वात्सा सिनीवाली तृतीयाङ्गिरसः सुता** ॥ ५ ॥

**यां कपर्दीसुताम्** इत्यत्र कपर्दीनाम्नी अङ्गिरसः पत्नी ।

**॥ चतुर्दशाधिकद्विशततमोऽध्यायः ॥**

---

१. कुं. २२१ अध्यायः ।
२. BORI पृ. ७४४; **'तस्यापि वसुदाभार्या'** इति कुं पाठः ।

## ।। अथ पञ्चदशाधिकद्विशततमोऽध्यायः ।।

[१] **तपसस्तु फलं दृष्ट्वा सम्प्रवृत्तं तपोमयम् ।**
**उद्धर्तुकामो मतिमान्पुत्रो जज्ञे पुरन्दरः** ।। ३ ।।

**तपसस्तु फलम्** इत्यत्र **तपसः** तपोनामकाग्नेः **फलं** सन्तानम् ।

।। इति पञ्चदशाधिकद्विशततमोऽध्यायः ।।

## ।। अथ षोडशाधिकद्विशततमोऽध्यायः ।।

[२] **मृता वहन्तो हव्यानि तस्याग्नेरग्रजाऽभवन् ।**
**अग्निष्टोमस्तु नियतः क्रतुश्रेष्ठो भवत्युत** ।। ६ ।।

**आयान्तं नियतः दृष्ट्वा प्रविवेशार्पणं भयात्** ।। ७ ।।

**अग्निष्टोमे तु नियत** इत्यत्र **नियतः** नियतनामकोऽग्निः । **आयान्तं** देहदाहकभरतनामकाग्निं दृष्ट्वा **नियतः** नियतनामकोऽग्निः ।

**देवानां वह हव्यं त्वमहं वीर सुदुर्बलः ।**
[३] **अर्थवन् गच्छ मध्वक्ष प्रियमेतत्कुरुष्व मे** ।। ९ ।।

**अथर्वन् गच्छ मध्वक्ष** इत्यत्र हे **अथर्वन्** अथर्वाग्ने **मध्वक्ष** मधुवर्ण-नयन ।

**स तच्छरीरं सन्त्यज्य प्रविवेश धरां तदा ।**
**भूमिः स्पृष्ट्वाऽसृजद्धातुं पृथक्पृथगतीव हि** ।। १३ ।।

---

१. कुं. २२३ अध्यायः । ; २. कुं. २२४ अध्यायः ।
३. BORI पृ. ७५५; 'अथ त्वं' इति कुं.पाठः ।

**भूमिं स्पृष्ट्वाऽसृजद्धातुम्** इत्यत्र स्वदेहस्थास्थिश्लेष्मपित्तादिभ्यः भूमौ नानाविधपदार्थान् ।

**दृष्ट्वा ऋषिभयाच्चापि[1] प्रविवेश महार्णवम् ।**
**तस्मिन्नष्टे जगद्भीतमथर्वाणमथाश्रितम् ।**
**अर्चयामासुरेवैनमथर्वाणं सुरादयः ॥ १८ ॥**

**दृष्ट्वा ऋषिभयाच्चापि** इत्यत्र **ऋषिभयात्** ऋषिभूताथर्वाग्निभयात् ।

**एवं त्वजनयद्धिष्ण्यान् वेदोक्तान्विबुधान् बहून् ।**
**विचरन्विविधान् देशान् भ्रममाणस्तु तत्र वै ॥२१॥**

**एष त्वजनयद्धिष्ण्यान्** इत्यत्र 'धिष्ण्यमेको निवसनम्'[2] इति वचनात् ऋषीणां निवासभूतानाश्रमान् ।

**अद्भुतस्य प्रिया भार्या तस्याः पुत्रो विडूरथः ।**
**यावन्तः पावकाः प्रोक्ताः सोमास्तावन्त एव[3] च ॥ २६ ॥**

**सोमास्तावन्त एव च** इत्यत्र **सोमाः** सोमलताः ।

**अत्रेश्चाप्यन्वये जाता ब्रह्मणो मानसाः प्रजाः ।**
**अग्निः पुत्रान्स्रष्टुकामस्तानेवात्मन्यधारयत् ॥ २८ ॥**

**अग्निपुत्रान्** इत्यत्र स्रष्टुकामः ब्रह्मा एतावतामग्निपुत्राणां सञ्चारे जगद्दाहभिया एतानग्निपुत्रान् **आत्मनि** स्वदेहे **अधारयत्** अस्तम्भयत् ।

---

१. **'ऋषीन्भयाच्चापि'** इति कुं पाठः ।
२. **'धिष्ण्यं स्थाने गृहे भेऽग्नौ'** इत्यमरः (३-३-१५५)
३. BORI पृ. ७५७; **'एव तु'** इति कुं पाठः ।

**तस्य तद्ब्रह्मणः कायान्निर्हरन्ति हुताशनाः ।**
**एवमेते महात्मानः कीर्तितास्तेऽग्नयो यथा ॥ २९ ॥**

**निर्हरन्ति हुताशना** इत्यत्र कार्ये सति **निर्हरन्ति** निर्गच्छन्ति चेत्यर्थः ।

**॥ इति षोडशाधिकद्विशततमोऽध्यायः ॥**

## ॥ अथ अष्टादशाधिकद्विशततमोऽध्यायः ॥

**अद्भुतस्याद्भुतं पुत्रं प्रवक्ष्याम्यमितौजसम्[१] ।**
**जातं सप्तर्षिभार्याभिर्ब्रह्मण्यं कीर्तिवर्धनम् ॥ २ ॥**

**अद्भुतस्याद्भुतम्** इत्यत्र **अद्भुतस्य** अद्भुतनामकाग्नेः **अद्भुतं पुत्रं** षण्मुखं **सप्तर्षिभार्यासु** सप्तर्षिभार्यासमानरूपस्वाहाकृतिषु । अन्यथा अग्नेः परस्त्रीप्रसङ्गात् उत्तरग्रन्थविरोधाच्च ।

**स शैलं मानसं गत्वा ध्यायन्नर्थमिमं भृशम् ।**
**शुश्रावार्तस्वरं घोरमथ मुक्तं स्त्रिया तदा ॥ ६ ॥**

**शुश्रावार्तस्वरम्** इत्यत्र दैत्यभयात् आर्तस्वरम् ।

**पुरन्दरस्तु तामाह मा भैर्नास्ति भयं तव ।**
**एवमुक्त्वा ततोऽपश्यत्केशिनं स्थितमग्रतः ॥ ८ ॥**

**केशिनं स्थितमग्रत** इत्यत्र **केशिनं** केशिनामकदैत्यम् ।

* * *

---

१. कुं. २२५ अध्यायः ।

कन्योवाच –

**अहं प्रजापतेः कन्या देवसेनेति विश्रुता।**[1]
**भगिनी मे दैत्यसेना सा पूर्वं केशिना हृता ॥ १ ॥**

**अहं प्रजापतेः कन्या** इत्यत्र **प्रजापतेः** दक्षप्रजापतेः।

इन्द्र उवाच –

**मम मातृष्वसेयी त्वं माता दाक्षायणी मम।**
**आख्यातुं त्वहमिच्छामि स्वयमात्मबलं त्वया ॥ ५ ॥**

**आख्यातं त्वहमिच्छामि** इत्यत्र **इच्छामि** श्रोतुमिच्छामि।

**पर्व चैव चतुर्विंशत्तदा सूर्यमुपस्थितम्।**
**तथा सूर्यं वह्निगतं सोमं सूर्यगतं च तम् ॥ १५ ॥**

**पर्व चैव चतुर्विंशत्** इत्यत्र सूर्याचन्द्रमसोर्मेलनात् सूर्यस्य प्रियाणि अमावास्याख्यद्वादशपर्वाणि, चन्द्रस्य प्रियाणि पौर्णमास्याख्यद्वादश-पर्वाणि, एवं **चतुर्विंशत्**, चतुर्विंशदात्मकं पर्वेत्यर्थः।

**स तत्र विविधं हव्यं प्रतिगृह्य हुताशनः।**
**ऋषिभ्यो भरतश्रेष्ठ प्रायच्छत दिवौकसाम् ॥ ३० ॥**

**ऋषिभ्यो भरतश्रेष्ठ** इत्यत्र **ऋषिभ्यः** सप्तर्षिभ्यः हव्यं प्रतिगृह्य दिवौकसां प्रायच्छतेति योजना।

**स्वाहा तं दक्षदुहिता प्रथमाऽकामयत्तदा।**

---

१. कुं. २२६ अध्यायः।

**सा तस्य च्छिद्रमन्वैच्छच्चिरात्प्रभृति भामिनी ।**
**अप्रमत्तस्य देवस्य न च पश्यत्यनिन्दिता ॥ ३९ ॥**

**सा तस्य च्छिद्रम्** इत्यत्र **च्छिद्रम्** अवकाशम् ।

**॥ इति अष्टादशाधिकद्विशततमोऽध्यायः ॥**

## ॥ अथ विंशत्यधिकद्विशततमोऽध्यायः ॥

[१]
**अजानात् तच्च स्वाहाया रूपान्यत्वं महामुनिः ।**
**अब्रवीच्च मुनीन् सर्वान्नापराध्यन्ति वै स्त्रियः ।**
**श्रुत्वा तु तत्वतस्तस्मात्ते पत्नीः सर्वतोत्यजन् ॥ १५ ॥**

**अजानात्तच्च स्वाहाया रूपान्यत्वम्** इत्यत्र **रूपान्यत्वं** रूपान्तरत्वम् ।

**तेऽब्रुवन्नास्ति ते वीर्यं यत एवं प्रभाषसे ।**
**सर्वास्त्वद्याभिगच्छन्तु स्कन्दं लोकस्य मातरः ॥ १९ ॥**

**स्कन्दं लोकस्य मातर** इत्यत्र **लोकस्य मातरः** ब्राह्मीमाहेश्वर्यादिसप्तमातरः ।

**अभिनन्द्य ततः सर्वाः प्रस्नुताः स्नेहविक्लवाः ।**
**तासां तद्वचनं श्रुत्वा पातुकामः स्तनान् प्रभुः ॥ २२ ॥**

**प्रस्नुताः स्नेहविक्लवा** इत्यत्र **प्रस्नुताः** स्नुतस्तनक्षीराः ।

---

१. कुं. २२८ अध्यायः । $B_1$,$D_C$,$D_{1-3}$; BORI पृ. ७६७; **'अन्वजानाच्च'** इति कुं पाठः ।

सर्वासां[1] तत्र नारीणां नारी क्रोधसमुद्भवा ।
धात्री स्वपुत्रवत्स्कन्दं शूलहस्ताऽभ्यरक्षत ॥ २५ ॥

**सर्वासां तत्र नारीणाम्** इत्यत्र **क्रोधसमुद्भवा नारी** चामुण्डा ।

लोहितस्योदधेः कन्या क्रूरा लोहितभोजना ।
परिष्वज्य महासेनं पुत्रवत्पर्यरक्षत ॥ २६ ॥

**लोहितस्योदधेः** इत्यत्र सन्ध्यारागसमये लोहितस्य ।

अग्निर्भूत्वा नैजमेषश्छागवक्त्रो[2] बहुप्रजः ।
रमयामास शैलस्यं बालं क्रीडनकैरिव ॥ २७ ॥

**नैजमेषश्छागवक्त्र** इत्यत्र **नैजमेषः** सर्वाङ्गस्वभावतो मेषः, वक्त्रमात्रं **छागवत्** अजवत् यस्य स **च्छागवक्त्रः** ।

यद्वज्रविशनाज्जातो विशाखस्तेन सोऽभवत् ॥ ४६ ॥

**यद्वज्रविशनात्** इत्यत्र **विशनात्** विशसनात् ।

वृतः कन्यागणैः सर्वैरात्मीयैः सह पुत्रकैः ।
मातॄणां प्रेषितानां च भद्रशाखस्तु कोमलैः ॥ ५२ ॥

**भद्रशाखस्तु कोमलैः** इत्यत्र कोमलैर्भृत्यगणैः सह भद्रशाखोऽपि कश्चित् स्कन्दस्य भृत्यः । 'कौशल' इति पाठे 'अर्श आदिभ्योऽच्' इति वचनात् कौशलवानित्यर्थः ।

---

१. **'या तु मातॄणां'** इति कुं पाठः ।
२. **'नैगमेयश्छागवक्त्रो'** इति कुं पाठः ।

**[१]कुमारस्तु विशाखं च पुत्रत्वे समकल्पयत् ।**
**स भूत्वा भगवान्सङ्ख्ये रक्षञ्छागमुखस्तदा ॥ ५१ ॥**

**कुमारस्तु विशाखं च पुत्रत्वे समकल्पयत्** इत्यत्र 'ततोऽभवच्चतुर्मूर्ति क्षणेन भगवान् प्रभुः । तस्य शाखो विशाखश्च नैजमेषश्च पृष्ठत' इति गदापर्वणि वक्ष्यमाणत्वात् स्कन्दः अग्रयायी, शाखविशाखनैजमेषास्तु तस्यैव पृष्ठगामीनि रुपान्तराणि । अतोऽत्रापि विशाखपदमुपलक्षणमिति ज्ञेयम् । **छागमुखः** छागवन्मुखं यस्य सः भगवान् विशाखाख्यः स्कन्दस्य अंशः सङ्ख्येऽपि रक्षन्नासीदिति योजना ।

**ततः [२]कुमारपितरं स्कन्दमाहुर्जना भुवि ।**
**रुद्रमग्निमु[३]मां स्वाहां प्रदेशेषु महाबलाः ॥ ५३ ॥**

**कुमारपितरं** विशाखाख्यकुमारपितरं स्कन्दम् । पूर्वं रुद्रस्य वीर्यं स्वयोनौ धर्तुमसहमाना गौरी अग्नावाक्षिपत् । अग्निरपि तदुष्णमसहमानः गङ्गायां तद्रेतः प्राक्षिपत् । गङ्गा च स्वतीरस्थे शरस्तम्बे पूरितवती । तदेव बहुत्वाच्छिवो गिरिरासीत् । तस्मिन् गिरौ गरुडीरूपया स्वाहया अग्निवीर्यस्यापि योगे कृते श्वेतगिरिरूपं तद्रुद्रवीर्यमेव स्कन्दात्मना समजनि किल । अतश्चतुर्णामपि कुमारमातापितृत्वात् **रुद्रमग्निमुमां स्वाहाम्** इत्याद्युक्तम् ।

**॥ इति विंशत्यधिकद्विशततमोऽध्यायः ॥**

---

१. **'कुमारस्स'** इति कुं. पाठः ।
२. BORI पृ. ७७१; **'कुमारं सञ्जातं'** इति कुं. पाठः ।
३. BORI पृ. ७७१; **'-स्वां'** इति कुं पाठः ।

## ॥ अथ एकविंशत्यधिकद्विशततमोऽध्यायः ॥

**मार्कण्डेय उवाच –**

**ततः[1] प्रकल्प्य पुत्रत्वे स्कन्दं मातृगणोऽगमत् ।**
**काकी च हलिमा चैव माता चाथ हली तथा ।**
**आर्या बाला च धात्री च सप्तैताः शिशुमातरः ॥ १ ॥**

**सप्तैताः शिशुमातर** इत्यत्र शिशुनामकस्कन्दप्रसादजपुत्रमातरः ।

**एष वीरोऽष्टकः[2] प्रोक्तः स्कन्दो मातृगणोद्भवः ।**
**छागवक्त्रेण सहितो नवमः परिकीर्त्यते ॥ ३ ॥**

**एष वीरोऽष्टक** इत्यत्र वीरः शूरः एषः शिशुः स्कन्दस्य **मातृगणान्** सप्तमातृः उद्वहतीति स तथोक्तः । अत एवाष्टकः तासामष्टमः **छागवक्त्रेण** विशाखेन । षड्भिः आननैः । येन शीर्ष्णा ।

**षण्णां तु प्रवरं तस्य शीर्षाणामिह शब्यते ।**
**शक्तिं येनासृजद्दिव्यां भद्रशाख इति स्म ह ॥ ५ ॥**

**रुद्रमग्निं द्विजाः प्राहुः रुद्रसूनुस्ततस्तु सः ।**
**कीर्त्यते सुमहातेजाः कुमारोऽद्भुतदर्शनः ॥ ३५ ॥**

**रुद्रमग्निं प्रजाः प्राहुः** इत्यत्र रुद्रमपि अग्निमित्याहुः कालाग्निरुद्रत्वात् । अतः रुद्रपुत्रत्वेऽपि अग्निपुत्रत्वं सम्भवतीति भावः ।

**॥ इति एकविंशत्यधिकद्विशततमोऽध्यायः ॥**

---

१. **कुं. २२९ अध्यायः ।**
२. **'-मः'** इति कुं पाठः ।

## ।। अथ द्वाविंशत्यधिकशततमोऽध्यायः ।।

**अभिजित्स्पर्धमाना तु रोहिण्या कन्यसी स्वसा ।**[१]
**इच्छन्ती ज्येष्ठतां देवी तपस्तप्तुं वनं गता ।। ८ ।।**

ऋषिपत्नीरूपषण्मातृभिः स्वासां प्राचीनमातॄणां स्थानं दातव्य-मित्यशया समागतम् । तच्चायोग्यरूपत्वात् असम्भावितं त्वयाऽपि न देयमिति सूचयितुं काञ्चित्कथामाह **अभिजित् स्पर्धमाना** इत्यादिना । **कन्यसी** कनीयसी ।

**तत्र मूढोऽस्मि भद्रं ते नक्षत्रं गगनाच्युतम् ।**
**कालं त्विमं परं स्कन्द ब्रह्मणा सह चिन्तय ।। ९ ।।**

**तत्र** अभिजिद्देवताया अभीष्टं भवति न वा इत्यत्र मूढोऽसि । अभिजिद्देवतायाः स्वायोग्यरोहिणीज्यैष्ठ्यप्राप्त्यर्थं तपःकरणदोषात् **नक्षत्रं** कृत्तिकानक्षत्रम् उत्पातरूपेण च्युतम् । पूर्वं रोहिणी आदिः श्रेष्ठा यस्य स तथोक्तः । ब्रह्मणः आज्ञानन्तरं धनिष्ठादित्वं च । एवं द्वयीमतिरेकः अभिजितः रोहिणीतः श्रैष्ठ्यं न भवत्येवेति भावः ।

**धनिष्ठादिस्तदा कालो ब्रह्मणा परिकल्पितः ।**
**रोहिणीह्यभवत्पूर्वमेवं सङ्ख्या समाभवत् ।। १० ।।**

**एवमुक्ते तु शक्रेण त्रिदिवं कृत्तिकागताः ।**
**नक्षत्रं शकटाकारं भाति तद्वह्निदैवतम् ।। ११ ।।**

**एवमुक्ते तु शक्रेण** इत्यत्र एवं शक्रेण धर्मे उक्ते सति कृत्तिका पुन-

---

१. कुं. २३० अध्यायः ।

त्रिदिवं गता। अतस्त्वयाऽपि एतासां ऋषिपत्नीनां षण्मातॄणां अयोग्यं वक्ष्यमाणदेवमातृकास्थानं न देयमिति भावः।

**अथ मातृगणः सर्वः स्कन्दं वचनमब्रवीत्।**
**वयं सर्वस्य लोकस्य मातरः कविभिः स्तुताः।**
**इच्छामो मातरस्तुभ्यं भवितुं पूजयस्व नः ॥ १४ ॥**

**अथ मातृगण** इत्यत्र **मातृगणः** ऋषिपत्नीरूपमातृगणः।

**स्कन्द उवाच –**

**वृत्ताः प्रजा न ताः शक्या भवतीभिर्निषेवितुम्।**
**अन्यां वः कां प्रयच्छामि प्रजां यां मनसेच्छथ ॥ १८ ॥**

**अन्यां वः कां प्रयच्छामि** इत्यत्र **कां** काञ्चित्। विनतादित्यदित्यादिनामानः स्कन्दपरिवाराः भूतग्रहा एव, न तु देवमातरः। साक्षाद्देवमातरस्तु सर्वलोकसुखप्रदा एव, न तु मारिका इति ज्ञेयम्।

**॥ इति द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥**

## ॥ अथ चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥

**[१]दैत्यानां या दितिर्माता तामाहुर्मुखमण्डिकाम्।**
**अत्यर्थं शिशुमांसेन सम्प्रहृष्टा दुरासदा ॥ ३० ॥**

**तामाहुर्मुखमण्डिकाम्** इत्यत्र **तां** तन्नाम्नीम्।

१. कुं. पाठानुसारेण अत्र पूर्वाध्याय एवानुसरति।

**गवां माता तु या प्राज्ञैः कथ्यते सुरभिर्नृप ।**
**शकुनिस्तामथारुह्य सह भुङ्क्ते शिशून् भुवि ॥ ३३ ॥**

**शकुनिस्ताम्** इत्यत्र तां तन्नाम्नीं पिशाचीम् । साऽपि तन्नाम्नी पिशाची ।

**पादपानां च या माता करञ्जनिलया हि सा ।**
**वरदा सा हि सौम्या च नित्यं भूतानुकम्पिनी ॥ ३५ ॥**

**करञ्जनिलया हि सा** इत्यत्र 'नक्तमालः करञ्जः स्यात्'[१] इत्यभिधानात् **करञ्जः** वृक्षविशेषः । सा दनुसनाम्नी ।

**करञ्जे तां नमस्यन्ति तस्मात्पुत्रार्थिनो नराः ।**
**इमे त्वष्टादशान्ये वै ग्रहा मांसमधुप्रियाः ॥ ३६ ॥**

**इमे त्वष्टादशान्ये वै** इत्यत्र षण्मातृकाः, शकुन्याख्यः पुङ्ग्रहः एकः, ऐरावताख्यः पुङ्ग्रहः एकः, एवमष्ट । अन्ये स्कन्दस्य कुमारीकुमाराणां पञ्च गणाः, कद्र्वाद्याः पञ्च चेति दश, एवमष्टादश ।

**वैक्लव्याच्च भयाच्चैव घोराणां चापि दर्शनात् ।**
**उन्मादयति स तु क्षिप्रं सत्वं[२] तस्य तु साधनम् ॥ ५५ ॥**

**सत्वं तस्य तु साधनम्** इत्यत्र **सत्वं** दुष्टः पिशाचादिप्राणी ।

॥ इति चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥

---

१. अ.को. २-४-४७
२. BORI पृ. ७८२; **'सान्त्वं'** इति कुं पाठः ।

## ।। अथ पञ्चविंशात्यधिकद्विशततमोऽध्यायः ।।

[1] **पृष्ठतो विजयस्यापि याति रुद्रस्य पट्टसः ।**
**गदामुसलशक्त्याद्यैर्वृतः प्रहरणोत्तमैः ।। १३ ।।**

**पृष्टतो विजयस्यापि** इत्यत्र **विजयस्य** विजयनामकत्रिशूलस्य ।

**एभिश्च सहितो देवस्तत्र याति यथासुखम् ।**
**अग्रतः पृष्ठतश्चैव न हि तस्य गतिर्ध्रुवा ।। २५ ।।**

**न हि तस्य गतिर्ध्रुवा** इत्यत्र **तस्य** रुद्रपरिवारस्य कदाचिदग्रतो गच्छति कदाचित्पृष्ठतः पार्श्वतश्चेति भावः ।

**अथाब्रवीन्महासेनं महादेवो बृहद्वचः ।**
**सप्तमं मारुतस्कन्धं रक्ष नित्यमतन्द्रितः ।। २९ ।।**

**सप्तमं मारुतस्कन्धम्** इत्यत्र मरुतां देवानां सप्तमं स्कन्धं स्वस्कन्धव्यतिरिक्तसप्तदिक्पालानां सप्तसङ्ख्याकं सेनास्कन्धं सेना-समुदायम् ।

[2] **अथो क्रुष्टं तदा हृष्टैः सर्वैर्देवैरुदायुधैः ।**
**संहतानि च तूर्याणि प्रावाद्यन्त ह्यनेकशः ।। ५२ ।।**

**अथो क्रुष्टम्** इत्यत्र **क्रुष्टम्** आक्रोशं कुर्वत् ।

[3] **अभयो देवलोकस्य सहसैवाभ्यदृष्यत ।**
**तथाहि दानवा घोरा विनिघ्नन्ति दिवौकसः ।। ५४ ।।**

---

१. कुं. २३२ अध्यायः । ; २. B।;BORI पृ. ७९.०; '**-त्क्रुष्टं**' इति कुं पाठः
३. '**अनया**' इति कुं पाठः ।

**अभयो देवलोकस्य** इत्यत्र **अभयः** भयाभावः ।

**तमांसीव यथा सूर्यो वृक्षानग्निर्धनान् खगः ।**
**तथा स्कन्दोऽजयच्छत्रून् स्वेन वीर्येण कीर्तिमान्** ॥ ७७ ॥

**धनान् खग** इत्यत्र खे गच्छतीति **खगो** वायुः ।

॥ इति पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥

॥ अथ सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥

**किमत्र[१] प्रहिताश्चापि गदाः परमदारुणाः ।**
**मूलप्रवादेन[२] विषं प्रयच्छन्ति जिघांसवः** ॥ १५ ॥

**मूलप्रवादेन** इत्यत्र **गदाः** व्याधयः । **मूलं** औषधमूलिका ।

**जलोदरसमायुक्ताः श्वित्रिणः पलितास्तथा ।**
**अपुम्भिः[३] सत्कृताः स्त्रीभिः जडान्धबधिरास्तथा** ॥ १७ ॥

**अपुम्भिः सत्कृता** इत्यत्र **अपुम्भिः** क्लीबैः **सत्कृताः** समानतया कृताः ।

**दुर्व्याहताच्छङ्कमाना दुस्थितादुरवेक्षितात् ।**
**दुरासितादुर्व्रजितादिङ्गिताध्यायितादपि** ॥ २२ ॥
**सूर्यवैश्वानरसमान् सोमकल्पान् महारथान् ।**
**सेवे चक्षुर्हणः पार्थानुग्रवीर्यप्रतापिनः** ॥ २३ ॥

---

१. कुं. २३४ अध्यायः ।
२. $T_2$,$G_{1.4}$, M ; BORI पृ. ७९५; **'मूलप्रवादैर्हि'** इति कुं पाठः ।
३. **'अपुमांसः कृताः'** इति कुं पाठः ।

इङ्गिताध्यायितादपि इत्यस्य सेवे इत्युत्तरेणान्वयः ।

**न भुक्तवति न स्नाते नासंविष्टे च भर्तरि ।**
**न सम्विशामि नाश्नामि न स्नाये कर्म कुर्वती ॥ २८ ॥**

**न स्नाये कर्म कुर्वती** इत्यत्र **न स्नाये** अभ्यज्य स्नानं न करोमि ।

**अनर्म चापि हसितं द्वारि स्थानमभीक्ष्णशः ।**
**अवस्करे [१]चिरं स्थानं निष्कुटेषु [२]विसर्जये ॥ २९ ॥**

**द्वारि स्थानमभीक्ष्णश** इत्यत्र **अभीक्ष्णशः** क्षणे क्षणे द्वारि स्थानं विसर्जये । **अवस्करे** 'मूत्रं प्रस्राव उच्चारावस्करौ शमलं शकृत्'[३] इत्यभिधानात् मलनिर्मोचनसमये; 'निष्कुटः कोटरं वा ना वल्लरी मञ्जरी स्त्रियाम्'[४] इत्यभिधानात् **निष्कुटेषु** निम्नस्थलेषु **चिरं** बहुकालं **स्थानं** अवस्थानं विसर्जये ।

**अत्यालापमसन्तोषं परव्यापारसङ्कथाः ।**
**अतिहासातिरोषौ च [५]क्रोधनं च विसर्जये ॥ ३० ॥**

**क्रोधनं च विसर्जय** इत्यत्र **क्रोधनं** परस्य क्रोधोत्पादनम् ।

**यदा प्रवसते भर्ता कुटुम्बार्थेन केनचित् ।**
**[६]सुमनोवर्जकायेता भवामि व्रतचारिणी ॥ ३२ ॥**

---

१. $K_{1.2.4}$,$B_{2-3}$,$D_C$,$D_{n1}$,$D_{2.4.5}$;$G_3$,M; BORI पृ. ७९६; '**चिरस्थानं**' इति कुं पाठः ।

२. $T_2$ ; BORI पृ. ७९६; '**च वर्जये**' इति कुं पाठः ।

३. अ.को. २-६-६७ ; ४. अ.को. २-४-१३

५. '**क्रोधस्थानं च वर्जय**' इति कुं पाठः ।

६. '**समनोवर्णकापेता**' इति कुं पाठः ।

**सुमनोवर्जकायेता** इत्यत्र **सुमनांसि** पुष्पाणि तेषां **वर्जो** वर्जनं यस्मिन् स तथोक्तः कायः तेन इता।

**यथोपदेशं नियता वर्तमाना वराङ्गने।**
**स्वलंङ्कृताऽनुप्रयता[1] भर्तुः प्रियहिते रता ॥ ३४ ॥**

**स्वलङ्कृताऽनु प्रयता** इत्यत्र **अनु** भर्तारमनुसृत्य स्वभर्तरि अलङ्कृते सति स्वलङ्कृता भवामीत्यर्थः।

**पत्याश्रयो हि मे धर्मो मतः स्त्रीणां सनातनः।**
**स देवः स गतिर्नार्यास्तस्य का विप्रियं चरेत् ॥ ३९ ॥**

**स देवः स गतिः** इत्यत्र **गतिः** सम्पत्तिः। **तस्य** पत्युः।

**तान् सर्वानग्रहारेण ब्राह्मणान् वेदवादिनः।**
**यथार्हं पूजयामि स्म पानाच्छादनभोजनैः ॥ ४७ ॥**

**तान् सर्वानग्रहारेण** इत्यत्र **अग्रहारेण** श्रेण्याकारगृहसमुदायेन।

**शतं दासीसहस्राणि कौन्तेयस्य महात्मनः।**
**कम्बुकेयूरहारिण्यो निष्ककण्ठ्यः स्वलङ्कृताः ॥ ४८ ॥**

**कम्बुकेयूरहारिण्य** इत्यत्र **कम्बुः** कम्बुकः।

**शतमश्वसहस्राणि दश नागायुतानि च।**
**युधिष्ठिरस्यानुयात्रं इन्द्रप्रस्थनिवासिनः ॥ ५२ ॥**

---

१. **'स्वलङ्कृता सुप्रयता'** इति कुं पाठः।

**शतमश्वसहस्राणि दश** इत्यत्र **शतम् अश्वसहस्राणि**, दश सहस्राणि चेत्यर्थः । नागायुतानि दश चेति वा ।

**एतदासीत् तदा राज्ञो यन्महीं पर्यपालयत् ।**
**येषां सङ्ख्याविधिं चैव प्रदिशामि शृणोमि च ॥ ५३ ॥**

**प्रदिशामि शृणोमि च** इत्यत्र **प्रदिशामि** वेतनां प्रदिशामि, तदीयं वाक्यं शृणोमि च ।

**तमहं भारमासक्तमनाधृष्यं दुरात्मभिः ।**
**सुखं सर्वं परित्यज्य रात्र्यहानि घटामि वै ॥ ५७ ॥**

**रात्र्यहानि घटामि वै** इत्यत्र **घटामि** घटयामि ।

**एतज्जानाम्यहं कर्तुं एतत्संवननं[१] मम ।**
**असत्स्त्रीणां समाचारं नाहं कुर्यां न कामये ॥ ६१ ॥**

**एतत्संवननं मम** इत्यत्र 'वन सम्भक्तौ' इति धातोः **संवननं** भर्तॄणां पूजा ।

**अभिपन्नाऽस्मि पाञ्चालि याज्ञसेनि क्षमस्व मे ।**
**कामकारः सखीनां हि सोपहासं प्रभाषितम् ॥ ६३ ॥**

**अभिपन्नाऽस्मि** इत्यत्र **अभिपन्ना** ज्ञातवती । सखीनां सोपहासं भाषितं कामकारं इच्छानुसारेण करणं घटते ।

**॥ इति सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥**

---

१. **'भर्तृसंवननं महत्'** इति कुं पाठः ।

## ।। अथ एकोनत्रिंशत्यधिकद्विशततमोऽध्यायः ।।

**द्रौपद्युवाच –**

**[१] इमं तु ते मार्गमपेतदोषं**
**वक्ष्यामि चित्तग्रहणाय भर्तुः ।**
**[२] यस्मिन्यथावत्सखि वर्तमाना**
**भर्तारमाच्छेत्स्यसि कामिनीभ्यः ।। १ ।।**

**यस्मिन् यथा** इत्यत्र **यस्मिन्** भर्तरि यथा अपेक्षितं तथा वर्तमाना । **भर्तारमाच्छेत्स्यसि कामिनीभ्य** इत्यत्र **कामिनीभ्यः** इतरकामिनीभ्यः **भर्तारमाच्छेत्स्यसि** भर्तृमनसो विनिवृत्तिं करिष्यसि ।

**नैतादृशं दैवतमस्ति किञ्चित्**
**सर्वेषु लोकेषु सदेवकेषु ।**
**यथा पतिस्तस्य तु सर्वकामा**
**लभ्याः प्रसादे कुपितश्च हन्यात् ।। २ ।।**

**यथा पतिस्तस्य** इत्यत्र तस्य प्रसादे ।

**मदं प्रमादं पुरुषेषु हित्वा**
**संयच्छ मानं प्रतिगृह्य वाचम् ।**
**प्रद्युम्नसाम्बावपि ते कुमारौ**
**नोपासितव्यौ रहिते कदाचित् ।। १० ।।**

---

१. कुं. २३५ अध्यायः ।
२. BORI पृ. ७९९; 'अस्मिन्' इति कुं. पाठः ।

**रहिते कदाचित्** इत्यत्र **रहिते** एकान्ते ।

**महाकुलीनाभिरपापिकाभिः**
**स्त्रीभिः सतीभिस्तव सख्यमस्तु ।**
**चण्डाश्च शौण्डाश्च महाशनाश्च**
**चोराश्च दुष्टाश्चपलाश्च वर्ज्याः** ॥ ११ ॥

**चण्डाश्च शौण्डा** इत्यत्र [1]'शुण्डापानं मदस्थानम्' इत्यभिधानात् **शौण्डाः** मद्यपायिन्यः ।

**एतद्यशस्यं भगवेतनं च स्वार्थं तदा शत्रुनिबर्हणं च ।**
**महार्हमाल्याभरणाङ्गरागा भर्तारमाराधय पुण्यगन्धैः** ॥१२॥

**एतद्यशस्यम्** इत्यत्र **एतत्** पातिव्रत्यसन्तुष्टभर्तृप्रसादाख्यं भगवेतनं यशस्यमित्यादियोजना ।

॥ इति एकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥

## ॥ अथ त्रिंशदधिकद्विशततमोऽध्यायः ॥

[2]**दुर्योधनः शकुनिः सूतपुत्रो दुःशासनश्चापि सुमन्दचेताः ।**
**मधु प्रपास्यन्ति न तु प्रपातं वृकोदरं चैव धनञ्जयं च** ॥२१॥

**मधु प्रपास्यन्ति न तु प्रपातम्** इत्यत्र **मधु** मद्यं प्रपास्यन्ति । तन्निमित्तं प्रपातं न पश्यन्ति । वृकोदरः धनञ्जयश्च मधु न पास्यति । तन्निमित्तप्रपातं न यास्यति ।

---

१. अ.को. २-१०-४०; २. कुं. २३७ अध्यायः ।

**शुभाशुभं कर्म नरो हि कृत्वा**
**प्रतीक्षते चेत्स फलं विपाके ।**
**स तेन युज्यत्यवशः फलेन मोक्षः**
**कथं स्यात्पुरुषस्य तस्मात् ॥ २२ ॥**

**मोक्षः कथं स्यात्पुरुषस्य तस्मात्** इत्यत्र **तस्मात्** कर्मणः **मोक्षः** मोचनं तत्परित्याग इत्यर्थः । **तस्मात्** शुभाशुभरूपकर्मसमुदायात् कैवल्यं वा ।

**ध्रुवं प्रशाम्यत्यसमीरितोऽग्निर्ध्रुवं प्रजास्यत्युत गर्भिणी या ।**
**ध्रुवं दिनादौ रजनीप्रणाशस्तथा क्षपादौ च दिनप्रणाशः ॥२५॥**

'ध्रुवं प्रशास्यति' इति पाठे शिक्षां करिष्यति । 'प्रहास्यति' इति पाठे स्वराज्यं त्यजति ।

**[1]क्रियेत तस्मान्न परे च कुर्यु-**
**र्दत्ते च दद्युः पुरुषाः कथंस्वित् ।**
**प्राप्यार्थकालं च भवेदनर्थः**
**[2]कथं न तत्स्यादिति तत्कुतः स्यात् ॥ २६ ॥**

**क्रियेत तस्मात्** इत्यत्र स्वयं न क्रियेत । **कथं च तत्स्यादिति तत्कुतः स्यात्** इत्यत्र **तत्** अनर्थागमनं कथं स्यात् न कथञ्चिदिति यत्, तत्कुतः स्यात् ।

---

१. **'कृते च'** इति कुं.पाठः ।
२. कुं. २३८ अध्यायः । **'कथं न तत्स्यादिति'** इति कुं. पाठः ।

**कथं न भिद्येत न च स्रवेत**
**न च प्रसिद्ध्येदिति रक्षितव्यम् ।**
**अरक्ष्यमाणं शतधा प्रकीर्येत्**
**ध्रुव न नाशोऽस्ति कृतस्य लोके ॥ २७ ॥**

**कथं न भिद्येत** इत्यत्र न प्रसिद्ध्येत् यथा प्रसिद्धं न भवति तथा रक्षितव्यम् ।

॥ इति त्रिंशदधिकद्विशततमोऽध्यायः ॥

## ॥ अथ एकत्रिंशदधिकद्विशततमोऽध्यायः ॥

[१] **विन्दन्तां चाप्यनात्मानं जीवितं च धनञ्जुतम् ।**
**दाराणां ते श्रियं दृष्ट्वा दीप्तामद्य जनाधिप ॥ २३ ॥**

**विन्दन्तां चाप्यनात्मानम्** इत्यत्र जीवितस्य अनात्मानम् अप्रयत्नम् ।

॥ इति एकत्रिंशदधिकद्विशततमोऽध्यायः ॥

## ॥ अथ द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥

[२] **ब्रवीषि यदिदं कर्ण सर्वं मनसि ते स्थितम् ।**
**न त्वभ्यनुज्ञां लप्स्यामि गमने यत्र पाण्डवाः ॥ २ ॥**

**न त्वभ्यनुज्ञाम्** इत्यत्र **अभ्यनुज्ञां** पितुराज्ञाम् ।

---

१. कुं. २३८ अध्यायः । **'विनिन्दतां तथाऽत्मानं'** इति कुं पाठः ।
२. कुं. २३९ अध्यायः ।

**अथवाऽप्यनुबुध्येत नृपोऽस्माकं चिकीर्षितम् ।**
**एतामत्यायतिं रक्षन्नाभ्यनुज्ञातुमर्हति ॥ ४ ॥**

**एतामप्यायतिम्** इत्यत्र **एतामायतिम्** अभिवृद्धिं रक्षन्नपि कलहे सति विद्यमानाऽपि सम्पद्गमिष्यतीति भीत्येत्यर्थः ।

**घोषा द्वैतवने सर्वे त्वत्प्रतीक्षा नराधिप ।**
**घोषयात्रापदेशेन गमिष्यामः सरः प्रति ॥ २३ ॥**

**घोषा द्वैतवन** इत्यत्र [1]'घोष आभीरपल्ली स्यात्' इत्यभिधानात् **घोषाः** गोव्रजाः **त्वत्प्रतीक्षाः** तव **प्रति** मासं मासं प्रति **ईक्षा** येषामपेक्षिता ते तथोक्ताः ।

॥ इति द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥

## ॥ अथ त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥

**[2]ततस्तैर्विहितः पूर्वं [3]समङ्गो नाम वल्लवः ।**
**समीपस्थास्तदा गावो धृतराष्ट्रे न्यवेदयत् ॥ २ ॥**

**समङ्गो नाम वल्लव** इत्यत्र **वल्लवः** गोपालः ।

**रमणीयेषु देशेषु घोषाः सम्प्रति केशव ।**
**[4]स्मारणं समयं प्राप्तो वत्सानामपि चाङ्कनम् ॥ ४ ॥**

**स्मारणं समयम्** इत्यत्र **स्मारणं** स्मरणयोग्यम् ।

---

१. अ.को. २-३-२०; २. कुं. २४० अध्यायः ।
३. BORI पृ. ८१२; **'सङ्गवो'** इति कुं पाठः ।
४. **'स्मारणे समयः'** इति कुं पाठः ।

**अथवा मद्वचः श्रुत्वा तत्र यत्ता भविष्यथ ।**
**[१]उद्विग्नवासोऽ[२]विस्रम्भात् दुःखं तत्र [३]भविष्यति ॥ १५ ॥**

**उद्विग्नवासोऽविस्रम्भात्** इत्यत्र तत्र पाण्डवानां वासः आश्रमः **अविस्रम्भात्** भवतामविश्वासात् **उद्विग्नवासः** उद्वेगः फलमूलापहारादिना भयं तेन युक्तो भविष्यति । भवदीयाः (क) किञ्चिदुपद्रवं करिष्यन्तीति भावः ।

**॥ इति त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥**

## ॥ अथ चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥

**[४]ईजे राजर्षियज्ञेन सद्यस्केन विशाम्पते ।**
**दिव्येन विधिना चैव वन्येन कुरुसत्तम ॥ १६ ॥**

**ईजे राजर्षियज्ञेन** इत्यत्र राजर्षीणां योग्ययज्ञेन **सद्यस्केन** तस्मिन् दिन एव क्रियमाणेन ।

**राजा दुर्योधनो नाम धृतराष्ट्रसुतो बली ।**
**[५]विजिहीर्षुरिहायाति तदर्थमपसर्पत ॥ २६ ॥**

**विजिहीर्षुरिह** इत्यत्र **विजिहीर्षुः** विहारं कर्तुमिच्छुः ।

---

१. **'उद्विग्नवासा'** इति कुं पाठः ।
२. M1; BORI पृ. ८१३; **'विस्रब्धा'** इति कुं. पाठः ।
३. BORI पृ. ८१३; **'गमिष्यथ'** इति कुं. पाठः ।
४. **कुं. २४१ अध्यायः ।**
५. BORI पृ. ८१७; **'चिक्रीडिपुरिहायाति'** इति कुं पाठः ।

**गच्छध्वं त्वरिताः सर्वे यत्र राजा स कौरवः ।**
**न चेदद्यैव गच्छध्वं धर्मराजनिवेशनम्** ॥ ३० ॥

**धर्मराजनिवेशनं** यमपुरम् ।

॥ इति चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥

## ॥ अथ पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥

[१] **अन्ये च्छत्रं वरूथं च बन्धुरं च तथा परे ।**
**अन्ये सञ्चूर्णयामासुश्छत्रे चाक्षौ तथा परे** ॥ ३४ ॥

**अन्ये च्छत्रं वरूथं च** इत्यत्र स्वस्वासाधारणचिह्नाङ्कितपताकाम् । नल्वोऽपि कश्चिद्रथालङ्कारः ।

॥ इति पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥

## ॥ अथ षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥

[२] **द्वेष्टारमन्ये क्लीबस्य घातयन्तीति नः श्रुतम् ।**
**इदं कृतं नः प्रत्यक्षं** [३] **तदेतदतिमानुषम्** ॥ १९ ॥

**तदेतदतिमानुषम्** इत्यत्र **तत्** तस्मात् ।

॥ इति षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥

* * *

---

१. कुं. २४२ अध्यायः ।
२. कुं. २४३ अध्यायः ।
३. 'गन्धर्वैरतिमानुषम्' इति कुं पाठः ।

## ।। अथ सप्तत्रिंशदधिकद्विशततमोऽध्यायः ।।

**क इवार्यो दयेत्प्राणानभिधावेति चोदितः ।**[1]
**प्राञ्जलिं शरणापन्नं दृष्ट्वा शत्रुमपि ध्रुवम्** ।। २८ ।।

**वरप्रदानं राज्यं च पुत्रजन्म च पाण्डवाः ।**
**शत्रोश्च मोक्षणं क्लेशात्त्रीणि चैकं च तत्समम्** ।। २९ ।।

**प्राञ्जलिं शरणापन्नम्** इत्यत्र शत्रुमपि शरणापन्नं दृष्ट्वा कः प्राणान् वहेदिति पूर्वेण सम्बन्धः । **वरप्रदानम्** अर्थिनामभीप्सितवरप्रदानम्, **राज्यं** शत्रून्विजित्य राज्यसम्पादनम्, **पुत्रजन्म** च पुत्रकामेष्ट्यादिना पुत्रजन्म **च** इति त्रितयं राज्ञामपेक्षितो धर्मः । **त्रीणि** पूर्वोक्तानि यानि त्रीणि, **एकं** शरणागतशत्रोर्मोक्षणं **तत्समं** तेषां त्रयाणां समम् ।

**।। इति सप्तत्रिंशदधिकद्विशततमोऽध्यायः ।।**

## ।। अथ अष्टत्रिंशदधिकद्विशततमोऽध्यायः ।।

**जितकाशिनश्च चत्वारस्त्वरिताश्च महारथाः ।**
**क्षणेनैव वने तस्मिन् समाजग्मुरभीतवत्** ।। ६ ।।

**जितकाशिनश्च चत्वार** इत्यत्र **जितकाशिनः** जयाकाङ्क्षिणः ।

**।। इति अष्टत्रिंशदधिकद्विशततमोऽध्यायः ।।**

* * *

---

१. कुं. २४४ अध्यायः ।

## ।। अथ चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ।।

**[१] नैव पुत्रान्न च भ्रातॄन्न पितॄन्न च बान्धवान् ।**
**नैव शिष्यान्न च ज्ञातीन्न बालान् स्थविरान्न च ।**
**युधि सम्प्रहरिष्यन्तो मोक्ष्यन्ति कुरुसत्तम ।। १२ ।।**

**मोक्ष्यन्ति कुरुसत्तम** इत्यत्र पुत्रान्न मोक्ष्यन्तीत्यादियोजना ।

**स ते विक्रम शौण्डीरो रणे पार्थम् विजेष्यति ।**
**कर्णः प्रहरतां श्रेष्ठः सर्वांश्चारीन् महारथः ।। २१ ।।**

**स ते विक्रमशौण्डीर** इत्यत्र **विक्रमशौण्डीरः** पराक्रमेण कुशलः ।

।। इति चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ।।

## ।। अथ एकोनपञ्चाशदधिकद्विशततमोऽध्यायः ।।

**[२] अपरं त्वब्रुवंस्तत्र वादिकास्तं महीपतिम् ।**
**यौधिष्ठिरस्य यज्ञस्य न समो ह्येष ते क्रतुः ।। ३ ।।**

**वादिकास्तं महीपतिम्** इत्यत्र **वादिकाः** यथास्थितस्य व्यक्तवचनशीलाः ।

**तमब्रवीत् तदा कर्णः शृणु मे राजकुञ्जर ।**
**पादौ न धावये तावद्यावन्न निहतोऽर्जुनः ।। १७ ।।**

---

१. कुं. २५३ अध्यायः ।
२. कुं. २५८ अध्यायः ।

**पादौ न धावये तावत्** इत्यत्र 'धावृ शोधन' इति धातोः यथा रजोपहारेण कान्तिविशेषो भवति, तथा दास्यादीनां करेण पाद-क्षालनम् ।

**॥ इति एकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥**

## ॥ अथ पञ्चाशदधिकद्विशततमोऽध्यायः ॥

**वैशम्पायन उवाच –**

**ततः शयानं कौन्तेयं रात्रौ द्वैतवने मृगाः ।[1]**
**स्वप्नान्ते दर्शयामासुर्बाष्पकण्ठा युधिष्ठिरम् ॥ २ ॥**

**स्वप्नान्ते दर्शयामासुः** इत्यत्र **स्वप्नान्ते** स्वप्नमध्ये ।

**उक्तो रात्रौ मृगैरस्मि स्वप्नान्ते हतशेषितैः ।**
**अनुभूताः[2] स्म भद्रं ते दया नः क्रियतामिति ॥ ११ ॥**

**अनुभूताः स्म भद्रं त** इत्यत्र **अनु** अनुकूलतया **भूताः** अनुभूताः।

**॥ इति पञ्चाशदधिकद्विशततमोऽध्यायः ॥**

## ॥ अथ एकपञ्चाशदधिकद्विशततमोऽध्यायः ॥

**फलमूलाशनास्ते[3] हि सुखार्हा दुःखमुत्तमम् ।**
**प्राप्तकालमनुध्यान्तः सेहिरे वरपूरुषाः ॥ २ ॥**

**प्राप्तकालमनुध्यान्त** इत्यत्र **अनुध्यान्तः** अनुध्यायन्तः ।

---

१. कुं. २५९ अध्यायः ।
२. $B_1$,$T_1$,$G_1$ ; BORI पृ. ८५७; **'तनुभूताः स्म भद्रं'** इति कुं पाठः ।
३. कुं. २६० अध्यायः ।

**उदयास्तमयज्ञो हि न हृष्यति न शोचति ।**
**सुखमापतितं विन्दन् दुःखमापतितं सहन् ॥ १५ ॥**

**उदयास्तमयज्ञो हि** इत्यत्र कदाचित्सम्पदुदयः कदाचित्सम्पदस्तमयश्च उदयास्तमयौ ।

**अत्राप्युदाहरन्तीमं इतिहासं पुरातनम् ।**
**व्रीहिद्रोणपरित्यागाद्यत्फलं प्राप मुद्गलः ॥ ३८ ॥**

**व्रीहिद्रोणपरित्यागात्** इत्यत्र **द्रोणः** प्रस्थविशेषः ।

**॥ इति एकपञ्चाशदधिकद्विशततमोऽध्यायः ॥**

## ॥ अथ त्रिपञ्चाशदधिकद्विशततमोऽध्यायः ॥

**अतिथिव्रती क्रियावांश्च कापोतीं वृत्तिमास्थितः ।**[१]
**सत्रमिष्टीकृतं नाम समुपास्ते महातपाः ॥ ४ ॥**

**कापोतीं वृत्तिमाश्रित** इत्यत्र यथा कपोतः शिलायाः कणं कणमार्जयति, तद्वच्छिलोञ्छवृत्त्या अल्पाल्पसङ्ग्रहरूपा वृत्तिः कापोतीत्युच्यते, ताम् ।

**बिभ्रच्चानियतं वेषमुन्मत्त इव पाण्डव ।**
**विकचः परुषा वाचो व्याहरन्विविधा मुनिः ॥ १२ ॥**

**विकचः परुषा वाच** इत्यत्र विगतः कचः केशभारो यस्य स तथोक्तः।

---

१. कुं. २६१ अध्यायः ।

**न क्रोधो न च मात्सर्यं नावमानो न सम्भ्रमः ।**
**सपुत्रदारमुञ्छं तमाविवेश द्विजोत्तमम्** ॥ २१ ॥

**सपुत्रदारमुञ्छं तम्** इत्यत्र उञ्छम् उञ्छवृत्तिमन्तम् ।

**न चास्य मानसं[1] किञ्चिद्विकारं ददृशे मुनिः ।**
**शुद्धसत्त्वस्य शुध्दं स ददृशे निर्मलं पुनः[2]** ॥ २२ ॥

**मानसं** मनस्सम्बन्धिनं विकारम् ।

**आहारप्रभवाः प्राणा मनो दुर्निग्रहं चलम् ।**
**मनसश्चेन्द्रियाणां चाप्यैकाग्र्यं निश्चितं तपः** ॥ २६ ॥

**श्रमेणोपार्जितं त्यक्तुं न च दुःखेन चेतसा ।**
**तत्सर्वं भवता साधो यथावदुपपादितम्** ॥ २७ ॥

**मनसश्चेन्द्रियाणाम्** इत्यत्र मनसः इन्द्रियाणां च दुःखं यथा भवति तथा श्रमेण उपार्जितं वित्तं युक्तेन वैराग्ययोगवता चेतसा त्यक्तुम् एकाग्रं मनः त्वया निश्चितमिति सम्बन्धः ।

**सतां सप्तपदं[3] मित्रमाहुः सन्तः कुलोचितः ।**
**मित्रतां च पुरस्कृत्य पृच्छामि त्वामहं विभो** ॥ ३७ ॥

**सतां सप्तपदम्** इत्यत्र सप्त पदानि अभ्युत्थानपदानि प्रियवाक्य-पदानि वा यस्य तम् । ॥ इति त्रिपञ्चाशदधिकद्विशततमोऽध्यायः ॥

---

१. BORI पृ. ८६३; **'मनसः किञ्चिद् विकारः दृश्यते'** इति कुं.पाठः ।
२. **'मनः'** इति कुं.पाठः ।
३. **'साप्तपदं'** इति कुं. पाठः ।

## ।। अथ पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ।।

[१] का त्वं कदम्बस्य विनम्य शाखां
किमाश्रमे तिष्ठसि शोभमाना ।
देदीप्यमानाग्निशिखेव नक्तं
[२] आचक्ष्व शीघ्रं वृजिनाग्रकेशि ।। १ ।।

वृजिनाग्रकेशि इत्यत्र वृजिनं कौटिल्यम् ।

एतैः सहायैरुपयाति राजा
मरुद्गणैरिन्द्र इवाभिगुप्तः ।
[३] सा जानती व्यापनयः सुकेशि
कस्यासि भार्या दुहिता च कस्य ।। १४ ।।

सा जानती व्यापनयः सुकेशि इत्यत्र व्यापनयः ताल्वोष्ठपुटयोरपसरणं कुरु व्यवहरेत्यर्थः ।

।। इति पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ।।

## ।। अथ षट्पञ्चाशदधिकद्विशततमोऽध्यायः ।।

कुशलं प्रातराशस्य [४] सर्वा मेऽपचितिः कृता ।
एहि मे रथमारोह सुखमाप्नुहि केवलम् ।। १६ ।।

---

१. कुं. २६६ अध्यायः ।
२. M; BORI पृ. ८७१; 'व्याधूयमाना पवनेन सुभ्रूः' इति कुं.पाठः ।
३. $K_3$,T,$G_{3.4}$,M; BORI पृ.८७३; 'अजनतां ख्यापय नः' इति कुं. पाठः।
४. 'सर्वं मे दित्सितं त्वया' इति कुं. पाठः ।

**सर्वा मेऽपचितिः कृता** इत्यत्र **अपचितिः** पूजा कृता ।

**।। इति षट्पञ्चाशदधिकद्विशततमोऽध्यायः ।।**

## ।। अथ सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ।।

**वैशम्पायन उवाच –**

**सरोषरागोपहतेन वल्गुना सरागनेत्रेण नतोन्नतभ्रुवा ।**[1]
**मुखेन विस्फूर्य सुवीरराष्ट्रपं ततोऽब्रवीत्तं द्रुपदात्मजा पुनः ।।१।।**

**मुखेन विष्फूर्य** इत्यत्र सुवीरराष्ट्रकं प्रति **विष्फूर्य** कोपेन ओष्ठस्फुरणं कृत्वा ।

**नागं प्रभिन्नं गिरिकूटकल्पमुपत्यकां हैमवतीं चरन्तम् ।**
**दण्डीव यूथादपसेधसे त्वं यो जेतुमांशससि धर्मराजम् ।। ५ ।।**

**दण्डीव यूथात्** इत्यत्र **दण्डीव** लगुडधारीव **अपषेधसे** निवर्तयसि ।

**बाल्यात्प्रसुप्तस्य महाबलस्य सिंहस्य पक्ष्माणि मुखाल्लुनासि ।**
**पदा समाहत्य पलायमानः क्रुद्धं यदा द्रक्ष्यसि भीमसेनम् ।।६।।**

**लुनासि । पदा समाहत्य** इत्यत्र पदा सिंहस्याङ्गं समाहत्य पक्ष्माणि लुनासीति पूर्वेणान्वयः ।

**महाबलं घोरतरं प्रवृद्धं जातं हरिं पर्वतकन्दरेषु ।**
**प्रसुप्तमुग्रं प्रपदेन हंसि यः कुद्धमायोत्स्यसि जिष्णुमुग्रम् ।। ७ ।।**

---

१. कुं. २६९ अध्यायः ।

'आशंससि जिष्णुमुग्रम्' इति पाठे तुच्छमित्याशंससि ।

॥ इति सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥

## ॥ अथ अष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥

**सरः सुपर्णेन हृतोरगेन्द्रमराजकं राज्यमिवेह शास्त्रम्[१] ।**
**एवं विधं मे प्रतिभाति काम्यकं शौण्डैर्यथा पीतसुरश्च कुम्भः ५**

**राज्यमिवेह शास्त्रम्** इत्यत्र इह कलिकाले शास्त्रमिवेत्यपरो दृष्टान्तः ।

**यदा वदत्येष [२]निहीनयोनिः सालावृको वाममुपेत्य पार्श्वम् ।**
**सुव्यक्तमस्मानवमत्य पापैः कृतोऽभिमर्दः कुरुभिः प्रसह्य ॥८॥**

**यदा वदत्येष निहीनयोनिः** इत्यत्र 'निहीनोऽपशदो जाल्मः'[३] इत्यभिधानात् अपशदयोनिः ।

॥ इति अष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥

## ॥ अथ एकोनषष्ट्यधिकद्विशततमोऽध्यायः ॥

**इन्द्रसेन उवाच–**

**अनिन्द्यरूपा तु विशालनेत्रा शरीरतुल्या कुरुपुङ्गवानाम् ।**
**केनात्मनाशाय [४]पदापनीता छिद्रं समासाद्य नरेन्द्रपत्नी ॥ १३ ॥**

---

१. **'शान्तम्'** इति कुं पाठः ।
२. $T_2$,$G_{1.2}$,M ; BORI पृ. ८८२; **'वि'** इति कुं पाठः ।
३. **अ.को. २-१०-१६**
४. **'यदापनीता'** इति कुं. पाठः ।

**पदाऽपनीता** इत्यत्र **पदा** पादसञ्चारेण ।

॥ इति एकोनषष्ट्यधिकद्विशततमोऽध्यायः ॥

## ॥ अथ षष्ट्यधिकद्विशततमोऽध्यायः ॥

**तेषां[1] ध्वजाग्राण्यभिवीक्ष्य राजा स्वयं दुरात्मा कुरुपुङ्गवानाम् ।**
**जयद्रथो याज्ञसेनीमुवाच रथे स्थितां भानुमतीं यतौजाः[2] ॥ २ ॥**

**भानुमतीं यतौजा** इत्यत्र **भानुमतीं** स्वभर्तॄन् दृष्ट्वा कान्तिमतीम् ।

**आयान्तीमे पञ्च रथा महान्तो मन्ये च कृष्णे पतयस्तवैते ।**
**सा जानती ख्यापय नः सुकेशि[3] परावरं पाण्डवानां रथस्थम् ३**

**परावरं पाण्डवानां रथस्थम्** इत्यत्र पाण्डवानां मध्ये रथस्थं **परावरं** ज्येष्ठं कनिष्ठं च नः ख्यापयेति सम्बन्धः ।

**आजानेया बलिनः साधुदान्ता**
**महाबलाः शूरमुदावहन्ति ।**
**एतस्य कर्माण्यतिमानुषाणि**
**भीमेति शब्दोऽस्य गतः[4] पृथिव्याम् ॥ १० ॥**

**आजानेया बलिन** इत्यत्र [5]'आजानेयाः कुलीनाः स्युः' इत्यभिधानात् **आजानेयाः** कुलीनाः सदश्वाः ।

---

१. कुं. २७१ अध्यायः । ; २. 'हतौजाः' इति कुं.पाठः ।
३. T1 ; BORI पृ. ८८५; 'परंपरं' इति कुं पाठः ।
४. 'ततः' इति कुं पाठः । BORI पृ. ८८६
५. अ.को. २-८-४४

**नास्यापराद्धाः शेषमवाप्नुवन्ति**
**नायं वैरं विस्मरते कदाचित् ।**
**वैरस्यान्तं संविधायोपयाति**
**पश्चाच्छान्तिं न च तत्तप्यतीह[१] ॥ ११ ॥**

**न च तत्तप्यतीह** इत्यत्र तत् वैरं इह जीवनावस्थायां **न तप्यति** पश्चात्तापं न करोति ।

[२] **गजं तु सगजारोहं पदातींश्च चतुर्दश ।**
**जघान गदया भीमः सैन्धवध्वजिनीमुखे ॥ ७ ॥**

**पदातींश्च चतुर्दश** इत्यत्र एकैकगजरक्षकान् चतुर्दश चतुर्दश पदातीन् ।

**तौ शरैरभिवर्षन्तौ जीमूताविव वार्षिकौ ।**
**एकैकेन विपाठेन जघ्ने माद्रवतीसुतः ॥ १७ ॥**

**विपाठेन** शरेण ।

**मूढं नैकृतिकं दुष्टं द्रौपद्याः क्लेशकारिणम् ।**
**तमेवान्विष भद्रं ते किं ते योधैर्निपातितैः ।**
**अनामिषमिदं कर्म कथं वा मन्यते भवान् ॥ ४६ ॥**

**अनामिषमिदं कर्म** इत्यत्र **अनामिषं** हननादिना अस्माकं तृप्तिकरत्वात् आमिषस्थानीयजयद्रथरहितम् **इदं कर्म** योधहननाख्यं कर्म ।

**॥ इति षष्ट्यधिकद्विशततमोऽध्यायः ॥**

---

१. '-व' इति कुं पाठः ।; २. कुं. २७२ अध्यायः ।

## ।। अथ एकषष्ट्यधिकद्विशततमोऽध्यायः ।।

**भार्याभिमर्ष्टा[1] निर्वैरो यश्च राज्यापहारकः[2] ।**
**याचमानोऽपि सङ्ग्रामे न मोक्तव्यः कथञ्चन ।। ५४ ।।**

**भार्याभिमर्ष्टा निर्वैर** इत्यत्र भार्याभिमर्ष्टा यश्च राज्यापहारकः, स निर्वैरः सङ्ग्रामे याचमानोऽपि जीवितुं नार्हति ।

**ते स्म तं मुदिता दृष्ट्वा पुनरत्यागतं नृपम् ।**
**जित्वा तान्सिन्धुसावैरीन् द्रौपदीं चाहृतां पुनः ।। ५८ ।।**

**ते स्म तं मुदिता दृष्ट्वा** इत्यत्र दृष्ट्वा मुदिता इति सम्बन्धः ।

**दृष्ट्वा विक्लवकर्माणि[3] कुर्वाणं च धनञ्जयम् ।**
**पलायनकृतोत्साहः प्राद्रवद्येन वै वनम् ।। ६५ ।।**

**दृष्ट्वा विक्लवकर्माणि** इत्यत्र **विक्लवो** भीतः तस्य **कर्माणि** स्खलन-पतनादीनि ।

**।। इति एकषष्ट्यधिकद्विशततमोऽध्यायः ।।**

## ।। अथ चतुःषष्ट्यधिकद्विशततमोऽध्यायः ।।

**तस्य जानू ददौ भीमो जघ्ने चैनमरत्निना ।**
**स मोहमगमद्राजा प्रहारवरपीडितः ।। ५ ।।**

---

१. **'भार्याभिहर्ता वैरी यो'** इति कुं पाठः ।
२. **'राज्यहरो रिपुः'** इति कुं. पाठः ।
३. **'विक्रम'** इति कुं पाठः ।

**जघ्ने चैनमरत्निना** इत्यत्र 'अरत्निस्तु निष्कनिष्ठेन मुष्टिना'[१] इत्यमरः। अतिदृढमुष्ट्याघाते सति मरिष्यतीति भीत्या कनिष्ठाङ्गुलि-रहितमुष्टिना।

**विकल्पयित्वा राजानं ततः प्राह वृकोदरः।**
**जीवितुं चेच्छसे मूढ हेतुं मे गदतः शृणु ॥ ११ ॥**

**विकल्पयित्वा** शिरसि पञ्चधाराकरणेन विकारं कल्पयित्वा।

**दासोऽस्मीति त्वया वाच्यं संसत्सु[२] सुसभासु च।**
**एवं चेज्जीवितं दद्यां एष युद्धजितो विधिः ॥ १२ ॥**

**संसत्सु सुसभासु च** इत्यत्र सं सम्यक् सन्तो यासु ताः संसतः तासु।

**अदासो गच्छ मुक्तोसि मैवं कार्षीः पुनः क्वचित्।**
**स्त्रीकामुक धिगस्तु त्वां क्षुद्रः क्षत्रसहायवान् ॥ २३ ॥**

**अदासो गच्छ** इत्यत्र **अदासः** अस्मन्निकटे दास्यकर्माकुर्वन्।

**धर्मे ते वर्धतां बुद्धिः क्षुद्रधर्मे[३] मनः कृथाः।**
**साश्वः सरथपादातः स्वस्ति गच्छ जयद्रथ ॥ २६ ॥**

'क्षु धर्मे मनः कृथा' इति पाठे हे क्षुद्र अतः परं वा धर्मे मनः कृथा इति योजना।

॥ इति चतुःषष्ट्यधिकद्विशततमोऽध्यायः ॥

---

१. अ.को. २-६-८६
२. **'च'** इति कुं पाठः।
३. **'-र्मा चाधर्मे'** इति कुं. पाठः।

॥ अथ पञ्चषष्ट्यधिकद्विशततमोऽध्यायः ॥

[१] **कथं हि पत्नीमस्माकं धर्मज्ञां धर्मचारिणीम् ।**
**संस्पृशेदीदृशो भावः शुचिं स्तैन्यमिवानृतम्** ॥ ७ ॥

**संस्पृशेदीदृशो भावः शुचिं स्तैन्यमिवानृतम्** इत्यत्र अनृतं न विद्यते ऋतं सत्यवचनं यत्र तत्तथोक्तं **स्तैन्यं** स्तेनस्य भावः तस्करत्वं **शुचिं** सत्कुलप्रसूतमिव **ईदृशो भावः** परपुरुषस्पर्शाख्यो भावः द्रौपदीं कथं वा संस्पृशेत् ।

**तां जहार बलाद्राजा मूढबुद्धिर्जयद्रथः ।**
**तस्याः संहरणात् पापः शिरसः केशवापनम्** ॥ ९ ॥

**तस्याः संहरणात्** इत्यत्र **संहरणात्** सम्यगपहरणात् ।

[२] **अस्ति कश्चिन्मया नूनं अल्पभाग्यतरो नरः ।**
**भवता दृष्टपूर्वो वा श्रुतपूर्वोऽपि वा क्वचित्** ॥ १३ ॥

**अस्ति कश्चित्** इत्यत्र मया विना, मया मत्त इति विभक्तिव्यत्यासो वा ।

**॥ इति पञ्चषष्ट्यधिकद्विशततमोऽध्यायः ॥**

॥ अथ षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥

[३] **पितामहो रावणस्य साक्षाद्देवः प्रजापतिः ।**
**स्वयम्भूः सर्वलोकानां प्रभुः स्रष्टा महातपाः** ॥ ११ ॥

---

१. कुं. २७४ अध्यायः । २. 'अस्ति नूनं मया कश्चिदल्पभाग्यतरो नरः' कुं पा
३. कुं. २७५ अध्यायः ।

**पितामहो रावणस्य** इत्यत्र रावणपितुर्विश्रवसः पुलस्त्यस्य देहार्धरूपत्वात् ब्रह्मा रावणस्य पितामहः ।

[१] **बुबुधे तं तु सक्रोधं पितरं राक्षसेश्वरः ।**
**कुबेरस्तु प्रसादार्थं यतते स्म सदा नृप** ॥ २ ॥

**राक्षसेश्वरः** राक्षसानां राजा कुबेरः ।

**ब्रह्मोवाच –**

**यस्माद्राक्षसयोनौ ते जातस्यामित्रकर्शन ।**
**नाधर्मे धीयते बुद्धिरमरत्वं** [२] **ददामि ते** ॥ ३१ ॥

**अमरत्वं ददामि त** इत्यत्र कल्पावसानपर्यन्तं मरणराहित्यं अमृतत्व-रूपमुक्तत्वं च अमरत्वम् ।

**॥ इति षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥**

## ॥ अथ सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥

[३] **सा तद्वचः समाज्ञाय तथाचक्रे मनोजवा ।**
**इतश्चेतश्च गच्छन्ती वैरसन्धुक्षणे रता** ॥ २९ ॥

**वैरसन्धुक्षणे रता** इत्यत्र वैरसन्धाने ।

* * *

---

१. कुं. २७६ अध्यायः ।
२. BORI पृ. ९०१; **'ददानि'** इति कुं पाठः ।
३. कुं. २७७ अध्यायः ।

युधिष्ठिर उवाच –

**उक्तं[1] भगवता जन्म रामादीनां पृथक्पृथक् ।**
**प्रस्थानशमने[2] ब्रह्मन् श्रोतुमिच्छामि कथ्यताम् ॥ १ ॥**

**प्रस्थानशमने ब्रह्मन्** इत्यत्र **प्रस्थानं** यात्रा तस्याः शमनं च प्रस्थानशमने । रामलक्ष्मणयोः प्रस्थानं भरतशत्रुघ्नयोस्तदभावं चेत्यर्थः ।

**इत्येवं ब्रुवतस्तस्य स्रोतोभ्यस्तेजसोऽर्चिषः[3] ।**
**निश्चेरुर्दह्यतो रात्रौ वृक्षस्येव स्वरन्ध्रतः ॥ ५७ ॥**

**स्रोतोभ्यस्तेजसोऽर्चिष** इत्यत्र स्रवन्ति येभ्यो जलमलादीनीति स्रोतांसि नवद्वाराणि ।

**[4]तामादायापनेष्यामि ततः स न भविष्यति ।**
**भार्यावियोगाद्दुर्बुद्धिरेतत्साह्यं कुरुष्व मे ॥ १३ ॥**

**ततः स न भविष्यति** इत्यत्र **न भविष्यति** मरिष्यतीत्यर्थः ।

**रावणस्तु यतिर्भूत्वा मुण्डः कुण्डी त्रिदण्डधृत् ।**
**मृगश्च भूत्वा मारीचस्तं देशमुपजग्मतुः ॥ १६ ॥**

**मुण्डः कुण्डी** इत्यत्र **कुण्डी** [5]'कुण्डिका च कमण्डलुः' इत्यभिधानात् कुण्डिकावान् ।

---

१. कुं. २७८ अध्यायः । ; २. **'प्रस्थानकारणं'** इति कुं पाठः ।
३. **'नेत्रेभ्य-'** इति कुं. पाठः ।; ४. कुं. २७९ अध्यायः ।
५. ह.को. २-४१०

**स धन्वी बद्धतूणीरः खड्गगोधाङ्गुलित्रवान् ।**
**अन्वधावन्मृगं रामो रुद्रस्तारामृगं यथा ॥ १९ ॥**

**रुद्रस्तारामृगं यथा** इत्यत्र संहारकाले मृगशीर्षाख्यतारामृगम् ।

**कथं हि पीत्वा माध्वीकं पीत्वा च मधुमाधवीम् ।**
**लोभं सौवीरके कुर्यान्नारी काचिदिति स्मरेः ॥ ४१ ॥**

**लोभं सौवीरके कुर्यात्** इत्यत्र 'आरनालकसौवीरकुल्माषाभिषुतानि तु'[१] इत्यभिधानात् सौवीरमारनालकम् । 'अम्बली'त्यपभ्रंशभाषा ।

**॥ इति सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥**

## ॥ अथ अष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥

**[२]हृतदारो महासत्त्वो रामो दशरथात्मजः ।**
**तुल्यारिमित्रतां प्राप्तः सुग्रीवेण धनुर्धरः ॥ २२ ॥**

**तुल्यारिमित्रतां प्राप्त** इत्यत्र सुग्रीवस्य अरिः रामस्याप्यरिः, सुग्रीवस्य मित्रं रामस्यापि मित्रम्, एवं तुल्यारिमित्रतां प्राप्त इत्यर्थः ।

**एताश्चान्याश्च दीप्ताक्ष्यः करभोत्करमूर्धजाः ।**
**परिवार्यासते सीतां दिवारात्रमतन्द्रिताः ॥ ४७ ॥**

**करभोत्करमूर्धजा** इत्यत्र **करभोत्करवत्** करमूलसमूहवत् ह्रस्वाः पृथुलाश्च मूर्धजा यासां ताः ।

---

१. अ.को. २-९-३९
२. कुं. २८१ अध्यायः ।

**इत्येवं परिभर्त्सन्तीस्त्रास्यमानाः पुनः पुनः ।**
**भर्तृशोकसमाविष्टा निःश्वस्येदमुवाच ताः ॥ ५० ॥**

**इत्येवं परिभर्त्सन्ती** इत्यत्र **परिभर्त्सन्तीः** परिभर्त्सयन्तीः ।

**॥ इति अष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥**

## ॥ अथ एकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥

**परदाराऽस्म्यलभ्या च सततं च पतिव्रता ।**[१]
**न चैवौपयिकी भार्या मानुषी तव राक्षस ॥ २१ ॥**

**न चैवौपयिकी भार्या** इत्यत्र 'युक्तमौपयिकं लभ्यं भजमानाभिनीतवत्'[२] इत्यभिधानात् **औपयिकी** नवं नवं पुरुषं प्राप्नुवन्ती, स्वैरिणीत्यर्थः ।

**किं नु शक्यं मया कर्तुं यत्त्वमद्यापि मानुषम् ।**
**आहारभूतमस्माकं राममेवानुरुध्यसे ॥ २८ ॥**

**किं नु शक्यं मया** इत्यत्र यद्यस्माद्राममेव अनुरुध्यसे अङ्गीकरोषि, तस्मात् मया किं नु कर्तुं शक्यम् । अकामाया अङ्गीकारायोगात् तव मयि कामस्य चाभावात् इदानीं गृहं प्रति गमनमेव न्याय्यमिति भावः ।

**॥ इति एकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥**

---

१. कुं. २८२ अध्यायः ।
२. अ.को. २-८-२४

## ।। अथ द्विसप्तत्यधिकद्विशततमोऽध्यायः ।।

**सोऽस्मानतर्कयद्भोक्तुमथाभ्येत्य वचोऽब्रवीत् ।**[1]
**भोः क एष मम भ्रातुर्जटायोः कुरुते कथाम्** ।। ४८ ।।

**सोऽस्मानतर्कयद्भोक्तुम्** इत्यत्र सः अस्मानभ्येत्य **अतर्कयत्** प्रायोपवेशगतानूहयामास । अथ भोक्तुं वचः अब्रवीदिति योजना ।

**नाध्यवास्यद्यदा कश्चित् सागरस्य विलङ्घनम् ।**
**ततः पितरमाविश्य पुप्लुवेऽहं महार्णवम् ।**
**शतयोजनविस्तीर्णं निहत्य जलराक्षसीम्** ।। ५९ ।।

**ततः पितरमाविश्य** इत्यत्र दक्षिणस्यां दिशि झंझामारुतरूपं पितरमाविश्येत्यर्थः ।

**गम्यतामिति चोक्त्वा मां सीता प्रादादिमं मणिम् ।**
**धारिता येन वैदेही कालमेतमनिन्दिता** ।। ६८ ।।

**धारिता येन वैदेहि** इत्यत्र येन मणिना **धारिता** जीविता ।

**प्रत्यायार्थं कथां चेमां कथयामास जानकी ।**
**क्षिप्तामिषीकां काकाय चित्रकूटे महागिरौ** ।। ६९ ।।

**क्षिप्तामिषीकाम्** इत्यत्र **इषीकां** प्रत्यभिज्ञानकारणं कथयामासेति पूर्वेण सम्बन्धः ।

।। इति द्विसप्तत्यधिकद्विशततमोऽध्यायः ।।

---

१. कुं. २८३ अध्यायः ।

## ।। अथ त्रिसप्तत्यधिकद्विशततमोऽध्यायः ।।

**[1]गिरिकूटनिभाः केचित् केचिन्महिषसन्निभाः ।**
**शरदभ्रप्रतीकाशाः [2]पिष्टहिङ्गुलिकाननाः ।। ११ ।।**

**पिष्टहिङ्गुलिकानना** इत्यत्र **हिङ्गुलिका** इङ्गलीकमिति रक्तधातु-विशेषः ।

**अहं त्विमं जलनिधिं समारप्स्याम्युपायतः ।**
**प्रतिशेष्याम्युपवसन् दर्शयिष्यति मां ततः ।। ३० ।।**

**प्रतिशेष्याम्युपवसन्** इत्यत्र **प्रतिशेष्यामि** शयनं करिष्यामि ।

**कौसल्यामातरित्येवमाभाष्य मधुरं वचः ।**
**इदमित्याह रत्नानामाकरैः शतशो वृतः ।। ३४ ।।**

**कौसल्यामातरित्येवम्** इत्यत्र कौसल्या माता यस्य तत्सम्बुद्धिः, हे रामेत्यर्थः ।

**सागरस्तु ततः स्वप्ने दर्शयामास राघवम् ।**
**देवो नदनदीभर्ता श्रीमान्यादोगणैर्वृतः ।। ३३ ।।**

**सागरस्तु ततः स्वप्न** इत्यत्र स्वप्ने इव अन्यैरदृष्टत्वात् रामेणैकेनैव दृष्टत्वात् स्वप्न इत्युक्तम् ।

**ब्रूहि किं ते करोम्यत्र साहाय्यं पुरुषर्षभ ।**

---

१. कुं. २८४ अध्यायः ।
२. BORI पृ. ९३१; **'कचिद्धिङ्गुलिकाननाः'** इति कुं. पाठः ।

**ऐक्ष्वाकोरस्मि[१] ते ज्ञाती राम सत्यपराक्रमः ।**
**एवमुक्तो समुद्रेण रामो वाक्यमथाब्रवीत्** ॥ ३५ ॥

**ऐक्ष्वाकोरस्मि ते ज्ञातिः** इत्यत्र ऐक्ष्वाकोः ते अहं ज्ञातिरस्मि, ममापि सगरकुमारनिर्मितत्वेन सागरत्वात् ।

**नलसेतुरिति ख्यातो योऽद्यापि प्रथितो भुवि ।**
**रामस्याज्ञां पुरस्कृत्य धार्यते गिरिसन्निभः** ॥ ४५ ॥

**धार्यते गिरिसन्निभ** इत्यत्र धार्यते यथा अधो न गच्छति तथा समुद्रेणैव धार्यते ।

**प्रतिजग्राह रामस्तं स्वागतेन महामनाः ।**
**सुग्रीवस्य तु शङ्काऽभूत्प्रणिधिः स्यादिति स्म ह** ॥ ४७ ॥

**प्रणिधिः स्यादिति स्म ह** इत्यत्र प्र प्रति निधीयते अनेनेति **प्रणिधिः** शत्रुः ।

**ततो गत्वा समासाद्य लङ्कोद्यानान्यनेकशः ।**
**भेदयामास कपिभिर्महान्ति च बहूनि च** ॥ ५१ ॥

**ततो गत्वा समासाद्य** इत्यत्र **ततः** तेन सेतुना लङ्काप्रदेशं गत्वा ।

॥ इति त्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥

* * *

---

१. '**-ह्यस्मि**' इति कुं पाठः ।

## ।। अथ पञ्चसप्तत्यधिकद्विशततमोऽध्यायः ।।

**[१] रावणः संविधं चक्रे लङ्कायां शास्त्रनिर्मिताम् ।**
**प्रकृत्यैव दुराधर्षा दृढप्राकारतोरणा ।। २ ।।**

**शास्त्रनिर्मिता** इत्यत्र **शास्त्रं** शासनं आज्ञा तेन निर्मिताः ।

**कर्णाट्टयन्त्रैर्दुर्धर्षा बभूवुः [२] सगुलोपलाः ।**
**साशीविषघटायोधाः ससर्जरसपांसवः ।। ४ ।।**

**कर्णाट्टयन्त्रैर्दुर्धर्षा** इत्यत्र **कर्णाः** करोति परभटशरनिरोधं, नयति च स्वभटशरानिति कर्णपदेन कर्णाकाराः वर्तुलाः प्राकारशिरोलङ्काराः कथ्यन्ते । **सगुलोपलाः** गुलैः घनीभूतैः तप्तवृक्षरसविशेषैः उपलैः शिलाभिश्च सहिताः सगुलोपलाः ।

**ततः सर्वाभिसारेण हरीणां वातरंहसाम् ।**
**भेदयामास लङ्कायाः प्राकारं रघुनन्दनः ।। २३ ।।**

**ततः सर्वाभिसारेण** इत्यत्र सर्वतः अभिसरणं **सर्वाभिसारः** ।

**।। इति पञ्चसप्तत्यधिकद्विशततमोऽध्यायः ।।**

## ।। अथ अष्टसप्तत्यधिकद्विशततमोऽध्यायः ।।

**[३] अशीतमिव निःश्वस्य समुत्पत्य वरासनात् ।**
**उवाच कुम्भकर्णस्य कर्मकालोऽयमागतः ।। १९ ।।**

---

१. कुं. २८५ अध्यायः । ; २. **'सहुडोपलाः'** इति कुं पाठः ।
३. कुं. २८७ अध्यायः । BORI पृ. ९४१; **'सुदीर्घमिव'** इति कुं. पाठः ।

**अशीतमिव निःश्वस्य** इत्यत्र शीतं न भवति यथा तथा **अशीतम्** ।

**सोऽभिपत्य महावेगं रुक्मपुङ्खं महाशरम् ।[१]**
**प्राहिणोत्कुम्भकर्णाय लक्ष्मणः परवीरहा ॥ १३ ॥**

**सोऽभिपत्य महावेगं** इत्यत्र कुम्भवत् कर्णौ यस्येति व्युत्पत्त्या कुम्भकर्णपदेन अतिकायः कथ्यते । अत एव 'बृहत्तनुः कुम्भवदेव कर्णावस्येत्यतो नाम च कुम्भकर्ण' इत्याहुः । रामं विना लक्ष्मणस्य कुम्भकर्णघातकत्वायोगादयमेवार्थः । कुम्भकर्णपदप्रयोगस्तु रामेण कुम्भकर्णवधोऽपि कृत इति सूचयितुम् ।

**शतशो नैर्ऋता वन्यान् जघ्नुर्वन्याश्च नैर्ऋतान् ।[२]**
**नैर्ऋतास्तत्र वध्यन्ते प्रायेण न तु वानराः ॥ ३० ॥**

**शतशो नैर्ऋता वन्यान्** इत्यत्र **वन्यान्** वनवासिनः कपीन्, **नैर्ऋताः** राक्षसाः ।

**॥ इति अष्टसप्तत्यधिकद्विशततमोऽध्यायः ॥**

## ॥ अथ अशीत्यधिकद्विशततमोऽध्यायः ॥

**कुम्भकर्णं हतं श्रुत्वा स्वानुजं राक्षसाधिपः ।[३]**
**प्रहस्तं च महेष्वासं धूम्राक्षं चातितेजसम् ॥ १ ॥**

**कुम्भकर्णं हतं श्रुत्वा** इत्यत्र स्वानुजं कुम्भकर्णं हतं श्रुत्वेत्यर्थः ।

---

१. कुं. २८८ अध्यायः ।

२. '**नैऋतान् वन्या जघ्नुर्वन्यांश्च नैर्ऋताः**' इति कुं. पाठः ।

३. कुं. २८९ अध्यायः ।'**ततः श्रुत्वा हतं सङ्ख्ये कुम्भकर्णं सहानुगम्**' इति कुं. पाठः ।

अन्तर्हितः प्रकाशो वा दिव्यैर्दत्तवरैः शरैः ।
जहि शत्रूनमित्रघ्न मम शस्त्रभृतां वर ॥ ४ ॥

अन्तर्हितः प्रकाशो वा इत्यत्र अन्तर्हितः अदृश्यः, प्रकाशः दृश्यमानः ।

[1]सौमित्रिशरसंस्पर्शाद्रावणिः क्रोधमूर्च्छितः ।
[2]व्यसृजल्लक्ष्मणायाष्टौ शरानाशीविषोपमान् ॥ २० ॥

व्यसृजल्लक्ष्मणायाष्टौ इत्यत्र व्यसृजत् विशेषेण धनुषि सन्दधे ।

[3]एभिः सहायैः कस्मात्त्वं विषीदसि परन्तप ।
य इमे वज्रिणः सेनां जयेयुः समरुद्गणम् ॥ ७ ॥

एभिः सहायैः इत्यत्र एभिः सहायैः सहित इति योग्यपदाध्याहारः ।

॥ इति अशीत्यधिकद्विशततमोऽध्यायः ॥

## ॥ अथ द्व्यशीत्यधिकद्विशततमोऽध्यायः ॥

[4]हुत्वा शतसहस्रं स सावित्र्या राजसत्तम ।
षष्ठे षष्ठे तदा काले बभूव मितभोजनः ॥ ९ ॥

सावित्र्या राजसत्तम इत्यत्र सावित्र्या गायत्रीमन्त्रेण ।

---

१. कुं. २९० अध्यायः ।
२. $T_1$,$G_{1.2}$,M ; BORI पृ. ९४९; 'असृ-' इति कुं पाठः ।
३. कुं. २९३ अध्यायः ।
४. कुं. २९४ अध्यायः ।

**ततः सुमनसः शेषाः प्रतिगृह्य महात्मनः ।**
**पितुः समीपमगमद्देवी श्रीरिव रूपिणी ॥ ३० ॥**

**ततः सुमनसः शेषा** इत्यत्र **शेषाः** देवपूजाशेषभूताः **सुमनसः** पुष्पाणि ।

**अप्रदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः ।**
**मृते पितरि पुत्रश्च वाच्यो मातुररक्षिता ॥ ३६ ॥**

**अप्रदाता पिता वाच्य** इत्यत्र **वाच्यः** निन्द्यः । पितुः अनु अनन्तरं अङ्गीकृतभार्यायामुदासीनः ।

[1] **विनष्टचक्षुषस्तस्य बालपुत्रस्य धीमतः ।**
[2] **सामन्तेन हृतं राज्यं छिद्रेऽस्मिन्पूर्ववैरिणा ॥ ८ ॥**

**सामन्तेन हृतम्** इत्यत्र **सामन्तः** प्रधानी । **छिद्रम्** अन्धत्वम् । पूर्ववैरं जन्मान्तरवैरं वा चक्षुषि सति गृहीतदण्डादिवैरं वा ।

**स बालवत्सया सार्धं भार्यया प्रस्थितो वनम् ।**
**महारण्यं गतश्चापि तपस्तेपे महाव्रतः ॥ ९ ॥**

**स बालवत्सया सार्धम्** इत्यत्र **सः** द्युमत्सेनः बालेव सा वत्सला बालवत्सला तया ।

**नारद उवाच –**

**साङ्कृते रन्तिदेवस्य स्वशक्त्या दानतः समः ।**
**ब्रह्मण्यः सत्यवादी च शिबिरौशीनरो यथा ॥ १७ ॥**

---

१. कुं. २९५ अध्यायः ।; २. **'सामीप्येन'** इति कुं पाठः । BORI पृ. ९६४.

**साङ्कृते रन्तिदेवस्य** इत्यत्र सम्यकृतिः सङ्कृतिः सङ्कृतिसम्बन्धी साङ्कृतिः तस्य ।

**सावित्र्युवाच–**

**[1]सकृदम्भो निपतति सकृत्कन्या प्रदीयते ।**
**सकृदाह ददानीति त्रीण्येतानि सकृत् सकृत्** ॥ २६ ॥

**सकृदम्भो निपतति** इत्यत्र **अम्भः** धारोदकम् ।

॥ इति **द्व्यशीत्यधिकद्विशततमोऽध्यायः** ॥

## ॥ अथ चतुरशीत्यधिकद्विशततमोऽध्यायः ॥

**मार्कण्डेय उवाच –**

**[2]अथ कन्याप्रदाने स तमेवार्थं विचिन्तयन् ।**
**समानिन्ये च तत्सर्वं भाण्डं वैवाहिकं नृपः** ॥ १ ॥

**भाण्डं वैवाहिकम्** इत्यत्र **भाण्डं** द्रव्यम् ।

**अश्वपतिरुवाच –**

**सुखं च दुःखं च भवाभवात्मकं**
**यथा विजानाति सुताम[3]मैव च ।**
**न मद्विधे युज्यति वाक्यमीदृशं**
**विनिश्चयेनाधिगतोऽस्मि ते नृपः** ॥ १० ॥

---

१. **'सकृदंशो'** इति कुं. पाठः ।
२. कुं. २९६ **अध्यायः** ।
३. $K_{1.2}$ ; BORI पृ. ९६८; **'-हमेव'** इति कुं पाठः ।

**यथा विजानाति सुता ममैव** इत्यत्र **यथा** यथावत् । युज्यति युज्यते । ते समीपम् **अधिगतोऽस्मि** प्राप्तोऽस्मि ।

**अनुरूपो हि युक्तश्च त्वं ममाहं[१] च वै तव ।**
**स्नुषां प्रतीच्छ मे कन्यां भार्यां सत्यवतस्ततः ॥ १२ ॥**

**त्वं ममाहं च वै तव** इत्यत्र त्वं ममानुरूपोऽसि । अहं च तव अनुरूपोऽस्मि । तस्मादयं संयोगोऽप्यनुरूपो हि । मे सुतां कन्यां सत्यवतस्तव पुत्रस्य भार्यां ते स्नुषां प्रतीच्छ ।

**[२]अतितीव्रोऽयमारम्भस्त्वयाऽऽरब्धो नृपात्मजे ।**
**तिसृणां वसतीनां हि स्थानं परमदुश्चरम् ॥ ६ ॥**

**तिसृणां वसतीनाम्** इत्यत्र तिसृणां **वसतीनां** उपवासानां **स्थानं** अनुष्ठानम् ।

**सावित्र्युवाच –**

**न कार्यस्तात सन्तापः पारयिष्याम्यहं व्रतम् ।**
**व्यवसायकृतं हीदं व्यवसायश्च कारणम् ॥ ७ ॥**

**व्यवसायश्च कारणम्** इत्यत्र **व्यवसायः** इदं करोमीति निश्चयः **कारणं** स्वकृतकर्मपूर्तिकारणम् ।

**एवमुक्त्वा द्युमत्सेनो विरराम महामनाः ।**
**तिष्ठन्ती साऽपि सावित्री काष्ठभूतेव लक्ष्यते ॥ ९ ॥**

---

१. G1.2.4,M; BORI पृ. ९६८; **'तवापि च'** इति कुं पाठः ।
२. कुं. २९७ अध्यायः ।

**श्वोभूते भर्तृमरणे सावित्र्या भरतर्षभ ।**
**दुःखान्वितायास्तिष्ठन्त्याः सा रात्रिर्व्यत्यवर्तत ॥ १० ॥**

**तिष्ठन्ती साऽपि सावित्री** इत्यत्र **तिष्ठन्ती** तपसि स्थिता । दुःखान्विता या सावित्री, तिष्ठन्त्यास्तस्याः सावित्र्याः व्यत्यवर्तत तद्दिनं गतमासीत् ।

**मार्कण्डेय उवाच –**

**व्रतं भिन्धीति वक्तुं त्वां नाऽस्मि शक्तः कथञ्चन ।**
**पारयस्वेति वचनं युक्तमस्मद्विधो वदेत् ॥ ८ ॥**

**मार्कण्डेय उवाच –**

**साऽभिवाद्याब्रवीच्छ्वश्रूं श्वशुरं च महाव्रता ।**
**अयं गच्छति मे भर्ता फलाहारो महद्वनम्[1] ॥ २४ ॥**

**इच्छेयमभ्यनुज्ञातुं[2] आर्यया श्वशुरेण ह ।**
**अनेन सह निर्गन्तुं न मेऽद्य विरहः क्षमः ॥ २५ ॥**

**फलाहारो महद्वनम्** इत्यत्र फलस्य आहारः आहरणं यस्य स तथोक्तः । **अनुज्ञातुम्** अनुज्ञामादातुम् ।

**द्युमत्सेन उवाच –**

**यदा प्रभृति सावित्री पित्रा दत्ता स्नुषा मम ।**
**[3]अनयाऽभ्यर्थनायुक्तमुक्तपूर्वं स्मराम्यहम् ॥ २८ ॥**

---

१. $G_1$; BORI पृ. ९७२; **'महावनम्'** इति कुं पाठः ।
२. BORI पृ. ९७२; **'अनुज्ञाता'** इति कुं पाठः ।
३. **'नानयाऽभ्यर्थनायुक्त'** इति कुं पाठः ।

**अनयाभ्यर्थनायुक्तम्** इत्यत्र **अनयेन** अनीत्या अभ्यर्थनया च युक्तम् ।

**निरीक्षमाणा भर्तारं सर्वावस्थमनिन्दिता ।**
**मृतमेव हि तं मेने काले मुनिवचः स्मरात्[१] ॥ ३३ ॥**

**काले मुनिवचस्स्मरात्** इत्यत्र **मुनिवचस्स्मरात्** नारदवचस्स्मरणात् ।

॥ इति चतुरशीत्यधिकद्विशततमोऽध्यायः ॥

## ॥ अथ पञ्चाशीत्यधिकद्विशततमोऽध्यायः ॥

**मार्कण्डेय उवाच –**

**[२]अथ भार्यासहायः स फलान्यादाय वीर्यवान् ।**
**कठिनं पूरयामास ततः काष्ठान्यपाटयत् ॥ १ ॥**

**कठिनं पूरयामास** इत्यत्र **कठिनं** परशुं **पूरयामास** वृक्षान्तः प्रवेशयामास ।

**तस्य पाटयतः काष्ठं स्वेदो वै समजायत ।**
**व्यायामेन च तेनास्य जज्ञे शिरसि वेदना ॥ २ ॥**

**व्यायामेन** बहुदूरगमनेन **तेन** वृक्षच्छेदेन च ॥

**ततः सत्यवतः कायात्पाशबद्धं वशंगतम् ।**
**अङ्गुष्ठमात्रं पुरुषं [३]निश्चकाम यमो बलात् ॥ १७ ॥**

---

१. **'स्मरन्'** इति कुं पाठः ।
२. कुं. २९८ अध्यायः ।
३. **'निश्चकर्ष'** इति कुं पाठः ।

**निश्चक्राम यमो बलात्** इत्यत्र अन्तर्णीतो णिच्, निष्क्रामयामासेत्यर्थः । तत्वाभिमानितया स्वस्यापि बहिर्निर्गमनात् निश्चक्रामेति भावः ।

**यम उवाच –**

**निवर्त गच्छ सावित्रि कुरुष्वास्यौर्ध्वदेहिकम् ।**
**कृतं भर्तुस्त्वयाऽनृण्यं यावद्गम्यं गतं त्वया ॥ २१ ॥**

**यावद्गम्यं गतम्** इत्यत्र **गम्यं** गमनयोग्यं स्थानं यावत्, तावत् **गतम्** आगतम् । अतः परमाकाशमार्गे गन्तुं न शक्यत इति भावः ।

**प्राहुः [१] सप्तपदं मित्रं बुधास्तत्त्वार्थदर्शिनः ।**
**मित्रतां च पुरस्कृत्य किञ्चिद्वक्ष्यामि तच्छृणु ॥ २४ ॥**

**प्राहुः सप्तपदं मित्रम्** इत्यत्र अनुयात्रारूपं सप्तपदं वा, अभ्युत्थानरूपं सप्तपदं वा ।

**नानात्मव [२] न्तं च वने चरन्ति धर्मं च वासं च परिश्रमं च ।**
**विज्ञानतो धर्ममुदाहरन्ति तस्मात्सन्तो धर्ममाहुः प्रधानम् ॥२५॥**

**नानात्मवन्तं च** इत्यत्र वने **नानात्मवन्तं** नानाप्रयत्नवन्तं नियमं च वासं च परिश्रमं च ये चरन्ति, ते सन्तः विजानतः पुरुषस्य धर्ममेव सहायमुदाहरन्ति ।

* * *

१. BORI पृ. ९७५; **'साप्तपदं मित्रं'** इति कुं पाठः ।
२. $T_1$,M ; BORI पृ. ९७५; **'-न्तस्तु'** इति कुं पाठः ।

**एकस्य धर्मस्य[1] सतां मतेन**
**सर्वे स्म तं मार्गमनुप्रपन्नाः।**
**मा वै द्वितीयं मा तृतीयं च**
**वाञ्छे तस्मात्सन्तो धर्ममाहुः प्रधानम् ॥ २६ ॥**

**एकस्य धर्मस्य सतां मतेन** इत्यत्र **सतां मतेन** अनुमतेन **एकस्य** मुख्यस्य **धर्मस्य** मोक्षसाधननिवृत्तिरूपधर्मस्य **तं** श्रुत्यादौ प्रसिद्धं मार्गं सर्वे अनुप्रपन्नाः स्म वै । **द्वितीयं** निवृत्तिरूपधर्ममार्गात् द्वितीयं प्रवृत्तिरूपधर्ममार्गं, **तृतीयं** अर्थमार्गं च प्रपन्ना मा स्म । चतुर्थं काममार्गं च प्रपन्ना मा स्म वै । तस्मात्कारणात् सन्तः **धर्मं** निवृत्तिरूपधर्मं प्रधानमाहुः ।

**सावित्र्युवाच –**

**श्रमः कुतो भर्तृसमीपतो हि मे**
**यतो हि भर्ता मम सा गतिर्ध्रुवा ।**
**यतः पतिं नेष्यसि तत्र मे गतिः**
**सुरेश भूयश्च वचो निबोध मे ॥ ३० ॥**

**सा गतिः** परलोकगतिः ।

**सावित्र्युवाच –**

**न तेऽपवर्गः सुकृताद्विना कृतस्तथा यथाऽन्येषु वरेषु मानद ।**
**वरं वृणे जीवतु सत्यवानयं यथा मृता ह्येवमहं पतिं विना ॥५३॥**

---

१. BORI पृ. ९७६; 'धर्मेण' इति कुं पाठः ।

**न तेऽपवर्गः सुकृतात्** इत्यत्र **सुकृतात्** पुण्याद्विना यथा अन्येषु वरेषु त्वया कृतः वरः मम न, तथा त्वया कृतः अपवर्गोऽपि मम न। **यथामृता ह्येवम्** इत्यत्र अहं पतिं विना, अव्ययानामनेकार्थत्वात् **यथा** यस्मात् मृता हि, एवं तस्मात् भर्तृविनाकृ(ता)तां श्रियमपि न कामये।

**वरातिसर्गः शतपुत्रता मम त्वयैव दत्तो ह्रियते च मे पतिः।**
**वरं वृणे जीवतु सत्यवानयं तवैव सत्यं वचनं भविष्यति ॥५५॥**

**विश्रान्तोऽसि महाभाग विनिद्रश्च नृपात्मज।**
**यदि सह्यं[1] समुत्तिष्ठ विगाढां पश्य शर्वरीम् ॥ ६८ ॥**

**वरातिसर्गः शतपुत्रता** इत्यत्र **शतपुत्रता** शतपुत्रताख्यः। **यदि सह्यं समुत्तिष्ठ** इत्यत्र **सह्यं** सहनयोग्यम्।

**मात्रा पित्रा च सुभृशं दुःखिताभ्यामहं पुरा।**
**उपालब्धश्च बहुशश्चिरेणागच्छसीति हि ॥ ८६ ॥**

**मात्रा पित्रा च सुभृशम्** इत्यत्र मात्रा पित्रा चेति द्वाभ्यां दुःखिताभ्यामिति योजना।

**त्वया हीनौ न जीवाव मुहूर्तमपि पुत्रक।**
**यावद्धरिष्यसे पुत्र तावन्नौ जीवितं ध्रुतम् ॥ ८९ ॥**

**यावद्धरिष्यसे पुत्र** इत्यत्र **धरिष्यसे** प्राणान् धारयिष्यसि।

**॥ इति पञ्चाशीत्यधिकद्विशततमोऽध्यायः ॥**

---

१. BORI पृ. ९८०; **'शक्यं'** इति कुं पाठः।

## ।। अथ सप्ताशीत्यधिकद्विशततमोऽध्यायः ।।

**आपस्तम्ब उवाच –**

**यथा [१]भवति शान्तायां दिशि वै मृगपक्षिणः ।**
**[२]पार्थिवी चैव वृद्धिस्ते तथा जीवति सत्यवान्** ।। १८ ।।

**पार्थिवी चैव वृद्धिस्त** इत्यत्र **पार्थिवी** पृथिवीसम्बन्धिनी अभिवृद्धिः राज्यप्राप्तिरित्यर्थः । यथा भवतीति पूर्वेणान्वयः ।

**सन्तापितः पिता माता वयं चैव नृपात्मज ।**
**[३]नाकस्मादेव जानीमस्तत्सर्वं वक्तुमर्हसि** ।। ३० ।।

**नाकस्मादेव जानीम** इत्यत्र **अकस्मात्** अकारणान्न ।

**चतुर्वर्षशतायुर्मे भर्ता लब्धश्च सत्यवान् ।**
**भर्तुर्हि जीवितार्थं तु मया चीर्णं त्विदं व्रतम्** ।। ४२ ।।

**चतुर्वर्षशतायुर्मे** इत्यत्र यः सत्यवान् तस्य मे भर्तुरिति सम्बन्धः ।

**।। इति सप्ताशीत्यधिकद्विशततमोऽध्यायः ।।**

## ।। अथ एकनवत्यधिकद्विशततमोऽध्यायः ।।

**जनमेजय उवाच –**

**[४]यत्तदा ह महद्ब्रह्मँल्लोमशो वाक्यमब्रवीत् ।**
**इन्द्रस्य वचनादेव पाण्डुपुत्रं युधिष्ठिरम्** ।। १ ।।

---

१. कुं. २९९ अध्यायः; **'यथा वदन्ति'** इति कुं पाठः ।
२. M ; BORI पृ. ९८५; **'पार्थिवीं चैव वृद्धिं ते'** इति कुं पाठः ।
३. $T_1$,$G_1$,M ; BORI पृ. ९८६; **'कस्मादिति न'** इति कुं पाठः ।
४. कुं. ३०१ अध्यायः । BORI पृ. ९९०; **'यत्तत्तदा'** इति कुं पाठः ।

**यत्तदा** इत्यत्र हेति पदच्छेदः ।

**[१]शरीरस्याविरोधेन प्राणिनां [२]प्राणभृत् परं ।**
**[३]इष्यन्ते यशसः प्राप्तिः कीर्तिश्च त्रिदिवे स्थिरा ॥ २ ॥**

**प्राणिनां प्राणभृत्परम्** इत्यत्र यः प्राणभृत् तेन इष्यन्त इति सम्बन्धः ।

**यस्त्वं प्राणविरोधेन कीर्तिमिच्छसि शाश्वतीम् ।**
**सा ते प्राणान् समादाय गमिष्यति [४]शमक्षयम् ॥ ३ ॥**

**गमिष्यति शमक्षयम्** इत्यत्र **सा** कीर्तिः ते प्राणान् अक्षयं शं च आदाय गमिष्यति ।

**[५]जीवता [६]क्रियते कार्यं पिता माता सुतास्तथा ।**
**ये चान्ये बान्धवाः केचिल्लोकेऽस्मिन् पुरुषर्षभ ॥ ४ ॥**

**राजानश्च नरव्याघ्र [७]पुरुषेण निबोध तत् ।**
**कीर्तिश्च जीवतः साध्वी पुरुषस्य महद्युते ॥ ५ ॥**

**पुरुषेण निबोध तत्** इत्यत्र पुरुषेणेत्यस्य जीवतेति पूर्वपदेन सम्बन्धः ।

**भक्तिमन्तो हि मे रक्ष्या इत्येतेनापि हेतुना ।**
**भक्तोऽयं परया भक्त्या मामित्येव महाभुज ॥ ८ ॥**

---

१. कुं. ३०२ अध्यायः । ; २. **'प्राणभृद्वर'** इति कुं पाठः ।
३. **'इष्यते'** इति कुं पाठः ।; ४. **'न संशयः'** इति कुं पाठः ।
५. $K_{3.4}$,$D_C$,$D_{1-3}$; BORI पृ. ९९४; **'जीवतां'** इति कुं. पाठः ।
६. $K_3$; BORI पृ. ९९४; **'कुरुते'** इति कुं. पाठः ।
७. $KS_4$, $D_{1.3}$ ; BORI पृ. ९९४; **'पौरुषेण निबोध तत्'** इति कुं पाठः ।

**मामित्येव महाभुज** इत्यत्र मामुद्दिश्येति योग्यपदाध्याहारः ।

**शोभते कुण्डलाभ्यां च रुचिराभ्यां महाद्युते ।**
**विशाखयोर्मध्यगतः शशीव विमले दिवि ॥ १२ ॥**

**विशाखयोर्मध्यगत** इत्यत्र **विशाखयोः** विशाखानक्षत्रस्य द्वयोस्तारयोः ।

**॥ इति एकनवत्यधिकद्विशततमोऽध्यायः ॥**

## ॥ अथ द्विनवत्यधिकद्विशततमोऽध्यायः ॥

**कर्ण उवाच –**

**भगवन्तमहं[1] भक्तो यथा मां वेत्थ गोपते ।**
**तथा परमतिग्मांशो नान्यं[2] देवं कथञ्चन ॥ १ ॥**

**भगवन्तमहम्** इत्यत्र **नान्यं देवं कथञ्चन** इत्यत्र च उद्दिश्य इति योग्यपदाध्याहारः ।

**व्येतु सन्तापजं दुःखं तव भास्कर मानसम् ।**
**अर्जुनप्रतिमं चैव विजेष्यामि रणेऽर्जुनम् ॥ ८ ॥**

**अर्जुनप्रतिमं च** इत्यत्र कार्तवीर्यार्जुनप्रतिममित्यर्थः ।

**यथा दृष्टं यथातत्त्वं यथोक्तमुभयोर्निशि ।**
**तत्सर्वमानुपूर्व्येण शशंसास्मै वृषस्तदा ॥ २३ ॥**

---

१. कुं. ३०३ अध्यायः ।
२. BORI पृ. ९९५; **'नास्त्यदेयं कथञ्चन'** इति कुं पाठः ।

**शशंसास्मै वृपस्तदा** इत्यत्र सूर्यं प्रति कर्णेन प्रेषितः कर्णपुत्रः ।

॥ इति द्विनवत्यधिकद्विशततमोऽध्यायः ॥

## ॥ अथ चतुर्नवत्यधिकद्विशततमोऽध्यायः ॥

**प्राणानुपस्पृश्य तदा ह्याजुहाव दिवाकरम् ।[1]**
**आजगाम ततो राजंस्त्वरमाणो दिवाकरः ॥ ८ ॥**

**प्राणानुपस्पृश्य तदा** इत्यत्र **प्राणानुपस्पृश्य** प्राणायामं कृत्वा ।

**एते हि विबुधाः सर्वे पुरन्दरमुखा दिवि ।**
**त्वया प्रलब्धं पश्यन्ति स्मयन्त इव मां शुभे ॥ १९ ॥**

**त्वया प्रलब्धम्** इत्यत्र **प्रलब्धं** वञ्चितम् ।

॥ इति चतुर्नवत्यधिकद्विशततमोऽध्यायः ॥

## ॥ अथ पञ्चनवत्यधिकद्विशततमोऽध्यायः ॥

सूर्य उवाच –

**आदित्ये कुण्डले राज्ञि दत्तो मे मत्तकाशिनि ।[2]**
**तस्मै दास्यामि वामोरु वर्म चैवेदमुत्तमम् ॥ २१ ॥**

**आदित्ये कुण्डले राज्ञि** इत्यत्र **आदित्ये** सूर्यसम्बन्धिनी **मत्समे** मम कुण्डलसदृशे कुण्डले, मूलरूपस्थितकुण्डले इति यावत् ।

---

१. कुं. ३०७ अध्यायः ।
२. '**आदित्या**' इति कुं. पाठः । कुं. ३०८ अध्यायः ।

**वैशम्पायन उवाच –**

**[१] ततो गर्भः समभवत्पृथायाः पृथिवीपते ।**
**शुक्ले दशोत्तरे पक्षे तारापतिरिवाम्बरे ॥ १ ॥**

**शुक्ले दशोत्तरे पक्ष** इत्यत्र **दशोत्तरे** दशादिनोत्तरे शुक्ले पक्षे ।

**धन्यस्ते पुत्र जनको देवो भानुर्विभावसुः ।**
**यस्त्वां द्रक्ष्यति दिव्येन चक्षुषा वाहिनीगतम् ॥ १७ ॥**

**चक्षुषा वाहिनीगतम्** इत्यत्र **वाहिनी** प्रवाहिनी नदी ।

**॥ इति षण्णवत्यधिकद्विशततमोऽध्यायः ॥**

## ॥ अथ अष्टनवत्यधिकद्विशततमोऽध्यायः ॥

**[२] सा ददर्शाथ मञ्जूषामुह्यमानां यदृच्छया ।**
**[३] दत्तरक्षप्रतिसरामन्वालम्भनशोभनाम् ॥ ३ ॥**

**दत्तरक्षप्रतिसराम्** इत्यत्र **प्रति** प्रवाहाधोभागं प्रति सरतीति प्रति-सरा, रज्ज्वादिना दत्तरक्षा च सा प्रतिसरा च दत्तरक्षप्रतिसरा ।

**इदमत्यद्भुतं भीरु [४] जातो जातोऽस्मि भामिनि ।**
**[५] दिष्टवान् देवगर्भोऽयं मन्येऽस्माकमुपागतः ॥ १० ॥**

**जातो जातोऽस्मि भामिनि** इत्यत्र एतावत्कालमारभ्य जातोऽप्यहं इदानीं **दिष्टवान्** भाग्यवान् जातोऽस्मि । 'दैवं दिष्टं भागधेयम्' [६] इत्य-मरः ।

**॥ इति अष्टनवत्यधिकद्विशततमोऽध्यायः ॥**

---

१. कुं. ३०९ अध्यायः । ; २. कुं. ३१० अध्यायः ।
३. **'दत्तरक्षाप्रतिसरां'** इति कुं पाठः । ; ४. **'यतो'** इति कुं पाठः ।
५. **'दृष्ठवान्'** इति कुं पाठः । ६. अ.को. १-४-८

## ।। अथ एकोनत्रिंशततमोऽध्यायः ।।

**कर्ण उवाच –**

[१]**अवनिं प्रमदा गाश्च** [२]**निर्वापां बहुवार्षिकीम् ।**
**तत्ते विप्र प्रदास्यामि न तु वर्म सकुण्डलम्** ।। ६ ।।

**निर्वापां बहुवार्षिकीम्** इत्यत्र **निर्वापां** बीजावापरहितां **बहुवार्षिकीं** बहुवर्षमारभ्य फलन्तीं अवनिम् ।

**शक्र उवाच –**

**विदितोऽहं रवेः** [३]**पूर्वमायान् देवस्तवान्तिकम् ।**
**तेन ते सर्वमाख्यातमेवमेतन्न संशयः** ।। १८ ।।

**विदितोऽहं रवेः पूर्वमायान् देवस्तवान्तिकम्** इत्यत्र तव **अन्तिक-मायान्** आगच्छन् देवः अहं रवेः सकाशात्पूर्वमेव विदित इति योजना ।

**विद्यमानेषु शस्त्रेषु यद्यमोघामसंशये ।**
**प्रमत्तो मोक्ष्यसे चापि त्वय्येवैषा पतिष्यति** ।। ३४ ।।

**यद्यमोघामसंशय** इत्यत्र **असंशये** प्राणसंशयरहितकाले ।

[४]**कर्णिनालीकनाराचानुत्सृजन्तो महारथाः ।**
**नाविध्यन्पाण्डवास्तत्र पश्यन्तो मृगमन्तिकात्** ।। १७ ।।

---

१. कुं. ३११ अध्यायः । ; २. **'निर्वापं बहुवार्षिकम्'** इति कुं पाठः ।
३. **'पूर्वमायानेव तवान्तिकम्'** इति कुं पाठः ।
४. कुं. ३१२ अध्यायः ।

**कर्णिनालीकनाराचान्** इत्यत्र आकर्णान्तमाकृष्टाः कर्णिनः, 'नालीकं पद्मबाणयोः' इत्यभिधानात् **नालीकाः नाराचाश्च** शर-विशेषाः ।

**नास्मिन्कुले जातु ममज्ज धर्मो**
**न चालस्यादर्थलोपो बभूव ।**
**अनुत्तराः[1] सर्ववर्णेषु भूप**
**सम्प्राप्ताः स्मः संशयं किं नु राजन् ॥ २१ ॥**

**अनुत्तराः सर्ववर्णेषु** इत्यत्र न विद्यते उत्तरमुत्तमं येभ्यस्ते तथोक्ताः ।

॥ इति एकोनत्रिशततमोऽध्यायः ॥

## ॥ अथ त्रिशततमोऽध्यायः ॥

**युधिष्ठिर उवाच –**
**[2]नापदामस्ति मर्यादा न निमित्तं न कारणम् ।**
**धर्मस्तु विभजत्यर्थमुभयोः पुण्यपापयोः ॥ १ ॥**

**न निमित्तं न कारणम्** इत्यत्र दृष्टं निमित्तकारणं उपादानकारणं च । किन्त्वदृष्टमेव कारणमित्याह **धर्म** इति । अधर्मस्याप्युपलक्षणमेतत् ।

**भीम उवाच –**
**[3]प्रातिकाम्येन यत्कृष्णां सभायां प्रेष्यवत्तदा ।**
**न मया निहतस्तत्र तेन प्राप्ताः स्म संशयम् ॥ २ ॥**

---

१. BORI पृ. १०२०; **'सर्वभूतेषु'** इति कुं पाठः ।; २. कुं. ३१३ **अध्यायः** ।
३. $K_4$,$D_{n2}$; BORI पृ. १०२१; **'प्रतिकाम्यनयत्कृष्णाम्'** इति कुं. पाठः ।

**प्रातिकाम्येन यत्** इत्यत्र **यत्** यदा प्रेष्यवत् कृता ।

**यक्ष उवाच –**

**मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः ।**
**प्रश्नानुक्त्वा तु माद्रेय ततः पिब हरस्व च ॥ १२ ॥**

**मम पूर्वपरिग्रह** इत्यत्र **पूर्वं** पूर्वमारभ्य इदं जलं परिगृह्यत इति व्युत्पत्त्या मम **परिग्रहः** मदधीनम् । **प्रश्नानु माद्रेय** इत्यत्र प्रश्नानु प्रश्नानामुत्तरदानानन्तरम् ।

**किं [1] विद्या वै न ते पार्थ प्रश्नानुक्त्वा पयः पिब ।**
**अनुक्त्वा तु ततः प्रश्नान्पीत्वैव न भविष्यसि ॥ ३१ ॥**

**किं विद्या वै न त** इत्यत्र हे पार्थ तव विद्या न किम् ।

**॥ इति त्रिशततमोऽध्यायः ॥**

## ॥ अथ एकाधिकत्रिशततमोऽध्यायः ॥

**वैशम्पायन उवाच –**

**[2] स ददर्श हतान्भ्रातॄँल्लोकपालानिव च्युतान् ।**
**युगान्ते समनुप्राप्ते शक्रवैश्रवणोपमान् ॥ १ ॥**

**स ददर्श हतान् भ्रातॄन्** इत्यत्र **हतान्** मृतप्रायान् ।

**स्यात्तु दुर्योधनेनेदमुपांशु [3] विहितं कृतम् ।**
**गान्धारराजरचितं सततं जिह्मबुद्धिना ॥ २१ ॥**

---

१. **'विधानेन'** इति कुं. पाठः ।; २. **कुं. ३१४ अध्यायः ।**
३. BORI पृ. १०२६; **'परिकल्पितम्'** इति कुं पाठः ।

उपांशु **विहितं कृतम्** इत्यत्र विरुद्धं हितं **विहितम्** अहितमित्यर्थः ।

**अथवा पुरुषैर्गूढैः प्रयोगोऽयं दुरात्मनः ।**
**भवेदिति महाबुद्धिर्बहुधा समचिन्तयत्** ॥ २३ ॥

**प्रयोगोऽयं दुरात्मन** इत्यत्र **प्रयोगः** जले विषादिप्रयोगः ।

**तस्यासीन्न[१] विषेणेदमुदकं दूषितं यथा ।**
**मृतानामपि चैतेषां विकृतं नैव जायते ।**
**मुखवर्णाः प्रसन्ना मे भ्रातॄणामित्यचिन्तयत्** ॥ २७ ॥

**तस्यासीन्न विषेण** इत्यत्र **तस्य** दुर्योधनस्य विषेण दूषितं नेति चिन्तये । यतः मे भ्रातॄणां मुखवर्णाः **यथा** पूर्वं यथा तथा प्रसन्नाः ।

**एकैकशश्चौघबलानिमान् पुरुषसत्तमान् ।**
**कोऽन्यः प्रतिसमासेनकालन्तकयमादृते** ॥ २८ ॥

**कोऽन्यः प्रति समासेन** इत्यत्र **समासेन** सङ्कोचेन **प्रति** प्रतिगच्छेत् ।

**युधिष्ठिर उवाच –**

**रुद्राणां वा वसूनां वा मरुतानां[२] प्रधानधृक् ।**
**पृच्छामि को भवान्देवो नैतच्छकुनिना कृतम्** ॥ ३२ ॥

**मारुतानां प्रधानधृक्** इत्यत्र प्रधानं रूपं धारयतीति स तथोक्तः ।

* * *

---

१. BORI पृ. १०२६; **'कस्य किंनु'** इति कुं पाठः ।
२. K4; BORI पृ. १०२६; **'मरुतां वा प्रधानभाक्'** इति कुं पाठः ।

युधिष्ठिर उवाच –

न चाहं कामये यक्ष तव पूर्वपरिग्रहम् ।
कामं नैतत्प्रशंसन्ति सन्तो हि पुरुषाः सदा ।
यदात्मना स्वमात्मानं प्रशंसेत्पुरुषर्षभ ।
यथाप्रज्ञं तु ते प्रश्नान् प्रतिवक्ष्यामि पृच्छ माम् ॥ ४६ ॥

**कामं नैतत्** इत्यत्र एतत् स्वेनैव स्वस्य प्रशंसनम् ।

यक्ष उवाच –

किं स्विदादित्यमुन्नयति के चे[1]तश्चाभितश्चराः ।
कश्चैनमस्तं नयति कस्मिंश्च प्रतितिष्ठति ॥ ४७ ॥

**के चेतश्चाभितश्चरा** इत्यत्र सार्वविभक्तिकस्तसिरिति वचनात् इतः अस्य आदित्यस्य ।

युधिष्ठिर उवाच –

ब्रह्मादित्यमुन्नयति देवास्तस्याभितश्चराः ।
धर्मश्चास्तं नयति च सत्ये च प्रतितिष्ठति ॥ ४८ ॥

**बह्मा ह्यादित्यमुन्नयति** इत्यत्र **ब्रह्मा** सूर्योदयात्प्राक् प्रतिबन्धक-रक्षोवधाय गायत्र्यर्घ्यदातृब्राह्मणकुलम् । **धर्मः** अस्तमयात् प्राक् प्रति-बन्धकरक्षोवधाय गायत्र्यर्घ्यरूपधर्मः ।

यक्ष उवाच –

[2]किं ब्राह्मणानां देवत्वं कश्च धर्मः सतामिव ।
कश्चैषां मानुषो भावः किमेषामसतामिव ॥ ५१ ॥

---

१. **'च तस्या'** इति कुं पाठः । ; २. अत्र श्लोकक्रमव्यत्यासः व्याख्यानानुरुद्धः ।

**कश्च धर्मः सतामिव** इत्यत्र सतां ऋष्यादीनामिव ब्राह्मणानां को धर्म इति प्रश्नार्थः ।

**युधिष्ठिर उवाच –**

**इष्वस्त्रमेषां देवत्वं यज्ञ एषां सतामिव ।**
**भयं वै मानुषो भावः परित्यागोऽसतामिव ॥ ५४ ॥**

**परित्यागोऽसतामिव** इत्यत्र असतां परित्याग इव ब्राह्मणानामपि कश्चित्परित्यागोऽस्ति । सः क इति योजना । परित्यागोऽसतामिवे-त्युत्तरवाक्ये **असतां** दुर्जनानां परित्यागवत् **परित्यागः** स्वपुत्रमित्र-कलत्रादीनां परित्यजनम् । **परित्यागः** परितः श्लाघ्यस्त्याग इति त्रिरावृत्त्या योजना । अन्ते सन्न्यासाश्रम एव महांस्त्याग इति भावः ।

**यक्ष उवाच –**

**किं क्षत्रियाणां देवत्वं कश्च धर्मं सतामिव ।**
**कश्चैषां मानुषो भावः किमेषामसतामिव ॥ ५३ ॥**

**किमेषामसतामिव** इत्यत्र असतामिव एषां किं दूषणमिति प्रश्नार्थः ।

**युधिष्ठिर उवाच –**

**इज्यस्त्वमेषां देवत्वं यज्ञ एषां सतामिव ॥ ५४ ॥**

**इज्यस्त्वमेषाम्** इत्यत्र **इज्यस्त्वं** सर्वजनपूज्यत्वम् । ज्यायानितिवत् इज्यानित्यपि वैदिकं पदम् । यज्ञः एषां धर्म इत्यर्थः ।

* * *

**युधिष्ठिर उवाच –**

**प्राणो वै यज्ञियं साम किमेकं यज्ञियं यजुः ।**
**[१]वागेषा वृश्चतेऽयज्ञं तां यज्ञो नातिवर्तते ॥ ५६ ॥**

**वागेषा वृश्चतेऽयज्ञम्** इत्यत्र **एषा वाक्** सामादिरूपा वाक् **अयज्ञं** यज्ञविरोधिनं **वृश्चते** छिनत्ति । **तां** सामयजुषोर्वाचम् । यस्य साम्नो गाने यस्य यजुषः पाठे च यज्ञविरोधिनः नश्यन्ति तत्साम यजुश्च यज्ञियमिति भावः ।

**यक्ष उवाच –**

**किंस्विदावपतां श्रेष्ठं किंस्विन्निवपतां वरम् ।**
**किंस्वित्प्रतिष्ठमानानां किंस्वित्प्रसवतां वरम् ॥ ५७ ॥**

**किंस्विदावपताम्** इत्यत्र **आवपतां** बीजावापं कुर्वतां कृषीवलानां वस्तु किम् । **निवपतां** बीजावापं कुर्वतां तेषामेव वरं स्वप्रयत्नेन ध्रियमाणं **वरं** श्रेष्ठं वस्तु ।

**यक्ष उवाच –**

**किंस्वित्सुप्तं न निमिषति किंस्विज्जातं [२]न चोपति ।**
**कस्यस्विद्हृदयं नास्ति कास्विद्वेगेन वर्धते ॥ ६३ ॥**

**किंस्विज्जातं न चोपति** इत्यत्र **उपति** उकारवाच्यात् पिपासादि-क्लेशात् पाति स्तन्यपानादिना आत्मानं रक्षतीति; **उपो** मानुषशिशुः, तद्वदाचरति **उपति** ।

---

१. **'ऋगेका वृणुते यज्ञं'** इति कुं पाठः ।
२. **'नचेङ्गते'** इति कुं पाठः ।

यक्ष उवाच –

किंस्विदेको विचरते जातः को जायते पुनः ।
किंस्विद्धिमस्य भैषज्यं किंस्विदावपनं महत् ॥ ६९ ॥

किंस्विदावपनं महत् इत्यत्र आवपनं बीजावापस्थानम् ।

यक्ष उवाच –

किंस्विदेकपदं धर्म्यं किंस्विद्धेकपदं यशः ।
किंस्विदेकपदं स्वर्ग्यं किंस्विदेकपदं सुखम् ॥ ७१ ॥

किंस्विदेकपदम् इत्यत्र पद्यते कीर्त्यत इति एकपदं मुख्यम् ।

युधिष्ठिर उवाच –

दाक्ष्यमेकपदं धर्म्यं दानमेकपदं यशः ।
सत्यमेकपदं स्वर्ग्यं शीलमेकपदं सुखम् ॥ ७२ ॥

दाक्ष्यं दाक्षिण्यं दयेत्यर्थः ॥

युधिष्ठिर उवाच –

धन्यानामुत्तमं दाक्ष्यं धनानामुत्तमं श्रुतम् ।
लाभानां श्रेय आरोग्यं सुखानां तुष्टिरुत्तमा ॥ ७६ ॥

सुखानां तुष्टिरुत्तमा इत्यत्र तुष्टिः अलम्बुद्धिः ।

यक्ष उवाच –

किंस्विद्धर्मपरं लोके कश्च धर्मः सदाफलः ।
किं नियम्य न शोचन्ति कैश्च सन्धिर्न जीर्यते ॥ ७७ ॥

**कश्च धर्मः सदाफल** इत्यत्र सदा फलं यस्य सः सदाफलः, कीर्तनादिना फलच्छेदरहित इत्यर्थः । त्रेताधर्मः त्रेतायुगे क्रियमाणो धर्मः सदाफलः । तस्मिन्युगे वर्तमानानां पुण्यश्लोकानां चक्रवर्तिनां श्लाघारहितत्वेन कृतधर्मक्षये कारणाभावादिति भावः । कृतयुगे धर्म-फलस्य निर्णीतत्वेन सन्देहमूलप्रश्नायोगात्, द्वापरकलियुगयोः संशय-विपरीतज्ञानाभ्यां प्रायशः धर्मवैफल्यस्य निश्चितत्वेन सन्देहमूल-प्रश्नायोगाच्च त्रेतायुगधर्मस्यायं प्रश्न इति धर्मराजस्य हृदयम् ।

**तुल्ये प्रियाप्रिये यस्य सुखदुःखे तथैव च ।**
**अतीतानागते चोभे स वै पुरुष उच्यते ॥ १२३ ॥**

**अतीतानागते चोभ** इत्यत्र **अतीतं** नष्टम्, **अनागतम्** अनागमन-मलाभः इत्युभे ।

**तथैनं मनुजाः प्राहुर्भीमसेनं प्रियं तव ।**
**अथ केनानुभावेन सापत्नं जीवमिच्छसि ॥ १२९ ॥**

**सापत्नं जीवमिच्छसि** इत्यत्र **सापत्नं** स्वमातृसपत्न्याः पुत्रं **जीवं** जीवतीति व्युत्पत्त्या जीवन्तम् ।

**आनृशंस्यं परो धर्मः परमार्थाच्च मे मतम् ।**
**आनृशंस्यं चिकीर्षामि नकुलो यक्ष जीवतु ॥ १३२ ॥**

**अनृशंस्यं पर** इत्यत्र **आनृशंस्यं** दया ।

**यथा कुन्ती तथा माद्री विशेषो नास्ति मे तयोः ।**
**मातृस्वं सममिच्छामि नकुलो यक्ष जीवतु ॥ १३५ ॥**

**मातृस्वं सममिच्छामि** इत्यत्र **मातृस्वं** मातुः पुत्ररूपद्रव्यम् ।

**॥ इति एकाधिकत्रिशततमोऽध्यायः ॥**

## ॥ अथ द्व्यधिकत्रिशततमोऽध्यायः ॥

**सुखप्रतिमबुद्धानां[१] इन्द्रियाण्युपलक्षये ।**
**स भवान् सुहृदोऽस्माकमथवा नः पिता भवान्** ॥ ५ ॥

**सुखप्रतिमबुद्धानाम्** इत्यत्र सुखस्य प्रतिमा उपमा यथा भवति तथा सुप्त्वा **बुद्धानां** प्रबुद्धानां मम भ्रातॄणां इन्द्रियाणि उपलक्षये । सुप्त्युत्थितानामेतेषां प्रसन्नचक्षुरादीन्द्रियदर्शने सुखकार्येव सुप्तिस्त्वया दत्ता, न तु दुःखकरो मोह इति भावः ।

**दिष्ट्या पञ्चसु रक्तोऽसि दिष्ट्या ते षट्[२] सदा जिताः ।**
**द्वे पूर्वे मध्यमे द्वे च द्वे चान्तेऽसाम्परायके[३]** ॥ ९ ॥

**दिष्ट्या पञ्चसु रक्तोऽसि दिष्ट्या ते षट् सदा जिताः । द्वे पूर्वे मध्यमे द्वे च द्वे चान्तेऽसाम्परायके** इत्यत्र **पञ्चसु** पञ्चमहायज्ञेषु वेदपञ्चरात्राख्यपञ्चविद्यासु वा **रक्तः** अनुरागवान् । **द्वे** कामक्रोधौ **पूर्वे** शैशवमारभ्य विद्यमाने; **द्वे** लोभमोहौ, लोभो धनलोभः मोहः पुत्रमित्र-कलत्रादिषु ममतारूपः 'ईश्वरोऽहमहं भोगी'त्यादिमिथ्याज्ञानरूपो वा; **असाम्परायके** मोक्षविरोधिनी **द्वे** मदो मत्सरश्चेति द्वे, **अन्ते** वार्धके पुत्रपौत्रधनधान्यादिसम्पत्त्या मदोऽपि प्रायः वार्धके भवतीति भावः । एवं षट् त्वया जिता इति पूर्वेणान्वयः ।

---

१. **'सुखं प्रति प्रबुद्धानां'** इति कुं पाठः ।; २. **'षट्पदीजिताः'** इति कुं पाठः ।
३. कुं. पाठानुसारेण अत्रैवारण्यकपर्व समाप्तम् ।

[1] तानब्रुवन्महात्मानः शिष्टाः प्राञ्जलयस्तदा ।

अभ्यनुज्ञापयिष्यन्तः स्वनिवासं धृतव्रताः ॥

**स्वनिवासं धृतव्रता** इत्यत्र **स्वनिवासं** स्वेषां अज्ञातनिवासम् ।

[2] अपि नस्तद्भवेद्भूयो यद्वयं ब्राह्मणैः सह ।

समस्वाः स्वेषु राष्ट्रेषु स्वराज्यस्था भवेमहि ॥

**अपि नस्तद्भवेत्** इत्यत्र **तत्** पुनर्द्वादशवर्षपर्यन्तं वने निवसनम् ।

[3] प्रच्छन्नमेव हरिणा धर्मज्ञो बलनिग्रहे ।

वज्रं प्रविश्य शक्रस्य यत्कृतं तच्च ते श्रुतम् ॥

**प्रच्छन्नमेव हरिणा** इत्यत्र **हरिणा** इन्द्रेण **बलनिग्रहे** परबल-निग्रहे । मुनिरूपाय 'अहं हरे तव पादैकमूलदासानुदासो भविताऽस्मि भूय' इत्यादिना हरिस्मरणं कुर्वते ।

[4] हुताशनेन यच्चापः प्रविश्य छन्नमासता

विबुधानां कृतं कर्म तच्च सर्वं श्रुतं त्वया ॥

**हुताशनेन यच्चाप** इत्यत्र **आपः** समुद्रोदकानि ॥

**इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां वनपर्वणि कविकुलतिलकभाविसमीरश्रीमद्वादिराजतीर्थपूज्यचरणविरचित-लक्षालङ्काराख्यटीकायां द्व्यधिकत्रिंशततमोऽध्यायः**

**॥ वनपर्वं समाप्तम् ॥**

---

१. BORI पृ. १०३७ ; २. BORI पृ. १०३७

३. BORI पृ. १०३८ ; ४. BORI पृ. १०३८

# ॥ अथ विराटपर्व ॥

## ॥ अथ प्रथमोऽध्यायः ॥

**गुप्तकाराश्च मत्ताश्च दाये स्वस्य जनस्य च ।**
**दुरात्मनां हि कस्तेषां विश्वासं गन्तुमर्हति ॥ १७ ॥**

**गुप्तकाराश्च मत्ताश्च** इत्यत्र **गुप्तकाराः** गूढतया परद्रोहं कुर्वन्तः ।

**प्रच्छन्नेनापि सर्वत्र हरिणा वृत्रनिग्रहे ।**
**वज्रं प्रविश्य शक्रस्य यत्कृतं तच्च ते श्रुतम् ॥ ३१ ॥**

**हरिणा वृत्रनिग्रह** इत्यत्र **हरिणा** नारायणेन ।

**॥ इति प्रथमोऽध्यायः ॥**

## ॥ अथ द्वितीयोऽध्यायः ॥

**[1]यानि यानीह कर्माणि तस्मै चकृमहे वयम् ।**
**कर्तुं यो यत्स तत्कर्म ब्रवीतु कुरुनन्दन ॥ १६ ॥**

**यानि यानीह कर्माणि तस्मै चकृमहे वयम्** इत्यत्र **तस्मै** विराटाय चकृमहे । [2]'एष्यत्तु निश्चितं यत्स्यादतीतत्वेन भण्यते' इति वचनात् लिट्प्रयोगः ।

---

१. S; BORI पृ. ६; **'यानि यानि च कर्माणि तस्य शक्ष्यामहे वयम्'** इति कुं. पाठः ।

२. भाग.ता. २५-३-३

**विराटं समनुप्राप्य राजानं मात्स्यनन्दनम् ।**
**सभास्तारो भविष्यामि विराटस्येति मे मतिः ॥ २२ ॥**

**सभास्तारो भविष्यामि** इत्यत्र 'सभासदः सभास्ताराः सभ्याः सामाजिकाश्च ते' [१] इत्यभिधानात् **सभास्तारः** सभ्यः सभायां पूज्य इति यावत् ।

**कङ्को नाम ब्रुवाणोऽहं मताक्षः साधुदेविता ।**
**[२] वैडूर्यकाञ्चनानक्षान् स्फाटिकान् राजतानपि ॥ २३ ॥**

**कृष्णाक्षान् लोहिताक्षांश्च [३] धारयिष्ये सुवेष्टितान् ।**
**अरिष्टान् राजगोलिङ्गान् दर्शनीयान् सुवर्चसः ॥ २४ ॥**

**वैडूर्यकाञ्चनान्** इत्यत्र **वैडूर्यकाञ्चनान्** वैडूर्यकाञ्चनखचितान्, **अक्षान्** अक्षक्रीडासाधनान्, **कृष्णाक्षान्** कृष्णवर्णानक्षक्रीडासाधनान्, **लोहिताक्षान्** लोहितवर्णानक्षक्रीडासाधनान् **सुवेष्टितान्** चीलान्तः-स्थापितान् **धारयिष्ये** विराटं धारयिष्ये तस्मै दास्यामीत्यर्थः ।

**॥ इति द्वितीयोऽध्यायः ॥**

## ॥ अथ तृतीयोऽध्यायः ॥

**[४] पौरोगवो ब्रुवाणोऽहं वललो नाम नामतः ।**
**उपस्थास्यामि राजानं विराटमिति रोचये ॥ ८ ॥**

---

१. अ.को. २-७-१६
२. T.G.; BORI पृ. ७; **'वैडूर्यान् काञ्चनान् दान्तान्'** इति कुं. पाठः ।
३. **'निवप्स्यामि मनोरमान्'** इति कुं. पाठः ।
४. BORI पृ. ८; **'सूदोऽहं वललो नाम्ना सूपकारो नराधिप'** इति कुं. पाठः ।

**पौरोगवो ब्रुवाण** इत्यत्र 'पौरोगवस्तदध्यक्षः सूपकारास्तु वल्लवा'[१] इत्यभिधानात् **पौरोगवः** सूपकाराणामध्यक्षः ।

**आरालिको गोविकर्ता सूपकर्ता नियोधकः ।**
**आसं युधिष्ठिरस्याहमिति वक्ष्यामि मानवान् ॥ १९ ॥**

**आरालिको गोविकर्ता** इत्यत्र 'आरालिका आन्धसिकाः सूदा औदनिका गुणा'[२] इत्यभिधानात् **आरालिकः** अन्नकर्ता, **गोविकर्ता** गवां विशेषेण क्षीरादिकर्ता, **सूपकर्ता** सूपादितत्साधनकर्ता ।

**[३]दक्षिणे चैव सव्ये च गवामिव हविष्कृतौ ।**
**तलाङ्गुलित्राभ्युचितौ नागराजकरोपमौ ॥ ३८ ॥**

**दक्षिणे चैव सव्ये च गवामिव हविष्कृतौ** इत्यत्र दक्षिणे सव्ये च **गवां** शराणां हवींषि शराख्यहवींषीत्यर्थः । **कृतौ** कुर्वाणाविव तिष्ठतः ।

**बाहू मे भरतश्रेष्ठ महालाञ्छनलक्षितौ ।**
**ज्याघातेन महान्तौ मे [४]संवर्तुं नृप दुष्करौ ॥ ४३ ॥**

**संवर्तुं नृप दुष्करौ** इत्यत्र संवरणमाच्छादनं कर्तुम् ।

**[५]अश्वान् परिभविष्यन्ति किशोराः वडवास्तथा ।**
**न दुष्टाश्च भविष्यन्ति पृष्ठे धुरि च मद्गताः ॥ ८ ॥**

---

१. अ.को. २-९-२७; २. अ.को. २-९-२८
३. **'दक्षिणश्चैव सव्यश्च बाहू अनडुहो यथा'** इति कुं. पाठः ।
४. BORI पृ. ११; **'गूहितुं नान्यथोत्सहे '** इति कुं. पाठः ।
५. **'न मां'** इति कुं. पाठः । कुं ४ अध्यायः ।

**अश्वान् परिभविष्यन्ति** इत्यत्र अश्वान् **वडवा** वाम्यः जातु कचिच्च परिभविष्यन्ति, तथा वडवाः शिक्षिताः करिष्यामीति भावः ।

**[१]तथा सज्वलितं किञ्चिद्ददृशुस्तद्विदो जनाः ।**
**[२]सुनीतमायी शूरश्च सर्वमन्त्रविशारदः ॥ १३ ॥**

**तथा सज्वलितम्** इत्यत्र **तद्विदो जनाः** नीतिशास्त्रविदो जनाः **तथा** तथाविधं सहदेवं किञ्चित्सज्वलितं ददृशुः, पूर्वोक्तप्रकारादपि नीत्यादिशास्त्रे किञ्चिदभ्यधिकबुद्धिप्रकाशसहितं ददृशुरिति योजना । **सुनीतमायी शूरश्च** इत्यत्र सुष्ठु नीताः नीतिमन्तः मायिनो यस्मात्स तथोक्तः ।

**[३]यथा न दुर्हृदः पापा भवन्ति सुखिनः पुनः ।**
**कुर्यास्तथा त्वं कल्याणि लक्षयेयुर्न ते जनाः ॥ ३७ ॥**

**यथा न दुर्हृदः पापा** इत्यत्र त्वां दृष्ट्वा दुर्हृदः पापाः पुनः सुखिनो यथा न भवन्ति तथा कुर्याः । भवती **[४]वर्णतः** क्षत्रियवर्णतः यथा वर्तते तथा कुर्या इति पूर्वेणान्वयः ।

॥ इति तृतीयोऽध्यायः ॥

* * *

---

१. **'न चास्य स्खलितम्'** इति कुं. पाठः ।
२. **'सुनीतिज्ञश्च शूरश्च'** इति कुं. पाठः ।
३. $D_{2m.3}$ ; BORI पृ. १७; **'यथा नो दुर्हृदः पापा'** इति कुं. पाठः ।
४. पदमिदं मूलस्थत्वेन मुद्रितकोशेषु नोपलभ्यते । -**'कुर्यास्तथा त्वं कल्याणि लक्षयेयुर्नवर्णतः'** इति वादिराजसम्मतपाठः इति भाति ।

## ।। अथ चतुर्थोऽध्यायः ।।

**हन्तेमां राजवसतिं राजपुत्रा ब्रवीमि वः ।[1]**
**यथा राजकुलं प्राप्य चरन्प्रोष्य न रिष्यति ।। ९ ।।**

**हन्तेमां राजवसतिम्** इत्यत्र **राजवसतिं** राज्ञो निकटे निवसन-प्रकारम् । **राजकुलं** राज्ञां निकटम् ।

**दुर्वसन्नेव कौरव्याजानता राजवेश्मनि ।[2]**
**अमानितेन मानार्ह गूढेन परिवत्सरम् ।। १० ।।**

**दुर्वसन्नेव कौरव्याजानता राजवेश्मनि** इत्यत्र राजवेश्मनि तेन राज्ञा अजानता सता **दुर्वसन्** दुःखेन वासं कुर्वन्नेव भवेत् ।

**दृष्टद्वारो लभेद्द्रष्टुं राजस्वेषु न विश्वसेत् ।[3]**
**न चानुशिष्याद्राजानमपृच्छन्तं कदाचन ।। ११ ।।**

**दृष्टद्वारो लभेत्** इत्यत्र **दृष्टद्वारः** द्वारे दृष्टः सन् **द्रष्टुं** राजानं द्रष्टुं **लभेत्** गच्छेत् ।

**धृष्टो द्वारं सदा पश्यन्न च राजसु विश्वसेत् ।**
**तदेवासनमन्विच्छेत् यत्र नाभिषजेत्परः[4] ।। २२ ।।**

**यत्र नाभिषजेत्पर** इत्यत्र यत्र परः **नाभिषजेत्** अभिषङ्गं सम्बन्धं न प्राप्नुयात्, ममेदमासनमिति कलहं न कुर्यादिति भावः ।

---

१. कुं ५ अध्यायः ।; २. **'दुर्वासमेव कौरव्य जातेन कुरुवेश्मनि'** इति कुं. पाठः
३. K,$B_1$, $D_n$, $D_{5.7.8.11.12}$; BORI पृ. १९; **'दिष्टद्वारो'** इति कुं. पाठः ।
४. BORI पृ. १९; **'यत्र नाभिलषेत्परः'** इति कुं. पाठः ।

**[१] यो नयानयपर्यङ्कं नासनं न रथं तथा ।**
**आरोहेत् सम्मतोऽस्मीति यो राजवसतिं वसेत् ॥ ३१ ॥**

**यो नयानयपर्यङ्कम्** इत्यत्र इतस्ततः नीयते, आनीयत इति नयानयः स चासौ पर्यङ्कश्च तम् ।

**यथैनं यत्र चासीनं [२] शङ्केरन् दृष्टचारिणः ।**
**न तत्रोपविशेज्जातु यो राजवसतिं वसेत् ॥ २३ ॥**

**शङ्केरन् दृष्टचारिण** इत्यत्र **दृष्टचारिणः** दृष्टे एतद्दर्शनविषये अन्तःपुरे चारिणः दासीदारादिजनाः ।

**न [३] चानुशिष्येद्राजानमपृच्छन्तं कदाचन ।**
**तूष्णीं त्वेनमुपासीत काले समभिपूजयेत् ॥ १२ ॥**

**न चानुशिष्येत्** इत्यत्र **अनुशिष्येत्** 'एवं कुरु' इति अनुशिक्षणं कुर्यात् ।

**नैषां दारेषु कुर्वीत मैत्रीं प्राज्ञः कथञ्चन ।**
**अन्तःपुरचरा ये च द्वेष्टि यानहिताश्च [४] ते ॥ ४४ ॥**

**द्वेष्टि यानहिताश्च त** इत्यत्र **यान्** अन्तःपुरचरेषु दासीजनेषु दारेषु च मैत्रीं कुर्वतः ।

---

१. **'नास्य युग्यं न पर्यङ्कम्'** इति कुं. पाठः ।
२. BORI पृ. १९; **'शङ्क्येदुष्टचारिणम्'** इति कुं. पाठः ।
३. BORI पृ. १९; **'चानुशिष्यात्'** इति कुं. पाठः ।
४. **'ये'** इति BORI पृ. १९

[१] **यस्य भर्ताऽनुयुञ्जीत तदेवाभ्यनुवर्तयेत् ।**
**प्रमादमवहेलां च कोपं च परिवर्जयेत् ॥**

**यस्य भर्ताऽनुयुञ्जीत** इत्यत्र **भर्ता** राजा **यस्य** पुरुषस्य ।

**समर्थनासु सर्वासु हितं च प्रियमेव च ।**
**संवर्णयेत्तदेवास्य प्रियादपि हितं वदेत् ॥**

**समर्थनासु सर्वासु** इत्यत्र **समर्थनासु** यत्किञ्चित् कार्यसमर्थन-समयेषु ।

[२] **न च सन्दर्शने किञ्चित्प्रवृद्धमभिसञ्जपेत् ।**
**अपि ह्येतद्दरिद्राणां व्यलीकस्थानमुत्तमम् ॥ ६७ ॥**

**न च सन्दर्शने किञ्चित्प्रवृद्धम्** इत्यत्र **किञ्चित्प्रवृद्धम्** अल्पबहुकालम् । **अपि ह्येतद्दरिद्राणाम्** इत्यत्र **एतत्** दर्शनानन्तरमपि आभिमुख्येन बहुकालावस्थानं दरिद्राणामपि **व्यलीकस्थानं** 'व्यलीकं त्वप्रियेऽनृतम्'[३] इत्यभिधानात् अप्रियस्थानम् किमु राज्ञामिति भावः ।

**॥ इति चतुर्थोऽध्यायः ॥**

## ॥ अथ पञ्चमोऽध्यायः ॥

**हर्षवस्तुषु चाप्यत्र वर्तमानेषु केषुचित् ।**
**नातिगाढं प्रहृष्येत तान्येवास्यानुपूजयेत् ॥ ४७ ॥**

---

१. **'यच्च'** इति BORI पृ २०

२. BORI पृ. २०; **'न च सन्दर्शने राज्ञां प्रबन्धमभिसञ्जपेत्, अपि चैतत् दरिद्राणां'** इति च कुं पाठः ।

३. अ.को. ३-३-१२

**नातिगाढं प्रहृष्येत** इत्यत्र **प्रहृष्येत** प्रहर्षेण अट्टहासं कुर्वीत ।

[1]**संविन्दति हि राजानम्** इत्यत्र **राजानं** राजानमेव **विन्दति** सेवते ।

**नैषां कर्मसु संयुक्तो धनं [2]किञ्चिदपि स्पृशेत् ।**
**[3]प्राप्नोति हि हरन् द्रव्यं बन्धं वा वधमेव वा** ॥ ४१ ॥

**धनं किञ्चिदपि स्पृशेत्** इत्यत्र **धनं** राजधनं वियोगरूपधनं वा । धृतं कट्टलिकया कृतं द्रव्यं धनं न भवतीति नधनं अन्नपानादिरूपं **प्राप्नोति** राजकरादेव प्राप्नोति ।

तदेव विवेचयति – **यानम्** इत्यादिना ।

**यानं वस्त्रमलङ्कारं यच्चान्यत् सम्प्रयच्छति ।**
**[4]तदेव धारयेन्नित्यम् एवं प्रियतरो भवेत् ॥**
**[5]उषित्वा द्वादशसमा वने परपुरञ्जयाः ।**
**लुब्धान् ब्रुवाणा मात्स्यस्य विषयं प्राविशंस्तदा** ॥ १२ ॥

**लुब्धान् ब्रुवाणा** इत्यत्र **लुब्धान्** मृगयून् **ब्रुवाणाः** स्वान् ब्रुवाणाः ।

**वैशम्पायन उवाच –**

**तामादायार्जुनस्तूर्णं [6]शार्दूलः पृषतीमिव ।**
**सम्प्राप्य नगराभ्याशमवतारयदर्जुनः ॥**

---

१. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
२. T, $G_{1,3}$; BORI पृ.२३; **'किञ्चिदुपस्पृशेत्'** इति कुं. पाठः ।
३. **'प्राप्नुयाददानो वा'** इति कुं. पाठः । ; ४. BORI पृ. २३
५. कुं ६ अध्यायः । ; ६. **'द्रौपदीं गजराडिव'** ; BORI पृ.२८

**शार्दूलः पृषतीमिव** इत्यत्र 'गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः'[१] इत्यमरः । **पृषती** मृगी ।

॥ इति पञ्चमोऽध्यायः ॥

## ॥ अथ षष्ठोऽध्यायः ॥

**[२]धनुर्भिः पुरुषं कृत्वा चर्मकोशास्थिसंवृतम् ।**
**[३]उद्बन्धमिव कृष्णं च [४]धनूंष्यावह संवृतम् ॥ १३ ॥**

**उद्बन्धमिव कृष्णं च** इत्यत्र **उद्बन्धम्** उत्कृष्टबन्धनसहितं शवमिव स्थितं **कृष्णं** कृष्णवर्णं **संवृतम्** आच्छन्नं यथा भवति तथा धनूंषि **आवह** अन्तः प्रापय ।

**वैशम्पायन उवाच –**

**[५]सह धर्मेण धर्मात्मा तदा घोरतरे वने ।**
**अरणीपर्वणः काले वरदत्तः परन्तपः ॥**

**सह धर्मेण धर्मात्मा** इत्यत्र भ्रातृभिः सह स्थितो यो धर्मात्मा धर्मराजः तं **विवित्सता** वेत्तुमिच्छता **धर्मेण** यमेन । अन्यत् स्पष्टम् ।

**इदं गोमृगमभ्याशे गतसत्वमचेतनम् ।**
**एतदुत्कृत्य वै [६]हार्यं धनूंषि परिवेष्टयेत् ॥ ३९ ॥**

---

१. अ.को. २-५-१०; २. कुं ७ अध्यायः
३. '**उद्बन्धमिव कृत्वा च**' इति कुं. पाठः ।
४. '**धनुर्ज्यापाशसंवृतम्**' इति कुं. पाठः; ५. S; '**स हि**'इति BORI पृ.२९९
६. '**वीर**' इति कुं. पाठः ।

**इदं गोमृगम्** इत्यत्र गौश्च मृगश्च गोमृगम् । **हार्यं** हर्तुं योग्यं चर्म ।

१
**तानि वीरयशोज्ञाननिराबाधानि सर्वशः ।**
**पुनः पुनः सुसंवेष्ट्य कृत्वा सुकृतमावरम्** ॥ ४१ ॥

**तानि वीरयशोज्ञाननिराबाधानि** इत्यत्र वीराणां पाण्डवानां यशसा ज्ञानेन च निराबाधानि **तानि** आयुधानि ।

**तच्चानीय धनुर्मध्ये निबबन्धुश्च पाण्डवाः ।**
**उपायकुशलाः सर्वे प्रणदन्तः समब्रुवन्** ॥ ४४ ॥

**तच्चानीय धनुर्मध्य** इत्यत्र **आनीय** धनुर्मध्ये प्रापयित्वा निक्षिप्येत्यर्थः।

**यानि चात्र विशालानि रूढमूलानि मन्यसे ।**
**तेषामुपरि बध्नीहि इदं विप्रकलेवरम्** ॥ ४७ ॥

**यानि चात्र विशालानि** इत्यत्र **यानि** लतामयदामानि । **तेषाम्** आयुधानाम् ।

२
**अथ च्छन्नानि नामानि चकारैषां युधिष्ठिरः ।**
**जयो जयेशो विजयो जयत्सेनो जयद्बलः** ॥ ६६ ॥

**अथ च्छन्नानि नामानि** इत्यत्र **अथ** धौम्यपरित्यागानन्तरं विराटनगरप्रवेशपर्यन्तम् ।

**॥ इति षष्ठोऽध्यायः ॥**

---

१. **'तानि वीरो यथा जानन्निराबाधानि'** इति कुं. पाठः ।
२. BORI पृ ३३; **'अतश्च्छन्नानि'** इति कुं. पाठः ।

## ।। अथ सप्तमोऽध्यायः ।।

**[१]निपातिता यक्षवरेण ते वने**
**[२]महाहवे यज्ञभृतेव दानवाः ।**
**मया च गत्वा वरदो हि तोषितो**
**विवक्षता प्रश्नसमुच्चयं गुरुः ।। ४ ।।**

**महाहवे यज्ञभृतेव दानवा** इत्यत्र **यज्ञभृता** नारायणेन महाहवे दानवा इव ।

**मृगेन्द्रराड्वारणयूथपोपमः प्रभात्ययं काञ्चनपर्वतो यथा ।**
**विराजते पावकसूर्यसन्निभं सचन्द्रनक्षत्र [३]इवांशुमानहः ।।१७।।**

**सचन्द्रनक्षत्र इवांशुमानह** इत्यत्र **अहः** अह्नि सचन्द्रनक्षत्रः **अंशुमान्** सूर्य इवेत्यभूतोपमा । मन्दस्मितं चन्द्रवत्, दन्तावली नक्षत्रवत्, स्वयं सूर्यवदित्यर्थः ।

**न दृश्यतेऽस्यानुचरो न कुञ्जरो**
**[४]न चोष्णरश्मिः किरणैः समुच्छ्रितः ।**
**न कुण्डलं नाङ्गदमस्य न स्रजो**
**विचित्रिताङ्गश्च रथश्चतुर्युजः ।। १८ ।।**

**न चोष्णरश्मिः किरणैः समुच्छ्रित** इत्यत्र अयमागच्छन् यतिः किरणैः समुच्छ्रितः, उष्णरश्मिश्च न । अस्य राजोचितानुचरादिश्च न ;

१. कुं ९ अध्यायः ।; २. **'महाहवे वज्रभृतेव दानवाः'** इति कुं. पाठः ।
३. **'इवांशुमान् ग्रहः'** इति कुं. पाठः ।
४. **'न चोष्णरश्म्यावरणं समुच्छ्रितम्'** इति कुं. पाठः ।

अतः महाराजोऽपि न। तथापि **विचित्रता**[1] तेजोरूपादिना अतिचित्रत्वं दृश्यत इति योजना।

**[2]समुद्यता साऽऽस सभा सपार्थिवा**
**सविप्रराजन्यविशा सशूद्रका।**
**सभागतं प्रेक्ष्य तपन्तमर्चिषां**
**विनिःसृतं राहुमुखाद्यथा रविम् ॥ २५ ॥**

**समुद्यता साऽऽस सभा** इत्यत्र सा सभा **समुद्यता** सन्नद्धा आसेति पदच्छेदः[3]।

**तमब्रवीत्प्राञ्जलिरेष पार्थिवो**
**विराटराजो मधुराक्षरं वचः।**
**प्राप्तः कुतस्त्वं भगवन्किमिच्छसि**
**[4]क्व वास्यसे किं करवाणि ते द्विज ॥ २७ ॥**

**क्व वास्यसे किं करवाणि** इत्यत्र **वास्यसे** केन वास्योऽसि। यतः परेणैव स्थाप्यत्वादेवमुक्तम्।

**वैशम्पायन उवाच–**

**एवं ब्रुवाणं तमुवाच पार्थिवं**
**युधिष्ठिरो धर्ममवेक्ष्य चासकृत्।**

---

१. पदमिदं मूलस्थेन मुद्रितकोशेषु नोपलभ्यते।
२. **'समुत्थिता सा हि सभा'** इति कुं. पाठः।
३. **अन्वयः** इति भाति।
४. **'क्व यास्यसे'** इति कुं. पाठः।

**सत्यं वचः को न्विह वक्तुमुत्सहेत्**
**यथाप्रतिज्ञं[1] च श्रृणुष्व पार्थिव ॥ ३१ ॥**

अहं संन्यासीत्युक्ते मिथ्यावादः स्यादित्यत आह– **यथाप्रतिज्ञं चेति** । **यथाप्रतिज्ञं** प्रतिज्ञामनतिक्रम्य । स्वभावतः यतित्वाभावेऽपि अज्ञातवासाय पञ्चानां पञ्चविधरूपस्य प्रतिज्ञातत्वात् प्रतिज्ञानुसारेण यतित्वमप्यस्तीति भावः ।

**श्रुतं च शीलं च कुलं च कर्म च**
**शृणुष्व मे जन्म च देशमेव च ।**
**गुरूपदेशान्नियमाच्च मे व्रतं**
**कुलक्रमार्थं पितृभिर्नियोजितम् ॥ ३२ ॥**

**गुरूपदेशान्नियमात्** इत्यत्र **गुरूपदेशात्** गुरोर्धौम्यस्योपदेशात्, **नियमात्** अस्मत्प्रतिज्ञारूपनियमाच्च **कुलक्रमार्थं** कुले ब्राह्मणकुले क्रमः क्रमणं पादविक्षेपः तदर्थं **पितृभिः** अस्मत्पितृभूतयमदेवेन, गुरुत्वा-द्बहुवचनम् । **नियोजितं** आज्ञप्तं व्रतमस्ति । तेन व्रतेन द्विजोऽस्मि । अत एव द्विजो न । स्वभावतः क्षत्रियत्वेऽप्यौपाधिकद्विजत्वमस्ति, अतो नासत्यमिति भावः ।

**ममैव[2] पञ्चेन्द्रियगात्रदर्शिनो**
**वदन्ति पञ्चैव पितॄन्यथा श्रुतिः ।**
**मनुष्यजातित्वमचिन्तयन्नहं**
**न चास्मि तुल्यः पितृभिः स्वभावतः ॥ ३४ ॥**

---

१. ‘तु’ इति कुं. पाठः । ; २. ‘ममेह’ इति कुं. पाठः ।

**ममैव पञ्चेन्द्रियगात्रदर्शिन** इत्यत्र पञ्चेन्द्रियसहितं गात्रं ये पश्यन्ति ते ज्ञानिनः **पञ्चैव** पञ्चमहाभूतान्येव पितॄन् वदन्ति । 'भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः' इत्याद्या स्मृतिः श्रुतिश्च यथा, तथेति पूर्वेणान्वयः । अस्य शरीरस्य पञ्चमहाभूतेभ्यो जातत्वात् पितृ-रेतसा उत्पत्तावपि उपचायकपञ्चमहाभूतानामेव देहासाधारणकारण-त्वान्मुख्यं पितृत्वमिति भावः । पाण्डुपुत्रत्वकथने अज्ञातवासभङ्गः, अन्यपुत्रत्वकथने मिथ्यावादः स्यादित्यत एवमुक्तम् । **मनुष्यजातित्व-मचिन्तयन्** इत्यत्र पञ्चभूतकार्ये मम देहे यन्मनुष्यजातित्वम्, औपाधिकत्वात्तदचिन्तयन् अहं **पितृभिः** पञ्चमहाभूतैः अतुल्यो[१] नास्मि । औपाधिकमानुषत्वस्योपेक्षायां पञ्चमहाभूतानां देहस्य च साम्यमेवेति भावः ।

**[२]कङ्कोऽस्मि नाम्ना विषयं तवागतो**
**व्रती द्विजातिः स्वकृतेन कर्मणा ।**
**द्यूतप्रसङ्गादधनोऽस्मि राजन्**
**सत्यप्रतिज्ञा व्रतिनश्चरामः** ॥ ३५ ॥

**कङ्कोऽस्मि नाम्ना** इत्यत्र स्वकृतेन **कर्मणा** सङ्केतेन । इदमपि सत्यरक्षणार्थम् । **द्यूतप्रसङ्गात्** इत्यत्र द्यूते पणं दत्त्वा दत्त्वा धनक्षयात् सन्यासी जात इति बाह्यो भावः । शकुनिना सह द्यूतप्रसङ्गात् राज्ये गते सति अज्ञातवासार्थं सन्यासी जात इत्यान्तरो भावः ।

**[३]युधिष्ठिरस्यास्मि सखाऽभवं पुरा**
**गृहप्रवेशी च शरीरमेव च ।**

---

१. तुल्यः इति भाति ।; २. $G_3$; BORI पृ.३५; **'कङ्को हि'** इति कुं. पाठः ।
३. S; BORI पृ.३५; **'युधिष्ठिरस्यापि'** इति कुं. पाठः ।

**गृहे च तस्योषितवानहं सुखं**
**राजाऽस्मि तस्य स्म[1] पुरे भवन् पुरा** ॥ ३६ ॥

**युधिष्ठिरस्यास्मि** इत्यत्र स्वस्य स्वात्मानं प्रति निरु(पा)पधिप्रेमास्पदत्वात् युधिष्ठिरस्य सखा अस्मीत्युक्तम् । तस्य शरीरमेव अहमस्मि स्वशरीरे यथा प्रीतिं करोति तथा मय्यपीति बाह्यो भावः । तच्छरीरमेव मच्छरीरमित्यान्तरो भावः । **राजाऽस्मि तस्य स्म पुरे भवन् पुरा** इत्यत्र पुरा तस्य पुरे विद्यमानः अहं **राजाऽस्मि** राजवत्सर्वजनपूज्यत्वात् राजाऽस्मीत्येको भावः । वस्तुतस्तु तस्य पुरे अहमेव राजेत्यान्तरो भावः ।

**सोऽहं पुरा तस्य वयस्समः सखा**
**चरामि सर्वां वसुधां सुदुःखितः ।**
**न तु प्रशान्तिं क्वचिदाप्तवानहं**
**व्रतोपदेशान्नियमेन भारिकः** ॥ ३८ ॥

**सोऽहं पुरा** इत्यत्र आवां समानवयस्काविति बाह्यो भावः । तदुत्पत्तिदिनमेव मदुत्पत्तिदिनम्, तन्मरणदिनमेव मन्मरणदिनम् । अतः स एवाहमित्यान्तरो भावः ।

**वैयाघ्रपाद्योऽस्मि नरेन्द्र गोत्रत-**
**स्तदेव सख्यं[2] मृगयामहे वयम् ।**
**कृतज्ञभावेन मयाऽनुकीर्तितं**
**युधिष्ठिरस्यात्मसमस्य चेष्टितम्** ॥ ३९ ॥

---

१. 'स्वपुरेऽभवं पुरा' इति कुं पाठः । ; २. 'सौख्यं' इति कुं. पाठः ।

**वैयाघ्रपाद्योऽस्मि** इत्यत्र व्याघ्रपदः गोत्रापत्यं पुमान् वैयाघ्रपाद्यः। 'वैयाघ्रपादगोत्राय' इति भीष्मस्य कथनात् सोमवंशप्रवर्तकः। व्याघ्रपादपि कश्चिदस्ति ऋषिरिति बाह्यो भावः। **तदेव सख्यं** पूर्वं राजसखत्वात् इदानीमपि **तदेव** राजसख्यमेव **मृगयामह** इत्यर्थः।

**इमं हि मोक्षाश्रममास्थितस्य मे**
**युधिष्ठिरस्तुल्यगुणो भवानपि।**
**[1]न मेऽद्य माता न पिता न बान्धवा**
**न मेऽस्ति रूपं न रतिर्न सन्ततिः ॥ ४० ॥**

**न मेऽद्य माता न पिता** इत्यत्र यतित्वादहं मात्रादिकं विहायैवागतोऽस्मि। अतस्ते सर्वे मम अद्य अविद्यमानप्राया इति भावः। **रूपं** लावण्यम्।

**अक्षान्निवप्तुं कुशलोऽस्म्यहं सदा**
**पराजितः शकुनिरुतानि चिन्तयन्।**
**मृगद्विजानां च रुतानि चिन्तयन्**
**निराश्रयः प्रव्रजितोऽस्मि भिक्षुकः ॥ ४३ ॥**

**पराजितः शकुनिरुतानि चिन्तयन्** इत्यत्र **शकुनेः** शकुन्तपक्षिणः **रुतानि** अशुभसूचकध्वनीन् चिन्तयन् **पराजितः** गृहस्थाश्रमात् पराजयं प्राप्तः भ्रंशितोऽस्मीत्येको भावः। सौबलस्य शकुनेः कुत्सितवाक्येन पराजितोऽस्मीति हृदयम्। **मृगद्विजानाम्** इत्यत्र **मृगाणां द्विजानां** शकुन्तेतरपक्षिणां रुतानीत्येको भावः। अरणीहरणसमये **मृगरूपस्य** यमस्य **द्विजानां** धौम्यादीनां च वाक्येन प्रव्रजितोऽस्मीत्यान्तरम्।

---

१. S; BORI पृ.३७; '**न मेऽस्ति माता**' इति कुं. पाठः।

**ददामि ते हन्त वरं यदीप्सितं**
**प्रशाधि मत्स्यान् यदि मन्यते भवान् ।**
**प्रिया हि धूर्ता मम चाक्षकोविदा-**
**स्त्वं चापि देवो मम राज्यमर्हसि ॥ ४५ ॥**

**प्रिया हि धूर्ता मम** इत्यत्र अक्षकोविदाः धूर्ताः प्रियाः ममापि सन्ति । तस्मादक्षक्रीडार्थं त्वां न वरये । किन्तु महालक्षणभरितस्त्वं राज्यमेव पालयेति भावः ।

**युधिष्ठिर उवाच–**

**अतोऽभिलाषः परमो न विद्यते**
**न मे जितं किञ्चन धारये धनम् ।**
**न भोजनं किञ्चन संस्पृशेयं**
**हविष्यभोजी निशि च क्षितीशयः ॥ ४९ ॥**

**न मे जितं किञ्चन** इत्यत्र मे जितं वैराग्येण वशीकृतं मनः ।

**एवं स लब्ध्वा नृपतिः समागमं**
**विराटराजेन नरर्षभस्तदा ।**
**उवास वीरः परमार्चितः सुखी**
**स[1] वाऽस्य कश्चिच्च न तं बुबोध तत् ॥ ५४ ॥**

**स वाऽस्य कश्चिच्च न तं बुबोध तत्** इत्यत्र **तत्** तस्माद्यति-वेषधारित्वात् **स वा** विराटो वा **अस्य कश्चित्** भृत्यजनो वा **तं न बुबोध**ेति योजना । **॥ इति सप्तमोऽध्यायः ॥**

१. ' न चास्य कश्चिच्चरितं बुबोध तत्' इति कुं. पाठः ।

## ॥ अथ अष्टमोऽध्यायः ॥

**वैशम्पायन उवाच –**

**[१] अथापरस्यां दिशि भीमदर्शनो**
**वृकोदरोऽदृश्यत सिंहविक्रमः ।**
**असिप्रवेके प्रतिमुच्य शाणिते**
**[२] खजं च दर्वीं च करेण धारयन् ॥ १ ॥**

**खजं च दर्वीं च करेण धारयन्** इत्यत्र **खजं** अन्नरसनिष्क्रमणाय खमवकाशं दातुं जातमिति व्युत्पत्त्या खजपदेन शमी कथ्यते । 'यस-मुचलु' इत्यपभ्रंशभाषा ।

**गम्भीररूपः परमेण तेजसा**
**रविर्यथा लोकमिमं प्रकाशयन् ।**
**स कृष्णवासा गिरिराजसारवान्**
**स मत्स्यराजं समुपेत्य तस्थिवान् ॥ ३ ॥**

**गिरिराजसारवान्** इत्यत्र **गिरिराजसारवान्** पर्वतराजवत्सत्त्ववान् ।

**सभागतो वारणयूथपोपमः**
**[३] तमिस्रया रात्रिमिवावभासयन् ।**
**सहस्रनेत्रावरजान्तकोपम-**
**स्त्रिलोकपालाधिपतिर्यथा हरिः ॥ ४ ॥**

---

१. कुं १० अध्यायः । ; २. BORI पृ. ३९; **'खजां च'** इति कुं. पाठः ।
३. **'तमिस्रहा'** इति कुं. पाठः ।

**तमिस्रया रात्रिमिवावभासयन्** इत्यत्र **तमिस्रया** अन्धकारेण । भीमदर्शने सति भयेन सभास्थितानां निमीलितचक्षुस्त्वात् तमिस्रया रात्रिमिवेत्युक्तम् । यद्वा तमि अन्धकारं स्रावयति गमयतीति **तमिस्रा** चन्द्रज्योत्स्ना । **सहस्रनेत्रावरजान्तकोपमः सहस्रनेत्रस्य** इन्द्रस्य **अवरजः** अनन्तरदिक्पालः **अन्तकः** यमः ।

**अथाब्रवीत् मात्स्यपतिः सभागतान्**
**भृशातुरोष्णं परिनिश्वसन्निव ।**
**कोऽयं युवा वारणराजसन्निभः**
**सभामभिप्रैति हि मामिकामिमाम्** ॥ ७ ॥

**भृशातुरोष्णं परिनिश्वसन्** इत्यत्र भृशातुरं च उष्णं च यथा भवति तथा भृशातुरोष्णम् ।

**ततो नृपं वाक्यमुवाच पाण्डवो**
**यथाऽनुपूर्व्यात् कृपयान्वितोत्तरम् ।**
**त्वां जीवितुं [१]शत्रुदमागतोऽहं**
**त्वमेव लोके परमो हि संश्रयः** ॥ १२ ॥

**त्वां जीवितुं शत्रुदमे**त्यत्र त्वामाश्रित्य जीवितुम् ।

**जानामि सूपांश्च रसांश्च संस्कृतान्**
**मांसान्यपूपांश्च पचामि शोभनान् ।**
**रागप्रकारांश्च बहून्फलाश्रयान्**
**महानसे मे न समोऽस्ति सूपकृत्** ॥ १३ ॥

१. 'शत्रुहन्नागतोऽहं' इति कुं. पाठः ।

**रागप्रकारांश्च बहून् फलाश्रयान्** इत्यत्र **रागं** स्नेहं प्रकर्षेण कुर्वन्तीति रागप्रकाराः तान् ।

**अनीककर्णाग्रधरो ध्वजी रथी**
**भवाद्य मे वारणवाहिनीपतिः ।**
**न नीचकर्मा भवितुं त्वमर्हसि**
**प्रशासितुं भूमिमिमां त्वमर्हसि** ॥ १६ ॥

**अनीककर्णाग्रधर** इत्यत्र अनीकस्य **कर्णाग्रधरः** कर्णधारः सेनानायक इत्यर्थः ।

**राज्ञा[१] नियुक्तोऽस्मि महानसे पुरा**
**बभूव सर्वप्रभुरन्नपानदः ।**
**अथापि मामुत्सृजसे महीपते**
**व्रजाम्यहं यावदितो यथागतम्** ॥ १८ ॥

**राज्ञा नियुक्त** इत्यत्र **राज्ञा** धर्मराजेन ।

**गजांश्च सिंहाश्च समेयिवानहं**
**सदा करिष्यामि तवानघ प्रियम् ।**
**न नीचकर्मा तव मादृशः प्रभो**
**[२]बलस्य मत्तः प्रबलो भवेदिति** ॥ २० ॥

**प्रबलो भवेत्** इत्यत्र मत्तः प्रबलोऽपि न भवेदिति नञावृत्त्या योजना ।

---

१. **'युधिष्ठिरस्यास्मि'** इति कुं. पाठः ।
२. **'बलस्य नेताऽप्यबलो'** इति कुं. पाठः ।

वैशम्पायन उवाच –

तमेवमुक्ते वचने नराधिपः
प्रत्यब्रवीन्मत्स्यपतिः प्रहृष्टवत् ।
[१]एवं हि मन्ये तव कर्म तत्समं
समुद्रनेमिं पृथिवीं त्वमर्हसि ॥ २२ ॥

एवं हि मन्ये तव कर्म तत् इत्यत्र तव कर्म तत् उपरि वक्ष्यमाणम् ।

॥ इति अष्टमोऽध्यायः ॥

## ॥ अथ नवमोऽध्यायः ॥

वैशम्पायन उवाच–

[२]अथापरोऽदृश्यत वर्णवान् युवा
स्त्रीवेषधारी समलङ्कृतो भृशम् ।
प्रवालचित्रे प्रविमुच्य कुण्डले
उभे च कम्बू [३]परिवर्तके तथा ॥ १ ॥

प्रवालचित्रे प्रविमुच्य कुण्डल इत्यत्र कुण्डले प्रविमुच्य त्यक्त्वा परिवर्तके परितो वर्तमाने वर्तुले इत्यर्थः । कम्बू शङ्खकृतताटङ्कौ धृत्वा ।

वेणीं प्रकुर्यां रुचिरे च कुण्डले
ग्रथे स्रजः प्रावरणानि संहरे ।

१. $M_4$; BORI पृ.४२; 'सोऽहं न मन्ये' इति कुं. पाठः ।
२. कुं ११ अध्यायः । ; ३. 'परिपातुके तथा' इति कुं. पाठः ।

स्नानं चरेयं विमृजे च दर्पणं
[1]विशेषकेष्वस्त्यपि कौशलं मम ॥ ९ ॥

**विशेषकेष्वस्त्यपि** इत्यत्र 'तमालपत्रतिलकचित्रकाणि विशेषकम्'[2] इत्यमरः । **विशेषकेषु** तिलकेषु ।

प्रगृह्य चापं त्वनुरूपमात्मनो
रक्षस्व देशं पुरमद्य सुस्थिरः ।
[3]पुत्रेण तुल्यं भव मे बृहन्नले
वृद्धोऽस्मि वित्तं प्रतिपादयामि ते ॥ १४ ॥

**पुत्रेण तुल्यं भव** इत्यत्र **तुल्यं** तुल्यं यथा भवति तथेति क्रिया-विशेषणम् ।

ततोऽर्जुनः क्लीबतरं वचोऽब्रवीत्
न मे धनुर्धारितमीदृशं विभो ।
न चापि दृष्टं धनुरीदृशं क्वचित्
न मादृशाः सन्ति धनुर्धरा भुवि ॥ १७ ॥

**न मादृशाः सन्ति धनुर्धरा** इत्यत्र मादृशाः स्त्रियः ।

नृत्यामि गायामि च वादयाम्यहं
प्रानर्तने कौशलनैपुणं मम ।

---

१. '**विशेषकेष्वेव च**' इति कुं. पाठः ।
२. अ.को. २-६-१२३
३. '**पुत्रेण तुल्यो**' इति कुं. पाठः ।

तद् उत्तरायाः [1]परिदत्स्व नर्तनं
भवामि देव्या नरदेव नर्तकी ॥ १८ ॥

उत्तरायाः परिदत्स्व नर्तनम् इत्यत्र नर्तनं कारयितुं परिदत्स्व दिश ।

प्रकामभक्ष्याभरणाम्बरा शुभा चरत्वियं सर्वजनेष्ववारिता ।
न दुष्कुलानामियमाकृतिर्भवेत् [2]न नृत्तभेदे भवतीदृशो जनः ॥२१

न नृत्तभेदे भवतीदृशो जन इत्यत्र नृत्तभेदे ईदृशो जनो न । इयमेव महानर्तकीति भावः ।

स शिक्षयामास च [3]गीतवादितं
सुतां विराटस्य धनञ्जयः प्रभुः ।
सखीश्च तस्यां परिचारिकास्तथा
प्रियश्च तस्याः स बभूव पाण्डवः ॥ २३ ॥

वादितं वादित्रम् ।

॥ इति नवमोऽध्यायः ॥

## ॥ अथ दशमोऽध्यायः ॥

वैशम्पायन उवाच –

[4]अथापरोऽदृश्यत पाण्डवः प्रभु-
र्विराटराजे [5]तुरगानवेक्षिता ।

---

१. $G_1$,$M_1$; BORI पृ.२४; 'परिधत्स्व नर्तने' इति कुं. पाठः ।
२. 'न वृत्तभेदी' इति कुं. पाठः ।
३. BORI पृ. ५३; 'गीतवादनं' इति कुं. पाठः ।; ४. कुं १२ अध्यायः ।
५. 'तुरगान्समीक्षति' इति कुं. पाठः ।

**तमापतन्तं ददृशुः पृथग्जनाः**

**प्रमुक्तमभ्रादिव चन्द्रमण्डलम् ॥ ९ ॥**

**तुरगानवेक्षिता** तुरगसादी ।

**विराट उवाच –**

**रथानि[1] यानानि धनानि वेतनं**

**न चाश्वसूतो भवितुं त्वमर्हसि ।**

**कुतोऽसि कस्यासि कथं त्वमागतो**

**ब्रवीहि शिल्पं तव विद्यते च यत् ॥ ७ ॥**

**रथानि यानानि** इत्यत्र ददानीति योग्यक्रियाध्याहारः ।

॥ इति दशमोऽध्यायः ॥

## ॥ अथ एकादशोऽध्यायः ॥

**यष्ट्या[2] प्रमाणान्वितया सुदर्शनं**

**दामानि पाशं च निबद्ध्य पृष्ठतः ।**

**मौर्वीं च तन्त्रीं महतीं सुसंहितां**

**बालैश्च[3] दामैर्बहुभिः समावृताम् ॥ ३ ॥**

**बालैश्च दामैः** इत्यत्र **बालैः** पुच्छाग्ररोममयैः **दामैः** दामभिः ।

**निशाम्य राजा सहदेवभाषितं**

**निरीक्ष्य माद्रीसुतमभ्यनन्दत् ।**

---

१. **'ददानि यानानि'** इति कुं. पाठः । ; २. कुं १३ अध्यायः ।

३. S; BORI पृ.३०६; **'बालैश्च तारैः'** इति कुं. पाठः ।

उवाच हृष्टो मुदितेन चेतसा

[१] अवल्लवत्वं त्वयि वीर लक्षये ॥ ६ ॥

**अवल्लवत्वम्** अगोपालताम् ।

॥ इति एकादशोऽध्यायः ॥

## ॥ अथ द्वादशोऽध्यायः ॥

[२] वेणीकेशान्समुत्क्षिप्य पीनवृत्तकुचा शुभा ।

[३] जुगूह दक्षिणे पार्श्वे मृदूनसितलोचना ॥ १ ॥

**जुगूह दक्षिणे पार्श्वे** इत्यत्र दक्षिणे पार्श्वे वेणीकेशान् जुगूह कबरीभारान्तः प्रवेश्य आच्छादितवती ।

**वैशम्पायन उवाच-**

तस्या रूपेण वेषेण श्लक्ष्णया च गिरा तथा ।

[४] न च श्रद्दधतां दासीमन्नहेतोरुपस्थिताम् ॥ ५ ॥

**न च श्रद्दधतां दासीम्** इत्यत्र **श्रद्दधताम्**इति लोटि आत्मनेपदे बहुवचनम् । न श्रद्दधिर इत्यर्थः ।

विराटस्य तु कैकेयी भार्या परमसम्मता ।

आलोकयन्ती ददृशे प्रासादाद् द्रुपदात्मजाम् ॥ ६ ॥

**कैकेयी** केकयविषयजाता सुदेष्णा ।

---

१. **'न वल्लवत्वं'** इति कुं. पाठः । ; २. कुं १४ अध्यायः ।

३. BORI पृ. ४२; **'जुगूहे दक्षिणे'** इति कुं. पाठः ।

४. **'न श्रद्दधानास्तां'** इति कुं. पाठः ।

**अथ सा छिन्नपट्टाभ्यां वल्कलाजिनसंवृताम् ।**[१]

**अथ सा छिन्नपट्टाभ्याम्** इत्यत्र प्राक् अच्छिन्नपट्टवस्त्राभ्यामिव वल्कलाजिनसंवृतेत्यर्थः ।

**सा प्रविश्य विराटस्य द्रौपद्यन्तःपुरं शुभा ।**
**[२]ह्रीनिषेधान्विता बाला कम्पमाना लतेव सा** ॥ १५ ॥

**ह्रीनिषेधान्विता बाला** इत्यत्र **ह्रिया** लज्जया इतस्ततो दर्शनस्य **निषेधेन** अन्विता ह्रीनिषेधान्विता ।

[३]**मृगरोहीमिवानीताम्** इत्यत्र **मृगरोहीं** मृगबालाम् ।

**सुलभामिव नागीनां मृगीणामिव किन्नरीम् ।**
**गङ्गामिव विशुद्धाङ्गीं शारदीमिव शर्वरीम्** ॥ २५ ॥

**मृगीणामिव किन्नरीम्** इत्यत्र मृगीणां मध्ये स्थितां किन्नरीमिव ।

**गूढगुल्फा समानोरूस्त्रिगम्भीरा षडुन्नता ।**[४]
**रक्ता पञ्चसु रक्तेपु हंसगद्गदभाषिणी** ॥ २९ ॥

**त्रिगम्भीरा** इत्यादेरयमर्थः – **त्रिगम्भीरा** नाभौ श्रोत्रयोश्चेति त्रिषु गम्भीरा । **षडुन्नता** कपोलयोः कुचयोः श्रोण्यां च अङ्गुल्यग्रे चेति षट्सु स्थानेषु उन्नता । **पञ्चसु** अधरे हस्ततलयोः पादतलयोश्चेति **रक्तेषु** रागयोग्येषु स्थानेषु रक्ता ।

---

१. BORI पृ. ३०५
२. T,G,$M_1$; BORI पृ.३०५; **'ह्रीनिषेवान्विता'** इति कुं. पाठः ।
३. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
४. BORI पृ ४४; **'स्निग्धा'** इति कुं. पाठः ।

**सुकेशी सुस्वरा श्यामा पीनश्रोणीपयोधरा ।**
**अरालपक्ष्मनयना बिम्बोष्ठी तनुमध्यमा ॥ ३० ॥**

**अरालपक्ष्मनयना** इत्यत्र 'अरालं वृजिनं जिह्मम्' इत्यभिधानात् **अराले** जिह्मे **पक्ष्मणी नयने** च यस्याः सा ।

**कम्बुग्रीवा गूढसिरा पूर्णचन्द्रनिभानना ।**
**दानवी किन्नरी वा त्वं गन्धर्वी वनदेवता ॥ ३१ ॥**

**गूढसिरा** इत्यत्र 'नाडी तु धमनिः सिरा' [१] इत्यमरः । **गूढसिरा** गूढ-नाडीनाला ।

**योऽस्माकं तु हरेद्द्रव्यं देशं वसनमेव वा ।**
**न क्रोद्धव्यं किलास्माभिरस्मद्गुरुरमर्षणः ॥ ४७ ॥**

**अस्मद्गुरुरमर्षण** इत्यत्र **अमर्षणः** मारको न भवतीत्यमर्षणः शान्त इत्यर्थः ।

**भर्तृशोकपरीताङ्गी [२] भर्तुश्च ब्रह्मचारिणी ।**
**विचरामि महीं दुर्गां यत्र सायंनिवेशना ॥ ४९ ॥**

**भर्तुश्च ब्रह्मचारिणी** इत्यत्र भर्तुर्निमित्तात् ब्रह्मचारिणी । [३] भर्तुः सह स्थित्यभावादिति भावः ।

**वीरपत्नी यदा देवी चरमाणेषु भर्तृषु ।**
**साऽहं विवत्सा विधिना गन्धमादनपर्वतात् ॥ ५० ॥**

---

१. अ.को. २-६-६५; २. '**भर्तुसब्रह्मचारिणी**' इति कुं. पाठः ।
३. **भर्त्रा** इति भाति ।

**वीरपत्नी** द्रौपदी।

**वृक्षांश्चोपस्थितान् पश्य य इमे मम वेश्मनि।**
**विनमन्ते हि त्वां दृष्ट्वा पुमांसं कं न लोभयेः ॥ ५७ ॥**

**वृक्षांश्चोपस्थितान्** इत्यत्र उप प्रासादसमीपस्थोपवने **स्थितान्** वृक्षान्।

**पञ्चत्वमपि सम्प्राप्तं [१]यदि त्वं पुरुषं स्वजेः।**
**बाहुभ्यामनुरूपाभ्यां स जीवेदिति मे मतिः ॥ ६४ ॥**

**यदि त्वं पुरुषं स्वजेः** इत्यत्र **स्वजेः** आलिङ्गयसि।

**सुस्नाताऽलङ्कृता [२]च त्वं यमीक्षेथा हि मानवम्[३]।**
**ग्लानिर्न तस्य दुःखं वा न तन्द्रिर्न पराजयः ॥ ६१ ॥**

**सुस्नाताऽलङ्कृता च त्वम्** इत्यत्र **यं** भर्तृभूतं मानवम्।

**अध्यारोहेद्यथा वृक्षं [४]वधायारुह्य तिष्ठति।**
**राजवेश्मनि लेखाग्र्या [५]ननु स्यास्त्वं तथा मम ॥ ६६ ॥**

**अध्यारोहेद्यथा वृक्षं वधायारुह्य तिष्ठति** इत्यत्र वधाय स्वशत्रौ वृक्षमारुह्य तिष्ठति सति तमेव वृक्षं यथा आरोहेत् राजवेश्मनि स्थिता **लेखया** लावण्यलेखया अग्र्या त्वं मम तथा स्याः ननु।

---

१. $T_2$,$M_{2-5}$; BORI पृ.४६; **'यं च त्वं परिपस्वजेः'** इति कुं पाठः।
२. S; BORI पृ.४६; **'हि'** इति कुं. पाठः।
३. **'मानुषम्'** इति कुं. पाठः।
४. **'यथा वाऽऽरुह्य तक्षति'** इति कुं. पाठः।
५. $M_4$; BORI पृ.५८; **'वामोरु'** इति कुं. पाठः।

[1] **सुतेषु च विसत्त्वम्** इत्यत्र मे सुतादिषु **विसत्त्वं** विशेषेण सत्वमस्ति। तत् सुतादीनां सत्त्वात्कारणात् विश्वमपि ईदृशं स्प्रष्टुमशक्तम्।

**न तस्य त्रिदशा देवा नासुरा न च पन्नगाः।**
**तेभ्यो गन्धर्वराजेभ्यस्त्राणं कुर्युरसंशयम् ॥ ७३ ॥**
[2] **या मे न दद्यादुच्छिष्टं न च पादौ प्रधावयेत्।**
**प्रियेरंस्तेन वासेन गन्धर्वाः पतयो मम ॥ ७९ ॥**

दासीभावेन स्वस्या अपि कदाचिदुच्छिष्टं दद्यात्, स्वकरेण पादप्रक्षालनं वा कारयेदिति शङ्कया आह **या मे न दद्यादुच्छिष्टम्** इत्यादि। प्रियैः प्रियोक्तिभिः रत्नेन वस्त्रैर्वा दत्तैरपि या मे उच्छिष्टं न दद्यादित्यादिपादत्रयस्य योजना। मम पतयो गन्धर्वाः तस्यास्त्राणं कुर्युरिति पूर्वक्रियाध्याहारेण योजना।

**एवमाचारसंपन्ना एवं देवपरायणा।**
[3] **वाक् च त्वमसि भूतानां सावित्रीव द्विजन्मनाम् ॥ ८० ॥**

**वाक् च त्वमसि भूतानाम्** इत्यत्र वक्तुं स्तोतुं योग्या **वाक्**।

**॥ इति द्वादशोऽध्यायः ॥**

## ॥ अथ त्रयोदशोऽध्यायः ॥

[4] **भीमसेनोऽपि मांसानि भक्ष्याणि विविधानि च।**
**अतिसृष्टानि मत्स्येन विक्रीणन्निव भ्रातृषु ॥ ६ ॥**

---

१. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते।
२. **'यः'** इति कुं. पाठः। ; ३. **'रक्ष्या त्वमसि भूतानां'** इति कुं. पाठः।
४. कुं १९ अध्यायः।

**अतिसृष्टानि मत्स्येन** इत्यत्र **अतिसृष्टानि** दत्तानि **विक्रीणन्निव** विक्रयं कुर्वन्निव । तूष्णीं दाने अन्योन्यसम्बन्धं ज्ञास्यतीति भीत्या विक्रयव्याजेन प्रयच्छतीति भावः ।

**सिंहस्कन्धकटिग्रीवाः स्ववदाता मनस्विनः ।**
**असकृल्लब्धलज्जास्ते**[१] **रङ्गे पार्थिवसन्निधौ ॥ १६ ॥**

**असकृल्लब्धलज्जा** इत्यत्र अन्योन्यकलहे पराभवेन लब्धलज्जाः ।

**अणुत्वमपरे**[२] **चैव वाञ्छन्ति प्रतिविह्वलाः ।**
**गां प्रवेष्टुमथेच्छन्ति खं गन्तुमिव चोत्थिताः ॥ १९ ॥**

**अणुत्वमपर** इत्यत्र **अणुत्वं** बालकत्वम् ।

**युधिष्ठिरकृतं ज्ञात्वा श्रिया तव विशाम्पते ।**
**महादेवस्य भक्त्या च तं मल्लं पातयाम्यहम् ॥ ३२ ॥**

**महादेवस्य भक्त्या च** इत्यत्र महांश्चासौ देवश्च **महादेवो** नारायणः । वैष्णवत्वगूहनार्थमिदं वचनम् ।

**नोद्यमानस्तदा भीमो दुःखेनेवाकरोन्मतिम् ।**
**न हि शक्नोमि विवृतं**[३] **प्रत्याख्यातुं नराधिपम् ॥ ३५ ॥**

**न हि शक्नोमि विवृतम्** इत्यत्र विशेषेण अभ्यासादिना वृतं **विवृतम्** ।

**ततः स पुरुषव्याघ्रः शार्दूलशिथिलं चरन् ।**
**प्रविवेश महारङ्गं विराटमभिहर्षयन् ॥ ३६ ॥**

१. **'असकृल्लब्धलक्षास्ते'** इति कुं. पाठः । ; २. **'व्यसुत्वमपरे'** इति कुं. पाठः ।
३. $M_{3,4}$; BORI पृ.२३; **'न हि शक्नोम्यशक्तोऽपि'** इति कुं. पाठः ।

**शार्दूलशिथिलं चरन्** इत्यत्र शार्दूलवत् शिथिलं यथा भवति तथा **चरन्** शनैः शनैश्चरन्नित्यर्थः ।

[१]
**बद्धकक्ष्योऽथ कौन्तेयः ततः संहर्षयञ्जनम् ।**
**ततस्तु वृत्रसङ्काशं भीमो मल्लं समाह्वयत् ॥ ३७ ॥**

**बद्धकक्ष्योऽथ कौन्तेय** इत्यत्र[२] 'दूष्या कक्ष्या वरत्रा स्यात्' इत्यभिधानात् **बद्धकक्ष्यः** बद्धोदरबन्धनः ।

**भ्रामयित्वा शतगुणं गतसत्वमचेतनम् ।**
[३]
**प्रत्यपिङ्क्षन्महाबाहुः मल्लं भुवि वृकोदरः ॥ ५२ ॥**

**प्रत्यपिङ्क्षन्महाबाहुः** इत्यत्र **प्रत्यपिङ्क्षत्** पिष्टं कृतवान् । 'पिषि पिष्टौ' इति धातोः लुङि रूपम् ।

॥ इति त्रयोदशोऽध्यायः ॥

## ॥ अथ चतुर्दशोऽध्यायः ॥

**त्वमेवमाचारपरीतदर्शना**
**नान्यस्त्रियं सम्परिचर्तुमर्हसि ।**
**किं राजवेश्मन्यसितायतेक्षणे**
**करोषि केशान् स्वयमेव भामिनी ॥**[४]

**नान्यस्त्रियं सम्परिचर्तुमर्हसि** इत्यत्र **परिचर्तुं** परिचरितुम् ।

---

१. S; BORI पृ.५८; **'बबन्ध कक्षां'** इति कुं. पाठः ।
२. अ.को. २-८-४२ ; ३. **'प्रत्यपिंषन्महाबाहुः'** इति कुं. पाठः ।
४. BORI पृ. ६२

**प्रभूतरत्नोपहितं सुभाजनं**
**परैहि चाद्यैव ममोत्तमं गृहम् ।**
**प्रासादमालाग्रविशालतोरणं**
**कुबेरपर्जन्यनिवेशनोपमम् ॥**[१]

**परैहि चाद्य** इत्यत्र **परा** उत्तमा, द्रौपद्या विशेषणम् । एहि ।

**अयं तु राजा परसैन्यवारणः**
**श्यालप्रियत्वान्मम चाद्य भामिनि ।**
**करिष्यते काममयं यथेष्टतो**
**ह्यनीककर्णाग्रधरोऽस्मि तस्य वै ॥**[२]

**श्यालप्रियत्वान्मम च** इत्यत्र [३]'श्यालाः स्युर्भ्रातरः पत्न्या' इत्यमरः श्यालः पत्नीभ्राता । 'सूतपुत्रावमन्यस' इति वक्ष्यमाणत्वात् सुदेष्णा-कीचकयोः क्षत्रस्त्रीसूतस्त्रीजातत्वेऽपि पित्रैक्यात् पत्नीभ्रातृत्वम् ।

**अप्राप्य तु त्वामहमद्य शोभने**
**श्रियं समृद्धामिव पापमाचरन् ।**
**व्रजेयमिन्द्रस्य निवेशनं शुभे**
**त्वया विसृष्टो ह्यपुनर्भवाङ्गतिम् ॥**[४]

**पापमाचरन्** इत्यत्र **पापं** गले रज्जुबन्धादिना आत्महत्याम् ।

**प्रियांश्च दारान् ससुतान् कुलं धनं**
**यशश्च कीर्तिं ह्यथवाऽपि जीवितम् ।**

---

१. BORI पृ. ६२ ; २. BORI पृ. ३१० ; ३.अ.को. २-६-३२
४. BORI पृ. ३१०

[१] त्यक्ष्यामि सर्वं सुकृतं तु यत्कृतं
प्रिये त्वदर्थं [२] तु हि जीवितं मम ॥[३]

**त्वदर्थं तु हि जीवितं मम** इत्यत्र त्वदर्थं त्यक्ष्यामि । मम जीवितं तु, त्वदर्थं हीति उभयत्राप्यावृत्त्या योजना ।

[४] अवारयन्तं बलशोकमुद्धतं समुद्रवेगोपममातुरं भृशम् ।
भजस्व मामद्य शुभेन चेतसा यथा न शुष्ये न पताम्यचेतनः ॥[५]

**अवारयन्तं** वारयितुमशक्तम् ।

॥ इति चतुर्दशोऽध्यायः ॥

## ॥ अथ पञ्चदशोऽध्यायः ॥

[६] ते त्वां निहन्युः कुपिताः साध्वलं मा व्यनीनशः ।
[७] अभव्यरूपैः पुरुषैः पन्थानं गन्तुमिच्छसि ॥ १७ ॥

**अभव्यरूपैः पुरुषैः** इत्यत्र तैः यः पन्थाः गतः तं पन्थानम् ।

जुह्वन् जपन् वा प्रपतन् गिरेस्तटे
हुताशनादित्यगतिं गतोऽपि वा ।
भार्याभिमत्तः पुरुषो महात्मा
न जातु मुच्येत कथञ्चनाहतः ॥[८]

---

१. 'त्यजामि' इति BORI पाठः । ; २. 'च जिजीविषाम्यहम्' इति S पाठः ।
३. BORI पृ. ३१०; ४. 'अपारयन्तं' इति S पाठः ।
५. BORI पृ. ३१०; ६. कुं १७ अध्यायः ।
७. S; BORI पृ.६३; 'अशक्यरूपं पुरुषैरध्वानं' इति कुं. पाठः ।
८. BORI पृ. ६४

**भार्याभिमत्तः पुरुष** इत्यत्र **भार्याभिमत्तः** परभार्याभिमत्तः **महात्मा** महात्माऽपि ।

**मा तारकाणामधिपं यथा शिशुः**
**न मां बलात्प्राप्स्यसि दुर्लभां सतीम् ।**
**दाराभिमर्शी पुरुषो महात्मनां**
**गत्वाऽपि देवान् शरणं न विन्दति ॥**[१]

**मा तारकाणाम्** इत्यत्र माशब्दस्य प्राप्स्यसीत्यनेन सम्बन्धः ।

**त्वं कालपाशं प्रतिमुच्य कण्ठे**
**प्रवेष्टुमिच्छस्युत दुष्प्रवेशनम् ।**
**हुताशनं प्रज्वलितं महावने**
**निदाघ मध्याह्न इवातुरस्स्वयम् ॥**[२]

**उत दुष्प्रवेशनम्** इत्यत्र दुःखकरं प्रवेशनं यस्य तदन्धं तमः ।

॥ इति पञ्चदशोऽध्यायः ॥

## ॥ अथ षोडशोऽध्यायः ॥

[३]**स प्रोवाच सुदुःखार्तो भगिनीं**[४] **निश्वसन्निव ।**
**अव्यक्तमृदुना**[५] **नाम्ना शुष्यमाणः पुनः पुनः ॥ ४ ॥**

**स प्रोवाच सुदुःखार्तो भगिनीं निश्वसन्निव । अव्यक्तमृदुना नाम्ना**

१. BORI पृ. ६४ ; २. BORI पृ. ६४; ३. कुं १८ अध्यायः ।
४. **'निश्वसन्मुहुः'** इति कुं. पाठः ।
५. **'साम्ना शुष्यता च'** इति कुं. पाठः ।

**शुष्यमाणः पुनः पुनः** इत्यत्र अव्यक्तमृदुना नाम्ना सुदेष्णां सम्बोध्य प्रोवाचेति सम्बन्धः ।

**मा गमिष्यसि वै कृच्छ्रां गतिं परमदुर्गमाम् ।**
**बलिनस्ते रुजं कुर्युः कुलस्य च धनस्य च ॥ १९ ॥**

**मा गमिष्यसि वै** इत्यत्र **मा** एतद्गोष्ठी तव माऽस्तु इति योजना ।

**वशमेष्यति सैरन्ध्री मन्मथेनाभिपीडिता ।**
**सा त्वं दृष्ट्वा ब्रूहि चैनां मम चेज्जीवितं प्रियम् ॥ २० ॥**

**सा त्वं दृष्ट्वा** इत्यत्र सा त्वं **जीवितं** मम जीवितं इच्छसि यदीच्छसि तर्हि **दृष्ट्वा** अवसरं दृष्ट्वा एनां मयि नयस्वेति योजना ।

**त्वत्कृते विनशिष्यन्ति भ्रातरः सुहृदश्च मे ।**
**किं नु शक्यं मया कर्तुं यत्त्वमेवमभीप्सितः[1] ॥ २३ ॥**

**यत्त्वमेवमभीप्सित** इत्यत्र **यत्** यस्मात्त्वम् **एवमभीप्सितः** एवम् अभीप्सितं यस्य स तथोक्तोऽसि ।

**एतत्तु मे दुःखतरं येनाहं भ्रातृसौहृदात् ।**
**[2]विदितार्था भविष्यामि तुष्टो भव कुलक्षये ॥ २७ ॥**

**विदितार्था भविष्यामि** इत्यत्र विदितः अर्थः मदुक्तवाक्यस्य अर्थः यया सा तथोक्ता ।

---

१. 'यत्त्वमेवमभिप्लुतः' इति कुं. पाठः ।
२. 'विदितार्था करिष्यामि' इति कुं. पाठः ।

**कृते चान्ने सुरायां च प्रेषयिष्यसि मे पुनः ।**
**तामहं प्रेषयिष्यामि मध्वन्नार्थं तवान्तिकम् ॥ २९ ॥**

**मध्वन्नार्थं तव** इत्यत्र **मधु** मद्यम् ।

**ततः सम्प्रेपितामेनां विजने निरवग्रहाम् ।**
**सान्त्वयेथा यथान्यायं यदि साम सहिष्यति ॥ ३० ॥**

**विजने निरवग्रहाम्** इत्यत्र अव अधःकृत्य **ग्रहः** ग्रहणं बलात्कारेण ग्रहः तद्रहितां **निरवग्रहाम्** ।

**सम्पाकायां[1] सुरायां तु कृते चान्ने सुसंस्कृते ।**
**कीचकः पुनरागम्य सुदेष्णां वाक्यमब्रवीत् ॥ ३६ ॥**

**सम्पाकायां सुरायाम्** इत्यत्र सम्यक् पाको यस्याः, **सम्पाका** ।

**स मामिह गतां दृष्ट्वा व्यवस्यति[2] निराकृतः ।**
**कथं नु वै तत्र गतां मर्षयेन्मामबान्धवाम् ॥ ४६ ॥**

**व्यवस्यति निराकृत** इत्यत्र **निराकृतः** मया निराकृतोऽपि **व्यवस्यति** बलाद्ग्रहीतुं निश्चयं करिष्यति ।

**भाजनं प्रददौ चास्यै सापिधानं[3] हिरण्मयम् ।**
**या सुरा[4] जातमन्था च तामानय सुरामिति ॥ ५३ ॥**

---

१. **'आनीतायाम् सुरायाम्'** इति कुं पाठः ।
२. **'व्यवस्यति निराकृतिम्'** इति कुं. पाठः ।
३. **'सपिधानम्'** इति कुं.पाठः ।
४. **'या सुजाता सुगन्धा'** इति कुं. पाठः ।

**सापिधानं हिरण्मयम्** इत्यत्र [१]'अपिधानतिरोधानपिधानाच्छादनानि च' इत्यमरः । अपिधानेन सहितं **सापिधानम्** । **या सुरा** इत्यत्र **जातमन्था** सारोद्धाराय जातमथना ।

**॥ इति षोडशोऽध्यायः ॥**

## ॥ अथ सप्तदशोऽध्यायः ॥

**[२]तदस्यास्तनुमध्यायाः सर्वं सूर्योऽवबुद्धवान् ।**
**अन्तर्हितं ततस्तस्या रक्षो रक्षार्थमादिशत् ॥ ४ ॥**

**अन्तर्हितं तत** इत्यत्र अन्तर्हितं रक्षः ।

**तां मृगीमिव वित्रस्तां दृष्ट्वा कृष्णां समागताम् ।**
**उत्पपातासनात्तूर्णं नावं लब्ध्वेव पारगः ॥ ७ ॥**

**नावं लब्ध्वेव पारग** इत्यत्र **पारगः** पारं गन्तुमिच्छन् ।

**वैशम्पायन उवाच –**

**स मूढः कीचकस्तत्र प्राप्तां राजीवलोचनाम् ।**
**अब्रवीद् द्रौपदीं दृष्ट्वा दुरात्मा [३]ह्यात्मसम्मतेः ॥ १४ ॥**

**दुरात्मा ह्यात्मसम्मतेः** इत्यत्र **आत्मसम्मतेः** तादर्थ्ये षष्ठी । आत्मसम्मत्यर्थम् ।

**नाहं शक्या त्वया स्प्रष्टुं श्वपचेनेव ब्राह्मणी ।**
**[४]मा गमिष्यसि दुर्बुद्धे गतिं दुर्गान्तरान्तराम् ॥ १६ ॥**

---

१. अ.को. १-३-१२ ; २. कुं १९ अध्यायः ।; ३. **'ह्यात्मसम्मतः'** कुं. पाठः
४. S; BORI पृ.६९; **'गन्तुमिच्छसि दुर्बुद्धे गतिं दुर्गतरान्तराम्'** इति कुं.पा

**मा गमिष्यसि दुर्बुद्धे** इत्यत्र **मा** इदं वचनं माऽस्तु । **दुर्गान्तरान्तरां** दुःखेन गन्तुं योग्यमन्धंतमः तस्य अन्तरन्तर्विद्यमानाम् ।

**यत्र गच्छन्ति बहवः परदाराभिमर्शकाः ।**
**नराः सम्भिन्नमर्यादाः कीटपुञ्जगुहाशयाः[1] ॥ १७ ॥**

**कीटपुञ्जगुहाशया** इत्यत्र कीटपुञ्जवत् वनगुहायां निलीनाः ।

**न युक्तं सूतपुत्रेण[2] कीचकेति च तेऽवदन् ।**
**किमियं वध्यते बाला कृपणा चाप्यबान्धवा ॥ २७ ॥**

**न युक्तं सूतपुत्रेण** इत्यत्र सूतपुत्रेण कृतं न युक्तम् ।

**तां दृष्ट्वा भीमसेनस्य क्रोधादस्तमवर्तत[3] ।**
**धूमोच्छ्वासः समभवन्नेत्रे चोच्छ्रितपक्ष्मणी ॥ २९ ॥**

**क्रोधादस्तमवर्तत** इत्यत्र कीचकस्य **अस्तम्** अस्तमयो यथा भवति तथा अस्तं धूमोच्छ्वासः अवर्ततेति योजना ।

**न क्रोधकालसमयः जहि[4] मा चापलं कुरु ।**
**अपूर्णोऽयं विपक्षो[5] नो नेदं बलवतां बहु ॥ ३८ ॥**

**जहि मा चापलं कुरु** इत्यत्र **जहि** क्रोधं जहि । **विपक्षः** अस्मदज्ञात-वासस्य विरुद्धः पक्षः पञ्चदशदिनात्मकः अपूर्णः । अतश्चापलं मा

१. **'कीटवच्चाशुभाश्रया'** इति कुं. पाठः ।
२. **'न युक्त सूतपुत्रेति'** इति कुं पाठः ।
३. **'क्रोधादास्रमवर्तत'** इति कुं. पाठः ।
४. **'सूद मा चापलं कृथाः'** इति कुं. पाठः ।
५. **'द्विपक्षो नो'** इति कुं. पाठः ।

कुर्विति हृदयम् । ध्वनिस्तु **अपूर्णः** सम्पूर्णशाखारहितः अयं तरुः **विपक्षः** विगतः पक्षः पाकसहायो यस्मात् स तथोक्तः ।

**[१]अथाङ्गुष्ठेनेव गृह्णन् अङ्गुष्ठं तत्र धर्मराट् ।**
**प्रबोधनभयाद्राज्ञो भीमं तं प्रत्यषेधयत्** ॥ ३९ ॥

**अथाङ्गुष्ठेनेव गृह्णन्** इत्यत्र **अङ्गुष्ठेन** स्वहस्ताङ्गुष्ठेन भीमस्याङ्गुष्ठं गृह्णन्निव **प्रत्यषेधयत्** नखरेखया निषेधं कृतवान् ।

**आकारं परिरक्षन्ती [२]प्रतिज्ञां धर्मसंहिताम् ।**
**दह्यमानेव रौद्रेण चक्षुषा द्रुपदात्मजा** ॥ ४३ ॥

**आकारं परिरक्षन्ती** इत्यत्र **धर्मसंहितां प्रतिज्ञाम्** आसंवत्सरमेवं स्थास्याम इति भर्तॄणां स्वस्याश्च प्रतिज्ञाम् **आकारं** प्रतिज्ञानुगुणाकारं च परिरक्षन्ती ।

**प्रजारक्षणशीलानां राज्ञां ह्यमिततेजसाम् ।**
**कार्याऽनुपालनं नित्यं [३]धर्मे सत्ये प्रतिष्ठताम्** ॥ ४४ ॥

**धर्मे सत्ये प्रतिष्ठताम्** इत्यत्र धर्मे सत्ये च **प्र** प्रकर्षेण तिष्ठतां राज्ञामिति सम्बन्धः ।

**धर्माधर्मौ पुनर्द्वन्द्वं [४]विनियुक्तमथापि वै ।**
**क्रियाणामक्रियाणां च प्रवणे पुण्यपापयोः** ॥ ५९ ॥

---

१. **'अथाङ्गुष्ठेनावमृद्नादङ्गुष्ठम्'** इति कुं. पाठः ।
२. BORI पृ. ७१; **'प्रतिज्ञां धर्मसंयुताम्'** इति कुं. पाठः ।
३. **'धर्मे सत्ये च तिष्ठताम्'** इति कुं. पाठः ।
४. $G_{1.3}$; BORI पृ.३१२; **'विनियुक्तमथापि वा, क्रियाणामक्रियाणां च प्रापणे'** इति कुं पाठः ।

**विनियुक्तमथापि वै । क्रियाणामक्रियाणां च प्रवणे पुण्यपापयोः** इत्यत्र क्रियाणामक्रियाणां च फलभूतयोः पुण्यपापयोः **प्रवणे** नम्रे आसक्ते सज्जीवदुर्जीववृन्दे, अथापि पूर्वोक्तद्वन्द्वद्वयादनन्तरमपि विनियुक्तं द्वन्द्वं वै इति योजना ।

**अस्मिन्सुनीते दुर्नीते [1]सभ्यास्ते कर्मजं फलम् ।**
**कल्याणकारी कल्याणं पापकारी च पापकम् ॥ ६१ ॥**

**सभ्यास्ते कर्मजं फलम्** इत्यत्र कर्मजं फलं प्राप्नुवन्ति ।

**[2]तेन गच्छति निस्सङ्गं स्वर्गाय नरकाय वा ।**
**सुकृतं दुष्कृतं वाऽपि कृत्वा मोहेन मानवः ।**
**पश्चात्तापेन तप्येत [3]सुबुद्धो मरणं गतः ॥ ६२ ॥**

**निस्सङ्गं** एकाकितयेत्यर्थः । **सुबुद्धो मरणं गत** इत्यत्र **सुबुद्धः** प्रबुद्धः **पश्चात्** पापकरणानन्तरमेव तापेन तप्येत । अप्रबुद्धस्तु मरणं गतः **पश्चात्** मरणानन्तरं तापेन तप्येत ।

**यथोक्तं देवराजेन ब्रह्मणा परमेष्ठिना ।**
**तथा त्वमपि राजेन्द्र [4]कार्याकार्यस्थितो भव ॥ ६४ ॥**

**कार्याकार्यस्थितो भव** इत्यत्र कार्ये अकार्ये या स्थितिर्ब्रह्मणा उक्ता तद्वान् भव । **॥ इति सप्तदशोऽध्यायः ॥**

---

१. **'लभते कर्मजं फलम्'** इति कुं. पाठः ।
२. M; BORI पृ.३१२; **'तेन गच्छति संसर्गम्'** इति कुं. पाठः ।
३. **'स्वबुद्ध्या मरणं गतः'** इति कुं. पाठः ।
४. **'कार्यकार्ये स्थिरो भव'** इति कुं. पाठः ।

## ॥ अथ अष्टादशोऽध्यायः ॥

**धर्मज्ञा[१] व्यवहाराणां कीचकं[२] कृतकिल्बिषम् ।**
**पुनः प्रोवाच राजानं स्मरन्ती धर्ममुत्तमम्** ॥ ३ ॥

**कीचकं कृतकिल्बिषम्** इत्यत्र स्मरन्तीत्युत्तरेणान्वयः ।

**मयाऽपि शक्यं किं कर्तुं विराटे धर्मदूषणे ।**
**मा मर्षयति यः पश्यन् वध्यमानमनागसम्** ॥ २७ ॥

**मा मर्षयति** इत्यत्र **मा** माम् ।

**केचित्कृष्णां प्रशंसन्ति केचिन्निन्दन्ति कीचकम् ।**
**केचिन्निन्दन्ति राजानं केचिद्देवीं च तां नराः** ॥ ३१ ॥

**केचिद्देवीं च तां नरा** इत्यत्र **तां** सुदेष्णाम् ।

**सा विनिःश्वस्य सुश्रोणी भूमावन्तर्मुखी स्थिता ।**
**तूष्णीमासीत्तदा दृष्ट्वा विवक्षन्तं युधिष्ठिरम्** ॥ ४१ ॥

**विवक्षन्तं युधिष्ठिरम्** इत्यत्र दृष्ट्वेति योग्यपदाध्याहारः ।

**मन्ये न कालः क्रोधस्य पश्यन्ति पतयस्तव ।**
**तेन त्वां नाभिधावन्ति गन्धर्वाः सूर्यवर्चसः** ॥ ४५ ॥

**मन्ये न काल** इत्यत्र गन्धर्वाणां प्रायशो दिवा सञ्चाराभावादिति बाह्यो भावः । इदानीमेव कीचकशिक्षायां अज्ञातवासभङ्गः स्यात् । अतो रात्रावेव भविष्यतीत्यान्तरो भावः ।

---

१. कुं २० अध्यायः । २. BORI पृ.३१२; **'कीचके कृतकिल्बिषे'** कुं. पाठः ।

**[१] भर्तुर्भीरु भयादन्या न क्रुध्यन्ति कदाचन।**
**बहुभिश्च परिक्लेशैरवज्ञाताश्च शत्रुभिः ॥ ४९ ॥**

**भर्तुर्भीरु भयादन्या** इत्यत्र **अन्याः** सपत्न्यः न क्रुध्यन्ति।

**[२] न क्रुद्धे प्रतियायाद् वै पतींस्ते वृत्रहा अपि।**
**तेन त्वां नाभिधावन्ति गन्धर्वाः कामरूपिणः ॥ ५० ॥**

**न क्रुद्धे प्रतियायात्** इत्यत्र **क्रुद्धे** कीचके।

**सत्यमुक्तं त्वया विद्वन् शैलूषं[३] विद्धि मां पुनः।**
**शैलूषकस्य तस्याहं येषां ज्येष्ठोऽक्षकोविदः ॥ ५७ ॥**

**शैलूषं विद्धि मां पुनः** इत्यत्र 'बिल्वे शाण्डिल्यशैलूषौ मालूर-श्रीफलावपि'[४] इत्यभिधानात् **शैलूषो** बिल्वः। बिल्वफलस्य सज्जना-योग्यत्वात् अस्मत्तोऽपि तव योग्यं फलमिदानीं नास्तीति सूचनाय शैलूषोपमा।

**निर्मनुष्यमिमं लोकं कुर्यात् क्रुद्धो निशामिमाम्।**
**न स सङ्क्रुध्यते तावद्गन्धर्वः कामरूपधृत् ॥ ७३ ॥**

**कुर्यात्क्रुद्धो निशामिमाम्** इत्यत्र निशां यावत्पश्यति तावत् सङ्क्रुध्यत इति सम्बन्धः।

---

१. **'भीरु भर्तृभयात्पत्न्यो'** इति कुं. पाठः।
२. **'न क्रुद्धान् प्रतियायाद्'** इति कुं. पाठः।
३. **'शैलूषीं विद्धि'** इति कुं. पाठः।
४. अ.को. २-४-३२

**एकस्तु कुरुते पापं कालपाशवशं गतः ।**
**नीचेनात्मापराधेन कुलं तेन विनश्यति ॥ ७५ ॥**

**कुलं तेन विनश्यति** इत्यत्र तेन आत्मापराधेन तस्य कुलं विनश्यति।

॥ इति अष्टादशोऽध्यायः ॥

## ॥ अथ एकोनविंशोऽध्यायः ॥

[१] **प्रादुर्भूतक्षणे रात्रौ विहाय शयनं स्वकम् ।**
**दुःखेन महता युक्ता मानसेन मनस्विनी ॥ ५ ॥**

**प्रादुर्भूतक्षण** इत्यत्र रात्रौ **प्रादुर्भूतक्षणा** लब्धावसरा ।

[२] **वृषेन्द्रमिव माहेयी वने वृद्धा त्रिहायनी ।**
[३] **मृगराजं यथा दृप्तं मण्डनी वननिर्झरे ।**
**संप्रसुप्तं तथा सिंहं मृगराजवधूरिव ॥ ७ ॥**

**वृषेन्द्रमिव माहेयी** इत्यत्र 'माहेयी सौरभेयी गौः'[४] इत्यभिधानात् वने **वृद्धा** अभिवृद्धा **त्रिहायनी** सुरभिकुमारी गौर्वृषेन्द्रमिवेति योजना । **मृगराजं यथा दृप्तम्** इत्यत्र **मृगराजं** श्रेष्ठमृगम् । **मण्डनी** वनं मण्डयती मृगवधूरिव ।

---

१. **'प्रादुर्भूते क्षणे रात्रौ'** इति कुं. पाठः । कुं अत्र २२ अध्यायः।
२. **'सर्वश्वेतेव माहेयी वने वृद्धा त्रिहायणी'** इति कुं पाठः ।
३. **'महर्षभं यथा सुप्तमर्थिनी वननिर्झरे'** इति कुं. पाठः ।
४. अ.को. २-९-६६

**यथा शची देवराजं रुद्राणी शङ्करं यथा ।**
**ब्रह्माणमिव सावित्री [1] यथा षष्ठी गुहं तथा ॥ १० ॥**

**यथा षष्ठी गुहं तथा** इत्यत्र **षष्ठी** षष्ठ्यामागता देवसेना **गुहं** षण्मुखम् ।

**[2] दिशाङ्गजसमाकारं गजं गजवधूरिव ।**
**भीमं प्राबोधयत्कान्ता लक्ष्मीर्दामोदरं यथा ॥ ११ ॥**

**दिशाङ्गजसमाकारम्** इत्यत्र **दिशाङ्गजो** दिग्गजः तस्य समः आकारो यस्य तं भीमम् ।

**तस्मिञ्जीवति पापिष्ठे सेनावाहे मम द्विषि ।**
**तत्कर्म कृतवत्यद्य कथं निद्रां निषेवसे ॥ १४ ॥**

**तत्कर्म कृतवति** इत्यत्र **तत्** मम पादघाताख्यं कर्म **कृतवति** तस्मिन् कीचके ।

**वैशम्पायन उवाच –**

**सुखसुप्तश्च तं शब्दं निशम्य स वृकोदरः ।**
**[3] संवेजितः कुरुश्रेष्ठः तोत्रैरिव महागजः ॥ १५ ॥**

**संवेजितः कुरुश्रेष्ठ** इत्यत्र **तोत्रैः** कशाविशेषैः **संवेजितः** कुपित इत्यर्थः ।

---

१. $M_{1-3}$; BORI पृ.७७; **'सावित्री देवसेना गुहं यथा'** इति कुं. पाठः ।
२. **'दिशागजसमाकारं'** इति कुं. पाठः ।
३. **'संवेदितः कुरुश्रेष्ठः'** इति कुं. पाठः ।

**सुखं वा यदि वा दुःखं शुभं वा यदि वाऽशुभम् ।**
**[१]यद्यप्यसुकृतं कर्म कृतमित्यवधारय ॥ २० ॥**

**यद्यप्यसुकृतं कर्म** इत्यत्र सुष्ठु कर्तुमशक्यं **असुकृतम्** ।

**गोशीर्षकं पद्मकं च [२]हरिं श्यामं च चन्दनम् ।**
**[३]नित्यं पिङ्क्षे विराटस्य त्वयि जीवति पाण्डव ॥ ३५ ॥**

**गोशीर्षकं पद्मकं च** इत्यत्र 'तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम्'[४] इत्यभिधानात् **गोशीर्षकं** चन्दनं **पद्मकं** पद्मवद्रागोपेतं **हरिं** हरिद्वर्णं **पिङ्क्षे** पेषणं कुर्वे ।

**साऽहं बहूनि दुःखानि [५]गणयामि कृते न ते ॥ ३६ ॥**

**गणयामि कृते न त** इत्यत्र ते कृते बहूनि दुःखानि न गणयामि तानि श्रुत्वा तव क्लेशो भविष्यतीति न गणयामीति भावः ।

**[६]स्वरूपं तव कौन्तेय मा स्म गच्छे युधिष्ठिरम् ।**
**निरुद्योगं निरामर्षं निर्वीर्यमरिमर्दन ॥ ४५ ॥**

**स्वरूपं तव कौन्तेय** इत्यत्र सु सुष्ठु **अरूपं** अननुरूपं **गच्छ** अनुगच्छ ।

---

१. **'यद्यप्यसुकरं कर्म'** इति कुं. पाठः ।
२. **'हरिश्यामं च चन्दनम्'** इति कुं. पाठः ।
३. All MSS; BORI पृ.७९; **'नित्यं पिषे'** इति कुं. पाठः ।
४. अ.को. २-६-१३१
५. **'गणयामि न ते कृते'** इति कुं. पाठः ।
६. **'शरणं भव कौन्तेय'** इति कुं. पाठः ।

**तथैव च शिरस्तस्य निपात्य धरणीतले ।**
**गमने[१] पुरुषव्याघ्र मर्द पादेन पाण्डव ॥ ४९ ॥**

**गमने पुरुषव्याघ्र** इत्यत्र गम्यते सर्वैर्जनैरत्रेति **गमने धरणीतले** राजमार्ग इत्यर्थः ।

**शापितोऽसि मम प्राणैः सुकृतेनार्जुनस्य च ।**
**युधिष्ठिरस्य पादाभ्यां यमयोर्जीवितेन च ॥ ५१ ॥**

**शापितोऽसि मम प्राणैः** इत्यत्र **शापः** शपथः तं प्राप्तोऽसि ।

**को हि राज्यं परित्यज्य सपुत्रपशुबान्धवम् ।**
**प्रव्रजेत महारण्यमजनैःपरिवारितम्[२] ॥ ५४ ॥**

**अजनैःपरिवारितम्** इत्यत्र जनैः परिवारितं न भवतीत्यजनैःपरि-वारितमित्यलुक्समासः । अरण्यमिति सम्बन्धः ।

**यदि निष्कसहस्राणि यद्वाऽन्यत्सारवद्धनम् ।**
**सायं प्रातरदेविष्यदपि संवत्सरायुतम् ॥ ५५ ॥**

**सारवद्धनम्** इत्यत्र दिने दिने पणाय अभविष्यदिति योग्यक्रियाध्या-हारः ।

**रुक्मं हिरण्यं वासांसि यानं युग्यमजाविकम् ।**
**अश्वाश्वतरसङ्घाश्च न जातु क्षयमाव्रजेत् ॥ ५६ ॥**

**न जातु क्षयमाव्रजेत्** इत्यस्य तद्यदेविष्यदिति[३] पूर्वेणान्वयः ।

---

१. **'वामेन पुरुषव्याघ्र'** इति कुं. पाठः ।
२. **'महारण्यमजिनैः परिवारितः'** इति कुं. पाठः ।; ३. **विराट् २२-५५**

**सहस्रं वालखिल्यानां सहस्रमुदवासिनाम् ।**
**सहस्रमग्निकुण्डानां[1] सहस्रं वायुभोजिनाम् ॥ ६३ ॥**

**सहस्रमग्निकुण्डानाम्** इत्यत्र अग्नेः कुण्डानि परितो येषां ते **अग्निकुण्डाः** पञ्चाग्निमध्ये तपस्तपन्तः ।

**अनवद्यं महाप्राज्ञं जीवितार्थेन संवृतम् ।**
**दृष्ट्वा कस्य न दुःखं स्याद्धर्मराजं युधिष्ठिरम् ॥ ७४ ॥**

**जीवितार्थेन संवृतम्** इत्यत्र **जीवितार्थेन** जीवनाख्यप्रयोजनेन **संवृतं** यतिवेषेण च्छन्नम् ।

**तत उत्थाय कैकेयी सर्वास्ताः प्रत्यभाषत ।**
**प्रेक्ष्य मामनवद्याङ्गीं कश्मलाभिहतामिव ॥ ८० ॥**

**तत उत्थाय** इत्यत्र **ततः** युद्धदर्शनार्थम् उपविष्टमञ्चात् **सर्वास्ताः** युद्धदर्शनार्थमागताः सर्वा नारीः ।

**यस्मिन्नस्त्राणि दिव्यानि समस्तानि महात्मनि ।**
**आधारः सर्वविद्यानां स[2] धारयति कुण्डले ॥ ९३ ॥**

**स धारयति कुण्डले** इत्यत्र **कुण्डले** ताटङ्कौ ।

**विभूषितमलङ्कारैः कुण्डलैः परिपातुकैः ।**
**कम्बुपाणिमथायान्तं दृष्ट्वा सीदति मे मनः ॥ ९८ ॥**

---

१. **'सहस्रमश्मकुट्टानां सहस्रं'** इति कुं. पाठः ।
२. BORI पृ. ८५; **'यो'** इति कुं. पाठः ।

**कम्बुपाणिमथायान्तम्** इत्यत्र **कम्बुपाणिं** शङ्खमयकङ्कणालङ्कृत-पाणिम्।

**मात्स्यं पार्थं च गायन्तं विराटं समुपस्थितम्।**
**पश्यामि तूर्यमध्यस्थं दृष्ट्वा मुह्यति मे मनः ॥१०१॥**

**मात्स्यं पार्थं च** इत्यत्र मात्स्यं विराटं गायन्तं पार्थम्।

**नूनमार्या न जानाति कृच्छ्रं प्राप्तं धनञ्जयम्।**
**अजातशत्रुं कौरव्यं मग्नं द्युर्यूतदेविनम् ॥१०२॥**

**कृच्छ्रं प्राप्तं धनञ्जयम्** इत्यत्र **कृच्छ्रं** शिखण्डिनीरूपादिसङ्कटम्।

**॥ इति एकोनविंशोऽध्यायः ॥**

## ॥ अथ विंशोऽध्यायः ॥

[१]**स्थितं पूर्वं जलं यत्र न पुनस्तत्र तिष्ठति।**
**इति पर्यायमिच्छन्ती प्रतीच्छाम्युदयं[२] पुनः ॥ ८ ॥**

**स्थितं पूर्वं जलम्** इत्यत्र **यत्र** तटाके **पूर्वं** पूर्वसंवत्सरे जलं स्थितं, **पुनः** संवत्सरान्तरे वर्षाकाले तत्रैव तिष्ठति, **इति** अनेन प्रकारेण **पर्यायं** पुनः सम्पदागमनम् इच्छन्ती अहम् **उदयं** भवतामभ्युदयं प्रतीच्छामीति योजना। यद्वा निम्नस्थलात् कराभ्यां परितो निक्षिप्तं जलं शनैर्निम्नस्थले यथा गच्छति इति अनेन प्रकारेण। शेषं पूर्ववत्।

---

१. कुं २३ अध्यायः।
२. **'प्रतीक्षाम्युदयं पुनः'** इति कुं. पाठः।

**दैवेन किल यस्यार्थः सुनीतोऽपि विपद्यते ।**
**[1] दैवस्यैवागमे यत्नः तेन कार्यो विजानता ॥ ९ ॥**

**दैवस्यैवागमे यत्न** इत्यत्र **आगमे** स्वानुकूल्येनागमने ।

**[2] न दैविकमिदं मन्ये यत्र पार्थो धनञ्जयः ।**
**भीमधन्वा महारङ्गे चास्ते शान्त इवानलः ॥ १७ ॥**

**न दैविकमिदम्** इत्यत्र **दैविकं** केवल(दै)देवनिमित्तं न । किन्तु धर्मराजस्य दुर्द्यूताख्यदुष्प्रयत्नकृतं च भवति ।

**किं नु वक्ष्यति सम्राण्मां [3] वर्णकः सुकरो न वा ।**
**नान्यपिष्टं विराटस्य चन्दनं किल रोचते ॥ २६ ॥**

**वर्णकः सुकरो न वा** इत्यत्र **वर्णकः** कुङ्कुमादिभिः चन्दने कृतवर्णविशेषो वर्णकः ।

**॥ इति विंशोऽध्यायः ॥**

## ॥ अथ एकविंशोऽध्यायः ॥

**[4] धिगस्तु मे बाहुमूलं गाण्डीवं फल्गुनस्य च ।**
**यत्ते रक्तौ [5] पराभूत्वा पाणी कृतकिणाविमौ ॥ ४ ॥**

---

१. **'सदा दैवागमे'** इति कुं. पाठः ।
२. $M_{except\ M5}$; BORI पृ. ९०; **'तद्दैविकमिदं मन्ये'** इति कुं. पाठः ।
३. **'वर्णकः सुकृतो न वा'** इति कुं. पाठः ।
४. **'धिगस्तु मे बाहुबलम्'** इति कुं. पाठः । कुं २४ अध्यायः ।
५. **'पुरा भूत्वा'** इति कुं. पाठः ।

**यत्ते रक्तौ** इत्यत्र **यद्यस्मात्** ते रक्तौ उभौ पाणी **पराभूत्वा** परसेवकौ भूत्वा कृतकिणौ, तस्माद् बाहुमूलं धिगिति पूर्वेणान्वयः।

**तत्र मे कारणं भाति कौन्तेयो यत्प्रतीक्षते।**
**तदहं तस्य विज्ञाय [1]स्थितोऽस्मि तव शासने ॥ ९ ॥**

**तदहं तस्य** इत्यत्र तव सञ्ज्ञया कृतं **शासनं** धर्मराजस्य शासनम्, तस्य कृते **अस्मि** तूष्णीमस्मि।

**धनञ्जयं च पाञ्चालि माद्रिपुत्रौ च भ्रातरौ।**
**[2]वृत्तैषां च मतिः कृष्णे युधिष्ठिरमगर्हयम् ॥ १० ॥**

**वृत्तैषां च** इत्यत्र **एषाम्** अर्जुनादीनां मतिः **वृत्ता** धर्मराजमनुसृत्य प्रवृत्ता। अहं तु धर्मराजमगर्हयम्।

**ह्रीमान्वाक्यमहीनार्थं ब्रुवन् राजा युधिष्ठिरः।**
**सर्वानन्वनयद् भ्रातॄन् मुनेर्धौम्यस्य [3]शासतः ॥ ११ ॥**

**मुनेर्धौम्यस्य शासत** इत्यत्र धौम्यस्य मुनेः शासतः सत इति योजना।

**[4]अनुनीतेषु दारेषु त्वनुनीता त्वमप्यसि।**
**मा धर्मं जहि सुश्रोणि क्रोधं जहि महामते ॥ १३ ॥**

---

१. **'स्थितो धर्मस्य शासने'** इति कुं. पाठः।
२. **'कृत्वैतां च मतिम्'** इति कुं. पाठः।; ३.
३. **'पश्यतः'** इति कुं. पाठः।
४. **'अनुनीतेषु चास्मासु'** इति कुं. पाठः।

**अनुनीतेषु दारेषु** इत्यत्र भर्त्रनुकूलतया नीतिमत्सु **दारेषु** अरुन्धत्या-दिषु त्वमपि अनुनीता भर्त्रनुकूलनीतिमती असि ।

**सुकन्या नाम शर्यातेर्भार्गवच्यवनं वने ।**
**वल्मीकभूतं शाम्यन्तं [1] अन्वपद्यत भामिनी ॥ २० ॥**

**वल्मीकभूतम्** इत्यत्र **शाम्यन्** शमवान् तम् ।

**[2] गुरुभर्तृकृतं ज्ञात्वा राज्ञा मूर्ध्नि स्थिता भवेः ॥ २८ ॥**

**गुरुभर्तृकृतम्** इत्यत्र गुरुभिः भर्तृभिः कृतं कार्यं ज्ञात्वा तदनुसारेण चरित्वा चेति योग्यपदाध्याहारः ।

**तस्या विदित्वा तं भावं [3] स्वयं चावृतदर्शनः ।**
**कीचकोऽपि च दुष्टात्मा पुनः प्रार्थयते च माम् ॥ ३५ ॥**

**आवृतदर्शनः** आवृतं दर्शनं ज्ञानं यस्य सः मिथ्याज्ञानीत्यर्थः ।

**शतं सहस्रमपि वा गन्धर्वाणामहं रणे ।**
**समागतं हनिष्यामि त्वं भीरु कुरु मे क्षणम् ॥ ३९ ॥**

**कुरु मे क्षणम्** इत्यत्र **क्षणम्** अवसरम् ॥

**॥ इति एकविंशोऽध्यायः ॥**

* * *

---

१. BORI पृ. ९४; **'साध्वी तमन्वपद्यत'** इति कुं. पाठः ।
२. **'गुरुभक्तिकृतं'** इति कुं. पाठः ।
३. **'स्वयं चानृतदर्शनः'** इति कुं. पाठः ।

## ।। अथ द्वाविंशोऽध्यायः ।।

[1] तत्रास्ति शयनं भीरु दृढाङ्गं सुप्रतिष्ठितम् ।
तत्रैनं दर्शयिष्यामि पूर्वप्रेतान्पितामहान् ।। ४ ।।

**दृढाङ्गं सुप्रतिष्ठितम्** इत्यत्र दृढानि पट्टमञ्चपादाद्यङ्गानि यस्य तत् दृढाङ्गम् ।

[2] अह्नाय तव सुश्रेणी शतं निष्कं ददामि ते ।
दासीशतं च ते दद्यां दासानामपि चापरम् ।। १४ ।।

**अह्नाय तव** इत्यत्र **अह्नाय** शीघ्रम् ।

निशायां तत्र गच्छेथा गन्धर्वास्तन्न जानते ।
तत्र दोषः परिहृतो भविष्यति न संशयः ।। २२ ।।

**तत्र दोषः परिहृत** इत्यत्र **दोषः** परस्त्रीगमनाख्यदोषः ।

कालेन नियतं बद्धः कामेन च बलात्कृतः ।
शून्यं स नर्तनागारमागमिष्यति कीचकः ।। ३६ ।।

**कालेन नियतम्** इत्यत्र **कालेन** मृत्युना ।

गर्वितः सूतपुत्रोऽसौ गन्धर्वानवमन्यते ।
स त्वं प्रहरतां श्रेष्ठ [3] नालं नाग इवारुजः ।। ३८ ।।

**नाग इवारुज** इत्यत्र **अरुजः** नाशय ।

---

१. कुं २५ अध्यायः ।
२. BORI पृ. ९९; '**अहन्यहनि**' इति कुं. पाठः ।
३. '**नालं नाग इवोद्धर**' इति कुं. पाठः ।

**मया हतांश्चेन्मात्स्यांस्तु धार्तराष्ट्रो विबुध्यति ।**
**दुर्योधनं ततो हत्वा सानुबन्धं सबान्धवम् ॥ ४६ ॥**

**मया हतांश्चेत्** इत्यत्र मुख्यान् **मात्स्यान्** मात्स्यामात्यादीन् ।

[1] **नाहं चोपासितुं शक्तः कुन्तीपुत्रं युधिष्ठिरम् ।**
**कामं सत्यमुपासीत कुन्तीपुत्रो युधिष्ठिरः ।**
**काममन्ये ह्युपासन्तु विनीता धर्मचारिणः ॥ ४७ ॥**

**नाहं चोपासितुं शक्त** इत्यत्र तव कीचकान्महाव्यसने समागते सति धर्मराजसेवां कृत्वा न तिष्ठामीति भावः । **अन्ये** अर्जुनादयः ।

[2] **कथं वधमुपानीयां राजाऽयं मत्कृते प्रभो ।**
**निशि गूढं तथा भीम कीचकं तं निपातय ॥ ५० ॥**

**कथं वधमुपानीयाम्** इत्यत्र **राजा** धर्मराजः, स्वकृतप्रतिज्ञाया अपरिपूर्तेः मरिष्यतीति भावः ।

**॥ इति द्वाविंशोऽध्यायः ॥**

## ॥ अथ त्रयोविंशोऽध्यायः ॥

**भीम उवाच –**

[3] **तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे ।**
**अदृश्यमानस्तस्याहं तमिस्रायां सकुण्डलम् ॥ १ ॥**

---

१. **'नाहं शक्तोऽनुनयितुम्'** इति कुं. पाठः ।
२. **'कथं सत्याच्च नापेयाद्'** इति कुं. पाठः । ;२. कुं. २६ अऽध्यायः ।

**तमिस्रायां सकुण्डलम्** इत्यत्र 'तमिस्रा तामसी रात्रिः'[1] इत्यभिधानात् **तमिस्रायां** रात्रौ ।

**[2]उपरंस्यसि नारीषु शीघ्रं त्वं स्प्रष्टुमर्हसि ।**
**ईदृशस्तु त्वया स्पर्शः स्पृष्टपूर्वो न कर्हिचित्** ॥ १७ ॥

**उपरंस्यसि नारीषु** इत्यत्र **उपरंस्यसि** उपरमं समाप्तिं करिष्यसि ।

**आस्ये पाणी च पादौ च शिरो ग्रीवां सकुण्डलाम् ।**
**[3]काये निवेशयामास मृदित्वाऽङ्गानि सर्वशः** ॥ ४० ॥

**काये निवेशयामास** इत्यत्र गुदरन्ध्रद्वारा प्रवेशयामास ।

॥ इति त्रयोविंशोऽध्यायः ॥

## ॥ अथ चतुर्विंशोऽध्यायः ॥

**[4]अनार्यसत्वेन महार्यसत्वा**
**गताऽसुना सा प्ररुरोद कृष्णा ।**
**विलम्बमाना विवशा हि दुष्टैः[5]**
**तमेव पर्यङ्कतले शुभाङ्गी** ॥ १६ ॥

**ह्रियमाणाऽथ सुश्रोणी सूतपुत्रैरनिन्दिता ।**
**प्राक्रोशन्नाथमिच्छन्ती कृष्णा नाथवती सती** ॥ १७ ॥

---

१. अ.को. १-४-५ ; २. **'उपरंस्यसि कामाच्च'** इति कुं. पाठः ।
३. **'काये प्रवेशयामास'** इति कुं. पाठः ।
४. कुं २७ अध्यायः ।
५. **'दुष्टैस्तत्रैव पर्यङ्कवरे'** इति कुं. पाठः ।

**तमेव पर्यङ्कतले शुभाङ्गी** इत्यत्र **तमेव** कीचकहन्तारमेव प्राक्रोशादि-त्युत्तरेणान्वयः ।

॥ इति चतुर्विंशोऽध्यायः ॥

## ॥ अथ पञ्चविंशोऽध्यायः ॥

**ततस्ता[१] नर्तनागाराद्[२]विनिष्क्रम्य सभाजनाः ।**
**कन्या ददृशुरायान्तीं कृष्णां क्लिष्टामनागसम् ॥ २७ ॥**

**विनिष्क्रम्य सभाजना** इत्यत्र 'आनन्दनसभाजने'[३] इत्यमरः । **सभाजनाः** आनन्दयन्त्यः ।

**बृहन्नलोवाच –**

**बृहन्नलाऽपि कल्याणि दुःखमाप्नोत्यनन्तकम् ।**
**[४]तिर्यग्योनिगतां बाले न चैनामवबुध्यते ॥ ३२ ॥**

**तिर्यग्योनिगतां बाले** इत्यत्र **तिर्यग्योनिः** शिखण्डिनीवेषः ।

**त्वं चापि तरुणी सुभ्रू रूपेणाप्रतिमा भुवि ।**
**चित्तानि च नृणां भद्रे रक्तानि स्पर्शजे सुखे ॥ ३७ ॥**

**रक्तानि स्पर्शजे सुख** इत्यत्र **रक्तानि** अनुरक्तानि ।

॥ इति पञ्चविंशोऽध्यायः ॥

---

१. कुं २८ अध्यायः ।
२. BORI पृ. ११४; **'विनिष्क्रम्य सहार्जुनाः'** इति कुं. पाठः ।
३. अ.को. ३-२-७
४. K,$D_{2.5.8}$; BORI पृ. ११५; **'तिर्यग्योनिगतेवेयं'** इति कुं. पाठः ।

## ।। अथ षड्विंशोऽध्यायः ।।

[1]**कीचकस्य वधं घोरं सानुजस्य विशाम्पते ।**
[2]**आत्माहितं चिन्तयित्वा व्यस्मयन्त पृथग्जनाः ।। २ ।।**

**आत्माहितं चिन्तयित्वा** इत्यत्र **आत्मना** परमात्मना **आहितम्** अर्पितं दैवाधीनमित्यर्थः ।

[3]**साम्परायाऽपरिक्लिष्टो बलवान्दुर्जयो रणे ।**
**आसीत्प्रहर्ता शत्रूणां दारदर्शी च दुर्मतिः ।। ४ ।।**

**साम्परायापरिक्लिष्ट** इत्यत्र 'मृधमास्कन्दनं सङ्ख्यं समीकं साम्परायकम्'[4] इत्यमरः । **साम्पराये** युद्धे **अपरिक्लिष्टः** क्लेषरहितः ।

**वर्त्मन्यन्विच्छमानास्तु रथानां रथिसत्तम ।**
**कञ्चित्कालं मनुष्येन्द्र सूताननुगता वयम् ।। २० ।।**

**सूताननुगता वयम्** इत्यत्र **सूतान्** पाण्डवसारथीन् ।

**प्रियमेतदुपश्रुत्य शत्रूणां च पराभवम् ।**
**कृतकृत्यश्च कौरव्य विधिवत्स्यादनन्तरम् ।। ३७ ।।**

**विधिवत्स्यादनन्तरम्** इत्यत्र **विधिवत्** विधिर्यथा करोति तद्वत् ।

।। इति षड्विंशोऽध्यायः ।।

---

१. कुं २९ अध्यायः । ; २. 'अत्याहितम्' इति कुं. पाठः ।
३. 'साम्पराये परिक्रुष्टो' इति कुं. पाठः ।
४. अ.को. २-८-१०३
५. 'विधत्स्व यदनन्तरम्' इति कुं. पाठः ।

## ।। अथ सप्तविंशोऽध्यायः ।।

[१]न हि तेषां गतिर्वासः प्रवृत्तिर्वोपलभ्यते ।
[२]प्रत्यागता वा गूढास्ते परमूर्तगुणा इव ।। २० ।।

**प्रत्यागता वा गूढास्त** इत्यत्र **प्रति** जनान् प्रति **गताः** अवगताः ज्ञाता इत्यर्थः । **परमूर्तगुणाः** मूर्तेभ्यः पराः **परमूर्ताः** गगनादयः तेषां गुणा इवेति गूढत्वे नाशाभावे च उपमा ।

।। इति सप्तविंशोऽध्यायः ।।

## ।। अथ अष्टाविंशोऽध्यायः ।।

[३]त्वं वै तन्मनसा श्रेयो [४]बुध्यस्यहितमात्मनः ।
नियतं सर्वमित्रेषु बलवत्स्वबलेषु च ।। ९ ।।

**त्वं वै तन्मनसा श्रेय** इत्यत्र **तत्** अस्मदादिभिरुक्तं श्रेयः त्वं आत्मनः अहितं बुध्यसीति योजना ।

[५]सारं वल्गुफलं ज्ञात्वा मध्यस्थं चापि भारत ।
स्वराष्ट्रपरराष्ट्रेषु ज्ञातव्यं बलमात्मनः ।। १० ।।

**सारं वल्गुफलम्** इत्यत्र **सारम्** उत्तमम्, **वल्गु** अल्पं फलं यस्य तत् अधमम्, **मध्यस्थं** मध्यममिति बलस्य विशेषणम् ।

---

१. कुं ३० अध्यायः ।
२. 'अत्यन्तं वा निगूढास्ते पारं वोर्मिमतो गताः' इति कुं. पाठः ।
३. 'यत्र यन्मन्यसे श्रेयो' इति कुं.पाठः । कुं ३२ अध्यायः ।
४. 'बुध्यस्व बलमात्मनः' इति कुं.पाठः । ; ५. 'सारं फल्गु बलम्'कुं. पाठः ।

**अप्रहृष्टं प्रहृष्टं वा सन्दधाम तथा परैः ।**
**साम्ना दानेन भेदेन दण्डेन बलिकर्मणा ॥ ११ ॥**
**न्यायेनानन्यबलिनः बलेनानन्यदुर्हृदः ।**
**सान्त्वयित्वा च मित्राणि बलं चाभाष्यतां सुखम् ।**
**स्वकोशबलसंवृद्धः सम्यक् सिद्धिमवाप्स्यसि ॥ १२ ॥**
**योत्स्यसे चापि बलिभिररिभिः प्रत्युपस्थितैः ।**
**अन्यैस्त्वं पाण्डवैर्वाऽपि [१]हीनस्वबलवाहनैः ॥ १३ ॥**

**दण्डेन बलिकर्मणा** इत्यत्र **बलिकर्मणा** बलेः पूजायाः योग्यसेवा-रूपकर्मणा **अनन्यबलिनः** असदृशबलिष्ठान् न्यायेन सान्त्वयित्वा, **अनन्यदुर्हृदः** असदृशदुःखितान् अतिदुर्बलानिति यावत्, बलेन सान्त्वयित्वेति योजना । **मित्राणि** स्वमित्रजनान् प्रति । **हीनस्वबल-वाहनैः** इत्येतस्य पाण्डवैरिति सम्बन्धः ।

**[२]श्रुतः कृष्णानिमित्तेन भीमसेनेन कीचकः ।**
**गन्धर्वव्यपदेशेन हतो निशि महाबलः ॥ २३ ॥**

**श्रुतः कृष्णानिमित्तेन** इत्यत्र **श्रुतः** प्रसिद्धः ।

**[३]तस्मादनन्तरेणापि लाभोऽस्माकं भविष्यति ।**
**कोशवृद्धिरिहास्माकं शत्रूणां निधनं भवेत् ॥ ३१ ॥**

**तस्मादनन्तरेणापि** इत्यत्र **तस्मात्** गोग्रहणात् **अनन्तरेण** युद्धाया-गतपाण्डवदर्शनेन ।

---

१. BORI पृ. १३०; **'हीनैः स्वबलवाहनैः'** इति कुं. पाठः ।
२. **'शङ्के कृष्णानिमित्तं तु'** इति कुं. पाठः ।; ३. **'तस्मादन्यतरेणापि'**कुं. पाठः

**कथं सुयोधनं गच्छेद्युधिष्ठिरभृतः पुरा ।**
**एतच्चापि वदत्येष मात्स्यः परिभवान्मयि ॥ ३२ ॥**

**कथं सुयोधनं गच्छेत्** इत्यत्र **युधिष्ठिरभृतः** युधिष्ठिरः भृतो येन स विराटः **पुरा** युद्धात्पूर्वं **गच्छेत्** शरणं गच्छेत् ।

**आदत्तेः गाः सुशर्माऽथ कृष्णपक्षस्य [1] चाष्टमी ॥ ६३ ॥**

**कृष्णपक्षस्य चाष्टमी** इत्यत्र यदेति योग्यपदाध्याहारः ।

**॥ इति एकोनत्रिंशोऽध्यायः ॥**

## ॥ अथ त्रिंशोऽध्यायः ॥

[2] **पृथक्काञ्चनसन्नाहान् रथेष्वश्वानयोजयन् ।**
[3] **उत्कृत्य पाशान्मौर्वीणां शूराश्चापेष्वयोजयन् ॥ १८ ॥**

**उत्कृत्य पाशान्मौर्वीणाम्** इत्यत्र **उत्कृत्य** ऊर्ध्वं कृत्वा ।

**॥ इति त्रिंशोऽध्यायः ॥**

## ॥ अथ एकत्रिंशोऽध्यायः ॥

[4] **भीमाश्च मत्तमातङ्गास्तोमराङ्कुशचोदिताः ।**
**ग्रामणीयैः समारूढाः कुशलैर्हस्तिसादिभिः ॥ ३ ॥**

**ग्रामणीयैः समारूढा** इत्यत्र **ग्रामणीः** ग्रामाधिपतिर्विराटः तत्सम्बन्धिभिः ।

---

१. **'चाष्टमीम्'** इति कुं. पाठः ।; २. कुं. २३ अध्यायः ।
३. **'उत्कृष्य पाशान्'** इति कुं. पाठः । ; ४. कुं २४ अध्यायः ।

[1] **भीमस्तु भीमसङ्काशो रथात्प्रस्कन्द्य वीर्यवान् ।**
**उत्प्लुत्य गत्वा वेगेन तद्रथे विनिपत्य च** ॥ ५५ ॥

**भीमस्तु भीमसङ्काश** इत्यत्र **भीमसङ्काशः** [2] 'व्योमकेशो भवो भीमः' इत्यमरः । रुद्रसदृशः ।

**स्वबाहुबलसम्पन्ना** [3] **ह्रीनिषेधा यतव्रताः ।**
**विराटस्य महात्मानः परिक्लेशविनाशनाः** ॥ ६१ ॥

**ह्रीनिषेधा यतव्रता** इत्यत्र **ह्रीनिषेधाः** परसेनायाः ह्रियं लज्जां निषेधन्तीति तथोक्ताः पाण्डवाः ।

॥ इति एकत्रिंशोऽध्यायः ॥

## ॥ अथ द्वात्रिंशोऽध्यायः ॥

[4] **त्वत्कृते ह्यद्य पश्यामि राज्यमात्मानमेव च ।**
**यतश्च जातः संरम्भः स च शत्रुर्वशं गतः** ॥ १२ ॥

**यतश्च जात** इत्यत्र **यतः** सुशर्मणः सकाशात् ।

[5] **प्रतीपस्ते पुनः तुष्टः प्रविशाद्य परन्तप ।**
**दारैः पुत्रैश्च** [6] **संश्लिष्टः सा हि प्रीतिर्ममातुला** ॥ २० ॥

---

१. कुं ३५ अध्यायः ।; २. अ.को १-१-३४
३. BORI पृ. ३५; '**ह्रीनिषेवा**' इति कुं. पाठः ।
४. कुं ३६ अध्यायः ।
५. '**प्रतीतश्चेत्पुरं तुष्टः**' इति कुं पाठः ।
६. '**संश्लिष्य**' इति कुं. पाठः ।

**प्रतीपस्ते पुनः** इत्यत्र ते **प्रतीपः** वैरी सुशर्मा दारैः पुत्रैश्च संश्लिष्टः पुनः **प्रवेक्ष्यति** स्वगृहप्रवेशं करिष्यति । एतत् इदमेव वरं वृणु इत्युत्तरेण सम्बन्धः ।

**नगरं प्राविशंस्ते वै सूर्ये सम्यगथोदिते ।**
**विराटनगरं प्राप्य शीघ्रं नान्दीमघोषयन्** ॥ २७ ॥

**नान्दीमघोषयन्** इत्यत्र **नान्दीं** सन्तोषसम्बन्धिनीं वार्ताम् ।

॥ इति द्वात्रिंशोऽध्यायः ॥

## ॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

**गोपालानां[१] तु घोषेषु हन्यतां[२] वै महारथैः ।**
**आरावः सुमहानासीत्संप्रहारे भयङ्करे** ॥ ६ ॥

**हन्यतां वै महारथैः** इत्यत्र **हन्यतां** हन्यमानानाम् ।

**दृष्ट्वा भूमिञ्जयं नाम पुत्रं मात्स्यस्य मानिनम् ।**
**तस्मै च सर्वमाचष्ट राष्ट्रस्य पशुकर्षणम्** ॥ ९ ॥

**दृष्ट्वा भूमिञ्जयं नाम** इत्यत्र भूमिञ्जय इत्यप्युत्तरकुमारस्य नाम ।

**पशोपधानां ज्यातन्त्रीं प्राप्य[३] दण्डसमस्वराम् ।**
**शरवर्णां धनुर्वीणां शत्रुमध्ये प्रवादय** ॥ १७ ॥

**प्राप्य दण्डसमस्वराम्** इत्यत्र **दण्डसमस्वराम्** अन्तर्दण्डाहतघण्टा-समस्वराम् ।

---

१. कुं ३७ अध्यायः ।; २. 'हन्यतां तैर्महारथैः' इति कुं. पाठः ।
३. 'चापदण्डां महास्वनाम्' इति कुं. पाठः ।

**श्वेताः काञ्चनसंनाहा रथे युज्यन्तु ते हयाः ।**
**ध्वजं च सिंहं सौवर्णमुच्छ्रयस्व तथा विभो ॥ १८ ॥**

**ध्वजं च सिंहसौवर्णम्** इत्यत्र सौवर्णः सिंहो यस्य स सिंहसौवर्णः तम् ।

॥ इति त्रयस्त्रिंशोऽध्यायः ॥

## ॥ अथ चतुस्त्रिंशोऽध्यायः ॥

**[1]श्रुत्वा तदर्जुनो वाक्यमुत्तरेण प्रभाषितम् ।**
**[2]स नीतसमये काले प्रियां भार्यामभाषत ॥ १३ ॥**

**स नीतसमये काल** इत्यत्र **नीतः** समाप्तः **समयः** अज्ञातवाससङ्केतो यस्मिन् तस्मिन् काले ।

**[3]अमर्षयन्ती सैरन्ध्री तद्दुःखं कमललोचना ।**
**उत्तरामाह वचनं सखीमध्ये विलासिनीम् ॥ १९ ॥**

**अमर्षयन्ती सैरन्ध्री** इत्यत्र **अमर्षयन्ती** अथापि यतिवेषेण स्थितमसहमाना ।

[4]**गवां मुमुक्ष** इत्यत्र **गवां** गाः **मुमुक्षे** मोचयितुमिच्छे ।

॥ इति चतुस्त्रिंशोऽध्यायः ॥

---

१. कुं ३८ अध्यायः ।
२. **'अतीतसमये काल'** इति कुं. पाठः ।
३. **'अमर्षयन्ती तद्दुःखं कृष्णा'** इति कुं. पाठः ।
४. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

## ।। अथ पञ्चत्रिंशोऽध्यायः ।।

[१] **सा वज्रमुक्तामणिहेमकुण्डला मृदुक्रमा भ्रातृनियोगचोदिता ।**
**प्रदक्षिणावर्ततनुः शिखण्डिनी पद्मानना पद्मदलायताक्षी ।।३५।।**

**प्रदक्षिणावर्ततनुः शिखण्डिनी** इत्यत्र **शिखण्डम्** ऊर्ध्वं निबद्ध-शिखा तद्वती **शिखण्डिनी** ।

**वैशम्पायन उवाच –**

**इत्येवमुक्त्वा नृपसूनुसत्तम-**
**स्तदा स्मयित्वाऽर्जुनमभ्यनन्दयत् ।**
[२] **अत्रोत्तरः पारशवं शताक्षिमत्**
**सुवर्णचित्रं परिगृह्य भानुमत् ।। ५७ ।।**

**अत्रोत्तरः पारशवम्** इत्यत्र 'तीक्ष्णमयः पारशवम्'[३] इत्यभिधानात् **पारशवं** तीक्ष्णायोमयं वर्म ।

**बृहन्नलायै प्रददौ स्वयं तदा**
**विराटपुत्रः परवीरघातिने ।**
**तदाज्ञया मात्स्यसुतस्य वीर्यवान्**
[४] **सा कर्तुकामेव समाददे तदा ।। ५८ ।।**

**सा कर्तुकामेव** इत्यत्र **कर्तुकामेव** सारथ्यं कर्तुकामेव ।

---

१. कुं. पाठानुसारेण अत्र पूर्वाध्याय एवानुसरति ।
२. **'अथोत्तरः'** इति कुं. पाठः । ; ३. ह.को. २-१७१
४. **'न कर्तुकामेव'** इति कुं. पाठः ।

वैशम्पायन उवाच –

[1]स तत्र नर्मसंयुक्तमकरोत्पाण्डवो बहु ।
उत्तरायाः प्रमुखतः सर्वं जानन्नरिन्दमः ॥ ६० ॥

**स तत्र नर्मसंयुक्तम्** इत्यत्र 'अग्राम्यः परिहासोक्तिर्नर्म इत्यभिधीयते' इति वचनात् परिहाससंयुक्तम् ।

तमाददानं प्रमदा जहासिरे
ह्यधोमुखं वीरवरोऽभ्यधारयत् ।
[2]ततः शिरःखं निकृतः सपत्नहा
ह्यधोमुखं कवचमथाभ्यकर्षत ॥ ६१ ॥

**ततः शिरःखं निकृत** इत्यत्र **शिरः** शिरसि शिरस्थानीये ऊर्ध्वभागे **खं** शिरःप्रवेशार्हं छिद्ररूपमाकाशं यस्य तत् कवचम्, **निकृतः** कापट्यवान् ।

एवं प्रकाराणि बहूनि कुर्वति तस्मिन्कुमार्यः प्रमदा जहासिरे ।
तथापि कुर्वन्तममित्रकर्शनं नैवोत्तरः पर्यभवद्धनञ्जयम् ॥ ६३ ॥

**पर्यभवद्धनञ्जयम्** इत्यत्र **पर्यभवत्** परिभवमकरोत् ।

तं राजपुत्रः [3]समनह्यत् स्वयं
जाम्बूनदान्तेन शुभेन वर्मणा ।

---

१. BORI ; **'ततः स नर्मसंयुक्तम्'** इति कुं. पाठः ।
२. **'ततस्तिरश्चीनकृतम्'** इति कुं. पाठः ।
३. **'समनाह्यत्स्वयम्'** इति कुं पाठः ।

**कुशानुतप्तप्रतिमेन भास्वता**
**जाज्वल्यमानेन सहस्रराजिना[1]** ॥ ६४ ॥

**समनह्यत्** सम्यक् बद्धमकारयत् । 'नह बन्धने' इति धातुः । **सहस्रराजिना** रत्नसहस्रराजिना ।

**अथास्य शीघ्रं प्रसमीक्ष्य योजयद्**
**रथे हयान्काञ्चनजालसंवृतान् ।**
**सुवर्णजालान्तरयोक्त्रभूषणं**
**सिंहं च सौवर्णमुपाश्रयद्रथे** ॥ ६५ ॥

**सुवर्णजालान्तरयोक्त्रभूषणम्** इत्यत्र सुवर्णजालस्य **अन्तरे** मध्ये मध्ये **योक्त्रं** योगः स एव भूषणं यस्य तम् ।

**[2]पालितार्थानि सूक्ष्माणि रत्नानि विविधानि च ।**
**विजित्य सङ्ग्रामगतान् भीष्मद्रोणमुखान् कुरून्** ॥ ६८ ॥

**पालितार्थानि सूक्ष्माणि** इत्यत्र पालितः अर्थो द्रव्यं यैस्तानि [3]बहुद्रव्याणीत्यर्थः ।

**वैशम्पायन उवाच –**
**अथोत्तरो वर्म महाप्रभावं सुवर्णवैडूर्यपरिष्कृतं शुभम् ।**
**आमुच्य वीरः प्रययौ रथोत्तमं धनञ्जयं सारथिनं प्रगृह्य** ॥७१॥

---

१. **'सहस्ररश्मिना'** इति कुं पाठः ।
२. **'पाञ्चालिकार्थम्'** इति कुं. पाठः ।
३. **'बहुद्रव्यार्हाणीत्यर्थः'** इति श्री सो.मु.पा ।

**अथोत्तरो वर्म** इत्यत्र वर्म **प्रगृह्य** उपादाय इत्युत्तरपदावृत्त्या योजना ।

**॥ इति पञ्चत्रिंशोऽध्यायः ॥**

## ॥ अथ षट्त्रिंशोऽध्यायः ॥

**[१] ददृशे पार्थिवो रेणुर्जनितस्तेन सर्पता ।**
**दृष्टिप्रणाशो भूतानां दिवस्पृक्कुरुसत्तम ॥ ८ ॥**

**ददृशे पार्थिवो रेणुः** इत्यत्र **पार्थिवः** पृथिवीसम्बन्धी रेणुः **तेन** सैन्येन ।

**[२] मध्यमामिषगृध्राणां कुरूणामाततायिनाम् ।**
**नेष्यामि त्वां महाबाहो मा त्वं हि विमना भव ॥ २४ ॥**

**मध्यमामिषगृध्राणाम्** इत्यत्र **आमिषगृध्राणां** 'गृधु आकाङ्क्षायाम्' इति धातोः शत्रूणामामिषाकाङ्क्षिणाम् ।

**तं च शीघ्रं प्रधावन्तं सम्प्रेक्ष्य कुरवोऽब्रुवन् ।**
**कोऽयं धावत्यसङ्गेन पूर्वं मुक्त्वा रथोत्तमम् ॥ ३६ ॥**

**कोऽयं धावत्यसङ्गेन** इत्यत्र **असङ्गेन** युद्धादिप्रसङ्गाभावेन ।

**क्व एष वेषसञ्छन्नो भस्मनेव हुताशनः ।**
**किञ्चित्तस्य यथा पुंसः किञ्चिदस्य यथा स्त्रियः ॥ ३७ ॥**

**किञ्चित्तस्य यथा पुंस** इत्यत्र **किञ्चित्** शीलम् ।

---

१. कुं ३९ अध्यायः ।
२. BORI पृ. १६१; **'मध्यमामिषगृध्नूनां'** इति कुं. पाठः ।
३. $S_{except\ M1-5}$ ; BORI पृ. १६३; **'किञ्चिदस्य यथा पुंसः'** इति कुं. पाठः

**इत्येवं सैनिकाः प्राहुर्द्रोणस्तानिदमब्रवीत् ।**
**आचार्यः कुरुपाण्डूनां मतौ शुक्राङ्गिरोपमः ॥ ३८ ॥**

**मतौ शुक्राङ्गिरोपम** इत्यत्र **मतौ** बुद्धौ ।

**किं विचारणया**[१] **कार्यमेतेनानुसृतेन वा ।**
**धावन्तमनुधावंश्च निर्भयो भयविप्लुतम् ॥ ३९ ॥**

**किं विचारणया कार्यम्** इत्यत्र **एतेन** पूर्वं गतेनोत्तरकुमारेण, **अनु** अनन्तरं **सृतेन** गतेन सारथिना च निमित्तेन विचारणया किं कार्यम् । पलायमानयोर्विचारः किमिति भावः ।

**नटे**[२] **वैतच्छिरोग्रीवं तौ बाहू परिघोपमौ ।**
**तत्तदेवास्य विक्रान्तं नायमन्यो धनञ्जयात् ॥ ४१ ॥**

**नटे वैतच्छिरोग्रीवम्** इत्यत्र शिरश्च ग्रीवा च **शिरोग्रीवम्** एतस्य शिरोग्रीवं **नटे वा** नटे यथा तथाऽस्ति ।

**अमरेष्विव देवेन्द्रो मनुष्येषु धनञ्जयः ।**
**एकोऽस्माननुयात्येष**[३] **अन्यो लोके धनञ्जयात् ॥ ४२ ॥**

**एकोऽस्माननुयात्येष** इत्यत्र पृष्ठतो गन्तुरर्जुनस्य धैर्योद्रेकं दृष्ट्वा, तस्य शिखां गृहीत्वा युद्धायायास्यतीति भावेन अस्माननुयातीत्युक्तम् ।

---

१. M; BORI पृ. १६३ **'किं विचारेण वः'** इति कुं. पाठः ।

२. **'तदेवैतच्छिरोग्रीवं'** इति कुं. पाठः ।

३. T,$G_2$, $M_{1-3}$; BORI पृ. १६३ **'एकः कोऽस्मानुपायायादन्यो'** इति कुं. पाठः ।

उत्तरः सारथिं कृत्वा निर्यातो नगराद्बहिः ।
[१] स नो मनो ध्वजान् दृष्ट्वा भीत एष पलायति ॥ ४६ ॥

**स नो मनो ध्वजान्** इत्यत्र नः **मनः** धैर्ययुक्तं मनः, ध्वजांश्च दृष्ट्वेति सम्बन्धः ।

**वैशम्पायन उवाच –**

इति स्म कुरवः सर्वे विमृशन्तः पृथक् पृथक् ।
न च व्यवसितुं वीरा अर्जुनं शक्नुवन्ति ते ॥ ४८ ॥

**इति स्म** वक्ष्यमाणप्रकारेण ।

दृढवेधी महासत्त्वः शक्रतुल्यपराक्रमः ।
अद्यागच्छति चेद्योद्धुं सर्वं संशयितं बलम् ॥ ५२ ॥

**संशयितं बलम्** इत्यत्र **संशयितं** संशयोपेतम् ।

यदि नोत्सहसे योद्धुं शत्रुभिः शत्रुकर्शन ।
[२] सङ्गच्छामि पदान्यस्य न स भीतः पलायति ॥ ७४ ॥

**सङ्गच्छामि पदान्यस्य** इत्यत्र यः स उत्तरः भीतः पलायति अस्य पदानि **न सङ्गच्छामि** नानुसरामि ।

[३] सः अर्जुनः उत्तरं सारथिं कृत्वा स च स्वयं च समायाताम् ।

॥ इति षट्त्रिंशोऽध्यायः ॥

---

१. **'स नो मन्ये ध्वजम्'** इति कुं. पाठः ।

२. $T_2$, $G_{1,3}$,M; BORI पृ. १६५; **'एहि मे त्वं हयान्यच्छ युध्यमानस्य शत्रुभिः'** इति कुं. पाठः ।

३. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

## ।। अथ सप्तत्रिंशोऽध्यायः ।।

**तानवेक्ष्य[१] महोत्पातानुत्पातानपि चाद्भुतान् ।**
**गुरुः शस्त्रभृतां श्रेष्ठो भारद्वाजोऽभ्यभाषत ।। ३ ।।**

**तानवेक्ष्य महोत्पातान्** इत्यत्र **महोत्पातान्** उल्कापातादीन्, **उत्पातान्** गोमायुरोदनादीन् । **तान्** स्वसैनिकान् ।

**शिवाश्च विनदन्त्येता दीप्तायां दिशि दक्षिणाः[२] ।**
**हयाश्चाश्रूणि मुञ्चन्ति ध्वजाः कम्पन्त्यकम्पिताः ।। ६ ।।**

**दक्षिणाः** दक्षिणदिक्स्थाः ।

**यादृशान्यत्र दृश्यन्ते रूपाणि विविधानि च ।**
**एते[३] भयं च तिष्ठन्ति युद्धं स्यात्समुपस्थितम् ।। ७ ।।**

**एते भयं च तिष्ठन्ति** इत्यत्र **एते** उत्पाताः भयं यथा भवति तथा ।

**नदीज लङ्केशवनारिकेतुः नगाह्वयो नाम नगारिसूनुः ।**
**गत्या सुरेशः क्वचिदङ्गनेव गुरुर्बभाषे वचनं तदानीम् ।।११।।**

**नदीजेति** श्लोके हे **नदीज** भीष्म अयं **लङ्केशवनारिकेतुः लङ्केश-वनारिर्हनूमान्** स एव केतौ यस्य, **नगः** अर्जुनवृक्षः तद्वदाह्वयो यस्य, **नगानां** पर्वतानां **अरिः** इन्द्रः तस्य सूनुः, **गत्या** पादविन्यासेन सुरेश इव, **क्वचित्** शिरोभागे अङ्गनेव वेणीधारणादिना ।

---

१. **'तानवेक्ष्य हतोत्साहानुत्पातानपि'** इति कुं. पाठः । **कुं ४० अध्यायः ।**
२. $D_4$; BORI पृ. १६६; **'दारुणाः'** इति कुं. पाठः ।
३. **'यत्ता भवन्तस्तिष्ठन्तु'** इति कुं. पाठः ।

**अतीतं चक्रमस्माकं विषयान्तरमागताः ।**
**अतीतः समयश्चोक्त अस्माभिर्यः सभातले ।**
**न भयं शत्रुतः कार्यं शङ्कां त्यज नरर्षभ ॥ १३ ॥**

**अतीतं चक्रमस्माकम्** इत्यत्र **अस्माकं चक्रं** अस्मत्सम्बन्धि चक्रं चक्रवत्पुनर्वनवासाय परिवर्तनम् । **समयः** त्रयोदशवर्षात्मकः कालः । **विषयान्तरं** अज्ञातवासात् अन्यं ज्ञातवासाख्यविषयम् । **शत्रुतः** पाण्डव-शत्रोर्दुर्योधनात् **भयं** ज्ञाते सति पुनर्वनवासो भविष्यतीति भीतिः ।

**सदा भवान्फल्गुनस्य गुणानस्मासु कत्थसे ।**
**न चार्जुनः किलापूर्णो[1] मम दुर्योधनस्य च ॥ २९ ॥**

दुर्योधनस्य मम च अपूर्णो न किलेति योजना ।

**वैशम्पायन उवाच –**

**तस्मिन्वदति तां वाचं धार्तराष्ट्रे परन्तपे ।**
**भीष्मो द्रोणः कृपो द्रौणिः पौरुषं तदपूजयन् ॥ ३२ ॥**

**भीष्मो द्रोण** इत्यत्र भीष्मो द्रोण इति द्वौ कृपो द्रौणिश्चेति द्वौ **पौरुषं** दुर्योधनपराक्रमम् **अवमर्शताम्** अवामर्शतां विचारितवन्तौ ।

**[2]अनेन धनुषा चेह सोढुं शक्ष्यन्ति मे बलम् ।**
**नालं भारं गुरुं भेत्तुं कुञ्जरं वा प्रमर्दितुम् ॥ ३५ ॥**

**अनेन धनुषा** इत्यत्र **अनेन** त्वदीयेन, **गुरुं भारं** सेनाभारम् ।

---

१. **'कलापूर्णो'** इति कुं. पाठः ।
२. **'नेमानीष्वासनानीह'** इति कुं. पाठः ।

**नैभिः काममहं कर्तुं कर्म वैजयिकं त्विह ।**
**अतिसूक्ष्माणि ह्रस्वानि सर्वाणि च मृदूनि च ॥**[१]

**नैभिः कामम्** इत्यत्र **एभिः** त्वदीयैरायुधैः ।

**तस्माद् भूमिंजयारुह्य शमीमेतां पलाशिनीम् ।**
[२]**अस्माभिः पाण्डुपुत्राणां धनूंषि निहितान्युत ॥ ३८ ॥**

**पलाशिनीं** पत्रवतीम् । **अस्माभिः पाण्डुपुत्राणाम्** इत्यस्य निविष्टानीति अन्तर्णीतणिजन्तेन वक्ष्यमाणपदेन सम्बन्धः ।

**तादृशान्येव सर्वाणि** [३]**दर्शनानि दृढानि च ।**
**युधिष्ठिरस्य भीमस्य बीभत्सोर्यमयोस्तथा ॥ ४३ ॥**

दृश्यन्त इति व्युत्पत्त्या **दर्शनानि** दर्शनीयानि ।

[४]**गुरु चैतत्** इत्यत्र गुरु च गुर्वपि **एतत्** अस्त्रानयनाख्यं कार्यम् ।

**॥ इति सप्तत्रिंशोऽध्यायः ॥**

## ॥ अथ अष्टत्रिंशोऽध्यायः ॥

[५]**कस्येमे क्षुरनाराचा सहस्रं** [६]**लोमवाहिनः ।**
[७]**प्रत्यक्तास्तीक्ष्णतुण्डाग्रा उपासङ्गे हिरण्मये ॥ ११ ॥**

---

१. BORI पृ. १६८ ; २. **'अस्यां हि पाण्डुपुत्राणाम्'** इति कुं. पाठः ।
३. **'बलवन्ति'** इति कुं. पाठः । ; ४. अत्र श्लोकः मुद्रितकोशेषु नोपलभ्यते ।
५. कुं ४१ अध्यायः ।; ६. $T_2$; BORI पृ. १७२; **'लोमवापिन'** कुं. पाठः ।
७. **'प्रक्षिप्ताः'** इति कुं. पाठः ।

**कस्येम** इत्यत्र **लोमवाहिनः** पुङ्खे पत्ररूपपक्षिरोमधराः **प्रत्यक्ताः** प्रत्येकं तैलार्द्राः, **उपासङ्गे** 'तूणोपासङ्गतूणीरनिषङ्गा'[१] इत्यमरः, तूणीरे ।

**वैयाघ्रकोशः कस्यायं [२]दिव्यशाखो महाप्रभः ।**
**[३]कस्यायमसिरावासः पञ्चशार्दूललक्षणाः ॥ १९ ॥**

**दिव्यशाखो महाप्रभ** इत्यत्र **दिव्यशाखः** दिव्यशाखारूपः इति दण्डस्य विशेषणम् । **कस्यायमसिरावास** इत्यत्र **आवासः** आ समन्तात् कोशे अच्छादनं यस्य सोऽयमावासः ।

**प्रमाणवर्णयुक्तश्च कस्य खड्गो महानयम् ।**
**एतेन प्रतिविद्धः [४]सञ्जीवेत्कश्च न कुञ्जरः ॥ २० ॥**

**जीवेत् कश्च न कुञ्जर** इत्यत्र **कश्च** कोऽपि ।

॥ इति अष्टत्रिंशोऽध्यायः ॥

## ॥ अथ एकोनचत्वारिंशोऽध्यायः ॥

**[५]येन देवासुरान् पार्थः सर्वान् विषहते रणे ।**
**एतद्वर्षसहस्रं तु ब्रह्मा पूर्वमधारयत् ॥ ५ ॥**
**[६]ततोऽनन्तरमेवाथ प्रजापतिरधारयत् ।**

**प्रजापतिरधारयत्** इत्यत्र **प्रजापतिः** स्वायम्भुवमनुः ।

---

१. अ.को. २-८-८८ ; २. **'दिव्यः शङ्खो महाप्रभः'** इति कुं. पाठः ।
३. $G_2$,$M_{1.4.5}$; BORI पृ. १७२; **'कस्यार्थमसयश्चैते'** इति कुं. पाठः ।
४. S; BORI पृ. १७२; **'सञ्जीवेत्कश्चिन्न कुञ्जरः'** इति कुं. पाठः ।
५. कुं ४२ अध्यायः ।; ६. BORI पृ. १७३

[1]विपत्त्रा भीमसेनस्य गिरीणामपि दारणाः ।
सुप्रभाः सुमहाकायास्तीक्ष्णाग्राः सुतरां दृढाः ॥ १५ ॥

**विपत्त्रा भीमसेनस्य** इत्यत्र विपदस्त्रायन्तीति **विपत्त्राः** ।

यस्त्वयं पार्षते कोशे निक्षिप्तो रुचिरत्सरुः ।
नकुलस्यैष निस्त्रिंशो वैश्वानरसमप्रभः ॥ २३ ॥

**रुचिरत्सरुः** इत्यत्र 'त्सरुः खड्गादिमुष्टौ स्यात्'[2] इत्यभिधानात् **त्सरुः** खड्गस्य आदौ मुष्टिग्रहणप्रदेशो यस्य ।

**वैशम्पायन उवाच –**

भेदतो ह्यर्जुनस्तूर्णं कथयामास तत्त्वतः ।
आयुधानि [3]कलापानि निस्त्रिंशांश्चातुलप्रभान् ॥ २५ ॥

**आयुधानि कलापानि** इत्यत्र 'कलापो भूषणे बर्हे तूणीरे संहतेऽपि च'[4] इत्यमरः, **कलापानि** तूणीरान् ।

॥ इति एकोनचत्वारिंशोऽध्यायः ॥

## ॥ अथ चत्वारिंशोऽध्यायः ॥

[5]वैराटे शृणु तानि त्वं यानि पूर्वं श्रुतानि ते ।
ईशानो विदधे देवः त्रिदिवस्येश्वरो दिवः ॥ २० ॥

**त्रिदिवस्येश्वरो दिव** इत्यत्र 'द्योदिवौ द्वे स्त्रियामभ्रम्'[6] इत्यभिधानात् **दिवः** अन्तरिक्षलोकस्य ।

---

१. 'त्रिपाठा' इति कुं. पाठः ।; २. अ.को. २-८-९०
३. 'कलापांश्च' इति कुं. पाठः ।; ४. अ.को. ३-३-१२९
५. कुं ४३ अध्यायः । ; ६. अ.को. १-१-६

**न कुर्यां कर्म बीभत्सं युध्यमानः कदाचन।**
**तेन देवमनुष्येषु बीभत्सुरिति मां विदुः ॥ ३३ ॥**

**न कुर्यां कर्म बीभत्सम्** इत्यत्र बीभत्सामेव बीभत्सयतीति कृत्वा बीभत्सुरिति भावः।

**उत्तराभ्यां तु पूर्वाभ्यां फल्गुनीभ्यामहं दिवा।**
**जातो हिमवतः पृष्ठे तेन मां फल्गुनं विदुः ॥ ३४ ॥**

**उत्तराभ्यां तु पूर्वाभ्याम्** इत्यत्र **फल्गुनीभ्यां** फल्गुनीशब्दवाच्याभ्यां, **पूर्वाभ्यां** पूर्वानक्षत्रस्य द्विताराभ्यां, **उत्तराभ्यां** उत्तरानक्षत्रस्य द्विताराभ्यां चेति क्रमेण अह्नि निशि च युक्ता या पौर्णमासी सा फल्गुनमासस्य आरम्भदिनम्, तत्रोत्पन्नत्वात् फल्गुन इति भावः।

**यो ममाङ्गे व्रणं कुर्याद्भ्रातुर्ज्येष्ठस्य पश्यतः।**
**युधिष्ठिरस्य रुधिरं दर्शयेद्वा कदाचन ॥ ३५ ॥**

**यो ममाङ्गे व्रणं कुर्यात्** इत्यत्र मम अङ्गे, मम पश्यतः सतः ज्येष्ठस्याङ्गे च यः व्रणं कुर्यादिति सम्बन्धः।

**यास्यामि[१] तैरहं सर्वैर्न मे तेभ्यः पराभवः।**
**तेन देवमनुष्येषु जिष्णुर्नामासि विश्रुतः ॥ ३६ ॥**

**यास्यामि तैः** इत्यत्र **यास्यामि** युद्धार्थं यास्यामि।

**मूर्च्छया पतितं भूमौ[२] सागरोपमसत्तमौ।**
**दृष्ट्वा तौ वरदौ देवौ सञ्ज्ञां लब्ध्वोत्थितः पुनः ॥ ४० ॥**

---

१. **'योत्स्यामि'** इति कुं. पाठः। ; २. **'भूमावागतौ देवसत्तमौ'** इति कुं. पाठः

**सागरोपमसत्तमौ** इत्यत्र सागरोपमौ च तौ सत्तमौ च सागरोपम-सत्तमौ ।

॥ इति चत्वारिंशोऽध्यायः ॥

## ॥ अथ एकचत्वारिंशोऽध्यायः ॥

**एतान्[१] सर्वानुपासङ्गान् क्षिप्रं नध्नीहि[२] वै रथे ।**
**एकं चाहर निस्त्रिंशं जातरूपपरिष्कृतम् ॥ १२ ॥**

**क्षिप्रं नध्नीहि वै रथ** इत्यत्र 'नह बन्धने' इति धातोः सन्नद्धं कुरु ।

**सङ्कल्पगाढपरिखं[३] बाहुप्राकारतोरणम् ।**
**त्रिदण्डतूणसम्बाधं नैकध्वजसमाकुलम् ॥ १४ ॥**

**सङ्कल्पगाढपरिखम्** इत्यत्र सम्यक्कल्पः कल्पना यस्याः सा सङ्कल्पा गाढपरिखा यस्मिन्, **त्रिदण्डतूणसम्बाधं** त्रिमानदण्डप्रमाणाः त्रिदण्डाः तूणाः स्थूणाः तेषां सम्बाधा यस्मिन् ।

**ज्याक्षेपनिनदारावं नेमीनिनददुन्दुभि ।**
**शरजालवितानाढ्यमाक्ष्वेडितमहास्वनम् ।**
**नगरं ते मया गुप्तं रथोपस्थं भविष्यति ॥ १५ ॥**

**ज्याक्षेपनिनदारावं** ज्याक्षेपनिनदैः सह आरावो वादित्रध्वनिर्यस्मिन्, **नेमीनिनददुन्दुभि** नेमीनिनदैः सह दुन्दुभयो यस्मिन्, शरैः **जालैर्गवाक्षैः वितानैः** उल्लोचैश्च आढ्यम् ।

---

१. कुं ४४ अध्यायः । ; २. **'बध्नीहि मे'** इति कुं. पाठः ।
३. **'सङ्कल्पगाधपरिघं'** इति कुं. पाठः ।

**नास्मि क्लीबो महाबाहो परवान् धर्मसंयुतः ।**
**उर्वशीशापसम्भूतं क्लैब्यं समुपसंस्थितम् ॥ २३ ॥**

**परवान्** नाथवान् ।

**यस्य यातो[1] न पश्यन्ति भूमौ क्षिप्तं पदम्पदम् ।**
**दक्षिणां यो धुरं वोढा सुग्रीवेण समो हयः ॥ ३५ ॥**

यस्य यातो **न पश्यन्ति** इत्यत्र **यातः** गच्छतः **यस्य** अश्वस्य ।

**ततो विमुच्य बाहुभ्यां शङ्खचूडानि पाण्डवः ।**
**तौ च दुन्दुभिसन्नादौ प्रतिबध्य तलावुभौ ॥ ४१ ॥**

**ततो विमुच्य बाहुभ्याम्** इत्यत्र **विमुच्य** शवाकारचर्मणो विमुच्य ।

**॥ इति एकचत्वारिंशोऽध्यायः ॥**

## ॥ अथ द्विचत्वारिंशोऽध्यायः ॥

**शङ्खशब्देन[2] पार्थस्य मुखेनाश्वासयन्[3] क्षितौ ।**
**उत्तरश्चापि संत्रस्थो रथोपस्थ उपाविशत् ॥ १३ ॥**

**मुखेनाश्वासयन् क्षितौ** इत्यत्र **आश्वासयन्** दीर्घश्वासममुञ्चन् । क्षितौ विद्यमानाः प्राणिनः ।

**॥ इति द्विचत्वारिंशोऽध्यायः ॥**

---

१. T,G, $M_{3-5}$; BORI पृ. १८२; **'यस्य यातेन'** इति कुं. पाठः ।
२. कुं ३५ अध्यायः ।
३. **'मुखेनाश्वाः पतन् क्षितौ'** इति कुं. पाठः ।

## ।। अथ त्रिचत्वारिंशोऽध्यायः ।।

[१] **औत्पातिकमिदं राजन् निमित्तं भवतीह नः ।**
**न हि पश्यामि विजयं सैन्येऽस्माकं परन्तप** ।। ३ ।।

**निमित्तं** दुर्निमित्तम् ।

**यथा मेघस्य निनदो [२] गम्भीरः स्थूणमायतः ।**
**श्रूयते रथनिर्घोषो नायमन्यो धनञ्जयात्** ।। १३ ।।

**गम्भीरः स्थूणमायत** इत्यत्र स्थूणा यथा भवति तथा **स्थूणम्** ।

।। इति त्रिचत्वारिंशोऽध्यायः ।।

## ।। अथ चतुष्चत्वारिंशोऽध्यायः ।।

[३] **ते वा गाव नयिष्यन्ति यदि वा स्युः पराजिताः ।**
**अस्मान्वाऽप्यतिसन्धाय कुर्युर्मात्स्येन सङ्गतिम्** ।। १४ ।।

**ते वा गाव** इत्यत्र **गावः** गाः ।

**अथवा तान् उपादाय मात्स्यो जानपदैः सह ।**
**सर्वथा सेनया सार्धमस्मानेष युयुत्सति** ।। १५ ।।

**अथवा तान्** इत्यत्र **तान्** पाण्डवान् ।

[४] **अनाच्छिन्ने पुनर्द्रव्येऽस्माकं शक्रेण वज्रिणा ।**
**यमेन वाऽपि सङ्ग्रामे को हास्तिनपुरं व्रजेत्** ।। २० ।।

---

१. कुं ४६ अध्यायः । ; २. **'गम्भीरस्तूर्णमायतः'** इति कुं. पाठः ।
३. BORI पृ. १९०; **'ते वा गाश्च'** इति कुं. पाठः । कुं ४७ अध्यायः ।
४. S,G1omit; BORI पृ. १९१; **'अनाच्छिन्ने धनेऽस्माकमथ'** इति कुं. पाठः

**अनाच्छिन्ने पुन** इत्यत्र **द्रव्ये** गोधनाख्यद्रव्ये **अनाच्छिन्ने** अस्माभिरनपहृते सति ।

**आचार्यं पृष्ठतः कृत्वा तथा नीतिर्विधीयताम् ।**
**[1]जानामि विजितं तेषामतस्त्रासयतीव नः ॥ २२ ॥**

**तथा नीतिः** इत्यत्र **तथा** अश्वपदातीनां प्राणसंशयमरणादिकं यथा न भवति तथा । **जानामि विजितम्** इत्यत्र **तेषां** भीष्मादीनां **विजितं** विजयम् ।

**बहून्याश्चर्यरूपाणि कुर्वते जनसंसदि ।**
**[2]इष्टास्ते चापसन्धाने पण्डितास्तत्र शोभनाः ॥ ३२ ॥**

**इष्टास्त** इत्यत्र **चापसन्धाने** धनुर्विद्याभ्यासकाले ।

**॥ इति चतुश्चत्वारिंशोऽध्यायः ॥**

## ॥ अथ पञ्चचत्वारिंशोऽध्यायः ॥

**[3]बर्हिबर्हिणराजानां बर्हिणां बर्हिणामिव ।**
**पततां पततां घोषः पततां पततामिव ॥ १८ ॥**

**बर्हिबर्हिणराजानां बर्हिणां बर्हिणामिव । पततां पततां घोषः पततां पततामिव** इत्यत्र **बर्हिणां बर्हिणामिव** एकैकस्य पृष्ठे पृष्ठे गच्छतां मयूराणां मयूराणामिव **बर्हिबर्हिणराजानां** बर्हिणः मयूरस्य बर्हिणैः शरमूले पत्ररूपेण स्थितमयूरपत्रैः **राजानां** राजमानानां, 'राजृ

१. **'जानामि च मतं तेषां'** इति कुं. पाठः ।
२. **'इष्वस्त्रे'** इति कुं. पाठः । ; ३. **कुं ४८ अध्यायः ।**

दीप्तौ' इति धातोः कर्त्रर्थे पचाद्यचि कृते राजानामिति शब्दनिष्पत्ति-र्भवति । **पततां पततां** एकैकस्य शरस्य पृष्ठे पृष्ठे निपततां निपततां शराणां घोषः **पततां** मालारूपेण निपतमानानां पततां [1] 'पतत् पतङ्गः पतगः पत्री' इत्यभिधानात् पक्षिणां घोष इव अखिलैः श्रूयतामिति योग्यक्रियया सम्बन्धः । यद्वा **बर्हिणां** बर्हवताम् उत्पन्नबर्हाणामित्यर्थः । **बर्हिणां** मयूराणामिव **बर्हिबर्हिणराजानां** पततां पततां पुङ्खानुपुङ्खतया क्षणे क्षणे पततां **पततां** शराणां घोषः पततां पक्षिणां घोष इव **पततां** दिशि दिशि निपततां इति लोडन्तक्रिया । सर्वैः श्रूयतामिति भावः ।

**॥ इति पञ्चचत्वारिंशोऽध्यायः ॥**

## ॥ अथ षट्चत्वारिंशोऽध्यायः ॥

[2] **सदैव तव राधेय युद्धे क्रूरतरा मतिः ।**
**नार्थानां प्रकृतिं वेत्सि नानुबन्धमवेक्षसे ॥ २ ॥**

**नानुबन्धमवेक्षस** इत्यत्र **अनुबन्धं** युद्धायानुकूलकालसम्बन्धम् ।

**नया हि बहवः सन्ति शास्त्राण्याश्रित्य चिन्तिताः ।**
**तेषां युद्धं सुपापिष्ठं वेदयन्ति पुराविदः ॥ ३ ॥**

**नया हि बहव** इत्यत्र **नयाः** सामदानाद्याः सन्धिविग्रहाद्याश्च । **तेषां** नयानां मध्ये **युद्धं** प्रागेव युद्धं **सुपापिष्ठं** अतिशयेन पापम् ।

**भारं हि रथकारस्य न व्यवस्यन्ति पण्डिताः ।**
**परिचिन्त्य तु पार्थेन सन्निपातो न नः क्षमः ॥ ६ ॥**

---

१. अ.को. २-५-३३ । २. कुं ४९ अध्यायः ।

**भारं हि रथकारस्य** इत्यत्र 'तक्षा तु वर्धकिस्त्वष्टा रथकारश्च काष्ठ-कृत्'[१] इत्यमरः । **रथकारस्य** कर्मकारस्य **भारं** मनसि निहितकार्य-भारम् ।

**एको हि शत्रून् समरे समर्थः प्रतिबाधितुम् ।**
**एकः कुरूनभ्यरक्षदेकश्चाग्निमतर्पयत्** ॥ ७ ॥

**एकः कुरून्** इत्यत्र **कुरून्** दिग्विजयकाले उत्तरकुरून् ।

**एकश्च पञ्च वर्षाणि शक्रादस्त्राण्यशिक्षत ।**
[२]**एकः संयमनीं जित्वा कुरुणामकरोद्यशः** ॥९-१०॥

**एकः संयमनीम्** इत्यत्र **संयमनीं** यमपुरीम् ।

**आत्मानं यः समाबध्य कण्ठे बद्ध्वा तथा शिलाम् ।**
[३]**समुद्रं प्रतरन् दोर्भ्यां तत्र किं कर्ण पौरुषम्** ॥ १८ ॥

**समुद्रं प्रतरन्** इत्यत्र प्रतरन्निव यस्त्वं वर्तसे हे कर्ण **तत्र** त्वयि किं पौरुषमस्ति । न किञ्चिदपीत्यर्थः ।

**अस्माभिरेव निकृतो वर्षाणीह त्रयोदश ।**
**सिंहः पाशविनिर्मुक्तो न नः शेषं करिष्यति** ॥ २० ॥

**अस्माभिरेव निकृत** इत्यत्र निकृत्या कपटेन जितः ।

॥ इति षट्चत्वारिंशोऽध्यायः ॥

---

१. अ.को. २-१०-९
२. $D_4$,$M_5$; BORI पृ. ९९५; **'एकः सपत्नान् जित्वा तु'** इति कुं. पाठः ।
३. **'समुद्रं प्रतरेत् दोर्भ्याम्'** इति कुं. पाठः ।

## ।। अथ सप्तचत्वारिंशोऽध्यायः ।।

**प्राप्य[१] द्यूतेन को राज्यं क्षत्रियः स्तोतुमर्हसि ।**
**यथावृत्तं[२] सरूपेण यथान्यः प्राकृतो जनः ।। २१ ।।**

**तथाऽधिगम्य वित्तानि को विकत्थेद्विचक्षणः ।**
**न[३] चानृते योगविधिं चरन्वैतण्डिको यथा ।। २२ ।।**

**यथावृत्तं सरूपेण** इत्यत्र अन्यः **प्राकृतः** कृपणो जनः **यथावृत्तं** स्वनीचवर्तनमनतिक्रम्य **सरूपेण** तस्य वृत्तस्य समानेन नानाविकृतरूपेण धनमधिकमिच्छति । तथा तेन नीचजनयोग्यद्यूतेन अनृते योगविधिं उपायत इति कल्पनां **वैतण्डिकः** वितण्डावादी ।

**कुलमेषां[४] महत्कृत्तं सारार्थी चन्दनं यथा ।**
**क्षुद्रं कर्म समास्थाय तत्र किं विदुरोऽब्रवीत् ।। २६ ।।**

**कुलमेषाम्** इत्यत्र एषां पुण्यकर्मणां कुरूणाम् ।

**नाक्षान्क्षिपति गाण्डीवं न कृतं द्वापरं न च ।**
**ज्वलतो निशितान्बाणांस्तांस्तान्क्षिपति गाण्डिवम् ।। ३७ ।।**

**न कृतं द्वापरं न च** इत्यत्र **कृतं** भवद्द्यूतकर्मणः प्रतिकर्म न क्षिपति शकुनिं भवच्छकुनिवत् कश्चन शकुनिं च न क्षिपति ।

।। इति सप्तचत्वारिंशोऽध्यायः ।।

---

१. कुं ५० अध्यायः ।
२. T, BORI पृ. १९९; '**तथा नृशंसरूपोऽयं धार्तराष्ट्रश्च निर्घृणः**'कुं. पाठः ।
३. '**निकृत्या वञ्चनायोगैः चरन्वैतंसिको यथा**' इति कुं. पाठः ।
४. '**मूलमेषाम्**' इति कुं. पाठः ।

## ॥ अथ अष्टचत्वारिंशोऽध्यायः ॥

**[1] धार्तराष्ट्रोऽपि दुर्बुद्धिः पश्यन्नपि धनञ्जयम् ।**
**नैव पश्यति नाघ्राति मन्दः क्रोधवशं गतः ॥ ६ ॥**

**नैव पश्यति नाघ्राति** इत्यत्र **नाघ्राति** अर्जुनकीर्तिसौरभं नाघ्राति ।

**आचार्य एव क्षमतां शान्तिरत्र विधीयताम् ।**
**[2] पश्यतो हि गुरोर्मत्स्यान् निवृत्तं कोपकारितम् ॥ १८ ॥**

**पश्यतो हि गुरोः** इत्यत्र **मत्स्यान्** प्रतिभटतया उपस्थितान् मत्स्यान् पश्यतः गुरोः कोपः कारितो येन तत् **कोपकारितं** कर्णे कोपकरणमित्यर्थः, निवृत्तम् । युद्धार्थं वैरिषु सन्नद्धेषु सत्सु अन्तःकलहस्य नायं काल इति भावः ।

**उक्तं दुर्योधनेनापि पुरस्ताद्वाक्यमीदृशम् ।**
**तदनुस्मृत्य गाङ्गेय यथावद्वक्तुमर्हसि ॥ २४ ॥**

**पुरस्ताद्वाक्यमीदृशम्** इत्यत्र **ईदृशम्** अज्ञातवासकालः पूर्णो नाभूदितीदृशम् ।

॥ इति **अष्टचत्वारिंशोऽध्यायः** ॥

## ॥ अथ एकोनपञ्चाशोऽध्यायः ॥

**[3] तेषां कालातिरेकेण ज्योतिषां च व्यतिक्रमात् ।**
**पञ्चमे पञ्चमे वर्षे द्वौ मासावधिमासकौ ॥ ३ ॥**

---

१. कुं ५१ अध्यायः । २. 'अभिद्यमाने तु गुरोः निवृत्तं रोषकारितम्' कुं. पाठः
३. कु ५२ अध्यायः ।

**एषामभ्यधिका मासाः पञ्च च द्वादश क्षपाः ।**
**त्रयोदशानां वर्षाणामिति मे वर्तते मतिः ॥ ४ ॥**

**तेषां कालातिरेकेण** इत्यत्र **तेषां ज्योतिषां** सूर्यादिज्योतिषां **व्यतिक्रमात्** त्रिंशद्दिनैः राशितो राश्यन्तरगमनमिति सामान्यन्यायमतिक्रम्य पुनर्दिनद्वयानन्तरं राश्यन्तरे यत्सङ्क्रमणं सोऽयं व्यतिक्रमः, तस्मात् **कालातिरेकेण** कालस्याभिवृद्ध्या पञ्चमे पञ्चमे वर्षे द्वौ मासौ । सार्धवर्षद्वये एकोऽधिमासः, पुनः सार्धवर्षद्वये अपरोऽधिमास इति द्वौ मासावधिमासकौ । तेषां लोकरीत्या अधिकमासैः सह त्रयोदशानां वर्षाणां पञ्च अधिमासाः, दशवर्षाणां चत्वारः, पुनः सार्धवर्षद्वयस्य एको मासः, एवं सार्धद्वादशवर्षाणां पञ्च अधिकमासाः । पुनरुर्वरितषण्मासानां द्वादश क्षपाः । क्षपापदेन त्रिंशद्घटिकात्मकमर्धदिनमुच्यते । सम्पूर्णाः षड् दिवसा इति यावत् । तस्मात् आपातदर्शिनः त्रयोदशवर्षाणां षड्दिनाधिकपञ्चमासैर्न्यूनतामाशङ्कन्ते । विवेकिनस्तु त्रयोदशवर्षान्तर्गतषड्दिनाधिकपञ्चमासान् बहिष्कृत्य त्रिंशत्त्रिंशद्दिनात्मकद्वादशद्वादशमासानां एकैकः संवत्सर इति षड्दिनाधिकपञ्चमासन्यूनत्रयोदशवर्षाण्यपि सम्पूर्णत्रयोदशवर्षाणि वर्णयन्ति । देवपितृकार्यार्थं साधिकमाससमवत्सरसानुसरणेऽपि स्वोक्तनियमरक्षणाय पौर्णमासीतः पौर्णमासीपर्यन्तमेको मास इति चान्द्रमासानुसरणेनैव कृतकृत्यत्वादिति भावः ।

**सर्वे पञ्च महात्मानः सर्वे धर्मार्थकोविदाः ।**
**येषां युधिष्ठिरो राजा कस्माद्धर्मे[१] पराययुः ॥ ७ ॥**

---

१. **'कस्माद्धर्मेऽपराङ्मुखः'** इति कुं. पाठः ।

**कस्माद्धर्मे पराययुः** इत्यत्र **पराययुः** पराजयं प्राप्नुयुः । जयिधातो-र्भूधातोश्च पराभवार्थकपरेत्युपसर्गयोगवत् व्यासानुशासनात् यातेरपि तस्योपसर्गस्य योगो द्रष्टव्यः ।

**[१] यश्चानृत इति ख्यायेत् स च गच्छेत्पराभवम् ।**
**वृणुयुर्मरणं पार्था नानृतत्वं कथञ्चन ॥ ११ ॥**

**यश्चानृत इति ख्यायेत्** इत्यत्र तावुभौ लोके स्त इति योग्यपदाध्या-हारेणान्वयः ।

**न हि पश्यामि सङ्ग्रामे कदाचिदपि कौरव ।**
**एकान्तसिद्धिं राजेन्द्र संप्राप्तश्च धनञ्जयः ॥ १५ ॥**

**एकान्तसिद्धिं** नियमेन कार्यसिद्धिम् ।

**[२] तस्माद्यद्दानचरितं कर्म वा धर्मसंहितम् ।**
**क्रियतामाशु राजेन्द्र सम्प्राप्तश्च धनञ्जयः ॥ १७ ॥**

**तस्माद्यद्दानचरितम्** इत्यत्र **दानचरितं** पाण्डवानामर्धराज्यप्रदानस्य **चरितं** आचरणं वा । **धर्मसंहितं** [३] क्षत्रधर्मेण सहितं **कर्म** युद्धकर्म वा ।

**वैशम्पायन उवाच –**

**[४] तद्वाक्यं न कृतं तेन द्रोणेनोक्तं महात्मना ।**
**तथाहि कृतवान् राजा कौरवाणामनन्तरम् ॥ २६ ॥**

---

१. K,$D_{4,8}$; BORI पृ. २१५; **'यश्चानृत इति ख्यातः'** इति कुं. पाठः ।
२. **'तस्माद्युद्धोपचरितं'** इति कुं. पाठः ।; ३. **क्षत्रिय** सो.मु.पा ।
४. **'तद्वाक्यं रुरुचे तेषां'** इति कुं. पाठः ।

**तद्वाक्यं न कृतं तेन** इत्यत्र **तद्वाक्यं** राज्यं देहीति पूर्वोक्तं वाक्यम् । **कौरवाणामनन्तरम्** इत्यत्र कौरवाणां राजा यत् युद्धकर्म कुरुष्वेत्यनन्तरं वाक्यं तथा कृतवान् हीति योजना ।

**[१] दिव्यगन्धं समादाय वायुस्तत्राभिगच्छति ।**
**[२] प्रकाशं त्रिदिवंः सर्वादर्शनीयमदृश्यत ॥ ११ ॥**

**प्रकाशं त्रिदिवः सर्वादर्शनीयम्** इत्यत्र **त्रिदिवः** स्वर्गस्य ।

**तत्र देवाः समारुह्य तं दिव्यं सर्वतः प्रथम् ।**
**अम्बरे विमलेऽतिष्ठन् प्रासादं [३] गामगामिनम् ॥ १२ ॥**

**प्रासादं गामगामिनम्** इत्यत्र यत्र देवानां **गामः** गमनं तत्र गच्छतीति **गामगामी** तम् ।

**॥ इति एकोनपञ्चाशोऽध्यायः ॥**

## ॥ अथ पञ्चाशोऽध्यायः ॥

**[४] ततोऽभ्यवादयत्पार्थो भीष्मं शान्तनवं कृपम् ।**
**द्वाभ्यां द्वाभ्यां तथाऽऽचार्यं द्रोणं प्रथमतः क्रमात् ॥ ८ ॥**

**द्वाभ्यां द्वाभ्यां तथाऽऽचार्यम्** इत्यत्र द्वाभ्यां द्वाभ्यां शराभ्याम् ।

**इमौ बाणावनुप्राप्तौ पादयोः प्रत्युपस्थितौ ।**
**[५] बन्धुराग्रनिपातौ मे चित्रपुङ्खावजिह्मगौ ॥ १६ ॥**

---

१. कुं. ५३ अध्यायः । ; २. **'आकाशं च दिशः'** इति कुं. पाठः ।
३. **'कामगामिनम्'** इति कुं. पाठः । ; ४. कुं ५४ अध्यायः ।
५. **'रथस्याग्रे निरवातौ मे '** इति कुं. पाठः ।

**बन्धुराग्रनिपातौ** इत्यत्र **बन्धुरौ** स्नेहबन्धनशीलौ **अग्रनिपातौ** ययोस्तौ ।

॥ इति पञ्चाशोऽध्यायः ॥

## ॥ अथ एकपञ्चाशोऽध्यायः ॥

**[१] परिक्षिप्य गवां यूथमत्र योत्स्ये सुयोधनम् ।**
**गच्छन्ति सत्वरा गावः सगोपाः परिमोचय ॥ २५ ॥**

**परिक्षिप्य गवां यूथम्** इत्यत्र **परिक्षिप्य** परितः परहस्तादपहृत्य ।

**[२] तेषां नैवाभियाने च नाभियाने भवन्मतिः ।**
**शीघ्रतामेव पार्थस्य पूजयन्तस्तु विस्मिताः ॥ ३३ ॥**

**तेषां नैवाभियाने च** इत्यत्र **अभियाने** पार्थं प्रत्यभिगमने, **नाभियाने** अभियानादन्यस्मिन् परावृत्य गमने ।

**चन्द्रावदातं सामुद्रं कुरुसैन्यभयङ्करम् ।**
**ततः शङ्खमुपाध्मासीद्द्विषतां रोमहर्षणम् ॥ ३४ ॥**

**सामुद्रं** समुद्रोत्पन्नम् ।

**ऊर्ध्वं पुच्छं विधून्वाना [३] रेभमाणाः समन्ततः ।**
**गावः सवत्साः संत्रस्ता निवृत्ता दक्षिणां दिशम् ॥ ३६ ॥**

---

१. कुं ५५ अध्यायः ।
२. **'तेषां नैवापयाने'** इति कुं. पाठः ।
३. BORI पृ. २११; **'हेपमाणाः समन्ततः'** इति कुं. पाठः ।

**रेभमाणाः समन्तत** इत्यत्र 'रिभु शब्दे' इति धातोः **रेभमाणाः** क्रन्दन्त्यः।

॥ इति एकपञ्चाशोऽध्यायः ॥

## ॥ अथ द्विपञ्चाशोऽध्यायः ॥

**ध्वजाग्रे[१] दृश्यते यत्र बालसूर्यसमप्रभा[२]।**
**दुर्जयः सर्वसैन्यानां देवैरपि सवासवैः ॥ १२ ॥**

**बालसूर्यसमप्रभा** इत्यत्र **बालस्य** सौवर्णसिंहपुच्छस्य **सूर्यसमप्रभा** सूर्यसमकान्तिः।

॥ इति द्विपञ्चाशोऽध्यायः ॥

## ॥ अथ त्रिपञ्चाशोऽध्यायः॥

**पश्यत्वाचार्यपुत्रो[३] मां अजुर्नेनापरं[४] सह।**
**युध्यमानं सुसंयुक्तं जयो वै मय्यवस्थितः ॥ ९ ॥**

**अर्जुनेनापरं सह** इत्यत्र अर्जुनेन सह **अपरम्** अन्यं सन्तम्।

**न रथानां न चाश्वानां न ध्वजानां न वर्मिणाम्।**
**अभिविद्धैः[५] शितैर्बाणैरासीद्व्यङ्गुलिरन्तरम् ॥ २३ ॥**

**अभिविद्धैः शितैर्बाणैः** इत्यत्र अतिशयेन **विद्धं** वेधो येभ्य-

---

१. कुं ५६ अध्यायः।; २. **'बालसूर्यसमप्रभम्'** इति कुं. पाठः।
३. कुं ५७ अध्यायः।; ४. **'मामर्जुनेनातिरंहसा'** इति कुं. पाठः।
५. **'अतिविद्धैः'** इति कुं. पाठः।

स्तैः, भावे क्तप्रत्यये कृते विद्धमिति वेधो लभ्यते । बाणैः रथानां अश्वादिभ्यः अनन्तरं **विद्धं** वेधो नासीत्; किन्तु युगपदेव । एवमुत्त-रत्रापि योजना ।

**दुर्गे विषमजाते वा स्थले निम्ने तथा क्षितौ ।**
**न च रुध्येद्गतिः तस्य रथस्य मनसो यथा** ॥ २९ ॥

**न च रुध्येद्गतिः** इत्यत्र **रोधं** प्रतिबन्धं न प्राप्नुयात् ।

**ये ह्यर्जुनबलत्रस्ताः परिपेतुर्दिशो दश ।**
**रथाङ्गदेशमुत्सृज्य[1] पार्थाच्छिन्नयुगा हयाः** ॥ ३१ ॥

**रथाङ्गदेशमुत्सृज्य** इत्यत्र **रथाङ्गदेशं** रथचक्रप्रदेशम् ।

**चक्षुर्नसि[2] विषाणेषु दन्तवेष्टेषु च द्विपान् ।**
**मर्मस्वन्येषु चाहत्य तथा निघ्नन् गजोत्तमाः** ॥ ३३ ॥

**चक्षुर्नसि विषाणेषु** इत्यत्र **चक्षुर्नसि** चक्षुर्नसोः । प्राण्यङ्गत्वात् द्वन्द्वैकवद्भावः ।

**खगयानाभिसंवीतैः[3] संविष्टैः खगमैरिव ।**
**अर्जुनस्य खमावव्रे लोहितप्रवणैः[4] खगैः** ॥ ४० ॥

**खगयानाभिसंवीतैः** इत्यत्र खगानां **यानानि** गमनसाधनानि पत्राणि यात्यनेनेति व्युत्पत्त्या यानपदस्य निष्पन्नत्वात्, तैः **संवीतैः**

---

१. $D_{n2}$, $D_{11.12}$; BORI पृ. ३२७; **'रथात्तं देशमुत्सृज्य'** इति कुं. पाठः ।
२. **'चक्षुर्नासाविषाणेषु'** इति कुं. पाठः ।
३. **'खगपत्राभिसंवीतैः खाविष्टैः'** इति कुं. पाठः।; ४. **'लोहितप्राणपैः'** कुं.पा.

सम्बद्धैरिति शराणां विशेषणम् । **संविष्टैः** वनं प्रविष्टैः **खगमैः** पक्षिभिरिव **लोहितेषु** रक्तेषु **प्रवणैः** नम्रैः **खगैः** खे गच्छन्तीति खगाः शराः तैः ।

**सकृतेऽवकृतं शेकुः रथमभ्यसितुं परे ।**[१]
**अनभ्यस्तः पुनस्तैर्हि रथः सोऽभिपपात तान् ॥ ४४ ॥**

**सकृतेऽवकृतं शेकुः** इत्यत्र **सकृते** कृतेन युद्धकर्मणा सहिते पार्थे सति **अवकृतं** स्वाधोभागे कृतं **रथम्** अर्जुनरथम् **अभ्यसितुम्,** अभितो निरसितुं परे न शेकुरिति योजना । तैः **अनभ्यस्तः** अभितोऽप्य-निराकृतः स रथः **अभिपपात** शत्रुसेनां प्रत्येव पपात ।

**तच्छरा द्विः शरीरेषु यथा च न ससञ्जिरे ।**[२]
**द्विधाऽनीकेषु बीभत्सोर्न ससज्ज रथस्तथा ॥ ४५ ॥**

**तच्छरा द्विः शरीरेषु** इत्यत्र **तच्छराः** पार्थशराः **शरीरेषु** वैरिशरीरेषु यथा **द्विः** द्विवारं न ससज्जिरे, तथा बीभत्सोः रथोऽपि **अनीकेषु** वैरि-सेनासु द्विधा न ससज्ज । एकवारं परावृत्य पुनर्वैरिसेनायां न सक्तो भवति । किन्तु पार्थशरवत् अनिवृत्त एव अग्रे अग्रे गच्छतीति भावः ।

**दिशोऽनुभ्रमतः सर्वा सव्यदक्षिणमस्यतः ।**
**सततं दृश्यते युद्धे सायकासनमण्डलम् ॥ ४९ ॥**

**सायकासनमण्डलम्** इत्यत्र सायकासनं शरासनं तस्य मण्डलं मण्डलाकारः सततं दृश्यते ।

---

१. **'सकृदेव न तं शेकुः कथमभ्यसितुं परे'** इति कुं. पाठः ।
२. **'तच्छरा द्विट् शरीरेषु'** इति कुं. पाठः ।

**ओषधीनां शिरांसीव कालपङ्क्तिसमन्वयात् ।**
**अवनेमुः कुरूणां हि शिरांस्यर्जुनजाद्भयात्** ॥ ५५ ॥

**कालपङ्क्तिसमन्वयात्** इत्यत्र कालपङ्क्तेः समन्वयात् बहुकालसम्बन्धाख्यपरिपाकात् ।

[१] **चकार चार्जुनीकत्वं द्विमुखान्रुषितानपि** ॥ ५६ ॥

**चकार चार्जुनीकत्वम्** इत्यत्र **अर्जुनीकत्वम्** अत्रार्जुनस्तत्रार्जुन इत्यर्जुनमयत्वमित्यर्थः ।

॥ इति त्रिपञ्चाशोऽध्यायः ॥

## ॥ अथ चतुष्पञ्चाशोऽध्यायः ॥

[२]
**तेषां धनुर्ज्याकृतनैकतन्त्रीं प्रासोपवीणां शरसङ्घकोणाम् ।**
**कराग्रयन्त्रां स्थिरचापदण्डां वीणामुपावादयदाशु पार्थः** ॥१४॥

**शरसङ्घकोणाम्** इत्यत्र 'कोणो वीणादिवादनम्'[३] इत्यभिधानात् **कोणः** वीणावादनशलाका ।

**ततः स विद्धो भरतर्षभेण बाणेन कायावरणातिगेन ।**
**गतासुराजौ निपपात राजन् नगो नगाग्रादिव वातरुग्णः** ॥१९॥

**गतासुराजौ निपपात** इत्यत्र **गतासुः** मूर्च्छां प्राप्तः विकर्णः ।

---

१. **'चकार चार्जुनः क्रोधाद्विमुखान्'** इति कुं. पाठः ।
२. कुं ५८ अध्यायः ।
३. अ.को. १-७-६

तयोरमोघान् सहतोः[1] शरौघान् अस्त्रज्ञयोरास महान्विमर्दः ।
राहुप्रमुक्ताविव चन्द्रसूर्यौ क्षणान्तरेणानुददर्श लोकः ॥३७॥

**सहतोः शरौघान्** इत्यत्र शरवघान् **सहतोः** सहमानयोः तयोः ।

अशेरतावृत्य महीं समग्रां पार्थेषुमार्गेषु[2] हता द्विपेन्द्राः ।
हिरण्यकक्ष्याः शरजालचित्रा यथा नगाः पावकजालनद्धाः ॥६८॥

**पार्थेषुमार्गेषु** इत्यत्र पार्थस्य इषूणां मार्गेष्वित्यर्थः ।

तं शत्रुसेनाङ्गनिबर्हणानि कर्माणि कुर्वाणममानुषाणि ।
वैकर्तनः पूर्वममृष्यमाणः समार्पयल्लक्ष्यमिवाशु पार्थम् ॥ ६९ ॥

**पूर्वममृष्यमाण** इत्यत्र **पूर्वं** पराभवम् ।

॥ इति चतुष्पञ्चाशोऽध्यायः ॥

## ॥ अथ पञ्चपञ्चाशोऽध्यायः ॥

वैशम्पायन उवाच –

[3]जितं वैकर्तनं दृष्ट्वा पार्थो वैराटिमब्रवीत् ।
स्थिरो भव त्वं सङ्ग्रामे जयोऽस्माकं नृपात्मज ॥ १ ॥

यावच्छङ्खमुपाध्यास्ये द्विषतां रोमहर्षणम् ।
अविक्लवमसम्भ्रान्तमव्यक्तहृदयेक्षणम् ॥ २ ॥

---

१. 'सृजतो शरौघान्' इति कुं. पाठः ।
२. 'पार्थेषुमार्गे निहता' इति कुं. पाठः ।
३. कुं ५९ अध्यायः ।

**अविक्लवम्** इत्यादि क्रियाविशेषणम् । यथा भवति तथा स्थिरो भवेति पूर्वेण सम्बन्धः ।

**आचार्यं प्रापयेदानीं ममोत्तर महारथम् ।**
**वीर्यं[1] च तस्य सङ्ग्राममद्भुतं मम पश्य च ॥ २४ ॥**

**अद्भुतं मम पश्य च** इत्यत्र अद्भुतं वीर्यं च पश्येत्यन्वयः ।

**एको[2] दीर्घ इवापाङ्गात् प्रदृश्यन्ते महाशराः ।**
**आकाशे समदृश्यन्त हंसानामिव पङ्क्तयः ॥ ६१ ॥**

**एको दीर्घ इवापाङ्गात्** इत्यत्र पुङ्खानुपुङ्खतया निरन्तरशरागमनात् दीर्घ एकः शर इव **अपाङ्गात्** द्रोणकटाक्षमनुसृत्य महाशराः प्रदृश्यन्ते इति योजना ।

**अभीक्ष्णं सन्दधानस्य बाणानुत्सृजतस्तथा ।**
**नान्तरं ददृशे किञ्चित् पार्थस्य[3] पततोऽपि च ॥ ८८ ॥**

**पार्थस्य पततोऽपि च** इत्यत्र **पततः** दिशि दिशि निपततः ।

**॥ इति पञ्चपञ्चाशोऽध्यायः ॥**

## ॥ अथ सप्तपञ्चाशोऽध्यायः ॥

**श्रुत्वा[4] गाण्डीवनिर्घोषं विष्फूर्जितमिवाशनेः ।**
**त्रस्तानि सर्वसैन्यानि व्यचलीयन्त[5] भागशः ॥ ४३ ॥**

---

१. **'अपरं पश्य सङ्ग्राममद्भुतं मम तस्य च'** इति कुं. पाठः ।
२. **'एको दीर्घ इवाभान्तः'** इति कुं. पाठः ।; ३. **'पार्थस्यापततोऽपि'** कुं.पाठः ।
४. कुं **६१ अध्यायः** ।; ५. **'व्यलीयन्त च'** इति कुं. पाठः ।

**व्यचलीयन्त भागश** इत्यत्र व्यलीयन्त चेति पदयोजना ।

**प्रावर्तयन्नदीं घोरां पिशाचगणसेविताम् ।**
**अपारामनवारां[1] च रक्तोदां सर्वतो वृताम्** ॥ ५८ ॥

**अपारामनवारां** च इत्यत्र 'पारावारे परार्वाची तीरे पात्रं (त) यदन्तरम्'[2] इत्यमरः । पारः परतीरं ततोऽन्यत्तीरमवारः तदुभयरहितमित्यर्थः ।

**अस्याददानस्य[3] शरान् सन्दधानस्य मुञ्चतः ।**
**विकर्षतश्च गाण्डीवं न किञ्चिद्ददृशेऽन्तरम्** ॥ ६२ ॥

**अस्याददानस्य शरान्** इत्यत्र 'असु निरसने' इति धातोः अस्य एकं शरं प्रयुज्य पुनः शरानाददानस्येति योजना ।

॥ इति सप्तपञ्चाशोऽध्यायः ॥

## ॥ अथ एकोनषष्टितमोऽध्यायः ॥

**अयं[4] जिष्णुरुदाहृत्य शितधारेण कार्मुकम् ।**
**न्यकृन्तद्गृध्रपत्रेण शातकुम्भपरिष्कृतम्** ॥ २३ ॥

**अयं जिष्णुरुदाहृत्य** इत्यत्र **उदाहृत्य** तूणीरादूर्ध्वमाहृत्य ।

॥ इति एकोनषष्टितमोऽध्यायः ॥

---

१. **'अपारामनिवारां च'** इति कुं. पाठः ।
२. अ.को. १-९-८
३. **'तस्याददानस्य'** इति कुं. पाठः ।
४. **'अथ जिष्णुरुदावृत्य'** इति कुं. पाठः । कुं अत्र ६३ अध्यायः ।

## ।। अथ षष्टितमोऽध्यायः ।।

[१] **बहुभिर्निशितैर्बाणैर्विविधैर्लोमवापिभिः ।**
[२] **दुर्द्रवाः प्रत्यवस्थाय प्रत्यविध्यन् धनञ्जयम्** ।। १२ ।।

**दुर्द्रवाः प्रत्यवस्थाय** इत्यत्र **दुर्द्रवाः** द्रवः द्रवणं पलायनं तद्रहिताः ।

**सर्वे शान्तिपरा योधाः स्वचित्तं नाभिजज्ञिरे ।**
**हस्तिनोऽश्वाश्च वित्रस्ता** [३] **व्यवधीयन्त सर्वशः** ।। १६ ।।

**व्यवधीयन्त सर्वश** इत्यत्र **व्यवधीयन्त** व्यवधानं प्राप्नुवन् ।

[४] **पुरा ह्येष न मे शब्दः साधीभवति पृष्ठतः** ।। २१ ।।

**पुरा ह्येष न मे शब्द** इत्यत्र पुरा युद्धात्पूर्वं **पृष्ठतः** भटानां पृष्ठतः एष **शब्दः** इदं करोमीत्यादिशब्दः मे न **साधीभवति** साधीयान्न भवति ।

**द्रोण उवाच –**

[५] **नैषोऽभयं न निर्यातो महात्मा पाकशासनिः ।**
**नैवं भीता निवर्तन्ते न पुनर्गाढवेदनाः** ।। २४ ।।

**नैषोऽभयं न निर्यात** इत्यत्र **एषोऽर्जुनः** अभयं यथा भवति तथा **निर्यातः** पुरान्निर्यातो नेति न ।

---

१. **कुं ६४ अध्यायः ।**
२. **'आद्रवन्'** इति कुं. पाठः ।
३. **'व्यवलीयन्त भारत'** इति कुं. पाठः ।
४. **'पुरा ध्येष मया युक्तः स मे भवति पृष्ठतः'** इति कुं. पाठः ।
५. **'नासौ भयेन'** इति कुं. पाठः ।

**दिष्ट्या दुर्योधनो मुक्तो दिष्ट्या गावः पलायिताः ।**
**मुक्तं[1] मुक्त्वैव सङ्ग्रामे किं रणेन करिष्यसि ॥ २६ ॥**

**मुक्तं मुक्त्वैव सङ्ग्राम** इत्यत्र **मुक्तं** दुर्योधनं मुक्त्वैव गावः पलायिता इति सम्बन्धः ।

**॥ इति षष्टितमोऽध्यायः ॥**

## ॥ अथ एकषष्टितमोऽध्यायः ॥

**[2]शतह्रदां जृम्भमाणां मेघस्थां प्रावृषीव च ।**
**सुवर्णपृष्ठं गाण्डीवं पश्यन्तु कुरवो मम ॥ ६ ॥**

**शतह्रदां जृम्भमाणाम्** इत्यत्र 'शतह्रदा ह्रादिनी तटिद्विद्युत्'[3] इत्यभिधानात् **शतह्रदा** विद्युत् ।

**एवमाश्वासितस्तेन वैराटिः सव्यसाचिना ।**
**[4]अगाहत रथानीकं [5]भीष्मं भीष्मस्य वाजिभिः ॥ २२ ॥**

**भीष्मं भीष्मस्य वाजिभिः** इत्यत्र **भीष्मं** भयङ्करं भीष्मस्य रथानीकं वाजिभिरगाहतेति सम्बन्धः ।

**[6]रथसिंहमनाक्षिप्य जिगीषन्तं परान् रणे ।**
**अभ्यधावत्तदैवोग्रो ज्यां विकर्षन् धनञ्जयः ॥ २३ ॥**

---

१. **'मुक्तो दिष्ट्या च सङ्ग्रामे'** इति कुं. पाठः ।; २. कुं ६५ **अध्यायः** ।
३. अ.को. १-३-९ ; ४. **'व्यगाहत'** इति कुं. पाठः ।
५. **'भीमं भीष्मस्य'** इति कुं. पाठः ।
६. **'रथिसिंहमनाधृष्यम्'** इति कुं. पाठः ।

**रथसिंहमनाक्षिप्य** इत्यत्र **रथसिहं** रथश्रेष्ठम् **अनाक्षिप्य** अनिक्षिप्य अस्थापयित्वेत्यर्थः ।

**ततः पार्थमुपाद्रुत्य दुस्सहः सविविंशतिः ।**
**अवाकिरच्छरैस्तीक्ष्णैः परीप्सन्** [१] **भारतं रणे ॥ ३३ ॥**

**परीप्सन् भारतं रण** इत्यत्र **भारतं** सैन्यं **परीप्सन्** परिपातुमिच्छन् ।

**ततः प्रहस्य** [२] **बीभत्सुः तदैन्द्रं पञ्चवार्षिकम् ।**
**अस्त्रमादित्यसङ्काशं गाण्डीवे समयोजयत् ॥ ४८ ॥**

**तदैन्द्रं पञ्चवार्षिकम्** इत्यत्र चत्वारो दिशः ऊर्ध्वं चेति पञ्चसु दिक्षु **वार्षिकं** शरवर्षसम्बन्धि शरवर्षणशीलमिति यावत् । **पञ्चे** प्रपञ्चे शर-वर्षणशीलं वा ।

**॥ इति एकषष्टितमोऽध्यायः ॥**

## ॥ अथ द्विषष्टितमोऽध्यायः ॥

**अर्जुन उवाच –**

[३] **दक्षिणामेव तु दिशं हयानुत्तर वाहय ।**
[४] **पुरार्थी च भवत्येषामयं शब्दोऽत्र तिष्ठताम् ॥ १ ॥**

**दक्षिणामेव तु दिशम्** इत्यत्र **दक्षिणां** सेनाया [५] दक्षभागे विद्यमानां दिशम् । अत्र तिष्ठतामेषां कुरूणां पुरार्थी स्वपुरं प्रति गमनार्थी **अयं**

---

१. **'भ्रातरं'** इति कुं. पाठः ।; २. **'बिभत्सुस्तमैन्द्रं'** इति कुं. पाठः ।
३. **कुं ६६ अध्यायः** ।; ४. **'पुरा सार्थी'** इति कुं. पाठः ।
५. **दक्षिणभागे** सो.मु.पा ।

शब्दः पुरं गच्छाम इति शब्दः भवति । तस्मात् तान्निरोद्धुं सेनाया दक्षिणभागे रथं वाहयेति योजना ।

**[१] इदं त्विदानीमनयत् कुरूणां शिवं धनुः शत्रुनिबर्हणं च ।**
**अत्याशुगं वेगवदाशुकर्तृ अवारणीयं महते रणाय ॥ ११ ॥**

**इदं त्विदानीमनयत्कुरूणाम्** इत्यत्र इदं धनुः कुरूणां **शिवं** शोभनम् **अनयत्** अहरत् ।

**[२] मन्ये मया तात कृतं च कार्यं यदर्जुनोऽस्माभिरिहाद्य दृष्टः ।**
**भूयो वनं गच्छतु सव्यसाची पश्यामि पूर्णं समयं न तेषाम् ४१**

**मन्ये मया** इत्यत्र मया युद्धं कुतः कार्यमिति मन्ये ।

**युधिष्ठिरस्यास्मि निदेशकारी पार्थस्तृतीयो युधि च स्थिरोऽस्मि।**
**[३] तदर्थमाहृत्य मुखं प्रयच्छ नरेन्द्रवृत्तं स्मर धार्तराष्ट्र ॥ ४९ ॥**

**तदर्थमाहृत्य** इत्यत्र **तदर्थं** धर्मराजस्य द्रव्यम् ।

**मोघं तवैतद्भुवि नामधेयं दुर्योधने[४]तीह कृतं पुरस्तात् ।**
**दुर्योधनस्त्वं प्रथितोऽसि नाम्ना दुर्योधनः सन्निकृतिप्रधानः ॥५०॥**

**दुर्योधनः सन्निकृतिप्रधान** इत्यत्र निकृतिप्रधानः सन् त्वं **दुर्योधनः** नाममात्रेण दुर्योधनः ।

॥ इति त्रिषष्टितमोऽध्यायः ॥

---

१. **'इदं त्विदानीमनयं कुरूणां'** इति कुं. पाठः ।
२. **'मन्ये त्वया तात कृतं'** इति कुं. पाठः ।
३. **'तदर्थमावृत्य'** इति कुं. पाठः । ; ४. **'सुयोधनः'** इति कुं. पाठः ।

## ।। अथ चतुष्षष्टितमोऽध्यायः ।।

**वैशम्पायन उवाच –**

**[१] आहूयमानस्तु स तेन सङ्ख्ये महात्मना वै धृतराष्ट्रसूनुः ।**
**निवर्तितश्चापि गिराङ्कुशेन [२] गजो यथामत्त इवाङ्कुशेन ।। १ ।।**

**गजो यथा मत्त इव** इत्यत्र तद्यथेति प्रश्नः ।

।। इति चतुष्षष्टितमोऽध्यायः ।।

## ।। अथ पञ्चषष्टितमोऽध्यायः ।।

**[३] आक्रान्तभोगस्तेजस्वी धनुर्वक्र इवोरगः ।**
**रथं रथेन संगम्य योधयामास पाण्डवम् ।। ६ ।।**

**धनुर्वक्र इवोरग** इत्यत्र धनुराकारेण वक्रः **धनुर्वक्रः** ।

**ततो विसञ्ज्ञानि परेषु पार्थः**
**संस्मृत्य सन्देशमथोत्तरायाः ।**
**निर्याहि [४] वाहान् इति मात्स्यपुत्र-**
**मुवाच यावत्कुरवो विसञ्ज्ञाः ।। १८ ।।**

**निर्याहि वाहान्** इत्यत्र वहन्ति रथिन इति **वाहाः** परसेनारथाः तान् प्रति ।

।। इति पञ्चषष्टितमोऽध्यायः ।।

---

१. कुं ६७ अध्यायः । ; २. **'गजो मदोन्मत्त इवाङ्कुशेन'** इति कुं. पाठः ।
३. कुं अत्र पूर्वाध्याय एवानुसरति । ; ४. **'वाहादिति'** इति कुं. पाठः ।

## ॥ अथ षट्षष्टितमोऽध्यायः ॥

भजन्तु[1] सर्वा गणिकाः सुतं मे
नार्यश्च[2] कन्याः सहकन्यकाश्च ।
स्वलङ्कृतास्ताः सुभगाः सुवेषाः
पुत्रस्य पन्थानमनुव्रजन्तु ॥ २९ ॥

कन्याः सहकन्यकाश्च इत्यत्र दासीभूतकन्यकाभिः सहिताः कन्याः राजकन्याः ।

घण्टापणवकाः शीघ्रं मत्तमारुह्य कुञ्जरम् ।
शृङ्गाटकेषु सर्वेषु समाख्यान्तु जयं मम ॥ ३० ॥

शृङ्गाटकेषु सर्वेषु इत्यत्र 'शृङ्गाटकचतुष्पथे'[3] इत्यमरः, शृङ्गाटकेषु चतुष्पथेषु ।

वन्दिप्रवादाः पणवादिकश्च
तथैव वाद्यानि च वंशशब्दाः ।
सकंसतालं[4] मधुरं च गीत-
मादाय नार्यो नगरान्निरीयुः ॥ ३४ ॥

सकंसतालम् इत्यत्र सकंसतालं कांस्यतालेन सहितम् ।

॥ इति षट्षष्टितमोऽध्यायः ॥

---

१. कुं ६९ अध्यायः । ; २. 'नार्यश्च कन्याः सह सैनिकाश्च' इति कुं. पाठः ।
३. अ.को. २-१-१७
४. 'कांस्यं सतालं' इति कुं. पाठः ।

## ।। अथ सप्तषष्टितमोऽध्यायः ।।

**ततः[1] स करिभोगाभं बाहुमुत्क्षिप्य दक्षिणम् ।**
**विराटः प्राहनत्क्रुद्धः कर्णमाश्रित्य दक्षिणम् ।। ३८ ।।**

**ततः स करिभोगाभम्** इत्यत्र भुज्यते अनेनेति **भोगः** हस्तिहस्तः । करभोगमिति पाठे **करो** हस्तिकरः, **भोगः** सर्पशरीरम् ।

।। इति सप्तषष्टितमोऽध्यायः ।।

## ।। अथ अष्टषष्टितमोऽध्यायः ।।

**सर्वेषां[2] परितुष्टाश्च प्रशस्य च मुहुर्मुहुः ।**
**असङ्गगतिना तेन विमानेनाशुगामिना ।। ६ ।।**

**सर्वेषां परितुष्टाश्च** इत्यत्र **सर्वेषां** अर्जुनकृतसकलयुद्धकर्मणाम् ।

**नगरे तुमुलः शब्दो रेणुश्चाक्रमते नभः ।**
**किं नु खल्वपयातास्ते कुरवो नगरं गताः ।। १६ ।।**
**ते चैव निर्जिताऽस्माभिर्महेष्वासाः सचेतसः[3] ।**
**आमुञ्च कवचं वीर चोदयस्व च वाजिनः ।। १७ ।।**

**किं नु खल्वपयाता** इत्यत्र पुरं गतास्ते कुरवः **अपयाताः** परावृत्य आगताः किं नु । सचेतसः ते कुरुसेनामहेष्वासाः **आभिः** अस्मदीय-

---

१. **'तस्य तक्षकभोगाभं'** इति कुं. पाठः । कुं ७० अध्यायः ।
२. **'सर्वे ते परितुष्टाश्च'** इति कुं. पाठः । कुं ७१ अध्यायः ।
३. **'सुतेजसः'** इति कुं. पाठः ।

सेनाभिः न जिता एव **स्म** न जिता एव किम् । अव्ययानामनेकार्थत्वात् स्मशब्दः किमुशब्दार्थे ।

**उत्तरामत्र पश्यामि सखीभिः परिवारिताम् ।**
**अनीकिन्यः प्रदृश्यन्ते हस्तिनोऽश्वाश्च वर्जिताः[1] ॥ २० ॥**

**अश्वाश्च वर्जिता** इत्यत्र **वर्जिताः** युद्धसन्नाहवर्जिताः ।

**॥ इति अष्टषष्टितमोऽध्यायः ॥**

## ॥ अथ एकोनसप्ततितमोऽध्यायः ॥

**वैशम्पायन उवाच –**

**[2]सभाज्यमानः पौरैश्च स्त्रीभिर्जानपदैरपि ।**
**आसाद्यान्तः पुरद्वारं पित्रे सम्प्रत्यहारयत्[3] ॥ १ ॥**

**पित्रे सम्प्रत्यहारयत्** इत्यत्र **सम्प्रत्यहारयत्[4]** द्वास्थं प्रेषयामास ।

**पदं पदसहस्रेण यश्चरन्नापराध्नुयात् ।**
**तेन कर्णेन ते तात कथमासीत्समागमः ॥ ३४ ॥**

**पदं पदसहस्रेण** इत्यत्र प्रतिभटानां पदसहस्रेण सह एकं पदं चरन् तैरितस्ततः पदसहस्रे कृते सति स्वयमेकेनैव पदेन तिष्ठन् न **पराध्नुयात्** 'धूञ् कम्पने' इति धातोः कम्पनं प्राप्नुयात्, महाधैर्यवानिति भावः । यद्वा अन्येषां पदसहस्रेण यः प्राप्यो देशः, तम् एकपदेन चरन् न पराध्नुयात्, महावेगवानिति भावः ।

---

१. **'वर्मिताः'** इति कुं. पाठः । ; २. **कुं ७२ अध्यायः ।**
३. **'सम्प्रत्यवेदयत्'** इति कुं. पाठः ।; ४. **'यश्चरन् न पराधुन्यात्'** कुं. पाठः ।

**व्यायामेन परीप्सस्व जीवितं कौरवात्मज ।**
**न मोक्ष्यसे पलायंस्त्वं लोके युद्धमना भव ॥ ५१ ॥**

**व्यायामेन परीप्सस्व** इत्यत्र **व्यायामेन** परावृत्य गमनेन ।

**सचिवैः संवृतो राजा भीष्मद्रोणकृपादिभिः ।**
**ततो मे [1] रोमहर्षोऽभूत् दूरात् स्तम्भश्च मेऽभवत् ॥ ५२ ॥**

**दूरात् स्तम्भश्च मेऽभवत्** इत्यत्र **स्तम्भः** मनोवाक्कायादीनां स्तम्भनम् ।

**दुर्योधनं च बलवान् बाणैर्विव्याध सप्तभिः ।**
**तं स विद्ध्वा हयांश्चास्य [2] शुक्लवस्त्रमथाददे ॥ ५८ ॥**

**शुक्लवस्त्रमथाददे** इत्यत्र **अथ** भीष्मजयानन्तरं **शुक्लवस्त्रं** शुक्ले वस्त्रे यस्य तं द्रोणं कृपं च **आददे** 'दो अवखण्डने' इति धातोः शरेण खण्डयामास । यद्वा युद्धायाददे ।

॥ इति एकोनसप्ततितमोऽध्यायः ॥

## ॥ अथ सप्ततितमोऽध्यायः ॥

**[3] तस्मात्प्रहाराद्रुधिरस्य बिन्दून् पश्यन्न चेमे पृथिवीं स्पृशेयुः ।**
**इति प्रतिच्छाद्य मुखं ततोऽहं मन्युं नियच्छन् [4] उपतिष्ठ आसम् ॥ ४ ॥**

---

१. **'रोमहर्षोऽभूदूरुस्तम्भश्च मेऽभवत्'** इति कुं. पाठः ।
२. **'पीतवस्त्रं समाददे'** इति कुं. पाठः । ; ३. कुं ७३ अध्यायः ।
४. **'उपविष्ट आसम्'** इति कुं. पाठः ।

**उपतिष्ठ आसम्** इत्यत्र उप समीपे तिष्ठतीत्युपतिष्ठः ।

**विराटमद्यैव निहत्य शीघ्रं सपुत्रपौत्रं सकुलं ससैन्यम् ।**
**योक्ष्यामहे धर्मसुतं च राज्ये अद्यैव शीघ्रं [1]त्वरतैष मात्स्यः ॥९॥**

**त्वरतैष मात्स्य** इत्यत्र **त्वरता** वेगवता **एष** धर्मराजः **मात्स्यः** मत्स्यविषयाधिपतिः क्रियतामिति योग्यपदाध्याहारेण सम्बन्धः ।

**राजा कुरुणां च युधिष्ठिरोऽयं मात्स्येषु राजा भवतु प्रतीतः[2] ।**
**तस्याद्य देहं शतधा भिनद्मि कुम्भं घनेनेव यथाम्बुपूर्णम् ॥**

**कुम्भं घनेनेव** इत्यत्र **घनेन** दृढेन दण्डेन ।

॥ इति सप्ततितमोऽध्यायः ॥

## ॥ अथ त्रिसप्ततितमोऽध्यायः ॥

**[3]तस्मादामन्त्रये त्वाऽद्य पुत्रार्थं मे विशाम्पते ।**
**शुद्धं जितेन्द्रियं [4]मन्यं तस्याः शुद्धिः कृता मया ॥ ११ ॥**
**[5]स्नुषायाः दुहितुर्वापि पुत्रे चात्मनि वा पुनः ।**
**अतिशङ्कां न पश्यामि तेन शुद्धिर्भविष्यति ॥ १२ ॥**

**शुद्धं जितेन्द्रियम्मन्यम्** इत्यत्र शुद्धं जितेन्द्रियम्मन्यं त्वां मे पुत्रार्थमिमामामन्त्रये । तत्र एतादृशकार्ये कृते सति शुद्धिः ममापि शुद्धिः कृता । **पुत्रे** स्वसृमात्रादिविषये, **आत्मनि** स्वस्मिन् स्नुषायाः दुहितुर्वा विषये अतिशङ्कां न पश्यामीति योजना ॥ इति त्रिसप्ततितमोऽध्यायः ॥

---

१. **'त्वरिरेष मात्स्यः'** इति कुं. पाठः ।; २. BORI पृ. ३३९
३. कुं ७७ अध्यायः । ; ४. **'मन्ये'** इति कुं. पाठः ।; ५. **'स्नुषायाम्'**कुं. पाठः

## ।। अथ पञ्चसप्ततितमोऽध्यायः ।।

[१] **गायनाख्यानशीलाश्च नटा वैतालिकास्तथा ।**
**स्तुवन्तस्तानुपातिष्ठन् सूताश्च सह मागधैः ॥ ३२ ॥**

**नटा वैतालिकास्तथा** इत्यत्र वैतालिकास्तालधारिणः ।

॥ इति श्रीमन्महाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां विराटपर्वणि कविकुलतिलकभाविसमीरश्रीमद्वादिराजतीर्थपूज्य-चरणविरचित लक्षालङ्काराख्यटीकायां पञ्चसप्ततितमोऽध्यायः ॥

## ॥ विराटपर्व समाप्तम् ॥

॥ श्रीवादिराजगुर्वन्तर्गतमध्वेशार्पणमस्तु ॥

१. कुं ७८ अध्यायः ।

# श्लोकानुक्रमणिका

।। श्रीवादिराजगुर्वन्तर्गत मध्वेशार्पणमस्तु ।।

The Mahābhārata, the National Epic of India, contains in its vast reach diverse subjects that a human mind can comprehend. The Epic has struck deep roots not only in the Indian subcontinent but has influenced its neighbours. No records exist of any commentaries before the time of Śankara, Abhinava Gupta and others (8th cent CE). Śankara and Rāmanuja have written commentaries on parts such as Bhagavadgīta and Viśnusahasranāma while Madhva wrote an independent work on the Mahābhārata. The Mahābhārata Lakśālankāra is the magnum opus of Śrī Vādirāja tīrtha, a celebrated saint poet of 16th century from the south India. Śrī Vādirāja tīrtha derived an utmost epitomized and authentic commentary considering various aspects of grammar, etymology, with exhaustive references to give a very comprehensive outlook to the entire epic. He proclaims in the work that he was ordered by Lord to write the commentary looking at the entirety of the sadāgamas (holy scriptures). This great work has been named 'Lakśālankāra' (100,000 ornaments) and is a tribute to Lord Vedavyāsa, the author of the Mahābhārata. Traditionally apart from Śrī Vādirāja tīrtha, Nīlakaňt'ha, Vidyāsāgara, Arjuna Miśra etc., have written commentaries on the epic

This volume contains commentary from Adiparvan to Virātaparvan



